**प्राङ्मुखकरणं चानादेशे ॥२२॥**

**अनादेशे** सर्वैरपि प्राङ्मुखैरेव कर्म कर्तव्यम् ॥२२॥

अथ सुब्रह्मण्यस्य कृत्यं वक्तुमारभते—

**क्रीते राजनि सुब्रह्मण्य उत्तरेण सोमवाहनं गत्वान्तरेणेषे शमीशाखां पलाशशाखां वा सपलाशां पाणौ कृत्वावतिष्ठेत ॥२३॥**

इति। **क्रीते** सोमे **सोमवाहनं** शकटं प्रागीषमवस्थितमुत्तरेण **गत्वा** द्वयोरीषयोर्मध्ये शाखां गृहीत्वा**वतिष्ठेत**। अत्र सामर्थ्यादुत्तरामीषामुत्क्रम्य प्रविश्य तिष्ठेदिति गम्यते। अन्यथोत्तरेण गत्वा मध्ये तिष्ठेदिति वचनाशक्तेः। किं च। **तामेवेषामनुत्क्रम्य** (द्रा. श्रौ. १.२.२९) इति वक्ष्यति। ततोऽप्यवगम्यते उत्तरामीषामुत्क्रम्य प्रविशेदिति ॥२३॥

**अध्वर्युसंप्रैषं सर्वत्राकाङ्क्षेत् सुब्रह्मण्यायाम् ॥२४॥**

सर्वत्र सुब्रह्मण्याह्वानेऽध्वर्युणा कृतं संप्रैषमाकाङ्क्षेत्। तत्प्रेषित एवाह्वयेत्। नान्यथेत्यर्थः। तेनातिथ्येष्टिसमाप्तौ अध्वर्युसंप्रैषाभावे अस्माभिरुक्तापि सुब्रह्मण्या न कार्या। तथा च जैमिनिरपि तत्र सुब्रह्मण्यां न विधत्ते। अध्वर्युप्रैषस्य तत्र वैकल्पिकत्वात् ॥२४॥

**रश्मी धारयंश्छाखया प्रेष्येद् गावौ ॥२५॥**

अनडुहोर्बन्धनार्थे रज्जू सव्येन हस्तेन **धारयन्** पूर्वगृहीतया **शाखया** तावनड्वाहौ **प्रेष्येत्**। शाखया स्पृष्ट्वा गमयेत्। **शाखया संस्पृशेद्** इत्येव जैमिनिः ॥२५॥

---

2. T °मुखेन for °मुखैर्; T om. कर्म

3. v[1] कर्तुम् for वक्तुम्; My[1] before अथ adds सुब्रह्मण्यविधिः

5. T om. पलाशशाखां

7. v[2] प्राग् for द्वयोर्

8. v[2] वचनात् for वचना°

12. v[1-2] My[1-2] om. कृतं सं०.; My[3] अध्वर्यूसंप्रैषम् for अध्वर्युणा कृतं संप्रैषम्

17. My[1] T रज्जुं for रज्जू; P पूर्वं for पूर्व.

18. PC प्रेष्येत for प्रेष्येत्; My[1] संस्पृशेः for संस्पृशेत्

**दक्षिणं पूर्वम् ॥२६॥**

दक्षिणमनड्वाहं प्रथमं प्रेष्येद् ॥२६॥

**सुब्रह्मण्योमिति त्रिराह्वयेत् प्राचि वर्तमाने मध्यमया वाचा ॥२७॥**

सोमवाहने शकटे **प्राचि** प्राङ्मुखे **वर्तमाने** सति मध्यमस्वरेण **सुब्रह्मण्योमिति** एतावन्मात्रं **त्रिराह्वयेत्**। अत्र केचित् प्रणवेषु विराममिच्छन्ति। उत्तरत्र सुब्रह्मण्याह्वाने **पूर्वयोः प्रणवान्तयोर्विरमेद्** (द्रा० श्रौ० १.३.६) इति दर्शनात्। केचित्तु तत्रैव विधानादत्र नेच्छन्ति ॥२७॥

**षट्कृत्वा प्रतीचि ॥२८॥**

**प्रतीचि** प्रत्यङ्मुखे शकटे आवर्तमाने तेनैव स्वरेण **षट्कृत्वः** आह्वयेत् ॥२८॥

**पूर्वेण पत्नीशालां विमुक्ते छदिषि शाखामवगुह्य तामेवेषामनुत्क्रम्याव्यवायन्नग्नीषोमौ यथार्थं स्यात् ॥२९॥**

**पूर्वेण** प्राग्वंशं गत्वा द्वयोरनडुहोरन्यतरस्मिन् **विमुक्ते** सति शकटस्य **छदिषि शाखामवगूह्य तामेवेषामनूत्क्रामेत्**। यामीषां पूर्वमुत्क्रम्य मध्ये प्रविष्टः **उत्क्रम्य** चाग्नीषोमयोर्व्यवधानमकुर्वन् **यथार्थं** सुब्रह्मण्यः **स्यात्**। यथाप्रयोजनं गच्छेद्वा तिष्ठेद्वेत्यर्थः। **अग्नीषोमावि**त्याहवनीयाग्निं क्रीतं च सोममावहेति ॥२९॥

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले द्वितीयः खण्डः ॥२॥

---

7. V[1] प्रणवयोः for प्रणवान्तयोः

8. My[3] om. तु

16. My[2-3] om. यथाप्रयोजनं

## तृतीयः खण्डः

**अथैतद्राजवाहनं सुब्रह्मण्याय दद्यात् । दक्षिणावत्सु कर्मसंयोगात् ॥१॥**

अथ राजक्रयानन्तरम् **एतद्राजवाहनं** शकटमनुडुद्भ्यां सहैव **सुब्रह्मण्याय दद्यात्**। अनोयुक्तं सुब्रह्मण्याये (ष० वि० ब्रा० १.२.११) ति श्रुतेः। दक्षिणायुक्तेषु क्रतुषु। सत्रव्यतिरिक्तेष्वित्यर्थः। अनडुत्प्रेषणेन कर्मणा सुब्रह्मण्यस्य संयोगात्। तत्कर्मान्वियादित्यर्थः। **कर्मसंयोगा**दिति हेतुकथनम् अन्यत्रापि तत्तत्कर्मान्वितस्य प्रस्तोत्रादेः कुशास्तरणवस्त्रादिदानार्थम् ॥१॥

**आतिथ्यायां संस्थितायां दक्षिणस्य द्वारबाहोः पुरस्तात्तिष्ठन्नन्तर्वेदिदेशेऽन्वारब्धे यजमाने पत्न्यां च सुब्रह्मण्योमिति त्रिरुक्त्वा निगदं ब्रूयात् ॥२॥**

आतिथ्येष्टयनन्तरं तानूनप्त्रादिनिह्नवान्तं कृत्वा सुब्रह्मण्याह्वानम्। कुतः? ब्रह्मत्वप्रकरणे तदनन्तरं सुब्रह्मण्यानुवाददर्शनात्। प्राग्वंशस्य पुरस्ताद्यद् द्वारं तस्य दक्षिणस्थूणायाः **पुरस्तात्** संचारदेशमतिक्रम्य **अन्तर्वेदिदेशे तिष्ठन्** पत्नीयजमानयोरन्वारब्धयोः **सुब्रह्मण्योमिति त्रिरुक्त्वा** पश्चा**न्निगदं ब्रूयात्** ॥२॥

**इन्द्रागच्छ हरिव आगच्छ मेधातिथेर्मेषवृषणश्वस्य मेने गौरवास्कन्दिन्नहल्यायै जारकौशिकब्राह्मण गौतमब्रुवाणेति ॥३॥**

**इति** शब्दः सूत्रपठितस्वरप्रदर्शनार्थः। **इति** अनेन रूपेण ब्रूयादित्यर्थः। न पुनर्निगदसमाप्त्यर्थः। **एतावदहे सुत्या**मित्यादेरपि निगदत्वात् ॥३॥

---

4. PCTL. om. राजक्रयानन्तरम्; my[2-3] om. शकटम्...सहैव

7. v[1] °.कथनाद् for °कथनम्

12. v[1-2] TCP om. आतिथ्येष्टयनन्तरं....°दर्शनात् (L. 13) my[2]. om. 'इष्टि'

16. v[1-2] TCL. om. पश्चात्

20. v[2] my[1] T इत्यहे for एतावदहे

**एतावदहे सुत्यामिति यावदहे स्यात् ॥४॥**

**एतावदहे सुत्यामिति** शाखान्तरीयो मन्त्रपाठः। **इत्यहे सुत्यामिति** अस्माकं पाठः। उभयोरेक एवार्थः। सूत्रार्थस्तु यावन्त्यहानि यावदहमिति समाहारे द्विगुसमासः। **यावदहे** यावत्सु अहःसु अतीतेषु सुत्या स्यात्तावन्ति अहानि। **एतावदह** इति संख्यया निर्देशात् एतावच्छब्दः संख्योपलक्षणार्थः। यथा त्र्यहे सुत्यां द्वादशाहे सुत्यामित्यादि। द्वादशाहेऽतिक्रान्ते सुत्यामागच्छेत्यर्थः। ननु चैतावदहेऽतिक्रान्ते इति न श्रूयते। तेन सुत्यादिवसमप्यन्तर्भाव्य संख्यानिर्देशः कार्यः। चतुरहे सुत्यां त्रयोदशाहे सुत्यामिति। नैतदेवम्। यद्येवमभविष्यत्तदानीमेतावत्तिथे सत्यामिति यावत्तिथे स्यादिति पूरणप्रत्ययेन निर्देशोऽभविष्यत्। न चैवम्। किं च। तापश्चिते सत्रे संवत्सरोपसत्के कथं परिमाणनिर्देश इत्यपेक्षायां प्रकृतौ द्वादशाहे दष्टं प्रकारं दर्शयति सत्रकारः **द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानंजय्य** इति। तत्र यदि प्रकृतौ सत्यादिवसमन्तर्भाव्य परिमाणनिर्देशः स्यात्तदा त्रयोदशाहे सुत्येति विदित्वेति सूत्रप्रणयनं स्यात्। न चैवमस्ति। तस्मादेतावदहेऽतिक्रान्त इत्येव मन्त्रार्थः ॥४॥

**अद्येति समानाहनि ॥५॥**

सुत्यया **समानेऽहनि अद्य** सुत्यामित्यादिशेत्। सुत्यायाः पूर्वदिवसे तु श्वः सुत्यामित्यादेशः कार्यः। तस्यान्ते **श्वः सुत्यां गौतमस्येति** सिद्धवदनुवादात्। स्पष्टं चाह जैमिनिः-**श्वः सुत्यामित्यौपसथ्येऽहनि निर्दिशेत्** (जै. श्रौ. सू. ३. पृ० १५) इति ॥५॥

**पूर्वयोः प्रणवान्तयोर्विरमेत् ॥६॥**

---

3. my[2] after उभयोर् ins अपि
5. v[1] संख्यानिर्देशे for संख्यया निर्देशात्
7. my. om. न
12. my[2]. अत्र for तत्र
14. my[2] om. अतिक्रान्ते;
15. v[2] अर्थः for मन्त्रार्थः
17. my[2–3] सुत्यायाः for सुत्यया
19. v[1] my[1–3] सुत्या for सुत्याम्
21. T प्रणवयोः for प्रणवान्तयोः

सुब्रह्मण्योमिति पूर्वयोः प्रणवान्तयोर्विरम्य विरम्याह्वयेत् ॥६॥

**मेने ब्रुवाणेति च ॥७॥**

वृषणश्वस्य मेने गौतमब्रुवाणेति च द्वयोरपि विरमेत् ॥७॥

**आग्नेय्यां षणे जारेति च ॥८॥**

अग्निष्टुत्सु आग्नेयीं सुब्रह्मण्यां वक्ष्यति तत्र जातवेदो विचर्षण इत्यत्र विरमेत्। उषसो जारेति च विरमेत् ॥८॥

**पृथग्यजतिशब्देषु च ॥९॥**

इति। वक्ष्यमाणायां सनामग्राहसुब्रह्मण्यायां यजतिशब्देषु पृथक् पृथक् विरमेत् ॥९॥

अथ निगदशेषं दर्शयति—

**देवा ब्रह्माण आगच्छतागच्छतागच्छतेति गौतमः ॥१०॥**

इति। एतावदहे सुत्यामित्यस्यानन्तरं देवा ब्रह्माण इति निगदशेषं ब्रूयात्। नान्यत् किंचिदिति गौतमः ॥१०॥

**आगच्छेति पूर्वं देवाह्वानाद्धानंजय्यः ॥११॥**

देवा ब्रह्माण इत्यस्मात् पूर्वमागच्छेति ब्रूयादिति धानंजय्यः ॥११॥

**आगच्छ मघवन्नित्येके ॥१२॥**

देवाह्वानात् पूर्वमागच्छ मघवन्निति पदद्वयं प्रयोज्यमित्येके। तथैव वयमधीमहे ॥१२॥

**एवं त्रिराहूय पत्नीयजमानावुपहवमिच्छमानावुपहूय यथार्थं स्यात् ॥१३॥**

एवं सुब्रह्मण्योमित्येतदारम्भ त्रिराहूय पत्नीयजमानयोरनुज्ञामिच्छतोरनुज्ञां कृत्वा यथार्थं स्यात् ॥१३॥

---

2. PC. वा for च

19. T यथार्थ्यं for यथार्थं

22. v[2] अनुज्ञानं Fo[1] अनुज्ञाम्।

अनुज्ञाप्रकारमाह--

**उपहूत इत्युपहवः ॥१४॥**

इति । **उपहूत इति** शब्देन **उपहवोऽनुज्ञानं** कार्यमित्यर्थः । उपहूतेति स्त्रीलिङ्गेन पत्न्या अनुज्ञानं कार्यमिति । अत्र केचिदाहुः--आतिथ्यासमाप्तौ सुब्रह्मण्याह्वानविधानवलादध्वर्युसंप्रैषाभावेऽपि सुब्रह्मण्याह्वानं कार्यमिति । तदयुक्तम् । अध्वर्युसंप्रैषोऽत्र वैकल्पिकः । तत्र यदा संप्रैषः तदानीमाह्वानप्रकारविधानार्थमेतत् सूत्रम् । न पुनः प्रैषाभावेऽप्याह्वानार्थमिति पूर्वमेव दर्शितम् ॥१४॥

**एवं सर्वेषूपसदन्तेषु ॥१५॥**

**सर्वेषूपसदन्तेषु** याः सुब्रह्मण्याः अध्वर्युभिश्चोदितास्ता एवमाह्वयेत् ॥१५॥

**याश्चोर्ध्वमुपसद्भ्यः ॥१६॥**

**ऊर्ध्वमुपसद्भ्य याश्च** सुब्रह्मण्याः अध्वर्युचोदितास्तास्वप्येवमेवाह्वानं कार्यमिति । सूत्रद्वयमपि धर्ममात्रविधिरेवेति । एवमेवोत्तरासु सर्वास्विति वक्तव्ये **याश्चोर्ध्वमुपसद्भ्य** इति पृथक् सूत्रकरणं वक्ष्यमाणविशेषस्य तत्संबन्धार्थम् ॥१६॥

**उत्करे तु तत्र तिष्ठन् ॥१७॥**

---

1. v2 अनुज्ञान° for अनुज्ञा°
4. T. अतिथ्यवला° for आतिथ्या°
5. T कुर्यात् for कार्यम्
7. v² P om. °प्रकार, T. om. °विधान°
10- 11. my²⁻³ तास्वेवमाह्वानमिति for ता एवमाह्वयेत्
13. v¹ P trans ऊर्ध्वम् after उपसद्भ्यः
14. my¹ T. om. एव; my³ अधिकार° for अपि धर्म°; my³ om. एव after विधिर्
14. my³. om. एवम्... सर्वास्विति
15. DLC योग°, T योग्य° for सूत्र°; v² °विशेषणस्य for °विशेषस्य

ऊर्ध्वमुपसद्भ्यो याः सुब्रह्मण्यास्ताश्चोत्करदेशे तिष्ठन्नाह्वयेत्। नान्तर्वेदिदेश इत्यर्थः ॥१७॥

**प्राक् च सुत्यादेशान्नामग्राहोऽग्नीषोमीयवपायां हुतायां परिहृतासु वसतीवरीषु प्रातरनुवाकोपक्रमणवेलायामसौ यजत इति ॥१८॥**

एतेषु त्रिषु स्थानेषु अध्वर्युचोदिता याः सुब्रह्मण्यास्तासु श्वः सुत्यामागच्छेति **सुत्यादेशात्** प्रागसौ यजत इति नामग्राहः कार्यः। **अग्नीषोमीयवपायाम्**इत्यादिस्थानत्रयोपादानं परिसंख्यार्थम्। एतेष्वेव नामग्रहो नान्यत्रेति। तेन हविर्धानप्रवर्तनाग्नीषोमीयप्रणयनयोः सुब्रह्मण्याह्वानपक्षे नामग्रहो न भवति। **असाविति** नामधेयोपलक्षणम्। यथा वासुदेवशर्मा यजत इति ॥१८॥

अथ सत्रेषु नामग्रहणविशेषमाह—

**प्रत्येकं गृह्णीयाद्यजमाननामधेयानि यानि स्युः ॥१९॥**

---

1. PCL. after याः ins च. v[1-2]CPL. तासु for ताश्च

3. v[1] 'श्वः for च; Pe om. च; v[1-2]PC °ग्रहः for °ग्राहः

4. PC °क्रम for °क्रमण; v[1-2] om. उपक्रमण°

6. v[1]PCL. om. एतेषु ..यजत इति (L. 11)

10-11. PCL. °लक्षणविषयम्। यजत इति for °लक्षणम्।... यजत इति ॥; PCL. after यजत इति add :—अनुवर्तते। स च पुत्रपौत्रनप्तृशब्दैः प्रत्येकं संबन्धनीयः। पृथग्यजति-(P यजते°) शब्देष्विति। विरामविधानसूत्रे बहुवचनदर्शनादिति। यजमानस्य पूर्वेषां पितृपितामहप्रपितामहानामपि (PC om. अपि) नामानि गृह्णीयात्। यज्ञस्वामिनः पुत्रो यजते। वासुदेवस्य पौत्रो यजते। नारायणस्य नप्ता यजत इति। अमुष्येति पुंल्लिगमविवक्षितम्। जनकत्वमात्रमेव विवक्षितम्। तेन स्त्रीणामपि नामग्रहणम्। सत्यभामायाः पुत्र इत्यादि। कुत एतत् ? यजमानसुकृते बन्धूनां भागित्वार्थो नामग्रहः। बन्धुत्वं च स्त्रीणामप्यविशिष्टम् इति। अथावरेषां यथाज्येष्ठं स्त्रीपुंसां ये जीवेयुरिति। अपरेषां त्रयाणां पुत्रपौत्रनप्तॄणां स्त्रीपुंसरूपाणां जीवतां यथाज्येष्ठं नामानि गृह्णीयात् ॥ C after गृह्णीयात् adds अमुष्य पिता। यथा वासुदेवशर्मा यजत इति। after अमुष्य पिता adds इत्युपलक्षणम्.

12. T. °ग्रह° my[1] °ग्राह° for °ग्रहण°; my[3] befor अथ adds स्थानत्रयोपादानं संख्यार्थम्। तेष्वेव नामग्राहो नान्यत्रेति। तेन हविर्धाने प्रवर्तमानाग्नीषोमप्राणयनयोश्च सुब्रह्मण्याह्वानपक्षे नामग्रहो न भवति।

इति। सत्रेषु यावन्ति **यजमानानां नामधेयानि** तानि **प्रत्येकं** पृथगेव **गृह्णीयात्** । न समासनिर्देशः कार्यः। तेन नारायणो यजते। वासुदेवो यजते इति पृथक् पृथगेव ग्रहणमिति। अन्ये तु सत्रप्रसङ्गाभावात् सूत्रमन्यथा व्याचक्षते। कथम्। यजमानस्य त्रीणि नामधेयानि। अभिवादनीयं व्यावहारिकं नक्षत्रनामेति च। तानि प्रत्येकं सर्वाण्यपि गृह्णीयात्। यथा दर्शपूर्णमासयोः सूक्तानुवाकनिगदे आशास्ते यजमानोऽसावित्यत्र यजमानस्य द्वयोर्नामधेययोर्ग्रहणम् । आश्वलायनोऽप्यभिधत्ते—**असावसावित्यादिश्य नामनी** इति। तद्वदिति। तदेतद्वृद्धैर्विमृष्यम्।।१९।।

**अमुष्य पुत्रः पौत्रो नप्तेति पूर्वेषाम्।।२०।।**

यजत इत्यनुवर्तते। स च पुत्रपौत्रनप्तृशब्दैः प्रत्येकं संबन्धनीयः।**पृथग्यजतिशब्देष्वि** (द्रा० श्रौ० १.३.९) ति विरामविधानसूत्रे बहुवचननिर्देशात् इति। यजमानस्य **पूर्वेषां** पितृपितामहप्रपितामहानां नामानि गृह्णीयात्। यथा यज्ञस्वामिनः पुत्रो यजते वासुदेवस्य पौत्रो यजते नारायणस्य नप्ता यजते इति। **अमुष्येति** पुंल्लिङ्गमविवक्षितम। जनकत्वमात्रमेव विवक्षितम। तेन स्त्रीणामपि नामग्रहणम्। सत्यभामायाः पुत्र इत्यादि। कुत एतत् ? यजमानसुकृते बन्धूनां भागित्वार्थो नामग्राहः। बन्धुत्वं च स्त्रीणामपि अविशिष्टम्।।२०।।

**अथावरेषां यथाज्येष्ठं स्त्रीपुंसानां ये जीवेयुः।।२१।**

**अवरेषां** त्रयाणां पुत्रपौत्रनप्तृणां स्त्रीपुंसरूपाणां जीवतां **यथाज्येष्ठं** नामानि गृह्णीयात्। अमुष्य पिता यजते। पितामहो यजते। प्रपितामहो यजते इति। **यथाज्येष्ठमिति** वचनात्। पुत्रवर्गं समाप्य पौत्रवर्गनामग्रहणम्।

---

1-2. my[2-3] om. यावन्ति and before तानि add तानि ; my[3] T trans. पृथगेव after गृह्णीयात्

2. v[2] समान° for समास°

6. my[3] om. अत्र···आदिश्य (L 7)

8. my[3] तदेव for तद्वदिति

10. v यजमानः for यजते

पुत्रवर्गेऽपि यदि दुहिता ज्येष्ठा तस्याः प्रथमं नामग्रहणम् इति। **स्त्रीपुंसानामिति** वचनात्। षण्ड (?ण्ठ०)स्य न ग्रहणम्। पतितस्यापि न ग्रहणम्। यजमानस्य तस्य भागित्वाभावात् ॥२१॥

**जनिष्यमाणानामित्यन्त उक्त्वा सुत्यादेश प्रभृति समापयेत् ॥२२॥**

**जनिष्यमाणानां** पिता पितामहः प्रपितामहो यजते इति पाठाभावेऽपि सामर्थ्याद्गम्यते। तथैव जैमिनिना स्पष्टमेव पठितम्। **जनिष्यमाणानां पिता पितामहप्रपितामहेत्युत्तमसाहे** (जै. श्रौ. सू. ८; पृ० २८) ति। तत्र **जनिष्यमाणानामिति** वर्गत्रयस्यापि तन्त्रेण निर्देशः। पृथगुपादानात्। एवमुक्त्वा तदनन्तरं श्वः सुत्यामागच्छेति निगदशेषं समापयेत् ॥२२॥

**अथ नामग्रहणवाक्येषु स्वरं विधत्ते अर्थनिर्वचनमुच्चान्तम् ॥२३॥**

इति। अर्थमात्रस्य वाचकमर्थनिर्वचनम्। प्रथमान्तं पदमित्यर्थः। प्रातिपदिकार्थमात्रे हि प्रथमा नाधिकरणकर्मत्वादिकमभिधत्ते इति। तेनायमर्थः। प्रथमान्तं पदमन्तोदात्तमिति। तत्र यजमाननामधेयं पुत्रः पौत्रो नप्ता पिता पितामहः प्रपितामह इति सप्त पदान्यन्तोदात्तानि स्युः ॥२३॥

**वैभक्ते च स्यादौ वैभक्तश्चैव ॥२४॥**

अत्र पूर्वसत्रादुच्चपदं समस्तमपि सामर्थ्यात् संबध्यते। **स्य इति** षष्ठ्येकवचनादेशो गृह्यते। आदिशब्देन तदागमो याडादिः। षष्ठ्येकवचन-

---

1. C My[1] om. नाम°; T. प्रथमग्रहणं for प्रथमं नामग्रहणम्; My[2-3] एव for नाम ; T. after इति adds. श्रुते;
2. L. खण्डस्य for षण्ठस्य T. om. अपि
4. My[3] pL अन्तम्; My[1] CT अन्ततः for अन्ते
10. p तदनन्तरे for तदनन्तरं
11. C[1] .निर्वचनानाम् for .निर्वचनम्; My[1]. उच्चान्तः for उच्चान्तम्
17. My[2-3] after स्युः ins. ततोच्चस्य नीचापेक्षत्वादुच्चशिष्टं सर्वानुदात्तमिति मन्तव्यम्। पाणिनिस्त्वाह-अनुदात्तं पदमेकवर्जमि (६.१.१५८) ति।

विभक्तिसंबन्धिनि **स्यादौ** परतः पूर्वमक्षरमुच्चं भवेत्। **वैभक्तश्च** स्यादिरप्युच्चो भवेत्। यथा वासुदेवस्य पुत्रः। सत्यभामायाः पुत्र इति षष्ठचन्तस्य च पदस्यान्त्यमक्षरं तत्पूर्वं चोदात्तमित्युक्तं भवति। तथा च महाभाष्यकारः—**अमुष्येत्यन्त उदात्तः स्यात्तस्योपोत्तमं च**॥२४॥

**उच्चाच्च नीचे नीचम्**॥२५॥

पूर्वसूत्रद्वयविहितात् **उच्चादुत्तरं यन्नीचं** तदपि **नीचे** परतः उच्चं भवेत्। यथा पितामहप्रपितामहपदयोराद्यो वर्णः **नीचे** परतः इति वचनात् पितृपुत्रपौत्रनप्तृपदानामादिरुदात्तो न भवति। उदात्तपरत्वात्तस्य॥२५॥

**जनिष्यमाणानामिति मध्ये द्वे**॥२६॥

**जनिष्यमाणानामि**त्यस्य पदस्य **मध्ये द्वे** अक्षरे तृतीयचतुर्थे उदात्ते भवतः। शिष्टमनुदात्तम्॥२६॥

**यजेश्चादिः**॥२७॥

यजत इत्यस्या**दिरु**च्चो भवेत्। अत्र सर्वत्रोच्चपदमनुवर्तते। एवम् उच्चस्य नीचापेक्षत्वादुच्चशिष्टं सर्वमनुदात्तमिति मन्तव्यम्। अत्र सुब्रह्मण्योमिति पदमन्तोदात्तम्। **सुब्रह्मण्यायामोङ्कार उदात्त** इति महाभाष्यकारवचनात्। इन्द्रागच्छेति निगदःसूत्रपठितस्वरः। तत्रापि महाभाष्यम्—**आकार आख्याते तदादिश्च वाक्यादौ च द्वे द्वे मघवन्वर्जमसावित्यन्त इति इत्यहे सुत्यामिति पदद्वयमन्तोदात्तमिति व्याकरणसिद्धमिति**॥२७॥

**दक्षिणासु चोदितोऽनुव्रजन् दक्षिणाः सनामग्राहामाह्वयेत्**॥२८॥

**दक्षिणासु** नीयमानासु **दक्षिणा अनुव्रजन्** नामग्राहयुक्तां सुब्रह्मण्या-

1. T. भवति for भवेत्
7. V² Om आद्यः
10. My³ तृतीये चतुर्थे fro तृतीयचतुर्थे
13. V¹ My²⁻³ एव for एवं
16. V¹⁻²LC निगद° for निगदः V¹⁻² My¹ LC अत्र for तत्र
18. T इ्यहे for इत्यहे

**माह्वयेत्**। अध्वर्युणा प्रेषितश्चोदित इति वचनं स्पष्टार्थम्। अध्वर्युसंप्रैषं सर्वत्राकाङ्क्षेदिति पूर्वमेवोक्तत्वात् ॥२८॥

**प्रणवनामानि वा ॥२९॥**

यद्वा सुब्रह्मण्योमिति त्रिःप्रणवान्तमुक्त्वासौ यजत इत्यादिनामग्रहणं च कुर्यात्। इन्द्रागच्छेति निगदं न ब्रूयात् ॥२९॥

**हविर्धानप्रवर्तनाग्नीषोमप्रणयनयोश्च सुब्रह्मण्येत्येके ॥३०॥**

इति स्पष्टम् ॥३०॥

**अनाह्वानमाचार्याः प्रातरनुवाकान्ता सुब्रह्मण्येति ॥३१॥**

दक्षिणानयने सुब्रह्मण्याया अनाह्वानमेवेति आचार्याः। कुतः? यस्मात् **प्रातरनुवाकान्तैव सुब्रह्मण्या**। सुत्यायामागमनार्थत्वात् आह्वानस्यागतेषु देवेषु पुनराह्वानं निरवकाशमिति। **इति** शब्दो हेत्वर्थः ॥३१॥

**इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले तृतीयः खण्डः ॥३॥**

---

3. pMy[3] च for वा

4. TMy[1-3] प्रणवम् for प्रणवान्तम्

10. सुत्याया देवगमनार्थत्वात् for सुत्यायामागमनार्थत्वात्

## चतुर्थः खण्डः

अथ विकृतिषु सुब्रह्मण्यायां विशेषं विधातुमुपक्रमते—

**साद्यस्क्रेष्वग्नीषोमीयायामिष्टौ वपाकालाज्यभागयोर्हुतयोः संस्थितायां वेत्येके ॥१॥**

इति । साद्यस्का नामैकाहास्तेष्वग्नीषोमीयपशोः स्थानेऽग्नीषोमीयेष्टिर्विहिता तत्र शाखान्तरे तत्स्थानापन्नत्वादग्नीषोमीयवपाकाला सुब्रह्मण्या प्राप्ता कस्मिन्नवसरे कर्तव्येति न ज्ञायते तत्रेदमुच्यते । **आज्यभागयोर्हुतयोर्वपाकाला** सुब्रह्मण्या कार्या । अग्नीषोमीयपशावाज्यभागानन्तरं वपाहोमस्य दर्शनात् । अत्र वपाहोमाभावेऽपि तत्कालस्य सद्भावाद् । यद्वा समाप्तायामिष्टौ कार्येत्येके ॥१॥

अथ स्वमतमाह—

**लुप्ता त्वधिकरणापायात् ॥२॥**

इति । **अधिकरणं** स्थानं निमित्तम् । तदभावादिष्टौ **लुप्तैव** सुब्रह्मण्या । वपाहोमो हि प्रकृतौ निमित्तम् । तदत्र नास्तीत्यक्रियैव ॥२॥

**अग्निष्टुत्स्वाग्नेयो निगदः ॥३॥**

अग्निष्टुतो नामैकाहाः । तेष्वग्निदेवत्यो निगदः ॥३॥

**तत्र गौतमीयम् ॥४॥**

**तत्र गौतमीयं** मतं वक्ष्यत इति शेषः ॥४॥

---

2. p. विशेषविधानं for विशेषं विधातुं; My[3] सुब्रह्मण्यायाः for सुब्रह्मण्यायां
6. V[1]My[1] TCP om तत्र; V[1]My[2-3]TC om. तत्
9. V[1] TC ग्रहणं युक्तम् for सद्भावात्
13. T. °करणस्थानं for °.करणं स्थानं; pe त्वलुप्ता for लुप्ता
14. V[1]TCL अपि for हि
16. V[1] °ष्टुन्नामैकाहः for °ष्टुतो नामैकाहाः; My[3] °देवेभ्यः for °देवत्यः
18. V[2] अनुकृष्यते for वक्ष्यते

**अग्न आगच्छ रोहिताभ्यां बृहद्भानो धूमकेतो जातवेदो विचर्षण आङ्गिरसब्राह्मणाङ्गिरसब्रुवाणेति प्राक् सुत्यादेशात् ।।५।।**

इति। एतावदहे सुत्यामित्यस्य पुरस्तादिन्द्रागच्छेति निगदमपोह्य **अग्न आगच्छेत्येवं** पठितो निगदः स्यात् ।।५।।

**देवानां स्थानेऽग्नयः ।।६।।**

इति। देवा ब्रह्माण इत्यत्र **देवानां स्थानेऽग्नयः** स्युः। अग्नयो ब्रह्माण आगच्छतेति ।।६।।

**अथ धानंजय्योऽग्न आगच्छ रोहितव आगच्छ भरद्वाजस्याजसहसः सूनो वारावस्कन्दिन्नुषसो जारेति ।।७।।**

**धानंजय्यस्तु जातवेदो विचर्षण** इत्येवमन्नस्य स्थाने **अग्न आगच्छ रोहितव आगच्छेत्येवं** पठितं निगदमाह ।।७।।

**आङ्गिरसप्रभृति समानम् ।।८।।**

इति। आङ्गिरस ब्राह्मणाङ्गिरसब्रुवाणेत्यादिकमुभयोरपि आचार्ययोः **समानमिति**। तत्र मघवन्निति पदम् उभयोरपि मते नास्त्येव। तन्मते प्रकृतावप्यभावात्। यत् पुनरागच्छ मघवन्नित्येक इति प्रकृतौ तृतीयं मतं दर्शितं तदप्यग्निष्टुत्सु न भवति। आग्नेयत्वान्निगदस्येति मन्तव्यम्। ऊहेनाप्यग्न इति प्रयोज्यम्। देवानां स्थानेऽग्नय इतिवत्। सूत्रकारेणानुक्तत्वात् ।।८।।

**इन्द्रं शक्रेति ब्रूयाद्विश्व इति देवाननिरुक्तेषु ।।९।।**

उपहव्यप्रभृतयः केचिदेकाहाः अनिरुक्ता भवन्ति। उपहव्यलक्षणं वक्ष्यति–**उपहव्ये देवतानामधेयानि परोक्षं ब्रूयुरि** (द्रा० श्रौ० २४.१.१) त्यादि। तेष्विन्द्रमपोह्य शक्रपदं प्रयुञ्जीत। देवा इति पदमपोह्य **विश्व** इति पदं ब्रूयात्। शक्रागच्छ। विश्वे ब्रह्माण आगच्छतेति ।।९।।

---

2. My[3] पृथक् for प्राक्

11. V[1-2] L रोहितवस्त्र for रोहितवः

22. V[1] °न्युञ्जन्ति for °युञ्जीत

**अनिरुक्तं प्रातःसवनयोश्च ॥१०॥**

प्रातः सवनमात्रमनिरुक्तं यस्य सोऽनिरुक्तः। प्रातः सवनो वाजपेयः। प्रजापतेरपूर्वश्चैकाहः। द्वयोरपि **तथैवेन्द्रं शक्रेति ब्रूयाद्विश्व इति देवानिति**। ननु च पूर्वेणैव सिद्धमेतत्। नैवम्। उत्तरयोः सवनयोर्द्वयोरपि निरुक्तत्वात्। भूयसा न्यायेन निरुक्तधर्मं स्यात्। तन्निवृत्त्यर्थमिदं सूत्रम्। भूयस्त्वान्मुख्यत्वं प्रवलमिति सूत्रकारमतम् ॥१०॥

**अभिषेचनीयदशपेयावन्तरेण सदा नामग्राहः ॥११॥**

राजसूये अभिषेचनीयदशपेययोः सुत्ययोरन्तराले दशाहानि भवन्ति। **तद्दीक्षित एव दशाहे ततो दशपेयेन यजेते** (द्रा० श्रौ० २५.२.१) ति सूत्रकारवचनात्। तद्दीक्षित इत्यस्यायमर्थः। अभिषेचनीयदीक्षया दीक्षित एव पुनर्दीक्षामकृत्वा ततो दशाहे दशपेयेन यजेतेति। तेन दशाहे दीक्षा न सन्ति। न चोपसदः। केवलं संसर्पेष्टिभिश्चरन्त्यध्वर्यवः। तत्रेष्ट्यन्तेषु सनामग्राहं सुब्रह्मण्याह्वानमप्राप्तमिदं सत्रं विधत्ते। नामग्राहमात्रं वा ॥११॥

**अहर्गणेष्वहराद्यन्तयोराह्वयेत् ॥१२॥**

**अहर्गणेषु** सत्राहीनेषु **अहराद्यन्तयोराह्वयेत्**। अहरादिः प्रातरनुवाकोपक्रमकालः। वसतीवरीपरिहरणकालो वा। अहरन्तं स्वयमेव वक्ष्यति। **अप्सुषोमान्तमहः सत्रेषु दधिभक्षान्तमहीनेषु च** द्रा० श्रौ० इति। तत्राहरन्तेष्वध्वर्युसंप्रैषाभावादप्राप्तं विधीयते। अहरादिग्रहणं

6. V²My¹T बलवद् for प्रवलम्

7. T समान° for सदा नाम.

11. V²My¹ T न पुनर्दीक्षां कृत्वा for पुनर्दीक्षामकृत्वा

12. V² संसृप्त° T संस्रप° for संसर्प°

13. My²-³ om अप्राप्तम्

17. T °क्रमे for °क्रम

19. My²³ तथा च जैमिनिनोक्तम्:—अतिरात्रादूर्ध्वमन्वहं परिहृतासु वसतीवरीषु श्वःसुत्याप्रवचनीं सुब्रह्मण्यामाह्वयेदिति। यद्येवमतिदेशसिद्धमेतत्। सत्यम् परिसंख्यार्थमिदं वचनम्। आद्यन्तयोरेवाह्वयेत्। न मध्ये इति। तेन मैत्रावरुणप्रैषकाले तत्प्रेषितोऽपि सुब्रह्मण्यां नाह्वयेत्। अनेन करिष्यमाणेनैव तत्प्रयोगार्थस्यापि सिद्धेरिति स्थिते for तत्राहरन्तेषु...संस्थिते (p. 29. L. 4)

दृष्टान्तार्थम्। यथा प्रातरनुवाकोपक्रमे देवतागमनार्थमाह्वानम् एवमहरन्तेष्वपि अवश्यं कार्यम्। अध्वर्युसंप्रैषाभावेऽपि मैत्रावरुणस्यातिप्रैषमन्त्रेण प्रेषितत्वादिति भावः ॥१२॥

ननु संस्थिते किमर्थमाह्वानमत आह—

**उत्तरार्थाहरन्तिकी ॥१३॥**

इति। अहरन्ते भवा आहरन्तिकी। सा सुब्रह्मण्योत्तरदिवसार्था अवश्यं कार्या। **उत्तरार्थेति** वचनादन्त्येष्वहस्सु न भवति। तत उत्तराभावादिति। अत्र केचिदहरन्तादूर्ध्वमुत्तरदिवसार्थवसतीवरीपरिहरणकालेऽपि सुब्रह्मण्याह्वानमिच्छन्ति। तत् सूत्रकारस्यानभिमतम्। **अहरादान्तयोरिति** द्वयोरेव कीर्तनात्। तेनोत्तरोत्तरसुत्यानां द्वे द्वे एव सुब्रह्मण्ये असाधारणभूते अहरुपक्रमे पूर्वाहरन्ते चेति मन्तव्यम्। तथा च सूत्रकारो दर्शयति—**ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे वे** (द्रा० श्रौ० १.४.२६) ति अन्यथा द्वे वा तिस्रो वेत्यवक्ष्यत् ॥१३॥

**अग्नीषोमीयप्रभृत्यहीनेषु सर्वाः सनामग्राहाः ॥१४॥**

**अहीनेषु** अग्नीषोमीयवपाप्रभृति उत्तराः **सर्वाः** सब्रह्मण्याः **सनामग्राहाः** स्युः। ननु अतिदेशसिद्धमेतत्। नैवम्। आहरन्तिकीष्वप्राप्तेस्तदर्थं **सर्वा** इति विधानम् ॥१४॥

**दीक्षानुपूर्वेण दीक्षितानां सत्रेषु नामग्राहः ॥१५॥**

सत्रेषु यजमानानां दीक्षाक्रमेण नामग्राहः ॥१५॥

**ऊर्ध्वमतिरात्रादग्रहणम् ॥१६॥**

सत्रेष्वित्यनुवर्तते। सत्रेषु प्रायणीयातिरात्रस्य प्रातरनुवाकपर्यन्तमेव

---

9. TMy³ नाभि° for अनभि°

13. My²⁻³ after अवक्ष्यत् add:—तेनोत्तरदिवसानां द्वे द्वे एव सुब्रह्मण्ये असाधारणभूते अहरुपक्रमे पूर्वाहरन्ते चेति मन्तव्यम्।

16-17. My²⁻³ सत्रेषूर्ध्वमि (?म) तिरात्रान्नामग्रहणस्य निवृत्तिं वदति तदहीनेष्वप्युक्तमिति शङ्कानिवृत्त्यर्थमिदं सूत्रम् for नैवम्।... विधानम्.

18. V¹⁻² °.पूर्व्येण for °.पूर्वेण

नामग्रहणम्। तत ऊर्ध्वमग्रहणमिति। अत्र अहरन्तेष्वविधानादेवाग्रहणस्य सिद्धत्वादहरादौ निषेधोऽयम्॥१६॥

**तस्यान्ते श्वः सुत्या गौतमस्य॥१७॥**

पूर्वेद्युरुपक्रान्तोऽतिरात्रो द्वितीयेऽहनि प्रातःकाले समाप्यते। **तस्यान्ते** या सुब्रह्मण्या द्वितीयदिवसार्था तत्र श्वः सुत्यामागच्छेति निर्देशः कार्य इति **गौतमः**। ननु च तदानीमेव द्वितीयसुत्यारम्भात् अद्य सुत्यामिति वक्तव्यम्। नैतदेवम्। अहर्गणमधिकृत्योत्तरोत्तरदिवसार्थे मैत्रावरुणस्य अतिप्रैषमन्त्रे सर्वेषामह्नामविशेषेण श्वःसुत्यामित्येव पाठात्। नहि द्वितीयस्याह्नोऽद्यसुत्यामिति विशेषतः पाठोऽस्ति। तेन पश्चाद्भावित्वसामान्यात्। श्वःसुत्यामिति कथंचिन्निर्देशः कार्यः। तुल्यन्यायतया सुब्रह्मण्यायामपि तद्वन्निर्देशः॥१७॥

**नार्मेधान्त एके॥१८॥**

**एके** पुनरतिरात्रस्य नार्मेधसामसमाप्तौ उक्थ्यपर्यवसाने आहरन्तिकीं सुब्रह्मण्यामपकृष्य कुर्यादित्याहुः। उत्तरेष्वहःसु तथाकरणात्। तथा सति श्वःसुत्यामिति निर्देशः समञ्जस इति भावः॥१८॥

**अद्यसुत्या शाण्डिल्यस्य॥१९॥**

तस्यान्त इत्यनुवर्तते। अतिरात्रस्यान्ते **अद्यसुत्या**मिति निर्दिशेदिति शाण्डिल्यः। तदानीमेव द्वितीयसुत्यारम्भात् यः पुनरतिप्रैषमन्त्रे श्वःसुत्येति पाठः स तु सर्वासामुत्तरसुत्यानां श्वः श्व एवारम्भात् तदभिप्रायः। न तु द्वितीयदिवसाभिप्रायः। तत्राद्यसुत्येत्यूह एव कार्य इति शाण्डिल्यो मन्यते॥१९॥

**अनाह्वानं धानंजय्यः॥२०॥**

इति। तस्यान्ते **अनाह्वानम्** एवेति धानंजय्यः। कुतः? सर्वथानुपपत्तेः।

1-2. My[2] om अत्र ... निषेधोऽयम्.

12. T. after नार्मेधान्त adds इति

13. V[1] .उक्थ्या° for उक्थ्य°

20. My[2-3] °दिवसार्थोऽपि तेन for °दिवसाभिप्रायः

23. V[2] after धानंजय्य adds कथंचित्

अतिप्रैषे तावत् श्वः सुत्यामिति पाठात्। अद्यसत्यामित्युपपन्नम्। तदानीमेवारम्भात्। श्वः सुत्यामिति चानुपपन्नम्। तेन च अनाह्वानमेव युक्तम् ॥२०॥

**तिसृष चोत्तमासु नामग्राहः ॥२१॥**

चकारो धानंजय्यानुकर्षणार्थः। ऊर्ध्वमतिरात्रात् सत्रेषु न नामग्राह इत्युक्तम्। धानंजय्यस्तु सत्रस्यान्ते तिसृषु सुब्रह्मण्यासु नामग्राहश्च कार्य इत्याह। तस्य निदानं मृग्यम् ॥२१॥

**उत्तमयोरिति गौतमः ॥२२॥**

स्पष्टम् ॥२२॥

**तथासत्यग्नीषोमीयवपायामग्रहणं धानंजय्यः ॥२३॥**

तथा सतीति। यदि सत्रसमाप्तौ द्वयोरेव सुब्रह्मण्ययोर्नामग्राहः तथा सति पुरस्तादपि द्वयोरेव नामग्राहः नाग्नीषोमीयवपायामित्यर्थः। यथा प्रायणं तथैवोदयनं युक्तमभिमतम् ॥२४॥

**अनाह्वानं वा ॥२४॥**

स्पष्टम् ॥२४॥

**सर्वत्र सत्रेष्वग्रहणं शाण्डिल्यः ॥२५॥**

सत्रेष्वग्नीषोमीयप्रभृत्यसमाप्तेर्न क्वचिदपि नामग्रहणमिति शाण्डिल्यः ॥२५॥

**ऊर्ध्वमतिरात्रादाग्नेय्येका द्वितीये पञ्चदशरात्रे द्वे वा ॥२६॥**

द्वितीयस्य पञ्चदशरात्रस्य द्वितीयमग्निष्टुद् भवति। तदुपक्रमे पूर्वदिवसान्ते च अग्निष्टुत्स्वाग्नेयो निगद (द्रा० श्रौ० १.४.३) इति

---

1. pTMy[3] अनुपपन्नम्, L अनुपपत्तेः for उपपन्नम्
2. My[3] द्वितीयसुत्यारम्भात् for आरम्भात्
7. V[1-3] अभिधानं for निदानं
8. My[2-3] उत्तरयोः for उत्तमयोः
15. My[2-3] om °स्पष्टम्.
20-21. V[1-2]TCL om तदुप... दिवसान्ते च

वचनादाग्नेयी सुब्रह्मण्या कार्या। अग्निष्टुद्व्यतिरिक्तेषु अहःसु प्रकृतिवदैन्द्री सुब्रह्मण्येत्यसंदिग्धम्। या पुनरुपसद्दिवसेषु सर्वसुत्यासाधारणी सुब्रह्मण्या सा किमाग्नेयी स्यादैन्द्री वेति संशयः। तत्रेदमुच्यते। **ऊर्ध्वमतिरात्राद**ग्निष्टुत एव असाधारणी **केवलमेका सुब्रह्मण्याग्नेयी** स्याद्। **द्वे वेति** परिसंख्यानमेतत्। तेनोपसत्कालीनास्तु सर्वा ऐन्द्रच एव स्युः। ऐन्द्राणामह्नां भूयस्त्वात् मुख्यत्वाच्चेत्यभिप्रायः। अतिरात्रान्ते धानंजय्यमतेनाह्वानाभावादेकाग्नेयीत्युक्तम्। गौतमादिमतेनाह्वानात् द्वे वेत्युक्तम्॥२६॥

**सर्वाः प्राक् त्रिकद्रुकेभ्यस्तृतीये॥२७॥**

आग्नेयीति पदं बहुवचनेन विपरिणम्यानुषञ्जनीयम्। **तृतीये** पञ्चदशरात्रे प्रथममहरग्निष्टुत्तदनन्तरं ज्योतिर्गोरायुरिति त्रीण्यहानि त्रिकद्रुकसंज्ञकानि भवन्ति। तत्र **त्रिकद्रुकेभ्यः प्राक् सर्वाः** सुब्रह्मण्याः उपसत्कालीना अप्याग्नेय्य एव स्युः। अग्निष्टुतो मुख्यत्वादिति भावः। भूयस्त्वान्मुख्यत्वं प्रबलमिति सूत्रकारस्य पक्षः। जैमिनिश्चाह––**विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्। सधर्मत्वात्।** मुख्यं वा पूर्वचोदनात्। लोकवत् (१२.२.२२-३) इति। मीमांसावार्तिककारस्तु **विप्रतिषिद्धधर्मसमवाय** इत्यादिसूत्रद्वयमेकाधिकरणमिच्छन् पूर्वसूत्रेण मुख्यत्वाद् भूयस्त्वं प्रबलमिति व्युत्पाद्यते। द्वितीयेन तु भूयस्त्वाभावे मुख्यत्वं नियामकमित्युच्यत इत्याह॥२७॥

**कौण्डपायिनतापश्चितयोर्द्वादशाहे सुत्येति विदित्वा परिमाणाह्वानं धानंजय्यः। सुत्यामागच्छेतीतराः॥२८॥**

---

5. $V^{1-2}$ तथा for तु

6. $V^{1-2}$TL °.रात्रे for °रात्रान्ते

10. $V^{1-2}$ $My^{1}$TL transs. आग्नेयी. . . . .अनुषञ्जनीयम् after लोकवत् इति (L16)

12. $TMy^{3}$ °संज्ञानि for संज्ञकानि

13. P अथ for अपि

14-15. $V^{2}$ बलवद् for प्रबलम्; $V^{1-2}$ TLCp om. °विप्रति . . .सधर्मत्वात्

16. TLCp om ·मीमांसावार्तिक. . . .इत्याह (L19)

21. इतरे for इतराः

कुण्डपायिनामयने द्वादशभिरुपसद्भिश्चरित्वा तदनन्तरं हविर्यज्ञैः षण्मासानतीत्य सुत्या भवति। तथा तापश्चिते सत्रे संवत्सरमुपसदो भवन्ति। तदनन्तरं सुत्योभयोरपि सत्रयोः प्रथमात् उपसदमारभ्य सुत्यायाः प्रागेतावदहे सुत्यामिति परिमाणाह्वानं कार्यं प्रकृतिवद् इति प्राप्ते इदमुच्यते। **द्वादशाहे**ऽतिक्रान्ते **सुत्या भविष्यतीति** ज्ञात्वा **परिमाणाह्वानं** कार्यम्। ततः **पूर्वमितरा** सुब्रह्मण्याः। केवलं सुत्यामागच्छेत्याह्वयेत्। प्रकृतौ द्वादशाहे तथैव परिमाणनिर्देशात् इति धानंजय्याभिप्रायः। प्रथममुपसदमारभ्यैव परिमाणाह्वानमिति सूत्रकारस्य मतम्। कुतः? मूलप्रकृतौ ज्योतिष्टोमे तथैव विधानात्। तत्र यथा त्र्यहे सुत्यामिति दृष्टमपि परिमाणाह्वानमार्थिकत्वात् द्वादशाहे न भवति। तस्य द्वादशोपसत्कत्वात्। किंतु प्रथममुपसदमारभ्यैव परिमाणाह्वानम्। तथा द्वादशाहे दृष्टमपि परिमाणाह्वानमार्थिकत्वात्तापश्चितादौ भवति ॥२८॥

**ऊर्ध्वं चातिरात्रात् प्रथमस्य सारस्वतस्य प्राक् श्वः सुत्यायाः ॥२९॥**

इति। सुत्यामागच्छेत्यनुवर्तते। **प्रथमस्य सारस्वतस्य** पर्वणि पर्वणि सुत्या तदन्तरालदिवसेष्विष्टचयनमिति स्थितिः। तत्रापि प्रथमसुत्यायाः **ऊर्ध्वं**मिष्टचयनदिवसेष्वन्त्यवर्जंसुत्यामागच्छेत्येव निर्दिशेत्। न परिमाणाह्वानं कुर्यादित्यर्थः। सुत्यायाः पूर्वदिवसे श्वः सुत्यामिति निर्दिशेत्। **प्राक् श्वः सुत्याया** इति वचनात् ॥२९॥

ननु च इष्टचयनदिवसेषु सुब्रह्मण्याह्वानं नास्त्येव अविहितत्वात्। असति चाह्वाने कथं तत्प्रकारकथनम्? अत आह—

---

4. V² My¹ °माणं for °माणाह्वानं;
4-5. P. अभिप्रेत्य, V² इति प्राप्तम् for इति प्राप्ते
7. pL. (अ) निर्देशात् for निर्देशात्.
10. pL इति for अपि; V¹⁻² LTp. om. द्वादशाहे ˙ ˙आर्थिकत्वात् (L. 12)
13. T. च for श्वः
16. V¹⁻² L. स्यात् for तद्.
17. V¹⁻² अन्तेवर्जं for अन्त्यवर्जं

**कौण्डपायिनसारस्वतयोरिष्टचयनेषु सुत्यावच्छाण्डिल्यः ।।३०।।**

इति। इष्टचयनदिवसेष्वपि सुत्यादिवसवदाद्यन्तयोः सुब्रह्मण्याह्वानं कुर्यात्। एतावान्विशेषः। सुत्यादिवसेषु आद्यन्तयोराह्वानम्। तत्सुत्यार्थम्। इष्टचयनदिवसेषु आगामिसुत्यार्थमिति शाण्डिल्यग्रहणं पूजार्थम् ।।३०।।

**तथाग्निहोत्रमासे तथाग्निहोत्रमासे ।।३१।।**

कुण्डपायिनामयने अग्निहोत्रमासेऽपि तथैवाद्यन्तयोराह्वानम् ।।३१।।

इति द्राह्यायणश्रौतसूत्रे प्रथमे पटले चतुर्थः खण्डः ।।४।।

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः।
छन्दोगसूत्रे दीपोऽयं प्रथमे पटले कृतः ।।

इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे प्रथमः पटलः समाप्तः ।।१।।

3. My[1-2] after कुर्यात् add:—इत्यप्राप्तविधिरियम्.

# द्वितीयः पटलः

## प्रथमः खण्डः

एवं सुब्रह्मण्यस्य कृत्यमुक्त्वा प्रस्तोतुर्वक्तुमारभते—

**सर्वत्रानादेशे परिसामानि प्रस्तोता गायेत् स्वाध्यायवत् स्वासु ॥१॥**

इति। यानि बहिस्तोत्राणि अङ्गतया प्रयुज्यन्ते तानि परिसामानि। तानि **अनादेशे** स्वकीयास्वृक्षु यथाध्ययनं प्रस्तोतैव गायेत्। योनिरुत्तराद्वयं च स्वकीयाः। ततोऽन्याः परकीयाः। यथा रथन्तरस्य **अभित्वा शूर नोनुमः** (सा० ६८०-१) इति स्वकीयाः। **कया नश्चित्र आभुवत्** (सा० ६८२-४) इति परकीयाः वामदेव्यस्य हिताः स्वभूताः। तत्र रथन्तरं दक्षिणे पक्षे गायेदित्युक्ते **कयानश्चित्र आभुवदित्येतास्वपि** रथन्तरस्य दर्शनात् तास्वपि गानं प्रसज्येत। तन्निवृत्त्यर्थं **स्वास्विति** वचनम्। **आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत्** (द्रा० श्रौ० १०-१-७) इति सामान्यवचनात् प्रतिपादं स्तोभानुषङ्गः प्राप्तः। तन्निवृत्त्यर्थं **स्वाध्यायवदिति** वचनम्। यथाध्ययनमित्यर्थः। **सर्वत्रेति** वचनम् अध्वर्युसंप्रैषाभावेऽपि गानार्थम्। अन्यथा सुब्रह्मण्यस्येव निवृत्तिः स्यात्। तथा सामान्यप्रैषेऽपि प्रस्तोतुरेव गानार्थम्। अन्यथा स्वयमातृण्णायां साम गायेति सामान्यप्रैषे उद्गातुरेव गानं स्यात्।

**उद्गातैव कुर्यादनादेशे** इति वचनादनादेश इति वचनम् अग्न्याधेये ब्रह्मा गायेदित्यादेशे सति तन्निवृत्त्यर्थम्। अत्र जैमिनिनोक्तम् **अथ परि-**

---

6. V[1-2] °स्तोत्रम्, My[1] °स्तोत्र° for °स्तोत्राणि.
10. My[2-3] om. वामदेवस्य · · · स्वभूताः
13. V[1-2] LMy[1] °पदं for पादं
14. My[2-3] after अर्थं add:—अग्निचयनादौ परिसामगानमुद्गातुः जैमिनिना विहितं तन्निवृत्त्यर्थम्. My[2-3] after वचनम् add: तथा
18. T. om. अनादेश इति वचनम्
19. V[2] My[1] after निवृत्त्यर्थम् add:—अनादेश इति; V[2] My[1] T. om. अत्र

गाणानि न गेयानि न ह्यध्वर्युः संप्रेष्यति। यद्यध्वर्युः संप्रेष्यति गेयानीति तदा पदाय पदाय स्तोभाननुसंहरेदित्याचार्यसमयः। यथाधीतानि एव गेयानीत्यनुब्राह्मणिन इति॥१॥

**तृचापत्तीनि तृचेषु त्रिरितराणि ॥२॥**

यानि तृचमापन्नानि तृचस्थानि रथन्तरादीनि परिसामानि तानि तिसृष्वपि ऋक्षु गायेत्। **इतराणि** एकर्चापत्तीनि ऋग्विहीनानि च प्रजापतेर्हृदयादीनि तानि **त्रिर्गायेत्**॥२॥

अथ प्रवर्ग्यसामसु विशेषमाह—

**शार्ङ्गारूढवदाङ्गिरसे वा त्रिरभ्यस्येदन्तरा पराचा ॥३॥**

**अञ्जन्ति घर्मं तत्र शार्ङ्गम्** (द्रा० श्रौ० २.२.२५)। इत्यादिना प्रवर्ग्यसामानि वक्ष्यति। तत्र प्रथमं साम शार्ङ्गसंज्ञितम्। आरूढवदाङ्गिरसमुत्तमं साम। एते एव सामनी प्रवर्ग्यप्रचारे **त्रिरभ्यस्येत्**। तयोरन्तरा यत् साम जातं तेन **पराचा** सकृदुक्तेनैव गायेत्। नाभ्यस्येत्। **पराचेति** तृतीयैकवचनम्। **वा**-शब्दोऽवधारणार्थः। न पुनर्विकल्पार्थः॥३॥

अन्तरा नाभ्यस्येदित्यत्र हेतुमाह—

**तथा च होता ॥४॥**

इति। प्रवर्ग्यप्रचारे **होतापि तथैव** घर्ममभिष्टौति। प्रथमोत्तमे ऋचौ

---

1. p °माणानि for °गाणानि
3. V[1] °ब्राह्मणतः, P °ब्राह्मणे for °ब्राह्मणिन.
6. V[1] PMy[2-3] °रह्रीतानि for विह्रीनानि
10. V[1-2] इत्यादीनि for इत्यादिना; My[2] before अञ्जन्ति adds यथा.
11. P शार्ङ्गम् for शार्ङ्गसंगितम्; My[1-3]L. संज्ञकम् for °संज्ञितम्.
12. T. °चारे for °प्रचारे.
13. Pc. trans ° तेन after पराचा.
17. T. °चारो for °चारे

त्रिरुक्त्वा मध्यपतिताः सर्वाः सकृदेव होता ब्रूयात्। तद्वत् प्रस्तोतापि मध्यपतितेन सामजातेन पराचैव गायेत्॥४॥

हेत्वन्तरं चाह—

**लिङ्गोपपत्तिश्चैवम्॥५॥**

इति। एवं पराचा गाने क्रियमाणे सति प्रवर्ग्यसाम्नामनुष्ठेयार्थप्रकाशनरूपलिङ्गोपपत्तिः। अभ्यासे तु क्रियमाने कालविलम्बादुत्तरोत्तरानुष्ठेयस्य मन्त्रात्प्रकाशनं न स्यात्॥५॥

**अन्तरेण चत्वालोत्करौ संचरः सर्वत्रानादेशे॥६॥**

चत्वालोत्करावध्वर्युप्रसिद्धौ। तयोर्मध्यदेशेन संचरः सर्वदा॥६॥

**तदाप्नानं तीर्थम्॥७॥**

चत्वालोत्करयोर्यन् मध्यं तदाप्नानसंज्ञकं तीर्थं संचरमार्गः। संज्ञाकरणं व्यवहारार्थम्। यो भूयो जिगमिषेदाप्नेन स गच्छेत्॥७॥

**अग्नौ चीयमाने पश्चिमेन पुच्छं गत्वा दक्षिणेऽपिकक्षे तिष्ठेद्यत्र वोपदध्युः॥८॥**

परिसामगानार्थं प्रस्तोतेति शेषः। यत्राध्वर्यव इष्टकोपधानं कुर्युस्तत्र वा तिष्ठेदपिकक्षे वेति विकल्पः॥८॥

अथ कोऽयमपिकक्षो नाम? तमाह—

**पश्चिमेन पक्षावपिकक्षौ॥९॥**

इति। अग्निपक्षयोः पश्चिमौ देशावपिकक्षौ। पश्चिमेनेत्येनप् प्रत्ययान्तोऽयम्। न तृतीयेति॥९॥

**पूर्वेणोपप्लयौ॥१०॥**

---

1. V[1-2] °पतित्वात् for °पतिता.; T. ब्रूते for ब्रूयात्.
7. V[1-2] LPC मन्त्रार्थं° for मन्त्रात्.
9. My[2-3] सर्वेषाम् for सर्वदा.
13. T. °विकक्षे for °पिकक्षे.

इति। पक्षावित्यनुवर्तते पक्षयोः पुरस्ताद्यौ देशौ तावुपप्लयाविति ॥१०॥

**पुष्करपलाश उपधीयमाने हिरण्मये पुरुषे स्वयमातृण्णासु च शर्करासु व्याहृति सामानि गापयेद्यजमानं सत्यं पुरुषो भूर्भुवः स्वरित्येतासु पृथक् ॥११॥**

प्रथममध्यमोत्तमासु चितिषु तिस्रः स्वयमातृण्णाः शर्कराः पुष्करपर्णादिषु पञ्चस्विष्टकासूपधीयमानासु सत्यं पुरुषो भूर्भुवः स्वरित्येतासु पञ्चसु व्याहृतिषु सामानि क्रमेण यजमानं पृथक् प्रस्तोता गापयेदिति ॥११॥

**तेषां स्थाने स्वयं चिन्वान ऋतनिधनमाज्यदोहं पुरुषव्रतमेकानुगानं रथन्तरं वामदेव्यं बृहदिति ॥१२॥**

**स्वयं चिन्वान** इति सप्तमी। अध्वर्युर्यजमानो वा स्वयं चिनुयादिति। यजमानस्य चयनं विकल्पेन विहितम्। यजमाने स्वयं चिन्वाने सति तेषां व्याहृतिसाम्नां **स्थाने आज्यदोहादीनि** पञ्च सामानि यजमानमेव गापयेत्। **ऋतनिधन**मित्याज्यदोहविशेषणम्। एकानुगानमिति पुरुषव्रतविशेषणम्। केचित्तु **स्वयंचिन्वान** इति प्रथमान्तं प्रस्तोतुर्विशेषणमित्याहुः। तदयुक्तम्। प्रस्तोतुश्चयनविध्यभावादिति ॥१२॥

**रथन्तरप्रभृतीनि विकल्पन्ते लोकसामभिरावृत्तैः ॥१३॥**

रथन्तरं वामदेव्यं बृहदिति त्रीणि सामानि **विकल्पन्ते लोकसामभिरावृत्तैः**। प्रतिलोमैरित्यर्थः। **आर्षेयब्राह्मणे त्रीणि लोकानां व्रतानि। दिवोऽन्तरिक्षस्य पृथिव्या इति**॥ (आ० ब्रा० ६-६-२३) इति लोकसामानि दर्शितानि। **मन्ये वां द्यावापृथिवी सुभोजसाव्** (सा० ६२२) इत्यस्यामृचि प्रथमं लोकसाम। **वाग् वाग् वागीयम्। कया नश्चित्र आभुवद्** (सा०१६९)इति द्वितीयम्। पुनश्च **मन्ये वा**मित्यस्यामेवर्चि प्रतिष्ठासि प्रतिष्ठेति स्तोभोपक्रमं

---

1. V[1-2]L °अपिकक्षौ for पक्षौ. PC My[2] °ब्लयो for प्लयौ.
5. T. om. प्रथम°...इत्येतासु (L.6); My[2]om. प्रथम... यजमानं (L 7)
7. My[3] before सामानि ins पञ्चव्याहृति° V[2]Tmy[2] om पृथक्.
10. My[2-3] after सप्तमी ins एकवचनम्°
12. T.om. एव.

तृतीयं लोकसाम। तत्र प्रतिलोमैरिति वचनात् तृतीयरथन्तरयोर्विकल्पः। द्वितीयवामदेव्ययोर्विकल्पः। प्रथमबृहतोर्विकल्पः ॥१३॥

**संचितमग्निं दक्षिणेन गत्वा अग्नआयूंषीति प्रत्यङ्मुखस्तिष्ठञ्छिरसि गायत्रं गायेन्निरुक्तम् ॥१४॥**

अग्निचयनं समाप्य यदा मण्डूकविकर्षणान्तं कर्माध्वर्युणा कृतं तदाग्निः संचित इत्युच्यते। संचितमग्निं दक्षिणेन गत्वा अग्नेः शिरस्समीपे तिष्ठन् गायेत्। न धिष्ण्यमासादयेदिति श्रुतेः। अनिरुक्तं गेयमिति ब्राह्मणेन गायत्रस्य सामान्येनानिरुक्तगानविधानात् तन्निवृत्त्यर्थं निरुक्तम् इत्युक्तम्। अनिरुक्तगानं नाम केवलं प्रणवेनैव गानमिति सूत्रकारो गायत्रपटले वक्ष्यति। निरुक्तगानन्तु प्रत्यक्षरमृगक्षरेणैव गानम् ॥१४॥

**प्रत्याव्रज्य रथन्तरं दक्षिणे पक्ष उदङ्मुखः पश्चाद्वा प्राङ्मुखः ॥१५॥**

प्रत्याव्रज्य रथन्तरं दक्षिणे पक्षे दक्षिणतः उदङ्मुखः तिष्ठन् गायेत् ॥१५॥

**पश्चिमेन पुच्छं गत्वा बृहदुत्तरे पक्षे दक्षिणामुखः। पश्चाद् वा प्राङ्मुखः ॥१६॥**

स्पष्टम् ॥१६॥

**प्रत्याव्रज्य यज्ञायज्ञीयं पुच्छे संवत्सरश्चेद्दीक्षः सौत्यो वा ॥१७॥**

बृहद्गानानन्तरं प्रत्याव्रज्य पुच्छस्य पश्चात् तिष्ठन् यज्ञायज्ञीयम् गायेत्। यदि क्रतोः कृत्स्नः संवत्सरो दीक्षाकालः स्यात्। सुत्याकालो वा। यथा गवामयनतापश्चितादिः ॥१७॥

**ऋतुष्ठायज्ञायज्ञीयमन्यत्र ॥१८॥**

संवत्सरदीक्षासुत्याद्गवामयनादेरन्यत्र ज्योतिष्टोमादावृतुष्ठा यज्ञायज्ञीयं पुच्छे गायेत् ॥१८॥

---

2. My[2] द्वितीयस्य च वामदेव्यस्य च for द्वितीयवामदेव्योः
My[2-3] प्रथमस्य बृहतश्च for प्रथमबृहतोः
10. T. प्रत्यक्षम् for प्रत्यक्षरम्.
23. My[3] सुत्यकालात् for सुत्यात्

**वामदेव्यं दक्षिणेऽपिकक्षे ।।१९।।**

इति ।।१९।।

**प्रजापतेर्हृदयमुत्तरे ।।२०।।**

द्वयमपि स्पष्टम् ।।२०।।

**एतानि गौतम उत्तरेणाग्निं गत्वा ।।२१।।**

**एतानि** सामानि **उत्तरेण अग्निं गत्वा** प्रारभेतेति गौतमः । **दक्षिणेग्निं गत्वेति** स्वमतं पूर्वमुक्तम् ।।२१।।

अथ मतान्तरमाह—

**एतान्येव प्रदक्षिणं प्रत्यन्ताद् धानंजय्यः ।।२२।।**

इति । **एतान्येव** गायत्रादीनि शिरः प्रभृति यावदुत्तरं पक्षं प्रदक्षिणं गायेत् । न पुनः पुनः प्रत्याव्रज्य गायेदित्यर्थः ।।२२।।

**यज्ञायज्ञीयं पुच्छे ।।२३।।**

इति । सर्वेष्वपि ऋतुषु **यज्ञायज्ञीयमेव पुच्छे** न पुनः ऋतुष्ठायज्ञायज्ञीयमिति ।।२३।।

**प्रजापतेर्हृदयस्थाने च वामदेव्यम् ।।२४।।**

इति । प्रजापतेर्हृदयस्थाने च वामदेव्यं गायेत् । चकारात् स्वस्थानेऽपि एतदन्तं धानंजय्यमतमिति ।।२४।।

मतान्तरमाह—

**दक्षिणेनाग्निं गत्वा गौतमीये व्यत्ययं ये पक्षयोः शाण्डिल्यः ।।२५।।**

इति । **शाण्डिल्यस्तु** गौतममते एव स्थित्वा **पक्षयोर्ये** सामनी तयोर्व्यत्ययमाह । गमनं च दक्षिणेनाग्निमित्याहेति ।।२५।।

---

1. T. अवि° for अपि°

10 P. My[1] गयत्र्या° for गायत्रा°

13. V[1-2] इति for अपि

**शिरसि च गीत्वोत्तरे पक्षे ॥२६॥**

इति । शिरसि च गीत्वा तदनन्तरमेवोत्तरे पक्षे रथन्तरं गायेदिति ॥२६॥

**यथागीतमितराणि ॥२७॥**

इति । **इतराणि** बृहत्प्रभृतीनि सामानि गौतममते **यथागीतं** तथा गायेदिति ॥२७॥

**उत्तरे चोपप्लये स्वंहृदयदेशमालभ्य प्रजापतेर्हृदयम् ॥२८॥**

इति । **स्व**मात्मीयं **हृदयदेशमालभ्य उत्तरे चोपप्लये** प्रत्यङ्मुखस्तिष्ठन् **प्रजापतेर्हृदयं** गायेत् । चकारात् स्वस्थानेऽप्युत्तरेऽपिकक्षे गायेत् । एतदन्तं शाण्डिल्यमतमिति ॥२८॥

अथ सर्वमतसाधारणमाह—

**अध्वर्युपथे श्यैतम् ॥२९॥**

इति । क्रमणेष्टकासमीपम**ध्वर्युपथं** तत्र स्थित्वा सर्वान्ते **श्यैतं** गायेत् इति ॥२९॥

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले प्रथमः खण्डः ॥१॥

---

6. My[12]T. प्लवे for प्लये

## द्वितीयः खण्डः

अथ प्रवर्ग्योद्वासनमधिकृत्याह—

**प्रवर्ग्यवत्युत्तरेण सम्राडासन्दीं गत्वा पश्चात्तिष्ठन्नध्वर्यु-प्रेषितस्त्यग्नायिइरिति गायेत् ॥१॥**

इति। **प्रवर्ग्यवति** ऋतौ प्रवर्ग्योद्वासनकाले **सम्राडासन्दीमुत्तरेण गत्वा** तस्याः **पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्यग्नायिरिति गायेत्।** प्रवर्ग्यसामान्यनुक्त्वैव तदुद्वासनसाम्नां प्रथमविधानं। प्रवर्ग्यसाम्नामनित्यताज्ञापनार्थम्। तथा च वक्ष्यति **न वा कुर्याद्** (द्रा० श्रौ० २-२-१८) इति। **प्रवर्ग्यवतीति** विशेषणं प्रथमयज्ञे प्रवर्ग्यनिषेधात् प्रवर्ग्योद्वासनविषयमेतद्विधानमिति वक्ष्यमाणसूत्र-पर्यालोचनया अवगन्तव्यम्। ननु एवं प्रवर्ग्यवतीति व्यर्थं विशेषणम्। सत्यम्। विस्पष्टार्थम्। केचित्तु प्रवर्ग्योद्वासन उत्तरेणेत्येव पठन्ति। अत्र प्रवर्ग्योद्वासने प्रस्तोतुः साम गायेति त्रिः प्रैषो भवति। प्रतिप्रैषं सकृत् सकृत् सामगानं त्रिर्वचनस्य समुदायसिद्धत्वादित्येके। प्रतिप्रैषं त्रिर्गानम् इत्यन्ये इति ॥१॥

**पदाय पदाय स्तोभेत् ॥२॥**

**अग्निं होतारं मन्ये दास्वन्तम्** (सा० ४६५) इत्यस्यामृचि प्रतिपादं त्यग्नाइरिति स्तोभमाहरेदिति ॥२॥

**निधनायैव स्तौभीं वाचं विसृजेत् ॥३॥**

---

4. V²L त्यग्नयरिति for त्यग्नायिइरिति

6. My² अध्वर्युणा for अध्वर्यु°

7. V¹ om. °साम्नां...प्रवर्ग्य° (L. 9); TMy² प्रवर्ग्ये for प्रवर्ग्यं°

10. T. om. एवं V² om. सत्यम्;

11. V². स्पष्टार्थम् for विस्पष्टार्थम् V¹⁻² द्वासनोत्तरेण for °द्वासन उत्तरेण

15. V¹ om. प्रतिपादं;

16. V² त्यग्नायिरिति for त्यग्नाइरिति; PCL स्तोमम्, स्तोत्रम् for स्तोभम्

17. V¹⁻² स्तौत्रीं for स्तौभीं

**त्यग्नाइरिति** स्तोभान्तगतां **वाचम्**। वाशब्दमित्यर्थः। तन्निधनायैव ब्रूयात्। न प्रतिपादमित्यर्थः ॥३॥

**उपग्रहप्रभृतीनि स्वरयन्तमुपेयुर्ये घर्म उपयुक्ताः स्युः ॥४॥**

**ये घर्मे** प्रवर्ग्यप्रचारे **उपयुक्ताः** समन्वितास्ते सर्वे **उपग्रहप्रभृतीनि** निधनानि **स्वरयन्तो** ब्रूयुः। उपग्रहशब्देन निधनात् पूर्वपठित एकार उच्यते। उप समीपे गृह्यते पठ्यते इत्युपग्रह इति। **स्वरयन्त** इति वचनं प्रथमद्वितीयनिधनार्थम्। तृतीयस्याध्ययनसिद्धत्वात् ॥४॥

**पत्नी च ॥५॥**

उपग्रहप्रभृतीनि निधनान्युपेयादिति शेषः। पत्न्या अपि प्रवर्ग्यसमन्वयादेव सिद्धे पुनर्वचनं यजमानस्य निधनवचनादेव तस्याः कृतकार्यत्वशङ्कानिवृत्त्यर्थम् ॥५॥

**एवं मध्ये ॥६॥**

मार्गस्य मध्येऽप्येवमेव प्रस्तोता गायेत्। सर्वे च निधनं ब्रूयुः ॥६॥

**प्राप्य चावहनीयायतनम् ॥७॥**

इति। **आहवनीयायतन**मुत्तरवेदिः। **प्राप्य च** एवमेव गायेत्। निधनं सर्वे ब्रूयुः। आहवनीयायतनमिति घर्मोद्वासनदेशोपलक्षणम्। तेन नदीद्वीपादौ घर्मोद्वासनेऽप्येवमेव कुर्युः ॥७॥

**परिषिच्यमानेऽप उपस्पृश्य वार्षाहरम् ॥८॥**

---

1. V1-2 स्तोत्रान्त° fo स्तोभान्त°
2. V2 °पदम् for पादम्
3. T. after °प्रभृतीनि adds निधनानि Tv2 घर्मोप° for घर्म उप°
4. T. घर्म for घर्मे; V1 प्रवेर्ग्ये for प्रवर्ग्य; V2. om. प्रवर्ग्य°
5. T. om निधनात्
7. V1-2 Tc. om °निधन°
10. V2 ब्रूयु; for यजमानस्य निधन°; c. वचने for वचनं; V2 om वचनादेव·····°निवृत्त्यर्थमिति (L.11.) PC °कार्य° for °कार्यत्व°
13. My2 मार्गगमने for मार्गस्य मध्ये

इति। अध्वर्युणा परिषिच्यमाने घर्मे अप उपस्पृश्य वार्षाहरं साम गायेत् ॥८॥

**इष्टाहोत्रीयं परिषिक्ते ॥९॥**

घर्मे इष्टाहोत्रीयं साम गायेत् ॥९॥

**तस्य सर्वे निधनमुपेयुः ॥१०॥**

तस्य इष्टाहोत्रीयस्य साम्नो निधनं घर्मोपयुक्ताः सर्वे ब्रूयुः ॥१०॥

**द्वीपं चेद् घर्मपात्राणि हरेयुः सन्ततान्येव गायेन्नाकाङ्क्षेत् परिषेचनम् ॥११॥**

यदि नदीद्वीपे घर्मपात्राण्यध्वर्यवो हरेयुः तदानीं नदीद्वीपं प्राप्य पूर्वोक्तानि त्यग्नाइरित्यादीनि त्रीण्यपि सामानि सन्ततानि अविच्छेदेनैव गायेत्। न परिषेचनमाध्वर्यवं प्रतीक्षेत ॥११॥

**श्यैतं प्रत्याव्रजन् ॥१२॥**

इष्टाहोत्रीयगाने कृते प्राग्वंशं प्रत्याव्रजन् प्रस्तोता श्यैतं गायेत् ॥१२॥

**तृचे वैकस्यां वा यजमानो निधनमनूपेयात् ॥१३॥**

एकस्यामृचि तृचे वा श्यैतनिधनं यजमानोऽपि ब्रूयात् ॥१३॥

**पूर्वया द्वारा प्रपद्योत्तरेणाग्नीन् गत्वा पश्चाद् गार्हपत्यस्य तिष्ठन् महावीरायतनं प्रेक्षमाणो वामदेव्यं गायेदिति धानंजय्यः ॥१४॥**

महावीरायतनमिति पूर्वं प्रवर्ग्यप्रचारे यन्महावीरायतनम् ॥१४॥

**श्यैतान्तानीति शाण्डिल्यः ॥१५॥**

---

5. $V^2$ om तस्य . . . आकांक्षेत (L. 7)

9. T. अध्वर्यंते for अध्वर्यवो T. om °नदी°; T. द्वीपे for °द्वीपं

10. Pc. after संततानि ins °एव° Lpc. विच्छेदरहितानि, $V^{1-2}$ अवच्छेदरहितानि for अविच्छेदेन

20. $V^1$ before श्यैता° adds तथा च

**त्यग्नाइ** प्रभृतीनि **श्यैतान्तानि** चत्वार्येव घर्मोद्वासने गायेत्। न वामदेव्यमावश्यकमित्यर्थः। तथा च जैमिनिः-श्यैतान्तान्येवोक्त्वा वामदेव्यं नोक्तवान्। अत्र कश्चिद् वामदेव्यं नित्यमिति मत्वा व्याचष्टे-**श्यैतान्तान्येव तिष्ठन् गायेत्। वामदेव्यं त्वासीन एवेति।** तत् सूत्रानुगुणं न भवति ॥१५॥

**गणः सामान्युत्तराणि ॥१६॥**

**उत्तराणि** यानि **सामानि** वक्ष्यामस्तानि सर्वाणि एको **गणः**। तस्य सह वा प्रवृत्तिः सह वा निवृत्तिरित्यर्थः। तेषां स्वे स्वे विषये विकल्पं वक्ष्यति। तत्र यदैकं कर्तुमिष्यते तदान्यदपि कर्तव्यम्। न पुनरेकस्य करणमन्यस्याकरणमिति वैषम्यं कार्यमित्यनेन सूत्रेणोक्तम् ॥१६॥

अथ तेषां विकल्पमाह—

**आभिरूप्यात् कर्तव्यानीत्येके ॥१७॥**

इति। तेषां साम्नां तत्र तत्र कर्मणि **आभिरूप्यात्** क्रियमाणकर्माभिवादित्वात् **कर्तव्यानीत्येके** इति। तथा च जैमिनिः **सर्वेष्टिपशुसोमेषु यथालिङ्गं यथादैवतं च सामानि गायेत्** इति ॥१७॥

**न वा कुर्यात् ॥१८॥**

नहि वचनाभावे लिङ्गमात्राद् गानं युक्तमिति भावः ॥१८॥

**स्वे वा यज्ञे कुर्यादित्येके ॥१९॥**

स्वकीये **यज्ञे** सत्रेष्ववश्यं **कुर्यादित्येके** इति ॥१९॥

**यथाकामी वा ॥२०॥**

स्वकीयेऽपि **यज्ञे** यथाकाम्यं **वा** स्यात्। कुर्यान्न वेत्यर्थः ॥२०॥

**दीक्षणीयायां तार्क्ष्यसामनी गायेत्त्यमूष्वित्येते ॥२१॥**

---

1. V[1] after श्यैतान्तानि adds एव
4. Pc. च for तु; V[1] om तत्˙˙ भवतीति; V[1-2] °गुणनं for गुणं
12. My[1-2] om one तत्र
19. V[2] °काम्यं° for °कामी

**दीक्षणीयायामिष्टौ** प्रधानयागकाले **गायेत्**। अङ्गानां प्रधानयागकालत्वात्। स्पष्टं चाह जैमिनिः-**यानि पशौ सामानि शिष्टानि वपान्ते तानि गायेत्। प्रधानकाल उपसत्सु चेष्टिषु चे** (          ) ति। तथा प्रागावृत्तः तिष्ठन्नुपविष्टो वा मध्यमया वाचा गायेत् ॥२१॥

**प्रायणीयायाँ प्रवद्भार्गवम् ॥२२॥**

स्पष्टम् ॥२२॥

**उदयनीयायामुद्वद् ॥२३॥**

भार्गवमित्यनुवर्तते ॥२३॥

**आतिथ्यायाँ गायत्रीसामौशनम् ॥२४॥**

औशनस्य विशेषणं **गायत्रीसामेति**। गायत्र्यामृचि गीयमानमित्यर्थः ॥२४॥

अथ प्रवर्ग्यसामान्याह—

**अञ्जन्ति घर्मं तत्र शार्ङ्गम् ॥२५॥**

इति। प्रवर्ग्यप्रचारे **घर्मं** महावीरम् अध्वर्यवोऽञ्जन्ति तदा **शार्ङ्गं** गायेत्। अत्र जैमिनिः प्रवर्ग्यसामान्यधिकृत्याह—**अन्तरेण वेद्युत्करौ प्रपद्यापरेण होतारं परीत्य दक्षिणतो घर्ममभिमुख उपविश्य गायेत्** इति ॥२५॥

**रजतजातरूपे उपदधति तच्छुक्रचन्द्रे ॥२६॥**

इति। रजतं च जातरूपं च द्वे रुक्मे क्रमेणोपदधति अध्वर्यवः। तदानीं **शुक्रचन्द्रे** सामनी गायेत् ॥२६॥

**अभीन्धते तद् घर्मस्य तन्वौ ॥२७॥**

घर्ममित्यनुवर्तते। अध्वर्यवो **घर्ममभीन्धते**। तदानीं **घर्मस्य तन्वौ** गायेत्। अत्र केचिद् घर्मतन्वौ गीत्वा तदनन्तरं महावैश्वानरव्रतादीनि कानिचित् सामानि घर्माभिरूपत्वाद्गेयानीत्याहुः। तच्चिन्त्यम्। सूत्रकारेणानुक्तत्वात् ॥२७॥

---

3. V² My¹- om. च after इष्टिषु;

22. V¹ °प्रभृतीनि My¹ °भृतादीनि for °व्रतादीनि

23. V¹ धेयानि for गेयानि

**रुचितं प्राहुस्तद्धर्मस्य वा रोचनमिन्द्रस्य वेति ॥२८॥**

घर्ममित्यनुवर्तते। रुचितं घर्मं प्राहुरध्वर्यवः। रुचितो घर्म इति। तदानीं घर्मरोचनमिन्द्ररोचनं वा गायेत् ॥२८॥

**धेनुमुपसृजन्ति तद्धेनु ॥२९॥**

धेनुं वत्सेन योजयन्ति दोहनार्थमध्वर्यवः। तदानीं धेनुसाम गायेत् ॥२९॥

तत्र स्वाध्यायवद् गाने प्राप्ते विशेषमाह—

**तस्य देवतासु सोपायं स्तोभमाहरेदनुपायं पादायाभ्यस्येदुत्तमं पादं पञ्चनिधनवदिति गौतमः ॥३०॥**

इति। **स्वादिष्ठया मदिष्ठया** (सा० ४६८) इत्यस्यामृचि प्रतिपादं पुरस्तादेकैका देवताम्नाता भुवन् इडा जनत् इडा वृधदिडेति। तृतीयपादस्योपरिष्टाच्चैका देवताकरदिडेति। तदनन्तरं सोपायस्तोभः। तदन्ते देवताभूतं निधनम्। सामोपक्रमे च निरुपायस्तोभः। एवं स्थिते इदमाह तस्य धेनुसाम्नो देवतासूच्यमानासु **सोपायं स्तोभं** प्रत्येकं प्रत्येकं पुरस्तादाहरेत्। उपायरहितं स्तोभं पदाय पदाय पुरस्तादाहरेत्। तथा **स्वादिष्ठये**त्यस्या उत्तमं पादं करदिडेति। चतुर्थदेवतानन्तरमाहृत्याभ्यस्येत्। अस्य तृतीयस्यापि दृष्टान्तः। **पञ्चनिधनवदिति**। यथा **कया नश्चित्र आभुवदिति** (सा० १६९) पञ्चनिधने वामदेव्ये निधनभूतासु देवतासु प्रत्येकं सोपायः स्तोभः आम्नातः। प्रतिपादं निरुपायः स्तोभः।उत्तमश्च पादश्चतुर्थनिधनानन्तरमभ्यस्येत् तद्वदिति। अत्र तथाध्ययनाभावेऽपि पञ्चनिधनवामदेव्याध्ययनं निदर्शनार्थमिति गौतमाभिप्रायः। अत्रोपायशब्देन स्तोभान्तर्गतो वाशब्दो-

5. My[1] V[2]T om दोहनार्थं; v[2]tran योजयन्ति after दोहनार्थम्
9. T. °पदं for °पादं
10. P. देवताम्नाना for देवताम्नाता
11. PT. सोपायं for सोपाय°
12. My[2] स्तोभोप for सामोप°
14 My[1] पादाय पादाय for पदाय पदाय
17. My[3]p सोपायं for सोपाय°
18. P My[3] निरुपायं for निरुपाय°
19. My [2-3] अतः for अत्र
20. V[2] अन्तरगतः for अन्तर्गतः

ऽभिधीयते। तस्य सर्वेषु सामसु निधनोपायत्वात् निधनलक्षणत्वादित्यर्थः। तथा च वक्ष्यति-**तान्यन्तः सामनिधनानि वाक् चेत्स्तोभान्तोऽनन्तर** इत्यादि ॥३०॥

मतान्तरमाह—

**समस्येत्पददेवते इति शाण्डिल्यः ॥३१॥**

इति। पादं च देवतां च **समस्येत्**। न तयोः पृथक् पृथक् स्तोभमाहरे-**दिति शाण्डिल्य** इति। तस्याप्युत्तमपादस्याभ्यासः संमत एव। निषेधाभावात्। तन्मते पञ्चकृत्वः स्तोभाहरणम्। तत्र यथाध्ययनं सामान्ते सोपायः स्तोभः। तत्पूर्वं देवताचतुष्टये निरुपायः स्तोभ इति ॥३१॥

मतान्तरमाह—

**नोत्तमं पादं पुनरभ्यस्येदिति वार्षगण्यः ॥३२॥**

इति। उत्तमपादाभ्यासे प्रमाणाभावान्नाभ्यासः कार्यः। पञ्चनिधने तु वामदेव्ये अध्ययनसिद्धोऽभ्यास इति वैषम्यम्। तन्मतेऽपि पददेवतयोः समासेनैव स्तोभाहरणम्। पञ्चकृत्व इति समानम् ॥३२॥

ननु च तत्पक्षे केवलचतुर्थदेवतायाः स्तोभाहरणं न प्राप्नोति। ततः पूर्वं समस्तयोरेव पददेवतयोः स्तोभाहरणात्। अत आह—

**शेषं यथा मरुतां भूतौ तथा समापयेत् ॥३३॥**

इति। **यथान्तश्चरति रोचने** (सा० ६३१) ति मरुतां संभूतौ साम्नि पददेवतयोः समासेनैव पूर्वं स्तोभमाहृत्य पश्चात् केवलदेवताया अपि स्तोभा-

---

7 My[3] पदस्य for °पादस्य

8. P सोपायं for सोपाय°; my[1] V[2] ततः for तत्

9. P. निरुपायं for निरुपाय°

12. My[1] पदा° for पादा°

14. C. °हरणें for हरणम्

15. L. केवलं तच्चतुर्थ for केवलचतुर्थ°

19. T °दैवतयोः for °देवतयो; My[2-3] केवलं for केवल°

हरणमाम्नातम् । तद्वदत्रापि चतुर्थदेवताप्रभृति शेषं समापयेत् । केवल-देवताया अपि स्तोभमाहृत्यैव समापयेदित्यर्थः ।।३३।।

**पय आहरन्ति तत्पयः ।।३४।।**

**पय आहरन्ति** अध्वर्यवः । तदानीं पयःसंज्ञकं साम गायेत् ।।३४।।

**आसिञ्चन्ति तत् सिन्धुषामात्वा विशन्त्विन्दव इति ।।३५।।**

महावीरे पय **आसिञ्चन्ति**। तदानीं **सिन्धुषाम** गायेदिति ।।३५।।

**शफाभ्याँ परिगृह्णन्ति तद्वसिष्ठस्य शफाविति ।।३६।।**

यदा **शफाभ्यां** महावीरं **परिगृह्णन्ति** अध्वर्यवः तदानीं **वसिष्ठस्य शफौ** ।।३६।।

**ह्रियमाणे व्रतपक्षौ ।।३७।।**

अध्वर्युभिर्महावीरे **ह्रियमाणे** ।।३७।।

**हुतेऽश्विनोर्व्रते अहोरात्रयोर्वा ।।३८।।**

**हुते** घर्मे **अश्विनोर्व्रते अहोरात्रयोर्वा** व्रते वा गायेत् ।।३८।।

**रौहिणाभ्यां पुरोडाशाभ्यां चरन्ति तद्राजन रौहिणके ।।३९।।**

स्पष्टम् ।।३९।।

**परिघर्म्यं सम्राडासन्द्यां समारोपयन्ति तदारूढवदांगिरसमित एत इति स्वर्णिधनम् ।।४०।।**

**परिघर्म्यं** प्रवर्ग्योपकरणं महावीरादिकमध्वर्यवः सादयन्ति। तदानी-**मारूढवदाङ्गिरसं** गायेत्। तस्य साम्न उपेतिनिधनमपोह्य तत्स्थाने स्वरिति निधनं च कुर्यात्। **स्वर्णिधन**मिति बहुव्रीहिः। आरोहानिति पदान्वयादारूढव-दित्युक्तम् ।।४०।।

---

1. My[2-3] om. शेषं and केवलं for केवल°
8. V[1-2]Cp. om. महावीरं
13. T. om. हुते...गायदिति
14. p. before रौहिणाभ्यां adds प्रागन्यदनु ।।होइ।। आप्रागात्
16. Tmy[2] इति for इतः;
17. My[2-3] V[1] एति My[1] एतद् for एत
19. p. after आरूढवद् ins. आङ्गिरसम्

**अग्निं प्रणयन्ति तत्राग्नेर्व्रतम् ।।४१।।**

औपसथ्येऽह्न्युत्तरवेद्याम**ग्निं प्रणयन्ति** अध्वर्यवः। तदानी**मग्नेर्व्रत**मनुव्रजन्नेव गायेत्। होतुरनुव्रजनदर्शनादिति ।।४१।।

**अग्नीषोमौ तत्रोभयोर्व्रते ।।४२।।**

प्रणयन्तीत्यनुवर्तते। **अग्नीषोमौ** प्रणयन्त्यध्वर्यवः। तदानी**मुभयो**रग्नेः सोमस्य च **व्रते** गायेत्।।४२।।

**सुत्यायां यज्ञसारथि प्राक् प्रातरनुवाकोपाकरणादाग्नीध्रीयेऽहरहः ।।४३।।**

सुत्यादिवसे **प्रातरनुवाकोपकरणात्** पूर्वमग्नीध्रमनुप उपविश्य **यज्ञसारथि** गायेत्। एवम**हरह**रहीनेषु ।।४३।।

**सत्रे सत्रस्यर्द्धि ।।४४।।**

सत्रेषु यज्ञसारथिस्थाने **सत्रस्यर्द्धि** गायेत् ।।४४।।

**उक्षा चेदनुबन्ध्य औक्ष्णोरन्ध्रे ।।४५।।**

अवभृथोत्तरकाल**मनुबन्ध्यः** पशुरस्ति। स **चेदुक्षा** स्यात्तदानी**मौक्ष्णोरन्ध्रे** सामनी वपान्ते गायेत्। **यानि पशौ शिष्टानि तानि वपान्ते गायेदिति** जैमिनिवचनात्। अत्र केचिदग्नीध्रीये गानं कार्यमित्याहुः। अन्ये तु विशेषावचनात् अङ्गानां प्रधानदेशत्वाच्चाहवनीयसमीपे गानमित्याहुः ।।४५।।

**ऋषभ आर्षभम् ।।४६।।**

अनुबन्ध्य इत्यनुवर्तते। **ऋषभ** अनुबन्ध्ये सति **आर्षभं** साम गायेत् ।।४६।।

**उन्नते त्रैककुभम् ।।४७।।**

**उन्नत** उच्छ्रितपृष्ठो गौः ।।४७।।

**वशायां वाशम् ।।४८।।**

**वशा** वन्ध्या ।।४८।।

---

3. T. °गच्छन् for °व्रजन्

17. V². अप्रधान° for प्रधान°

**अज आजिनम् ॥४९॥**

इति ॥४९॥

**मेष और्णायवम् ॥५०॥**

स्पष्टम् ॥५०॥

**पयस्यायाँ स्वारं पयोनिधनम् ॥५१॥**

यद्यनुबन्ध्यस्थाने पयस्यामामिक्षां कुर्युस्तदा **पयोनिधनं** **स्वार**संज्ञं साम गायेत् ॥५१॥

**उदवसानीयायामुद्वंशीयम् ॥५२॥**

स्पष्टम् ॥५२॥

**उपक्रम्य समापयेदाक्रतोरपवर्गात् ॥५३॥**

यदि दीक्षणीयायां तार्क्ष्यं सामोपक्रान्तं स्यात्तदा तत्प्रभृतीन्युद्वंशान्तानि सामानि **समापयेत्** । किंचित् कृत्वा किंचिन्न त्यजेदित्यर्थः। **गणः सामान्युत्तराणी** (द्रा० श्रौ० २-२-११) ति। यत् पूर्वमुक्तं तस्यैतन्निगमनं विस्पष्टार्थम् ॥५३॥

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले द्वितीयः खण्डः ॥२॥

---

6. T.p My$^{2-3}$ संज्ञकं for संज्ञं
12. T om. न

## तृतीयः खण्डः

अथोद्गातुः कृत्यं वक्तुमारभते––

**औदुम्बरीमुच्छ्रयिष्यन् पूर्वेण देवयजनं गच्छेद् दक्षिणतश्चेदस्यावसथः स्यात् ॥१॥**

इति । औदुम्बरी सदसो मध्यस्थूणा ताम् **उच्छ्रयिष्यन्** उद्गाता देवयजनस्य पूर्वप्रदेशेन **गच्छेद्** यदि देवयजनस्य **दक्षिणतः** उद्गा**तुरावसथो** गृहं स्यात् ॥१॥

**उत्तरेण यद्यन्यतः ॥२॥**

**यद्यन्यतो** गृहं स्यात्तदा देवयजनस्योत्तरपार्श्वेन गच्छेत् । उभयथाप्याप्नानतीर्थेनैव देवयजनस्य प्रवेशः ॥२॥

**पूर्वौ सदसो द्वार्यौ श्वभ्रावन्तरेण प्रपद्याग्रेणौदुम्बरीं गत्वोदङ्मुखस्तिष्ठन्नध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तरोत्तानाभ्यां पाणिभ्यां द्युतानस्त्वेति ॥३॥**

**सदसः** पूर्वे द्वारे स्थूणानिखननार्थमवटद्वयमस्ति । तौ **श्वभ्रौ अन्तरेण** प्रविश्य प्रागग्रा**मौदुम्बरीमध्वर्युणा** पूर्वमेव निहिताम**ग्रेण गत्वोदङमुखस्तिष्ठन् अध्वर्युणा सहोच्छ्रयेद्दक्षिणोत्तराभ्यामुत्तानाभ्यां च पाणिभ्यां द्युतानस्त्वेति** (तां० ब्रा० ६-४-२) ब्राह्मणपठितेन मन्त्रेण **पृथिवी**मित्यन्तेन ॥३॥

**आयोरिति श्वभ्रेऽवदध्यात् ॥४॥**

**आयोष्ट्वे** (तां० ब्रा० ६-४-३)त्यादिना **समुद्रस्य हृदय** इत्यन्तेन ब्राह्मणपठितेन मन्त्रेण **श्वभ्रेऽवदध्यात्**। अत्र ब्राह्मणम्––**तामन्वारभत आयोष्ट्वे** (तां० ब्रा० ६-४-३) ति । तस्यायमर्थः । अन्वारभ्य सादयेदिति। कुतः। सादयामीति मन्त्रलिङ्गात् सूत्रानुरोधाच्च ॥४॥

---

9. V² आप्नानेन for आप्नान°;

10. My²⁻³ °यजन° for °यजनस्य

14. V¹C. °निषनन° for °निखनन°

17. V¹C. पृथिवी० for पृथिवीम्

**अवधाय जपेन्नमः समुद्राय नमः समुद्रस्य चक्षसे मामायुनर्वा-हसी दूर्गस्यूर्जेदा ऊर्जं मे देह्यूर्जं मे धेह्यन्नं मे देह्यन्नं मे धेहीति ॥५॥**

ननु च ब्राह्मणपठित एव मन्त्रः किमर्थं पठ्यते। उच्यते। ब्राह्मणे मन्त्रैकदेशानां पृथक् पृथक् विनियोगः प्रतिभाति। तन्निवृत्यर्थं कार्त्स्न्येन पठित्वा जपे विनियुङ्क्ते ॥५॥

**तान्न विसृजेदावच्छादनात् ॥६॥**

तामौदुम्बरीं न विसृजेच्छदिरध्यूहनात् पूर्वमित्यर्थः ॥६॥

**अध्वर्युणाभिहृतायां जुहुयात् तस्यैवावृतान्तरेण विशाखे ॥७॥**

अध्वर्युणा अभिहुतायामौदुम्बर्यां होमे कृते इत्यर्थः। तस्यैवाध्वर्यो-रावृता प्राकारेण हिरण्यनिधनादिना औदुम्बर्या विशाखयोर्मध्ये स्रुवेण जुहुयात् ॥७॥

**घृतेन द्यावापृथिवी अप्रीणाथा ॐ स्वाहेति पूर्वां प्रजापतये स्वाहेत्युत्तराम् ॥८॥**

आहुतिमिति शेषः ॥८॥

**अन्यतरां वा स्वाहाकारद्वितीयाम् ॥९॥**

पूर्वयोर्मन्त्रयोरन्यतरेणैकामाहुतिं केवलस्वाहाकारेण द्वितीयामाहुतिमिति पक्षान्तरम् ॥९॥

**यथा भूमिमाज्यं प्राप्स्यतीति ॥१०॥**

उभयोरपि पक्षयोर्यथाभूमिमौदुम्बरीमूलम् **आज्यं प्राप्स्यतीति** तथा प्रभूतमवस्रावयेत्। **इतीति** अनेन प्रकारेणेत्यर्थः ॥१०॥

**आज्यं होम चोदनास्वनादेशे ॥११॥**

स्पष्टम् ॥११॥

---

3. V[1] किमत्र for किमर्थ
5. V[2] My[1] पठितत्वात् for पठित्वा; V[1]My[1-3] CTP. °युक्तः for °युङ्क्ते

**अधस्ताद् विशाखस्य परिगृह्य जपेद् दिवि देवान्दृꣳह मयि प्रजामिति ।१२।।**

स्पष्टम् ।।१२।।

**अन्तरिक्षे वयाꣳसि दृꣳह मयि पशूनिति मध्ये ।।१३।।**

औदुम्बरीमध्यं परिगृह्येत्यर्थः ।।१३।।

**पृथिव्यामध्यौषधीर्दृꣳह मयि सजातानिति मूले ।।१४।।**

मूलं परिगृह्येत्यर्थः ।।१४।।

**ऊर्ध्वꣳहोमाद् याजमानं धानंजय्यः ।।१५।।**

**होमादूर्ध्वं** यत् कर्म मन्त्रजपात्मकं तद् यजमानेनैव कर्तव्यमिति । मयि प्रजां पशून् सजातानिति प्रत्यगाशीष्ट्वादिति ।।१५।।

**स्वयमिति गौतमशाण्डिल्यौ यां वा कांचिद् ऋत्विगाशिषमाशास्ते यजमानस्यैव सेति ।।१६।।**

स्वयमेवोद्गात्रा मन्त्रजपः कार्य इति मतान्तरम् । ऋत्विग्भिः कृतमपि फलाशासनं यजमानगतमेवाशास्यते । न स्वार्थमिति हेतोः ।।१६।।

**अवच्छाद्यमानायां दिव्यं छद्मासि संतनिनाम विश्वजनस्य छाया नमस्तेऽस्तु मा मा हिꣳसीरिति ।।१७।।**

अध्वर्युणावच्छाद्यमानायामौदुम्बर्यां जपेदित्यर्थः ।।१७।।

**दक्षिणेन श्वभ्रान् गत्वापरौ द्वार्यावन्तरेण प्रपद्यैतत् कुर्यादिति शाण्डिल्यः ।।१८।।**

**दक्षिणेन** सदसि यावन्तः श्वभ्रा स्थूणानिखननार्थास्तान् सर्वान् **गत्वापरौ द्वार्यौ अन्तरेण प्रपद्यैत**दुच्छ्रयणादिकं **कुर्यादिति शाण्डिल्यः** ।।१८।।

---

10. V² TL My¹ om. प्रजाम्; V² LMy¹T दृꣳहेति for सजातानिति

14. V² °शासनस्य, My²⁻³ शासानां for शासनं

20. L. om. दक्षिणेन . . .शाण्डिल्यः (L 21); V¹ om. दक्षिणेन . . प्रपद्य and trans. एतत् after उच्छ्रयणादिकं; PC om. सदसि. . .सर्वान्

**उत्तरेणेति धानंजय्यः ॥१९॥**

तानेव श्वभ्रानुत्तरेणेत्यर्थः ॥१९॥

**गौतमीयमितरत् ॥२०॥**

**इतरन्मतं गौतमीयं** यत्पूर्वमुक्तं पूर्वौ सदसदसो द्वार्यौ (द्रा० श्रौ० २-३-३) इत्यादि ॥२०॥

**यथैतं निष्क्रामेत् ॥२१॥**

**यथा** येन प्रकारेण सदसि प्रविष्टस्तेनैव प्रकारेण निष्क्रामेत् ॥२१॥

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले तृतीयः खण्डः ॥३॥

## चतुर्थः खण्डः

**यूपमुच्छ्रीयमाणमनुमन्त्रयेरन्नृमण ऊर्ध्वंभरसं त्वेति ।।१।।**

यूपोच्छ्रयणकाले अध्वर्युणा **यूपमुच्छ्रीयमाण**मुद्गातारः **अनुमन्त्रयेरन् युगपत्कर्मसु सर्वेषु** (द्रा० श्रौ० ३-१-१) इति वक्ष्यमाणसूत्रात् त्रय एवोद्गातारः। चत्वारोऽपीति केचित्। अस्मिन् स्थाने **युगपत्कर्मस्विति** सूत्राकरणात् **नृमण ऊर्ध्वंभरसं त्वे** (तां० ब्रा० १-१-६) ति पादत्रयोपादानमुत्तरसूत्रे तत्परामर्शार्थम् ।।१।।

**एतान्येवोहस्थानानि यावन्तः स्युः ।।२।।**

**एतान्येव** त्रीणि पदानि कदाचिदूहस्थानानि भवन्ति। यत्र **यावन्तो** यूपाः **स्युः** तत्र तावत्सु यूपेषु। तद्यथा यूपैकदेशिन्यां **नृमण ऊर्ध्वंभरसं** त्वेति। तत्र कालभेदेन यूपानामुच्छ्रयणात् प्रकृतिवदविकारेण प्रयोगे प्राप्ते वचनमेतत्। प्रथमयूपोच्छ्रयणकाले एवोत्तरमनभिप्रेत्य मन्त्रोहः कार्य इति। नृम्ण इति समासोऽयं सकारान्तः संबुध्यन्तः। यथा **समुद्रे त्वा नृम्णा अप्स्वन्तरि** (ऋ० वे० १०-४५-३) ति नृषु प्राणिपु मनो यस्य रक्षिष्याम्येतानिति स नृमणाः विष्णुः। विष्णुत्वेन च यूप स्तूयते **उरु विष्णो विक्रमस्व** (७-२६-३) त्यादिभिः। तेनायं मन्त्रार्थः। हे नृमणः त्वामूर्ध्वंभरसम् ऊर्ध्वं धार्यमाणं अहमूर्ध्वंभराः दृशेयम्। त्वया विष्ण्वात्मनाहमप्यूर्ध्वं धार्यमाणः स्यामित्यर्थः। केचित्तु नृमणः शब्दः उपक्रमवाची खले वाल्यां वर्तते इत्याहुस्तदयुक्तम्। तस्य समासत्वेन बह्वृचतैत्तिरीयैरध्ययनादिति ।।२।।

**यत्र तिष्ठन्त उच्छ्रियमाणं पश्येयुरिति शाण्डिल्यः ।।३।।**

इति। अन्तर्वेदि वा बहिर्वेदि वा **यत्र तिष्ठन्तो** यूपं द्रष्टुं शक्नुयुस्तत्र स्थित्वानुमन्त्रणमित्यर्थः ।।३।।

---

17. V[1] विश्वा° for विष्ण्वा°

18 My[1-3] T °शब्दो वक्र°; V[2]L °शब्दोवक्रम° for °शब्द उपक्रम° V[1] °वाची खलु वाल्यां, for वाची खले वाल्यां; C °खल° for; खले; V[2] वाल्यं My[1-3] वाद्यं for वाल्यां; all mss read निवर्तंते for वर्तंते;

19. My[1] T. समात्वेन for समासत्वेन

**अन्तर्वेद्येवेति धानंजय्यः ॥४॥**

स्पष्टम् ॥४॥

हेतुमाह—

**न बहिर्वेदि यजुरवकल्पत इति ॥५॥**

इति। न हि सति संभवे बहिर्वेदि मन्त्रप्रयोगो युक्त इति ॥५॥

अथ सौत्येऽहनि प्रातरनुवाकात् पूर्वं विश्वरूपागानमस्मद्ब्राह्मणे विहितं तत्करणे गुणातिशयश्च श्रुतः। शाखान्तरे तु तद्गानं निषिद्धम्। तत्र निषेधपक्षम् उपपादयति—

**विश्वरूपाणां गानं ज्योतिष्टोमे यजमानेनोक्तः प्रत्याचक्षीत। चतुष्टोमस्तोमसंपदतिरेकाद् ग्रहशस्त्राभावाच्च ॥६॥**

इति। गुणातिशयलिप्सुना **यजमानेन** चोदितोऽप्युद्गाता **विश्वरूपाणां गानं प्रत्याचक्षीत**। नैव कुर्यादित्यर्थः। कुतः। चतुष्टोमस्याग्निष्टोमस्य स्तोमानां त्रिवृत्पञ्चदशसप्तदशैकविंशानां या संख्यासंपत्तिर्ब्राह्मणोक्ता तस्य नवतिशतं स्तोत्रीया इति तदतिरेकप्रसङ्गात्। विश्वरूपागाने तिस्रः स्तोत्रीया अतिरिच्येरन्। स्तोमसंपत्तिश्च गुणवत्तरैव श्रुता। किंच गानपक्षे ग्रहशस्त्राभ्यामवश्यं भवितव्यम्। **ग्रहं गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यादिति** तैत्तिरीयकश्रुतेः। **स्तुतमनुशंसति शान्त्या** इति च। नच तद्द्वयमप्यत्रास्ति। तस्मादप्यगानमिति ॥६॥

अथ गानमुपपादयन्नाह—

**वसतीवरीयो ग्रहः प्रातरनुवाकः शस्त्रमासां न च संपत्कोपो यथान्यैः परिसामभिर्गयैवेति चेद्ब्रूयात् ॥७॥**

इति। **वसतीवरीयो ग्रहः प्रातरनुवाकः** शस्त्रं भविष्यति। **नच** ब्राह्मणोक्तसंपद्विरोधः। विश्वरूपाभिः सोमात्मकस्य हविषस्तद्देवतानां च स्तुत्यभावात्

4. My[3] कल्प्यते for कल्पते

15. V[1-2] °वत्तरेव for °वत्तरैव

17. V[1]C °करोति for °कुर्यात्

20. My[1]LT °वर्यो for °वरीयो

23. V[1] संशय for संपद्

यथा **परिसामभिर्न** संपत्कोपस्तद्वत्। तस्मात् त्वं विश्वरूपा **गायैवेति।** यजमानो यदि ब्रूयात् तदा कार्यमिति। नात्र यजमाननियोगस्तन्त्रम्। किंतु यथोक्तग्रहशस्त्रक्लृप्तिः। यदि रोचते तदा गातव्यमित्येतावद्विवक्षितम्। तेन यजमानेनानुक्तोऽपि गायेदिति शास्त्रार्थः। केचित्त्वाहुः। नित्यमेव गानं यजमाननियोगश्च। प्रत्याख्यानं पुनर्नियोगश्चादृष्टार्थं कार्यमिति। तदयुक्तम्। ग्रहशस्त्राभावादिति। हेतुकथनवैयर्थ्याद्गायैवेति चेद् ब्रूयादिति। चेच्छब्देनानित्यतासूचनाच्च। जैमिनिरपि प्रत्याख्यानेनाकरणमेवाह। ते यदि ब्रूयुर्विश्वरूपा गायेति। अकर्मण एतत् त्रयोदशं स्तोत्रं विराजं संलोभयतीति ब्रूयात्। संभवे तु कार्यम्। अन्यत्र नेति॥७॥

अथ गानपक्षे प्रकारं विधत्ते—

**न मामनामन्त्र्य प्रातरनुवाकमुपाकुर्यादित्यध्वर्युं ब्रूयात्॥८॥**

इति। स्पष्टम्॥८॥

**होतारं प्रातरनुवाकायोपविष्टं पूर्वेण गत्वा यजमानश्च पूर्वया द्वारा प्रपद्यान्तरेण हविर्धानं पूर्वेण चक्रे उदङ्मुख उपविशेत् तूष्णीम्॥९॥**

**पूर्वया द्वारा हविर्धानं प्रपद्य** पूर्वमेवोपविष्टं होतारमग्रतो गत्वा शकटयोर्मध्ये चक्रयोः पुरस्तादुदङ्मुख उपविशेत्। तूष्णीमिति वचनं स्तोत्रधर्मस्य मन्त्रवदुपवेशनस्य निवृत्त्यर्थम्॥९॥

**पुरस्ताद्यजमानः प्रत्यङ्मुखः॥१०॥**

यजमानस्यापि सह प्रपदनं पूर्वमुक्तम्। सः पुरस्तादुद्गातुरुपविशेत्॥१०॥

**युञ्जे वाचꣳ शतपदीं गायेत्सहस्रवर्तनि गायत्रं त्रैष्टुभं जगद्विश्वारूपाणि संभृता देवा ओकाꣳसि चक्रिरे इत्येतस्यां पङ्क्तौ त्रिर्गायत्रं गायेदिति धानंजय्यः स्वाध्यायस्वरेण॥११॥**

---

3. P °शस्त्रे स्तुयुः; L शंसक्लप्ति My² शस्त्रे उप्तिः for शस्त्रक्लृप्तिः

9. T °लोभयत् for लोभयति

14. V¹⁻² CLT My² °धाने for धानं

20. My³ प्रवेशनं My² प्रवदनं for प्रपदनं

**पङ्क्ताविति** वचनं पञ्चस्वपि पादेषु व्याप्य गानार्थम् गेयमिति सामान्यश्रुतेरत्रापवादाभावात् अनिरुक्तमेव गेयम् । **स्वाध्यायस्वरेणेति** मध्यमया वाचेत्यर्थः ॥११॥

**मनसैव यजमान उपस्वरेत् ॥१२॥**

उद्गातुर्गानकाले **यजमानो मनसैव** गायत्रम् **उपस्वरेत्**। गायेदित्यर्थः। तदप्यनिरुक्तमेव। केचिदार्चिकमित्याहुः ॥१२॥

**त्रिषु त्रिषु पादेषु गायेदिति गौतमः ॥१३॥**

युञ्जे वाचम् (सा० १८२९) इत्यस्या ऋचस्त्रिषु त्रिषु पादेषु गायत्रं गायेन्न पञ्चसु पादेष्विति गौतम इति ॥१३॥

कथमित्याह—

**पूर्वं पूर्वमतिसृजन् गायत्रीकारम् ॥१४॥**

इति। प्रथममाद्येषु त्रिषु पादेषु गीत्वा पश्चात् प्रथमं पादमुत्सृज्य द्वितीयं पादमुपक्रम्य पादत्रयमनभ्यासेन गायत्रीं कृत्वा गायेत् ॥१४॥

**प्रगाथकारं वा ॥१५॥**

प्रगाथं वा कृत्वा गायेत्। तत् कथम्? प्रथमं पादत्रये गीत्वा पश्चात् तृतीयं पादं द्विरभ्यस्य चतुर्थेन पादेन सह गायत्रीं कृत्वा गायेत्। एवं चतुर्थं पादं द्विरभ्यस्य पञ्चमेन सह गायत्रीं कृत्वा गायेत्। कुत एतत्। पूर्वस्तोत्रीयान्त्यस्य पादस्य पुनरभ्यासः प्रगाथ इत्युच्यते। अत्र **त्रिषु पादेषु गायेदिति** वचनात् तस्यैव द्विरभ्यासः कार्यः ॥१५॥

**गीत्वा यथार्थं स्यात् ॥१६॥**

स्पष्टम् ॥१६॥

**विश्वरूपाश्चेद्गायेज्ज्योतींष्यपि गायेत् ॥१७॥**

**युञ्जे वाचमिति** तिसृणां स्तोत्रीयाणां **विश्वरूपा** इत्यभिधानं **विश्वा**

16. V² om. एवं चतुर्थं ··· गायेत् (L.17)
17. P सर्व° for पूर्व
23. V² My² om. तिसणां

रूपाणि संभृते(सा० १८३०)ति अक्षरान्वयात्। **चेच्छन्दस्तासाम**-**नित्यतां सूचयतीति** ॥१७॥

अथ ज्योतिषां गानकालमाह—

**परिहिते प्रातरनुवाकेऽपोनप्त्रीयं नाम सूक्तं पुरा तस्माद्धोतारमारमेत्युक्त्वा** ॥१८॥

इति। प्रातरनुवाके होत्रा समापिते सति पश्चात्तेनैवानुवक्तव्यमपोन-प्त्रीयं नाम सूक्तमस्ति। तदनुवाचनात् पूर्वं होतारमारमेत्युक्त्वा ज्योतींष्यपि गायेत् ॥१८॥

**आग्रयणस्य वानुहिंकारं पवित्रं धारयन्** ॥१९॥

इति। अथवाग्रयणं गृह्णतोरध्वर्योर्हिंकारमनु तद्वेलायां दशापवित्रं धारयन् ज्योतींष्यपि गायेत् ॥१९॥

**आस्तावं वा प्राप्य पुरा स्तोमयोगात्** ॥२०॥

अथवा बहिष्पवमानस्तुतिदेशं प्राप्य स्तोमयोगात् पूर्वं गायेत् ॥२०॥

अथ गानप्रकारमाह—

**अग्निर्ज्योतिर्ज्योतिरग्निरिन्द्रो ज्योतिर्ज्योतिरिन्द्रः सूर्योज्योति-र्ज्योतिः सूर्य इत्येतेषु पादेषु त्रिस्त्रिरेकैकमभ्यासं मनसा गायत्रं गायेत्** ॥२१॥

इति। अग्निर्ज्योतिरित्येतान् त्रीन् पादान् प्रत्येकं त्रिरभ्यस्य प्रथमे पादे त्रिरभ्यस्ते मनसा गायत्रमनिरुक्तं गायेत्। एवमुत्तरयोरपि ॥२१॥

**तानि नान्यत्र विश्वरूपाभ्यः** ॥२२॥

तानि ज्योतींषि नान्यत्र विश्वरूपाभ्यः प्रयोक्तव्यानीति विस्पष्टार्थमिदं वचनम्। विश्वरूपाश्चेद्गायेदित्यनेनैव विश्वरूपागानस्य ज्योतिर्गाने निमित्तत्वावगमात् ॥२२॥

---

7. P आरमयस्व for आरम
13. My[1]T after प्राप्य add तस्य
16. My[3]. after पादेषु adds त्रिषु
18. PC पदान् for पादान्

**नान्यत्र विश्वरूपा ज्योतिष्टोमात् ॥२३॥**

**विश्वरूपा** अपि ज्योतिष्टोमात् प्रकृतिभूतात् अग्निष्टोमसंस्थात् अन्यत्र न भवेयः। विकृतिष्वतिदेशं प्राप्तस्य विश्वरूपागानस्य प्रतिषेधोऽयम् ॥२३॥

**सहचराणि ह्येतानि विश्वरूपाश्च ज्योतींषि च ज्योतींषि च ॥२४॥**

**विश्वरूपाश्च ज्योतींषि चैतानि सहचराण्येव**। तस्माद् विश्वरूपानिवृत्तौ ज्योतिषां निवृत्तिरिति पूर्वोक्तस्य हेतुकथनमेतत् ॥२४॥

इति द्राह्यायणश्रौतसूत्रे द्वितीये पटले चतुर्थः खण्डः ॥४॥

इति छन्दोगसूत्रस्य दीपेऽस्मिन् धन्विना कृते।
द्वितीयः पटलो वृत्तः प्रीयतां देवकीसुतः ॥

**इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे द्वितीयः पटलः समाप्तः ॥२॥**

---

4. P. after repeats ज्योतींषि च
7. Pc. इदम् for एतत्
9. T. befor इति छन्दोग° adds **द्राह्यायणकृते सूत्रे यथामति यथागमम्। द्वितीयपटलं व्याख्ये धन्विकाश्यपनन्दनः॥**

# तृतीयः पटलः

## प्रथमः खण्डः

**युगपत्कर्मसु सर्वेषूद्गातुर्दक्षिणमनु बाहुं प्रस्तोता सव्यं प्रतिहर्ता ॥१॥**

युगपत्कर्तव्यतया चोदितेषु बहुकर्तृकेषु कर्मसु कियन्तः स्तोत्रकर्तारः कथं वानुष्ठानमित्यपेक्षायामिदमुच्यते। **उद्गातुर्दक्षिणं बाहुमनु** दक्षिणे पार्श्वे **प्रस्तोता** स्यात्। **सव्यं** बाहुमनु **प्रतिहर्ता** स्यात्। कर्तारोऽप्येत एव त्रयः। नान्ये इत्यनेनैव सूत्रेणोक्तम्। अन्यस्यानुपादानात् ॥१॥

**होता प्रातरनुवाकमनुच्याभूदुषा इति यदा ब्रूयादथ वेदिमाक्रमेयुर्मृदाशिथिरेति। मामाहिँ सीरिति मंत्रान्त इति। बहिर्वेद्येतज्जपित्वा मा मा हिँ सीरित्येतावतैवेति धानंजय्यः ॥२॥**

**मृदा शिथिरे** (तां० ब्रा० १-१-७) त्यादि **वेदिरसी**त्यन्तं **बहिर्वेदि** जपित्वा **मा माहिँसी**रित्येतावान्मात्रेणैव वेद्याक्रमणम् ॥२॥

**सवनमुखेषु च यजुषा ॥३॥**

जातौ बहुवचनम्। उत्तरयोरपि सवनयोर्मुखे **मृदाशिथिरे** (तां० ब्रा० १-१-७) ति मन्त्रेणैव वेद्याक्रमणम्। तत्राभिषवादिमाध्यंदिनसवनम्। आदित्यारम्भणं ततीयसवनम् ॥३॥

**अहरहरिति गौतमः ॥४॥**

अहर्गणेषु प्रत्यहं सवनत्रयेऽपि मन्त्रेणैवाक्रमणमिति गौतमः ॥४॥

**सकृत्क्रताविति शाण्डिल्यः ॥५॥**

एकस्मिन् **क्रता**वादावेव **सकृन्म**न्त्रेणाक्रमणं न सवनत्रये नाप्यहरहरिति **शाण्डिल्यः** ॥५॥

---

10. TV² My¹. om. इति

20. My² वेद्याक्रमणं for एवाक्रमणं

**यावद्धाक्रमेयुरित्येके ॥६॥**

**यावद्धेति** विधार्थे धाप्रत्ययः। यावत्कृत्वो **वेदिमाक्रमेयुः** तत्र सर्वत्र मन्त्रेणैवाक्रमणमित्य**ेके**। तेनातिरात्रे प्रतिपर्यायं निष्क्रान्तानां मन्त्रेणैव पुनः प्रवेशः ॥६॥

**हविर्धानं प्रवेश्यमाना वसतीवरीरनुप्रविशेयुः ॥७॥**

अपरया द्वारा वसतीवरीः प्रवेशयन्ति। तस्मिन् काले पूर्वया द्वारा प्रविशेयुः ॥७॥

कथमित्याह—

**तस्य रराट्यामालभ्य विष्णोः शिरः ॥८॥**

इति। रराटिर्नाम हविर्धानस्य पूर्वद्वारोपरि स्थिता काशमयी यष्टिरिति सत्याषाढः। तस्यां **विष्णोः शिरः** (तां० ब्रा० १-१-८) इति मन्त्रेणालभ्य प्रविशेयुः ॥८॥

**इष ऊर्ज इति प्रविशन्तोऽन्तरेणेषे बाहूनवहृत्य पार्ष्णीरनुद्यच्छन्तो युनज्मीति राजानमभिमृशेयुर्यः प्रातःसवनाय ॥९॥**

**इष ऊर्ज** (तां० ब्रा० १-१-९) इति मन्त्रेण **प्रविशन्त** ईषयोरन्तरा **बाहू**नधः प्रसार्य **प्रातःसवनाय** विभक्तं सोमम**भिमृशेयुः**। अभिमर्शनाशक्तौ पादाग्रेण स्थित्वा पादस्य पृष्ठभागोद्यमनं स्यात्। तन्निवृत्त्यर्थं **पार्ष्णीरनुद्यच्छन्त** इत्युक्तम् ॥९॥

**अविभक्तश्चेत् सर्वम् ॥१०॥**

यद्य**विभक्तः** सोमः स्यात्तदा **सर्व**मेव सोममभिमृशेयुः ॥१०॥

**न चेत्प्राप्नुयुः सोमं देशेनैव ॥११॥**

यदि हस्तेन सोमं प्राप्तुं न शक्नुयुस्तदा देश एव हस्तं प्रसार्य मन्त्रं जपेयुः ॥११॥

---

10. Pc उपरि for पूर्वद्वारोपरि
21. T °प्राप्नुयुः for मृशेयुः

**प्रस्तोता प्रथमोऽतिसर्पेत् ॥१२॥**

अथ सोममतीत्य हविर्धानयोर्मध्यतः प्रस्तोता प्राङ्मुखः प्रथमं गच्छेत् ॥१२॥

**तत उद्गाता ततः प्रतिहर्ता ॥१३॥**

स्पष्टम् ॥१३॥

**दक्षिणस्य हविर्धानस्य पश्चात् सव्यावृत उपविशेयुर्ऋतस्य सदन इति ॥१४॥**

एवं गत्वा सव्येन पार्श्वेनावर्तमाना दक्षिणहविर्धानस्य **पश्चादुपविशेयुः**। अत्र जैमिनिः—अन्तरेण हविर्धानं गत्वा दक्षिणस्य हविर्धानस्य पश्चादप्रदक्षिणमुपविशन्ति ॥१४॥

उपवेशनानन्तरं बहिष्पवमानार्थमृग्जपं विधास्यन् प्रसङ्गात् सर्वस्तोत्रसाधारणमाह—

**पुरस्ताच्चोपरिष्टाच्चर्चः सर्वत्र जपेयुर्यासु करिष्यन्तः स्युः ॥१५॥**

इति। सर्वेष्वपि स्तोत्रेषु यास्वृक्षु स्तुतिं **करिष्यन्तः स्युः** ताः स्तोत्रस्य **पुरस्तादुपरिष्टाच्च सर्वत्र जपेयुः** ॥१५॥

**अत्र तु बहिष्पवमानस्य ॥१६॥**

इति। **अत्र** अस्मिन् काले उपवेशनानन्तरं **बहिष्पवमानस्यर्चो** जपेयुः। बहिष्पवमानादन्येषु स्तोत्रेषु यद्यपि पुरस्तादुपरिष्टादित्यविशेषचोदनादव्यवधानेन गानानन्तरं जपः प्राप्तस्तथापि स्तोमयोगात् पूर्वमेव पुरस्ताज्जपः। यजमानोपह्वानान्तरं उपरिष्टाज्जप इति मन्तव्यम्। बहिष्पवमाने तथैव दृष्टत्वात् ॥१६॥

---

9. V[2] My[1] om अप्रदक्षिणम्; V[1]L. दक्षिणं for अप्रदक्षिणं

17. T. om. तु

18. Lc V[1] °मानर्चो for मानस्यर्चो

19. Lc before स्तोत्रेषु add यस्य; My[1-3] अन्यत्र for अन्येषु; T om. बहि°...तथापि (L.20) My. °शिष्ट° for °शेष°; My[1-3] चोदनाव्यव for चोदनादव्यव°

20. My[1] सर्वत्रा for तथापि; T after °योगात् adds सर्वत्र;

21. T om. यजमान... मन्तव्यम्; My om. तथैव;

22. My[2-3] T दर्शनात् for दृष्टत्वात्;

**अभिषुते राजन्यृतपात्रमसीति द्रोणकलशमालभ्य वानस्पत्य इति प्रोहेयुः ॥१७॥**

सोमाभिषवे कृते द्रोणकलशमक्षस्य पश्चादवस्थितमक्षस्याधस्तात् प्राञ्चं प्रोहेयुः। **अधोऽधोऽक्षं द्रोणकलशं प्रोहन्ति प्राञ्चं प्रोहन्तीति** श्रुतेः ॥१७॥

**दक्षिणे पाणावुद्गाता दशापवित्रं कुर्वीत ॥१८॥**

पूर्वमेव द्रोणकलशे अध्वर्युणा न्यस्तं दशापवित्रं तदिदानीं दक्षिणे हस्ते गृहीत्वा प्रोहेत्। शुक्लाभिरूर्णास्तुकाभिर्निर्मितं दशायुक्तं वासो दशापवित्रम्। **स्वर्भानुर्वा असुर** इत्यारभ्य तस्माच्छुक्लं पवित्रमिति श्रुतेः ॥१८॥

**अक्षं चेदुपहन्युः पुनः प्रोहेयुः ॥१९॥**

अत्र ब्राह्मणम्-**योऽस्य प्रियः स्यादनुस्पृशन्नक्षं प्रोहेदिति**। यदि प्रमादादक्षमुपहन्युः उपस्पृशेयुरित्यर्थः। तदानीं पुनरपि द्रोणकलशमाकृष्य अनुस्पृशन्त एव प्रोहेयुस्तदेव तत्र प्रायश्चित्तमिति सूत्रार्थः ॥१९॥

**अन्तरेणाक्षविष्कम्भौ दशापवित्रं द्रोणकलशे प्रास्येदनुपघ्नन् ॥२०॥**

अक्षस्योपरिष्टादीषाधारकं काष्ठमक्षः। तद्वदेव तिर्यगायतो विष्कम्भः। तयोरक्षविष्कम्भयोर्मध्यावकाशेन **दशापवित्रं द्रोणकलशे प्रास्येत्। अनुपघ्नन्** बाहुभ्यामक्षमस्पृशन्नित्यर्थः।

**संहितौ चेदुभावुपरि ॥२१॥**

यद्यक्षविष्कम्भौ संश्लिष्टौ स्यातां तदा तयोर्मध्यावकाशेन प्रासनाशक्तौ

---

4. TMy[1-2] V[2] om प्रोहन्ति प्राञ्चं
6. TMy[2-3] तदानीं for तदिदानीं
7. My[2] ऊर्णाभिः for ऊर्णास्तुकाभिः
12. V[2] My[1] T. om. इति सूत्रार्थः
15. Pc काष्ठः for काष्ठम्
17. TMy[3] अनुस्पृशन् for अस्पृशन्
18. L. संहतौ for संहितौ
19. Pc शक्तेः for शक्तौ

वयोरुपरिदेशेनैव प्रास्येत्। अवकाशसंभवे तु तेनैवावश्यं प्रासनं कार्यम्। **उपर्युपर्यक्षं पवित्रं प्रयच्छन्तीति** श्रुतेः॥२१॥

**सर्वं रथोपस्थमुपर्युपर्युत्तरेण रथजङ्घां रथश्चेत् ॥२२॥**

यदि क्वचित् छेदनादौ रथो हविर्धानं स्यात्तदा कृत्स्नस्यैव रथोपस्थस्योपरिष्टाद्रथजङ्घां मध्येऽवस्थितामुत्तरेण दशापवित्रं पुरस्तादतिहृत्य अधस्तादवस्थिते द्रोणकलशे प्रास्येत्॥२१॥

इति द्राह्यायणश्रौतसूत्रे तृतीये पटले प्रथमः खण्डः ॥१॥

## द्वितीयः खण्डः

**प्रत्याव्रज्य ग्राव्णो युञ्ज्यात् ॥१॥**

द्रोणकलशप्रोहणानन्तरमुत्थायाभिषवदेशं प्रत्याव्रज्य ग्राव्णो युञ्ज्यात्। एकवचनमविवक्षितम्। उत्तरसूत्रे तानभिमृश्य जपेयुरिति बहुत्वश्रवणात्। जपस्यैव प्राधान्येन ग्रावयोजनस्याप्रधानत्वाच्च। किं च ग्राव्णः संसाद्य द्रोणकलशमध्यूहतीति श्रुतेः। स्पष्टमेव ग्रावयोजनेऽपि कर्तृबहुत्वम् ॥१॥

कथं युञ्ज्यादत आह--

**प्रदक्षिणमष्टमदेशेषु स्थवीयाꣳस्यभ्यन्तराणि कृत्वा ॥२॥**

इति। अष्टमदेशः कोणदेशः। अभिषवचर्मणोर्मध्ये अवान्तरदिक्षु चतुरो ग्रावाः प्रदक्षिणं युञ्ज्यात्। तेषां ग्राव्णां स्थवीयाꣳसि स्थूलतरान् प्रान्तभागानभ्यन्तरान् कृत्वा युञ्ज्यात् ॥२॥

**तानि मुखानि ॥३॥**

तानि स्थवीयाꣳसि मुखानीत्युच्यन्ते। संमुखान् ग्रावाः कृत्वा विमुखान् ग्राव्ण इत्यादि ब्राह्मणमिति ॥३॥

**दक्षिणार्ध्यपूर्वार्ध्यं प्रथमम् ॥४॥**

दक्षिणपूर्वदेशस्थं ग्रावाणं प्रथमं युञ्ज्यात्। उत्तरपूर्वदेशे समाप्तिः ॥४॥

**तानभिमृश्य जपेयुर्मरुत इति ॥५॥**

स्पष्टम् ॥५॥

**ऋतसदन एतज्जपित्वा युक्ताःस्थ वहतेत्येतावतैवेति धानंजय्यः ॥६॥**

---

5. My[1] V[1-2] योजनत्वात् for योजनस्याप्रधानत्वात्

13-14. V[1] om. विमुखान् ग्राव्णः

15. My [1-3] दक्षिणार्धपूर्वार्धं for दक्षिणार्ध्यपूर्वार्ध्यं

द्रोणकलशप्रोहणानन्तरं तत्रैव स्थाने **मरुत** इत्यादि **चातयध्वमित्यन्तं** जपित्वा ततः प्रत्यावृत्य युक्ताः स्थ वहतेत्येतावान्मात्रेण ग्रावयोजनमिति धानंजय्यः। ऋतस्य सदने सीदामीति मन्त्रेण यत्रोपविश्यते तदृतसदनं दक्षिणहविर्धानस्य पश्चाद्देशः ॥६॥

**पश्चाद्दक्षिणतो वा द्रोणकलशमध्यूहेयुरिदमहमिममिति ॥७॥**

युक्तानां ग्राव्णामुपरिष्टाद् द्रोणकलशं पश्चादारभ्य प्राञ्चं स्थापयेयुर्दक्षिणत उदञ्चं वा ॥७॥

**यजमानशब्दं सर्वत्र यथार्थं कुर्युः ॥८॥**

इति। मन्त्रगतं यजमानपदं सर्वत्र यथार्थं कुर्युरिति मन्त्रमूहेत् **इमान् यजमानानिति**। न केवलमत्रैव सर्वत्रैवम् ॥८॥

**अनुजपेयुरन्येन कृते मन्त्रौ ॥९॥**

इति। **अन्येन** अध्वर्युणा ग्रावयोजनादिके कृते केवलं तन्मन्त्रौ जपेयुर्न पुनर्ग्रावयोजनं कुर्युरिति ॥९॥

एवं नित्यस्य ग्रावयोजनादेः कल्प उक्तः। अयमेव काम्यानामपि ब्राह्मणोक्तानां ब्राह्मणविहितं वैशेषिकमङ्गं विनेत्याह—

**ब्राह्मणविहितादन्यत्रैष कल्पः काम्यानाम् ॥१०॥**

इति। अत्र ब्राह्मणे यं द्विष्याद्विमुखान् ग्राव्ण इत्यारभ्य चत्वारः काम्याः कल्पा उक्ताः। तेषु प्रियकल्पात्मकयोर्द्रोणकलशाध्यूहने मन्त्रौ विशेषविहितौ।

---

1. My[1] om. द्रोण. वहतेतीत (L. 2) My[3] प्रोक्षण° for प्रोहण°
2. MyT °व्रज्य for वृत्य
3. My[1] after मन्त्रेण ads च;
4. My[1-2] दक्षिणस्य for दक्षिण°
7. V[1] उदग् for उदञ्चं
9. My[1] om मन्त्रगतं . . सर्वत्रैवम् (L. 10) V[1] L. om मन्त्रमूहेत्; VL. °पदं सत्रे यथार्थमूहेत् for पदं . . . कुर्युरिति
12. My[1] om. तन्°; T °मन्त्रान् for °मन्त्रौ
18. V[2] T My[1] द्वेष्यप्रियकल्पयोः° for प्रियकल्पात्मकयोः; V[2]T. ते तेषु T °अध्यूहन for अध्यूहने

अन्यत्सर्वं न विहितम्। किं पुनस्तत् प्रदक्षिम्, ग्रावयोजनम्, अभिमर्शनमन्त्रजपः, पश्चादध्यूहनम् इत्यादि। तत्सर्वं नित्यमेव कार्यम्। तथैव राष्ट्रजिघांसुकल्पेऽपि ॥१०॥

**द्वेष्यकल्पस्त्ववशिष्यते। तत्रापि नित्यधर्मग्रहणे प्राप्ते आह द्वेष्यकल्पादन्यत्र ॥११॥**

इति। **द्वेष्यकल्पादन्यत्र** नित्यकल्पग्रहणम्॥११॥

कस्तर्हि द्वेष्यकल्पे प्रकारस्तमाह—

**विपर्यस्य तु तस्मिन् ॥१२॥**

इति। **तस्मिन्** द्वेष्यकल्पे नित्योक्तं प्रकारं **विपर्यस्य** अनुष्ठेयम्। तद्यथा **उत्तरपूर्वदेशमारभ्य प्रसव्यं बहिर्मुखान् ग्राव्णो युञ्ज्यादिति** ॥१२॥

**तूष्णीं च योजनाध्यूहने ॥१३॥**

ग्रावयोजनं द्रोणकलशाध्यूहनं च द्वेष्यकल्पे मन्त्ररहितं कार्यम् ॥१३॥

**इदमहममुमिति दक्षिणापरमष्टमदेशं निरूहेत् ॥१४॥**

एवं नित्योक्तप्रकारं विपर्यस्य तूष्णीं ग्रावयोजनादि च कृत्वा **इदमहममुम्** (तां० ब्रा० १.२.६) इति ब्राह्मणपठितेन वैशेषिकेण मन्त्रेण **दक्षिणापरं** कोणदेशं प्रतिद्रोणकलशं **निरूहेत्** ॥१४॥

इदानीं द्वेष्यप्रियकल्पयोर्विषयं दर्शयति—

**द्वेष्यप्रियकल्पयोर्मन्त्रौ राजन्यूहेत् ॥१५॥**

इति। **द्वेष्यप्रियकल्पयोर्मन्त्रौ** ब्राह्मणपठितौ **राजन्येवोहेत्** प्रतीयात्। न ब्राह्मणवैश्ययोः। राजैकविषयावेतौ कल्पावित्यर्थः। कुत एतत्। राज्ञो

---

10. T. उत्तरदेश° for उत्तर°; My[3] सव्यं for प्रसव्यं
12. My[2] T. om द्रोण. . .ध्यूहनं च My °विहितं for °रहितं
15. V[2] वैशिकानाममन्त्रे, T. वैशिकानाममन्त्रेण for वैशेषिकेण मन्त्रेण My[3] °विहितेन for पठितेन
19. V[2] My[1] om प्रतीयात्
20. V[2] L my[1-3] om एतत्

हि प्रकृतिवर्गो विड्भिरुच्यते। न चासौ राज्ञोऽन्यत्र संभवति। तेन यं द्विष्याद्योऽस्य प्रियः स्यादित्यविशेषोक्तावपि यं राजानं द्विष्याद्योऽस्य राजा प्रियः स्यादिति ब्राह्मणार्थः। अमुष्या विशो निरुहामीति निरूहणस्य राजैकविषयत्वावगमात्।।१५।।

**तस्य च विशमादिशेत्।।१६।।**

तस्य राज्ञो विशं प्रकृतिवर्गम् अमुष्या विश इत्यत्र नाम्ना निर्दिशेत्।।१६

**तं चैवान्नाद्येन।।१७।।**

चकारो भिन्नक्रमः। तामेव विशं पुनस्तदायत्तेनान्नाद्येन सह निर्दिशेत्। तदायत्तमन्नाद्यमपि नाम्ना निर्दिशेदिति यावत्। तद्यथा इदमहं युधिष्ठिरं भारतं कुन्त्याः पुत्रं भीमार्जुनरूपाविशिष्टं कुरुक्षेत्ररूपे अन्नाद्ये अध्यूहामीति। अन्नाद्यशब्दो भोगवचनः। अत्र ब्राह्मणम्—यः कामयेत विशादो राष्ट्रं हन्यामिति व्युह्य ग्राव्णोऽधो द्रोणकलश ँ सादयित्वोपा ँ शुसवनमुपरिष्टादभिनिदध्यादिदमहममुया विशादो राष्ट्रं हन्मीति।।१७।।
तद्व्याचष्टे—

**उपा ँ शुसवनो नाम ग्रावा पञ्चमस्तमुपरिष्टाद् द्रोणकलशस्य कुर्याद्राष्ट्रंजिघा ँ सुः प्रतीवेशाँ बलवतीं विशमादिशन्।।१८।।**

इति। उपा ँ शुग्रहाभिषवार्थो ग्रावोपांशुसवनः पञ्चमश्चतुर्षु ग्रावसु योजितेषु द्रोणकलशाध्यूहने च नित्यवत् कृते पश्चाद् ग्रावाः पृथक् कृत्य मध्ये भूमौ द्रोणकलशं सादयित्वा तं पञ्चमं ग्रावाणं द्रोणकलशे प्रहरन्निव प्रास्येत् इदमहममुयेति मन्त्रेण। प्रतीवेशां राष्टप्रतिपक्षभूतां विशं बलवतीमादिशन् स्वामिद्वारेण बलवत्त्वम्। यथा युधिष्ठिराधिष्ठितया भीमार्जुना-

---

1. PCTL विधि for विड्भि
3. PT. ब्राह्मणस्य for ब्राह्मण°
5. V[1] विशः for विशम्
10. My[1] भरतं for भारतं; My[3] om भारतं; My[2] रूपं विशिष्टं for रूपाविशिष्टं; P. व्युहामि for अध्यूहामि
21. My[1]. आदिशेत् for आदिशन्

दिरूपया विशा कुरुक्षेत्रं राष्ट्रं हन्मीति। अयं च कल्पः स्वकीयेनैव राष्ट्रेण यस्य राज्ञो विरोधो जातस्तस्यैवेति मन्तव्यमिति। केचित्तु प्रतियोगिनो राज्ञः प्रकृतिवर्गः प्रतीवेशा विट् तया प्रतियोगिनो राष्ट्रं जिघांसुरिति व्याचक्षते ॥१८॥

**एतेषामेकं कृत्वा पथ्यं कुर्यादिति गौतमः ॥१९॥**

**एतेषां** काम्यानामेकं कृत्वा पुनस्तदानीमेव क्रत्वर्थतया नित्यं कुर्यात्। पथ्यशब्दो नित्यवचनः ॥१९॥

**तदेवेति धानंजय्यः ॥२०॥**

**तदेव** काम्यं क्रतोरप्युपकारकं न पुनर्नित्यमपेक्षणीयमिति गम्यते ॥२०॥

**पृष्ठानामन्ते पूर्वयाद्वारा निष्क्रम्य काम्यं शाण्डिल्यः ॥२१॥**

पृष्ठस्तोत्राणामन्ते माध्यंदिने सवने संस्थिते **पूर्वया द्वारा निष्क्रम्य काम्यं** ग्रावयोजनं पृथगेव कुर्यात्। स्वस्थाने तु सर्वत्र नित्यमेव कुर्यात् ॥२१॥

**पवित्रेण द्रोणकलशꣳ संमृज्याद्वसवस्त्वेति बुध्नं रुद्रास्त्वेति मध्यमादित्यास्त्वेति बिलम् ॥२२॥**

दशापवित्रेण **द्रोणकलशꣳ संमृज्यात्**। एकवचननिर्देशादुद्गातैव ॥२२॥

**एतेषामेकैकेन त्रिस्त्रिरनुसवनꣳ संमृज्यादिति धानंजय्यः ॥२३॥**

**एतेषामेकै**को मन्त्रः। प्रतिसवनं नात्र बुध्नादिनियमः। अनुक्तत्वात्।

---

2. TMy[1] om. केचित्तु.. व्याचक्षत (L. 4) इति
6. V[2] My[1]T. प्रातःसवने सकृत् कृत्वा नित्यमेव कलामुत्तरयोः सवनयोः कुर्यात्। न पुनः कर्ममिति for कृत्वा पुनः.. नित्य वचन इति (L. 7)
9. V[2] My[1]. T. before तदेव add काम्यं चेत् प्रातःसवने कृतं (V[2] कृते); V[2] My[1] उत्तरयोरपि सवनयोरित्यर्थः for क्रतोरप्युपकारक. . गम्यते; ; L. °कारणं पुनर् for °कारकं न पुनर्; L. मन्यते for गम्यते
11. V[3] om. माध्यंदिने सवने संस्थिते
12. My[2] °स्थानेषु for °स्थाने तु

**सर्वैः सर्वेष्विति शाण्डिल्यः ॥२४॥**

प्रतिसवनं त्रयोऽपि मन्त्राः बुध्नादिनियममनादृत्य भवेयुः ॥२४॥

**सर्वैर्बुध्नं सर्वैर्मध्यं सर्वैर्बिलमित्येके ॥२५॥**

इति ॥२५॥

**बिलं मध्यं बुध्नमित्यपरम् ॥२६॥**

इति। अनेन क्रमेण वा संमृज्यादिति ॥२६॥

**अवधूय पवित्रमुदग्दशमवाङ्नाभिं वितनुयुः पवित्रं त इति ॥२७॥**

दशापवित्रस्य मध्ये शुक्लामूर्णास्तुकां सोमधारास्रवणार्थं यजमानः करोति। सा नाभिरित्युच्यते। उदीचीनदशमवाचीननाभि च दशापवित्रं कृत्वा द्रोणकलशस्योपरिष्टाद् वितनुयुः। उपरि च वितत्य दशापवित्रस्य कोणं धारयेयुः। तथा च ब्राह्मणम्—**पवित्रं विगृह्णन्तीति वितत्य धारणं विग्रहणमिति** ॥२७॥

**तृचेनैके ॥२८॥**

स्पष्टम् ॥२८॥

**संततायां धारायामुद्गाता जपेत् प्रशुक्रैत्विति ॥२९॥**

पवित्रविताने त्रयाणामप्यन्वयादितरयोर्निवृत्यर्थमुद्गातुर्ग्रहणम् ॥२९॥

**अमुष्य राज्यायेति प्रियं राजानमादिशेत् ॥३०॥**

**प्रशुक्रैत्वि** (तां० ब्रा० १.२.९)ति मन्त्रान्ते **अमुष्य राज्यायेति**। तत्रामुष्येत्यत्र उद्गातुः **प्रियं राजानं** नाम्ना निर्दिशेत्। युधिष्ठिरस्य राज्यायेत्यादि ॥३०॥

---

6. V[1] तेनैव for अनेन

12. V[1] द्रोणकलशं for कोणं

20-21. T. om. युधिष्ठिरस्य राज्यायेत्यादि

**राज्ञो राज्यायेति वा ॥३१॥**

अथवा **राज्ञो राज्यायेति** सामान्येनादिशेत् ॥३१॥

**यजमानस्य राज्ञो राज्यायेति वा ॥३२॥**

अथवा यदा क्षत्रियो यजमानस्तदानीममुष्येत्यस्य **यजमानस्य राज्ञ** इति निर्दिशेत् ॥३२॥

**सोमस्य राज्ञो राज्यायेति वा ॥३३॥**

अथवा **सोमस्य राज्ञ** इति निर्दिशेत् ॥३३॥

तमेव पक्षं स्थापयति--

**सोमस्येत्येव ब्रूयात् सोमराजानो हि ब्राह्मणाः ॥३४॥**

इति। यस्मात् सोम एव ब्राह्मणानां राजा तस्मात् सोमस्य राज्ञ इत्येवं निर्देशः। क्षत्रियवैश्ययोरपि दीक्षयैव ब्राह्मणत्वात् सोमस्येत्येव तयोरपि निर्देशः। **ब्राह्मणो वा एष जायते यो दीक्षित** इति श्रुतेरिति ॥३४॥

**इति द्राह्यायणश्रौतसूत्रे तृतीये पटले द्वितीयः खण्डः ॥२॥**

## तृतीयः खण्डः

**आग्रयणं गृह्णन्नध्वर्युर्हिं करोति तदा प्रवृणीरन्नग्निः प्रस्तोताहं मानुषो बृहस्पतिरुद्गाताहं मानुषो वायुः प्रतिहर्ताहं मानुषः इति यथालिङ्गम् ॥१॥**

यथालिङ्गं अध्वर्युर्हिंकारमनुमन्त्रैर्देवानुद्गातॄन् प्रवृणीरन्। प्रवरणमभ्यर्थनम्। तद्यथा अग्निरेव प्रस्तोतास्तु। स एव हि सर्वं वेद। अहं तु मानुषः। प्रस्तोता तदधिष्ठितो यथाशक्ति करोमीति। यथा अध्वर्युर्देवं होतारं वृणीते अग्निर्देवो दैवो होता देवान् यक्षदित्यादि। तद्वदेव तत् ॥१॥

**न प्रवृणीरन्निति धानंजय्यः ॥२॥**

तथाहि--न वयं प्रवरमन्त्रानधीमहे। किंच। अन्वित्याहुर्वाचा अन्यानृत्विजो वृणीते। कस्मादुद्गातार आवृता आर्त्विज्यं कुर्वन्तीति। ब्राह्मणे ऋत्विगन्तरवदुद्गातॄणामपि वरणं कार्यमिति चोदयित्वा य (!) द्रोणकलशमुपसीदन्ति। तेनोद्गातारो वृता इति। द्रोणकलशोपसक्तिमात्रेण कृतं वरणं न पृथक् कार्यमिति दर्शयति ॥२॥

**प्रवृणीरन्नेवेति शाण्डिल्यः ॥३॥**

स्पष्टम् ॥३॥

**अत्र वाचं यच्छेयुः ॥४॥**

प्रवरणानन्तरं वाचं यच्छेयुः ॥४॥

---

5. PCTL. mo. अध्वर्युर्हिंकारमनु
6. PL. अभ्यर्चनं for अभ्यर्थनं
7. v[2] My[1] T. om. यथा...तद्वदेव तत् (L. 8)
13. C My[2-3] V[1] °सत्ति° for °सक्ति°

**ऋतसदने वा ॥५॥**

ऋतस्य सदने सीदामी (तां० ब्रा० १.२.२) ति मन्त्रेण यत्र पूर्वमुपविष्टं तद् ऋतसदनम्। तत्रोपविश्य तदा प्रभृति वाग्यताः स्युः ॥५॥

**वेदिं वाक्रामन्तः ॥६॥**

अथवा मृदाशिथिरे (तां० ब्रा० १.१.७) ति मन्त्रेण वेदिमाक्रामन्त एव वाग्यताः स्युः ॥६॥

**स्तुते बहिष्पवमाने विसृजेरन् ॥७॥**

स्तुते बहिष्पवमाने वाचं विसृजेरन्। नान्तरा कदाचित् ॥७॥

**उत्तराद्धविर्धानात् ध्रुवस्थालीं हरन्तः पश्चिमेनोद्गातन् हृत्वा तेनैव प्रतिहरेयुः ॥८॥**

यदाध्वर्यव उत्तरात् हविर्धानात् ध्रुवग्रहणार्थं ध्रुवस्थालीं हरन्ति तदा ते पश्चिमेनोद्गातन् हृत्वा प्रतिहरेयुः। नाग्रेणेति। द्रोणकलशस्योद्गातृणां च न मध्यदेशेन हरेयुरित्यर्थः ॥८॥

ननु चाध्वर्युकृत्यं किमत्र विधीयते। अत आह—

**अपि ह्याध्वर्यवोऽप्यकुशला भवन्तीति ॥९॥**

---

3. PEL. °सदनस्थानम् for °सदनम्
5. PCL. after अथवा adds यदा; PCL. आक्रामन्ति तदा प्रभृति for आक्रामन्त एव
7. T. om. स्तुते . . . विसृजेरन्;
8. v[1] after °माने adds वाचं
12. S. T. नैनाननुग्रहेण, PCL. नैताग्रहेण for °नाग्रेण; TPCL. after अग्रेण add हरेयुः
14. My[3] अत्र for च; v[2] My[1] किमर्थं for किमत्र; T. om. किमत्र
15. v[2] om. अपि befor हि

**अध्वर्यवोऽपि** अस्मिन्नर्थे कदाचिदकुशलाः स्युस्तत् सूत्रेष्वेव वचनात् अतोऽस्माभिरेतदुक्तम्। अध्वर्युभिरत्रावहितैर्भवितव्यम् ॥९॥

**अभिपीड्य पवित्रमध्वर्युंनिःसर्पन्तं प्रस्तोता संतनुयात् ॥१०॥**

अभिपीडनं (पीडच ? ) अध्वर्युकर्मगृहीतेषु ग्रहेषु दशापवित्रं निष्पीडच निश्चोत्य हविर्धानद्वारेणैव पृष्ठहोमार्थं निःसर्पन्तमध्वर्युं प्रस्तोतान्वारभेत ॥१०॥

**तमुद्गातोद्गातारं प्रतिहर्ता तं ब्रह्मा ब्रह्माणं यजमानः ॥११॥**

सर्वत्र संतनुयादित्यनुवर्तते तेषां समन्वारम्भे प्रमाणमाह—

**पञ्चर्त्विजः संरब्धाः सर्पन्तीत्येतानाह ॥१२॥**

इति। **पञ्चर्त्विजः संरब्धाः सर्पन्तीति** ब्राह्मणम्। एतानेव अनुक्रान्तानृत्विज आह। नान्यान्। कुतः। अनन्तरमेव ब्राह्मणे त्रयाणामेवोद्गातॄणामवच्छेदे दोषवचनात्ते तावत् त्रय इति गम्यते। अध्वर्युः प्रस्तरं हरतीति वचनात् स एकः। सर्वत्र ब्रह्मणोऽनुसंधातृत्वात्स एकः। एवमेते पञ्चर्त्विजः ॥१२॥

**दोषवचनात् व्यवच्छेदाज्जुगुप्सेरन् ॥१३॥**

**यदि प्रस्तोतावच्छिद्यते** इत्यारभ्य ब्राह्मणे गुरुतरदोषवचनाद् गुरुप्रायश्चित्तवचनाच्च सर्वात्मनावच्छेदं परिहरेयुः ॥१३॥

---

1. T. v[2] My[3] कुशलाः for अकुशलाः
2. अवि° for अव°
4. P. C My[1] after °पीडनं add च; PCV[1]L. प्रस्तोतृ, My प्रस्तोतृ for अध्वर्यु° V[1]L ग्रहणेषु for गृहीतेषु
5. T निर्गत्य for निश्चोत्य Tv[2] My[1] om. एव पृष्ठहोमार्थं; PC वैमुष° for एव पृष्ठ°
12. L. वचनानन्तरं, v[1] °वचनान्ते for वचनात् ते; T. om. ते तावत् .. वचनात् (L. 13)
17. V[1] C °हरेत् for °हरेयुः

**न राजानमालभ्यानुपस्पृश्याप आज्यमालभेरꣳस्तथाज्यꣳ राजानं सर्वत्र ॥१४॥**

इति। **सर्वत्र राजानं** स्पृष्ट्वा राजस्पर्शने कृते अनुपस्पृश्यापो घृतं न स्पृशेयुः। तथा घृतं स्पृष्ट्वानुपस्पृश्यापो राजानं न स्पृशेयुः॥१४॥

तत्र प्रमाणमाह—

**एष सोमस्य यदाज्यमिति तयोरसमवायमाह ॥१५॥**

इति। **वज्रो वा एष सोमस्य यदाज्यमिति** श्रुतिस्तयोराज्यसोमयोरसङ्गतिमाह सोमस्य वज्रो घृतम्। घृतं वै देवा वज्रं कृत्वा सोममघ्नन्निति श्रुतेः। तेन घृतात् सोमस्य भयं भवति। तत्परिहारायापामुपस्पर्शनं मध्ये कर्तव्यमिति। अनन्तरं प्रवृतहोमं करिष्यतामुदकोपस्पर्शनार्थमेतत् सूत्रम्। पूर्वं दशापवित्रनिष्पीडने राज्ञः स्पृष्टवत्वात् ॥१५॥

**अध्वर्युणा हुते प्रवृतहोमौ जुहुयुर्गत्यानुपूर्व्येण बेकुरा नामासि सूर्यो मेति ॥१६॥**

**अध्वर्युणा** वैप्रुषहोमे कृते सर्पणक्रमेण त्रयोऽपि **प्रवृतहोमौ जुहुयुः**। होमं च सव्यहस्तेनेत्याहुः। कुतः अन्वारम्भवेलायामसंजातविरोधिना दक्षिणेन हस्तेनान्वारम्भात् तद्विच्छेदस्य चायुक्तत्वात् उत्तरत्र सव्यैः पाणिभिस्तृणनिरसनविधानाच्च व्यापृतत्वाद् हि दक्षिणहस्तस्य सव्यैः पाणिभिरिति वचनं नान्यथेति। केचिदत्र **प्रवृतहोमाविति** समाख्यानात् प्रवराभावे होमनिवृत्तिमाहुः। तदयुक्तम्। जैमिनिकल्पे प्रवरणमनुक्त्वैव प्रवृतहोमविधानात्। तस्मादयमर्थः। रक्षोभ्यस्त्राणाय देवानां यज्ञे बृहस्पतिना

---

3. T. °दर्शने for स्पर्शने

9. My² om. मध्ये।

10. T v². after करिष्यतां ins. त्रयाणाम्।

14. T एषु होमेषु हुतेषु सर्वेऽपि for वैप्रुष . . . सर्पण°; My पृष्ठ° for वैप्रुष°।

17. V¹ My¹⁻² व्यावृतत्वात् for व्यापृतत्वात् My² च for हि।

प्रार्थितानां सूर्यादीनां देवैः प्रार्थितायाः वाचश्च यौ होमौ प्रवृत्तहोमाविति। अत्र बृहस्पतिर्वै देवानामुदगायदिति ब्राह्मणे स्पष्टोऽयमर्थः ॥१६॥

**संसुतसोमे त्वधिकामुद्गाता जुहुयात् संवेशायोपवेशायेति यथासवनं छन्दाँस्यादिशन् ॥१७॥**

पृथक्प्रयोजनानां यजमानानां युगपदेकस्मिन् देशे सुत्यासंसवस्तस्मिन् संसुते सोमे प्रवृत्तहोमानन्तरमुद्गाताधिकामेकामाहुतिं जुहुयात् **संवेशायेति** ब्राह्मणपठितैर्मन्त्रैर्यथावसन्नं छन्दांस्यादिशन् **संवेशायोपवेशाय** गायत्र्यै छन्दसोऽभिभूतये स्वाहेति प्रातः सवने होमः। **संवेशायोपवेशायेति** त्रिष्टुभ इति माध्यंदिने। एवं जगत्या अभिभूतय इति तृतीयसवने। यथासवनमित्येकस्मिन्नेव सवने त्रयोऽपि मन्त्राः न स्युरित्यर्थः। केचिदाहुः। उद्गातृशब्देनात्र सवनोद्गाताभिधीयते इति। कः पुनः सवनोद्गाता नाम तत्राप्याहुः। उद्गाता प्रातः सवने। प्रस्तोता माध्यंदिने। प्रतिहर्ता तृतीयसवने इति। तेन तत्र तत्र सवने तेन तेनैव संवेशायेति होतव्यमिति। तदयुक्तम्। न हि सवनोद्गाता नाम कश्चित् अस्ति। क्वचिदपि सूत्रकारेण तथा व्यपदेशाभावात्। ननु च उत्तरयोः सवनयोर्यथासवनमुपविश्य प्रस्तोता हविर्धानं गच्छेदिति वचनात्। उद्गातुर्गमनं नास्ति। तेन यथासवनमुद्गाता जुहुयादित्युक्ते प्रस्तोतृप्रतिहर्त्रोरुद्गातृशब्देनाभिधानमिति गम्यते। नैतत्। एवमुद्गातुर्गमनाभावेऽपि होममात्रवचनात् गत्वा करिष्यति। नैतावता सवनोद्गाता नाम कश्चित् कल्पनीयः ॥१७॥

---

5. V²L. om. पृथक्...आदिशन् (L.7) v². सुत्यायां for सुत्या°;
6. v¹⁻² TLC. om. एकाम्।
8. v² after त्रिष्टुभे adds छन्दसेऽभिभूत्यै स्वाहा
9. V² My¹ after जगत्या ins छन्दसेऽभिभूतये स्वाहा।
10. v¹ My² एतस्मिन् for एकस्मिन्।
18. My² after गत्वा ins असौ।

**ऋच ॐ सामेति स्वाहाकारान्तया तृतीयां सर्वत्र ॥१८॥**

सर्वत्र संसवेऽचासंसवे च ऋचं सामेति स्वाहाकारान्तयर्चा तृतीयामाहुतिमुद्गातैव जुहुयात् ॥१८॥

**स एवेति शाण्डिल्यः ॥१९॥**

स एवोद्गाता प्रवृतहोमौ जुहुयान्नेतराविति शाण्डिल्यः । कुतः । बृहस्पतिर्वै देवानामुदगायदिति ब्राह्मणेनोद्गातुरेव प्रवृतहोमविधानात् । पक्षान्तरस्य मूलं तु उद्गातारो वै वाचे भागधेयं कुर्वन्तीति तत्रैव ब्राह्मणे बहुवचननिर्देशः ॥१९॥

**महागिरिमहानदी रथाहर्वायुव्यवायेष्वस ॐ सवः ॥२०॥**

महागिरिभिर्विन्ध्यादिभिर्महानदीभिर्गङ्गादिभिर्व्यवाये संसवदोषो नास्ति । तथा यावति प्रदेशे महावातो वाति तावता व्यवायेऽपि नास्ति । तथा एकस्मिन्नहनि यावन्तं देशं रथो गन्तुं शक्नोति तद्रथाहरित्युच्यते । तेन व्यवायेऽपि नास्ति । राजदन्तादिवत् परनिपातः ॥२०॥

**पृथग्जनपदे च ॥२१॥**

व्यवायाभावेऽपि जनपदभेदे संसवदोषो नास्ति ॥२१॥

**अविद्विषाणमात्रादित्येके ॥२२॥**

अविद्विषाणेति भावपरो निर्देशः । यजमानयोरन्योन्यमविद्विषाणमात्रादेव संसवदोषो नास्ति । नान्यदपेक्षणीयमित्येके ॥२२॥

**हुत्वा जपेयुर्ब्रह्माहं गायत्रीं वाचं प्राणं प्रजापतिं प्रपद्येऽस्मानमाखणं पर्यूह इति ॥२३॥**

स्पष्टम् ॥२३॥

**अध्वर्युमन्वावर्तेरन् सर्पन्तः ॥२४॥**

येन पथा येन प्रकारेणाध्वर्युः सर्पति तेनैव पथा तेनैव प्रकारेण तमन्वावर्तेरन् ॥२४॥

---

13. V[1] My[2] दन्तादित्वात् T. दन्तवत् My[3] दण्डत्वात् for °दन्तादिवत्

22. T. संसर्पन्ते for सर्पन्तः ।

**सव्यैः पाणिभिः पृथग्दक्षिणा तृणानि निरस्येयुर्योऽद्य सौम्य इति ॥२५॥**

सर्पन्त इत्येव। अन्वारम्भे दक्षिणहस्तस्य व्यापृतत्वात् सव्यैरिति वचनम् ॥२५॥

**चात्वालदेशं प्राप्याध्वर्यावुपविष्टे तस्मात्प्रत्यगुपविशेयुर्यो म आत्मेति ॥२६॥**

स्पष्टम् ॥२६॥

**प्रत्यङ्मुखः प्रस्तोतोदङ्मुख उद्गाता पश्चिमेनोद्गातारं गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्ता ॥२७॥**

उपविष्टेऽध्वर्यौ तस्य पश्चाद्देशे प्रत्यङ्मुखः प्रस्तोतोपविशेत्। तस्य पश्चादुदङ्मुख उद्गाता उद्गातारं पश्चिमेन गत्वा दक्षिणपूर्वमष्टमदेशमीक्षमाणः प्रतिहर्ता तां चाभिमुख उपविशेत् ॥२७॥

**सव्याधरानुपस्थान् कृत्वा द्यावापृथिव्योः संधिमीक्षमाणाः समानि मुखानि धारयन्तः ॥२८॥**

सव्यः पादोऽधरो यस्येति स सव्याधरः। उपस्थ उत्सङ्गः। द्यावापृथिव्योः संधिमवेक्षेरन्। नाधस्तान्नोपरिष्टात् कायेन समं शिरो धारयन्तः। न नम्रवदना इत्यर्थः ॥२८॥

**एवं सर्वस्तोत्रेष्वासीरन् ॥२९॥**

एवमिति प्रत्यङ्मुखादिकमतिदिश्यते। आवृत्तिस्तोत्रेषु तु नमः सखिभ्यः इति मन्त्रविधानाद्यो म आत्मेति मन्त्रो निवर्तत इति ॥२९॥

इति द्राह्यायणश्रौतसूत्रे तृतीये पटले तृतीय खण्डः

इति प्रथमे प्रपाठके एकादशः खण्डः ॥११॥

---

3. $v^{1}$ $LMy^{2}$ व्यावृतत्वात् for व्यापृतत्वात्।
11. $My^{1}$ p. 8 T $v^{2}$ om उद्गाता; $v^{2}$ $My^{1}$ °मुखम् for °मुख। $v^{2}T$. °अवान्तर° for अष्टम°;
12. $v^{2}T$ after ईक्षमाणः adds तं चाभिमुखं $v^{2}$ om. तां चाभिमुख।

## चतुर्थः खण्डः

**चतुरवराध्र्या उपगाः स्युः ॥१॥**

सर्वस्तोत्रेष्वित्यनुवर्तते। कुतः। योऽनुपगीतं साम आदत्ते मुष्यते रूक्ष इत्यादिना सामसामान्येनोपगानविध्यवगमात्। एकाक्षरेषु नोपरमन्ती (द्रा० श्रौ० ३-४-११) ति च वक्ष्यमाणं सूत्रं सर्वस्तोत्रेषूपगाने युज्यते नान्यथेति उपगायन्तीत्युपगाः। सर्वेषु स्तोत्रेषु चत्वारोऽवराध्र्या उपगातारः स्युः ॥१॥

तत्प्रमाणं ब्राह्मणमुदाहरति--

**तथाहि भाल्लवि ब्राह्मणं भवति। योऽनुपगीतं साम आदत्ते मुष्यते रूक्षो भावुको भवत्युपगातृभ्यः प्रस्वरेत्। प्राणो वै स्वरः। प्राणेनैव साम संतनोतीति वल्गुतमं सामोपगीतं भवति। तस्मादप्युपगेयम् ॥२॥**

इति। उपगेयमित्यस्यानन्तरमितिशब्दोऽध्याहर्तव्यो ब्राह्मणसमाप्ति-सूचकः। **योऽनुपगीतं साम गायति** असौ राक्षसादिभिर्**मुष्यते** अपह्रियते। तस्य साम रक्षांस्यपहरन्तीत्यर्थः। किंच **रूक्षः** शुष्कशरीर उद्‌गाता स्यात्। उपगानेन साम्नः स्नेहाकरणात्। तस्मा**दुपगातृभ्यः प्रस्वरेत**। प्रकर्षेण स्वरणं प्रस्वरः उपचयः। साम्नां वृद्धिरिति यावत्। **उपगातृभ्य** इति पञ्चमी। साम्नः स्वरवृद्धिमुपगातृभ्यः संपादयेत्। उपगातृभिर्गीति वर्धयेदित्यर्थः। तत्र प्रणवेन निवृत्ताः ब्राह्मणोपगानाद् रक्षोनिरासससिद्धिरित्यभिप्रायः। किञ्च उपगातृभिः क्रियमाणो यः स्वरः प्रणवात्मकः स साम्नः **प्राणस्तेनैव** साम संतनोति। अन्यथा पञ्चानां भक्तीनां त्रिभिः पुरुषैः पृथगेव गानात्

---

17. PCT My²⁻³ आनं for गीतिं।

18. My¹ v²T तथा च महाव्रते तेनेदमुपगायते साम महेष्यन इति उपगातृाक्षरे यथा स्वरसाम्नः प्राणस्तस्मादुपगाने कृते प्राणेन संततं साम भवति अन्यथा निष्प्रमाणं साम स्यात् इति ब्राह्मणार्थः। अन्यमपि ब्राह्मणान्तरमाह for तत्र प्रणवेन...उपगानेन (L. 3 p. 82).

साम्नः पर्वविच्छेदः। यथा शरीरे हस्ताद्यङ्गानि विच्छिद्येरन् यथा च ब्राह्मणः सर्वाण्यङ्गानि संधत्ते एवं प्रणवः साम पर्वाणीत्यर्थः। किंच प्रकृत्या साम वल्गुश्राव्यं भवति। उपगानेन वल्गुतमं भवति। यथा लौकिकी गीतिः सहकारिभिरुपगीयमाना तद्वत्। तस्मादप्युपगानं कार्यमिति ।।२।।

**चत्वार उपगाः स्युश्चतस्रो दिशो दिग्भिरुपगायन्तीति च ब्राह्मणम् ।।३।।**

स्पष्टम् ।३।।

**षड्वा। षडृतव उपगातार इति च ब्राह्मणम् ।।४।।**

यद्वा षडुपगातारः स्युः। एवं सति साक्षादृतव एवोपगातारः कृता भवन्ति। ।।४।।

**यावन्तो वा संस्वरेरन् ।।५।।**

यावातः पुरुषानुपगानेन संस्वरेरन् साम्ना संगतं स्वरेरन्। न सामध्वनिमभिभवेयुरित्यर्थः। तावन्त उपगायेयुस्तेन चत्वारो नियताः। तत ऊर्ध्वमनियमः ।।५।।

**ते हो इत्येतेनाक्षरेणोपगायेयुरोमिति यजमानः ।।६।।**

ते उपगातारः सर्वेषु स्तोत्रेषु हिंकारप्रभृत्या स्तोत्रपरिसमाप्तेः हो इत्येतेनाक्षरेणाविरतं प्लुतोच्चारणेनोपगायेयुः। तथैव यजमानोऽपि प्रणवेन। तत्र हो इति परमात्मनः संबोधनम्। प्रणवतुल्यमेतत्। कुतः। उपहूतां हो इत्याहात्मानमेवोपह्वयते। आत्मा ह्युपहूतानां वशिष्ठ (तै० सं० २.६.७.३) इति तैत्तिरीयश्रुतेः ।।६।।

अथोपगानप्रकारमाह––

---

12. PC om. साम्ना संगतं स्वरेरन्।
13. V[2] My[1] T षडिति वा नियमः कार्यः for चत्वारो नियताः। तत् ऊर्ध्वमनियम इति।

**पृष्ट्यन्तरयोरुपविश्य भक्त्यन्तराणि छादयन्तो मन्द्र उपगा भवन्ति ॥७॥**

इति। पृष्टिरिति पार्श्वस्थस्याभिधानम्। उद्गातृपार्श्वस्थयोः प्रस्तोतृप्रतिहर्त्रोर्ये अन्तराले तयोरुपविश्य साम्नः पञ्चभक्तीनां छिद्राणि छादयन्तो मन्द्रस्वरेणोपगानं कुर्युः। मन्द्र इति सप्तमी मन्द्रस्वरे स्थिता। मन्द्रेणेति यावत् ॥७॥

**त्र्यन्तर उपगीथः प्रातःसवनादन्यत्र ॥८॥**

इति। ये स्वराः मन्द्रो मध्यमः क्रुष्टश्चेति तेषां योऽन्तरो मध्यमः स त्र्यन्तरः। तस्मिन् मध्यमे स्वरे प्रातःसवनादन्यत्र उद्गीथः कार्य इति। केचित् तदुत्तर इति पठन्ति। तदानीं तच्छब्दे मन्द्रपरामर्शः। मन्द्रादुत्तरो मध्यमस्वर इति। स एवार्थः ॥८॥

**मन्द्रस्त्वेव प्रातःसवने ॥९॥**

स्पष्टम् ॥९॥

**निधनाय निधनायोपरमेयुः ॥१०॥**

यद्यत्साम्नो निधनं तत्र सर्वत्रोपरमेयुः। उपगानं न कुर्युः। एतेन ज्ञायते निधनव्यतिरिक्तासु भक्तिषु आदित आरभ्य संततमुपगानं कार्यम्। न केवलं भक्त्यन्तरालेष्विति। किंच वल्गुतमं सामोपगीतमिति (द्रा० श्रौ० ३.४.२) वचनात् साम्न एवोपगानम्। न भक्तिच्छिद्रेष्वेव। किं च यावन्तो वा संस्वरेरन्निति (द्रा० श्रौ० ३.४.५)। सामस्वरानुपमर्दविधानमपि कृत्स्नस्यैव साम्न उपगाने युज्यते। न छिद्रमात्रोपगाने। नहि तदानीमुपमर्दशङ्काप्यस्ति। गानस्यैवाभावादिति। केचित्तु भक्त्यन्तरेष्वेवोपगानं न साम्न इति मत्वा निधनाय निधनायोपरमेयुरित्येतत्सूत्रमुपद्रवनिधनयोर्मध्ये

3. V[1] प्रष्टिः for पृष्टिः।
5. P °स्वरेण स्थित्वा, V[1-2] C My[1]T °स्वरे स्थित्वा for स्वरे स्थिता।
19. T. अनु° for अनुप°।
22. V[1] om. निधनाय. . .°रमेयुः।

विरामविधिरिति वर्णयन्ति। तदयुक्तम्। भक्त्यन्तराणीति बहुवचनेनोपद्रवनिधनान्तरस्यापि परिग्रहात्। अन्यथा छिद्रद्वयमेवेति बहुवचनं न स्यात्। तस्मात् साम्न एवोपगानम्। न छिद्रमात्रस्येति सिद्धम्।।१०।।

**तत्राप्येक एकाक्षरेषु नोपरमन्ति।।११।।**

**तत्रापि** निधनेषु यान्येकाक्षराणि निधनानि **तेष्वेके** शाखिनो **नोपरमन्ति**। कुर्वन्त्येवोपगानमित्यर्थः।।११।।

एवमुपगानविधिं समाप्योद्गातॄन् प्रत्याह--

**ते स्वां स्वां भक्तिमनुच्छ्वसन्तो ब्रूयुः।।१२।।**

इति। सर्वस्तोत्रेष्वित्यनुवर्तत एव। स्पष्टम्।।१२।।

**पदे वोच्छ्वसेयुः स्तोभे वा।।१३।।**

यद्यनुच्छ्वासः कर्तुं न शक्यते तदा पदस्य मध्ये स्तोभस्य मध्ये वोच्छ्वसेयुः।।१३।।

**नान्तरेण पदे न स्तोभौ।।१४।।**

द्वयोः पादयोर्मध्ये नोच्छ्वसेत्। न च विजातीययोः स्तोभयोरिति। सर्वथा पदान्ते स्तोभान्ते वेत्यर्थः। तथा च सूत्रपरिशेषे जैमिनिनोक्तम्-- स खलु पादमारभ्यारभेन्नान्तरेण पादेऽव्यवायात् इति। तथा च न पादान्तेष्वारभेत्। कृतं तत्रैव तत्। साम्नो यत्पादान्ता इत्युत्तरस्य पदस्यारभ्याव्यवायात्। यथा आक्रमण आक्रम्यापान्यात्। तादृक् तत् ।।१४।।

---

4. V²T My¹ तत्राप्येके निधनभक्तेरपि उपगानमित्येके। एकाक्षरेषु नोपरमन्ति। साम्नामेकाक्षरेषु नोपरमेयुः। for तत्राप्येक एकाक्षरेषु... इत्यर्थः (L. 6)

17. V¹CL कृतन्त्रमेतत्, My¹v² कृतं तत्रैतत्, My³ कृततन्त्रमेतत् p. कुतस्तत्रमेतत् for कृतं तत्रैव तत्।

18. My² पदान्तस्यापादान् p. पदस्यारम्यावान्यां न for पदस्यारभ्याव्यवायात्; L. आक्रंम्यावन्यु for आक्रम्यापान्यात; न्यात् v¹ वानुत्तरामस्मुम् for अपान्यात् तादृक् तदिति।

**यत्र वोपपद्येत न तान्तः कुर्यादिति ।।१५।।**

अथवा किमनेन निर्बन्धेन। यत्र यत्राशक्यत्वादुच्छ्वासः आपतेत् तत्र तत्रोच्छ्वसेयुरेव। न ह्यनुच्छ्वासेन तान्तः कर्म कर्तुं शक्नुयादिति । एवं सर्वस्तोत्रसाधरणमुक्तम् ।।१५।।

अथ प्रकृतमेव बहिष्पवमानं प्रत्याह—

**प्रस्तरं प्रतिगृह्य प्रस्तोता ब्रह्मन्त्स्तोष्यामः।**
**प्रशास्तरित्युद्गात्रे प्रयच्छेत् ।।१६।।**

इति। उपवेशनानन्तरमध्वर्युणा दत्तं प्रस्तरं प्रतिगृह्य उद्गात्रे प्रयच्छेत् ।।१६।।

**तेन दक्षिणां जङ्घामुपहत्य युञ्ज्यात्स्तोममग्नेस्तेजसेति।।१७।।**

तेन प्रस्तरेण स्वीयां दक्षिणां जङ्घामुपस्पृश्य स्तोमं युञ्ज्यात्। मन्त्रजप एव स्तोमयोगः ।।१७।।

**अन्नं करिष्यामीति जपेत् ।।१८।।**

स्पष्टम् ।।१८।।

**तुष्णीं चात्वालमुदपात्रं चावेक्षेरन् ।।१९।।**

इदमपि स्पष्टम् ।।१९।।

**सामासि प्रतिमा भाहीत्यादित्यम् ।।२०।।**

अवेक्षेरन्नित्यनुषङ्गः ।।२०।।

**तुष्णीं वा ।।२१।।**

स्पष्टम् ।।२१।।

---

2. PT. यत्र शक्यत्वात् for यत्र यत्राशक्यत्वात्।
3. P[1]T. तत्र नोच्छसेयुः for तत्रोच्छ्वसेयुः।
8. L. °वेशं° for °वेशन°।
17. V[2]My[1].. om. सामासि. . .केचिदाहुः (L. 3 p. 86)

**सकृद्धिंकृत्य बहिष्पवमानेन स्तुवीरन् ॥२२॥**

सकृद्वचनं किमर्थमुच्यते। स्तोत्रान्तरेषु सर्वेषु बहुकृत्वो हिंकारदर्शनात्। बहिष्पवमानेऽपि तच्छङ्का स्यादिति। तन्निवृत्त्यर्थं केचिदाहुः---कल्पकारेण क्वचिज्ज्योतिष्टोमभेद उक्तः। **अथातो यज्ञायज्ञीयानुरूपो बृहदग्निष्टोमसामे** (क्षु० क० २.५.४) ति तत्र बहिष्पवमाने प्रथमस्तोत्रीये गायत्रं गीत्वा **दविद्युतत्यारुचेति** अनुरूपे तृचे यज्ञायज्ञीयं गेयम्। तदानीं सामभेदात् पृथग्घिंकारप्रसक्तौ तन्निवृत्त्यर्थं सकृदिति वचनमिति ॥२२॥

अत्र ब्राह्मणे गायत्रं सामाधिकृत्य **द्विरवनर्दे्द्धिंकुर्यात्तृतीयमिति** सामान्येनोक्तं तद्विशिनष्टि---

**अहिंकृता प्रथमा रेतस्या। हिंकृताः पराः ॥२३॥**

बहिष्पवमानप्रथमावर्जं उत्तरास्वेव हिंकारः कार्यः। **अहिंकृता प्रथमा रेतस्येति** चोच्यते। संज्ञाकरणं व्यवहारार्थम्। **ऊर्ध्वं रेतस्याया द्व्यक्षरमित्यादौ**। ननु च षड्विंशब्राह्मणे प्रथमायां हिंकारनिषेधात् अहिंकृता प्रथमेति न वक्तव्यम्। नैवम्। तत्र धूर्गानमधिकृत्य हिंकारनिषेधः। धूर्गानाभावेऽपि सर्वत्र प्रथमायां हिंकारो न कार्य इत्येवमर्थं सूत्रमिति ॥२३॥

**रथन्तरवर्णोत्तमा अविसृष्टहिंकारा ॥२४॥**

सर्वत्र बहिष्पवमान**स्योत्तमा** स्तोत्रीया रथन्तरवर्णा कार्या। तथा **अविसृष्टहिंकारा** च कार्या। आकाररहितः केवलो हिंकारो यस्याः सा अविसृष्टहिंकारा। तत्स्वरूपं स्वयमेव गायत्रपटले दर्शयिष्यति ॥२४॥

अथ रथन्तरवर्णेति कोऽर्थस्तं दर्शयति---

---

3. My[3] कश्चित् for केचित्।
14. TMy[1] कर्तव्यम् for वक्तव्यम्; TMy[1] नैव for नैवम्।
15. T v[2]My[1]. om. °हिंकार°।
18. v[2]My[1] आकाररहिता for कार्या।
19. PD वक्ष्यति for दर्शयिष्यति।

**तस्या ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराण्यभिष्टोभेत् ॥२५॥**

तस्या उत्तमायाः प्रस्तावादूर्ध्वम् उद्गीथस्यादितश्चतुरक्षरं रथन्तरवर्णवद् भकारैरभिष्टोभेत्। तत्प्रकारं च स्वयमेव दर्शयिष्यति। रथन्तरस्यैव वर्णचतुष्टयं यस्याः सा रथन्तरवर्णा ॥२५॥

**अन्नमकरमिति स्तुत्वा जपेत् ॥२६॥**

स्पष्टम्। ननु अत्र बहिष्पवमानस्य यच्च यावच्च वक्तव्यं तत्सर्वं किमिति सूत्रकारो न ब्रूते। तदुच्यते। ब्राह्मणेनैव सर्वमुक्तम्। तथाहि— **प्रजापतिरकामयते** (तां० ब्रा० ६.१.१) त्यारभ्य षष्ठप्रभृतिभिश्चतुर्भिरध्यायैर्ज्योतिष्टोमस्य स्तोत्राणि सामानि चोक्तानि। तथा **त्रिवृद्बहिष्पवमानम्। पञ्चदशान्याज्यानि** (तां० ब्रा० २०.२.१) इत्यहीनब्राह्मणोप्रक्रमे स्तोमक्लृप्तिरुक्ता। तथा **उपास्मै गायता नर** (सा० ६५१) इत्यारभ्य बहिष्पवमानस्तोत्राणां क्रमेण स्तोत्रीयाः समाम्नाताः। क्रमलिङ्गसचिवेन ब्राह्मणेन विनियुक्ताश्चेति। न किंचिद्वक्तव्यं सूत्रकारस्यावशिष्यते। प्रकृतमनुसरामः ॥२६॥

**श्येनोऽसीति प्रस्तरे यजमानं वाचयेत् ॥२७॥**

प्रस्तरे यजमानं स्पर्शयित्वा वाचयेत् ॥२७॥

**त ॳ सर्वत्र स्तुत्वोपह्वयेरन् ॥२८॥**

यजमानं सर्वेषु स्तोत्रेषु स्तुत्यनन्तरमनुजानीरन्। उपहूत इत्युपहवः कार्यः ॥२८॥

**संवर्चसेतीक्षकान् सहकारिणश्च प्रेक्षमाणो जपेत् ॥२९॥**

सहकारिण उपगातुन् प्रस्तोतृप्रभृतीनन्यांश्च स्तोत्रमीक्षमाणान् पश्यन् जपेत् ॥२९॥

---

2. V[1] उद्गीथादितः for उद्गीथस्यादितः।
2-3. V[1] My[2-3]p रथन्तरवत् for रथन्तरवर्णवत्।
9. Tv[2]My[1] अनुवाकैः for अध्यायैः।
10. My[1]v[2]T. °ब्राह्मणेनैव क्रमेण for ब्राह्मणोपक्रमे।
12. My[2] किर्मलिंगं for क्रमलिङ्ग।
21. C °गातृ° for °गातृन् प्रस्तोतृ।

**नमो गन्धर्वायेत्यादित्यम् ॥३०॥**

प्रेक्षमाणो जपेदित्यनुषङ्गः ॥३०॥

**देशेनैवान्तर्हितश्चेत् ॥३१॥**

यदादित्यो मेघादिभिरन्तर्हितः स्यात् तदा तद्देशमेव प्रेक्ष्य जपेत् ॥३१॥

**एतत्सर्वं कुर्यादुत्तरयोः पवमानयोः ॥३२॥**

मृदाशिभिरेति वेदिमाक्रमेयुरित्यादिना यदितः पूर्वमुक्तमादित्यप्रेक्षणान्तं कर्म तत्सर्वमुत्तरयोरपि पवमानयोः कुर्यादित्युत्सर्गः ॥३२॥

अथापवादमाह

**प्रवरास्तु निवर्तन्ते ॥३३॥**

इति। अग्निः प्रस्तोता अहं मानुष इति प्रवरा निवर्तेरन् ॥३३॥

**चात्वालावेक्षणप्रभृति च प्राग्घिंकारात् ॥३४॥**

चात्वालोदपात्रयोरादित्यस्य चावेक्षणानि निवर्तेरन् प्राक्हिंकारादिति। बहिष्पवमानस्य हिंकारात् प्रागित्यर्थः ॥३४॥

**प्रवेशनसंमार्जने चान्तरेण तृतीयसवने ॥३५॥**

हविर्धानप्रवेशनस्य द्रोणकलशसंमार्जनस्य चोभयोर्मध्यपतितं यत्कर्म तदपि तृतीयसवने निवर्तते। चकारात् प्रवरा अपि ॥३६॥

**कुम्भं तु तत्र संमृज्यात् ॥३६॥**

तत्र तृतीयसवने संमार्जनवेलायां कुम्भमेव मन्त्रेण संमृज्यान्न द्रोणकलशम् ॥३६॥

कः पुनः कुम्भस्तमाह

**उत्तरे हविर्धाने यः पूर्वो द्रोणकलशावृता ॥३७॥**

इति। उत्तरे हविर्धाने द्वौ कुम्भौ प्रवृत्तौ यौ तयोर्यः पूर्वदेशे स्थितस्तं कुम्भं संमृज्यात्। द्रोणकलशोक्तप्रकारेण च संमृज्यात् ॥३७॥

---

16. My[3]. om. चकारात् प्रवरा अपि।

23. PC. after कुम्भं adds तत्र।

**तं पूतभृदित्याचक्षते तं पूतभृदित्याचक्षते ॥३८॥**

तं कुम्भं पूतभृदित्याचक्षते अध्वर्यवः। तेन नाम्ना कुम्भमवधार्य संमृज्यादित्यर्थः। पवित्रवितानमपि तस्यैव मुखे कार्यम्। स्पष्टमुक्तं जैमिनिना—**पूतभृतो मुखे पवित्रं वितनोतीति ॥३८॥**

**इति तृतीये पटले चतुर्थः खण्डः ॥४॥**

**द्राह्यायणकृते सूत्रे यथामति यथागमम्।**
**तृतीयं पटलं व्याख्यं धन्वी काश्यपनन्दनः॥**

**इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे तृतीयः पटलः समाप्तः ॥३॥**

**इति द्राह्यायणश्रौतसूत्रे प्रथमः प्रपाठकः समाप्तः ॥१॥**

---

7. v² व्याख्ये for व्याख्यं।

## द्वितीयः प्रपाठकः

## चतुर्थः पटलः

### प्रथमः खण्डः

**स्तोमयोगेऽग्निर्युनक्त्वित्येतस्य स्थाने वायुर्युनक्तु सूर्यो युनक्त्विति नानासवनयोः ॥१॥**

एतत्सर्वं कुर्यादुत्तरयोः पवमानयोरि (द्रा० श्रौ० ३.४.३२) त्यतिदिष्टम्। तत्र स्तोमयोगमन्त्रे अग्नेस्तेजसे (तां० ब्रा० १ ३.५) त्यत्र अग्निर्युनक्त्वित्यादिमन्त्रैकदेशस्य स्थाने वायुर्युनक्त्विति माध्यन्दिने पवमाने सूर्यो युनक्त्विति आर्भवे पवमाने स्यात्। उत्तरं सवनद्वयमधिकृत्य तयोः प्रत्यक्षाम्नानात् ॥१॥

**विहारं धानंजय्यः ॥२॥**

अग्नेस्तेजसेन्द्रस्येन्द्रियेण सूर्यस्य वर्चसे (तां० ब्रा० १.३.५) ति षण्णां पदानां विवृत्य प्रयोगं धानंजय्य आह ॥२॥

तदेव दर्शयति—

**अग्नेस्तेजसा बृहस्पतिस्त्वेति प्रातः सवनं इन्द्रस्येन्द्रियेण बृहस्पतिस्त्वेति माध्यंदिने सूर्यस्य वर्चसेति तृतीयसवने ॥३॥**

---

6. $v^{2}$ T. $My^{1}$ om. एतत्सर्वं कुर्यादुत्तरयोः; T. इत्यादि स्पष्टम् for इत्यतिदिष्टम्।
7. $Tv^{2}$ $my^{1}$ om. अग्नेस्तेजसेत्यत्र।
9. $Tv^{2}$ $My^{1}$.. om. पवमाने।
10. $v^{2}$T. °म्नातत्वात् for °म्नानात्।
13. $My^{3}$ प्रयोजनं for प्रयोगं; $v^{1}$ om. आह।
14. $My^{2-3}$ तम् for तद्; $My^{2}$ om. तदेव दर्शयति।

इति। प्रतिसवनं द्वे द्वे पदे विभजेत्। बृहस्पतिस्त्वेति प्रत्येकमनुषङ्ग इति ॥३॥

**सर्वैरेकैकं यथाम्नाय ॐ शाण्डिल्यः ॥४॥**

अग्नेस्तेजसेत्यादिभिः सर्वैरपि षड्भिः पदैरविहृतैरेव प्रतिसवनं स्तोमयोगो यथाम्नायं कर्तव्यः। यथाम्नायमिति वचनं बृहस्पतिस्त्वेत्यस्यानुषङ्गनिवृत्त्यर्थम् ॥४॥

**साम्ने साम्ने हिं कुर्युः ॥५॥**

उत्तरयोः पवमानयोः पृथक् पृथक् साम्ने हिंकुर्युः। न बहिष्पवमानवदादौ सकृदेव ॥५॥

**वृषकोऽसि स्वरोऽसीति यजमानवाचने ॥६॥**

श्येनोऽसीति यजमानवाचनस्थाने वृषकोऽसीति माध्यन्दिने सवने, स्वरोऽसीति तृतीयसवने ॥६॥

**स्तुत्वा बहिष्पवमानेन प्रस्तरादुभयतश्चतुरङ्गुलं परिच्छिद्य तृणं चात्वाले प्रविध्येद्यदि स्तुतं यदि वाद्य सुष्टुतमर्वाक् स्तुतं यदि वातिष्टुतं यत्तयोरन्येन दिवमारुहेमेममन्येन जयेम लोकमिति ॥७॥**

प्रस्तरात्तृणमादाय तस्य मूलमग्रं च छित्वा मध्यमभागं चात्वाले निरस्येद्यदि स्तुतमिति मन्त्रेण ॥७॥

**तत्रैवोदपात्रं निनयेत् समुद्रं वः प्रहिणोमि स्वां योनिमपि गच्छतारिष्टास्त्वाभुयास्म मा परासेचि नो धनमिति ॥८॥**

स्पष्टम् ॥८॥

---

19. $v^{1-2}$ $My^{1}C$ अभि for अपि।

20. $v^{1}$ °सेविनो for °सेचिनो।

**बहिर्वेद्युदञ्चोऽयुञ्जि पदान्युत्क्रामेयुः प्राग्दशभ्यः ॥९॥**

उत्थाय बहिर्वेदि उदङ्मुखा अयुग्मानि पदानि प्राग्दशभ्यः क्रामेयुः त्रीणि पञ्च सप्त नव वा। न ततः परम् ॥९॥

**अभिदक्षिणमावृत्या व्रज्याग्नीध्रीयं बहिष्पवमानर्चोऽधीयीरन् ॥१०॥**

प्रदक्षिणमावृत्याग्नीध्रीयमग्निं गत्वा तस्य पश्चादुपविश्य बहिष्पवमानर्चोऽधीयीरन् जपेयुः ॥१०॥

**अनुव्याहार्षीन्मामिति यमिति शङ्केत तस्या अग्नीध्रीय आहुतिवज्रं प्रहरेद्यज्ञशं च त उपचते नमश्च ते सत्योऽसि सत्यस ॐ स्कृतस्तस्य ते य ऊनं योऽकृतं योऽतिरिक्तमदर्शं तस्य प्राणेनाप्यायस्व स्वाहेति ॥११॥**

उद्गातुन्यूनातिरिक्तकरणदोषोद्भावनेनाक्षेपोक्तिरनुव्यवहारः। य ऊनं योऽतिरिक्तमदर्शमिति मन्त्रलिङ्गात्। अक्षिप्तवानयं मामयमिति यंमन्यते तमुद्दिश्याग्नीध्रीये आहुतिवज्रं प्रहरेद्। वज्रं प्रहरन्निवाहुतिं जुहुयादित्यर्थः ॥११॥

**न व्यभिचरेदिति धानंजय्यः ॥१२॥**

अभिचार एव व्यभिचारः। य एनमनुव्याहरति स आर्तिमार्च्छंतीति श्रुतेः। स्वयमेव नश्यतः। किमभिचारेणेत्यभिप्रायः ॥१२॥

**अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र ॥१३॥**

---

10. v[2]My[1] अदर्शः, PC. अदर्शत् for अदर्शम्।

14. TMy[1,2] om आहुतिं।

18. P. after अभिप्रायः Concluds the Ist खण्ड it reads इति द्वितीयस्य प्रथमः खण्डः ॥१॥

द्विरात्रप्रभृत्यहीनेषु प्रथमादह्नोऽन्यत्र सदसि बहिष्पवमानस्तुतिः कार्या। न चात्वालदेशे ॥१३॥

**आद्यन्तयोस्तु सत्रेषु ॥१४॥**

**आद्यन्तयोरिति** पञ्चम्यर्थे सप्तमी। अन्यत्रेत्यनुवर्तते। **सत्रेषु** आद्यन्ताभ्यामन्यत्र सदस्येव बहिष्पवमानमिति। कुत एवं व्याख्यायते। गवानयने विषुवति बहिष्पवमानस्य परमतेन चात्वालदेशे स्तवनविधानात्। स्वमतेन सदसि स्तवनमिति गम्यते। यथोक्तम्—बहिरस्यैके बहिष्पवमानेन स्तुवत (द्रा० श्रौ० ८.२.२८) इति। तेन पञ्चम्यर्थे सप्तमीनिर्णयः ॥१४॥

**प्राग्धिष्ण्य विहरणान्निष्क्रम्य तृणप्रासनप्रभृति समापयेयुः ॥१५॥**

यदा सदसि बहिष्पवमानं तदा स्तुत्यनन्तरं धिष्ण्याग्नीनां विहरणात् प्रागेव सदसो निष्क्रम्य चात्वाले तृणप्रासनप्रभृति ऋग्जपान्तं कुर्युः ॥१५॥

**वैदत्रिरात्रे सत्रन्यायं गौतमः ॥१६॥**

त्रयस्त्रिवृतोऽतिरात्रा (तां० ब्रा २२.१.५) इति वैदत्रिरात्रस्य क्लृप्तिः। तस्योभयतोऽतिरात्रत्वात् सत्राणां च तथाविधत्वात् सत्रन्यायः स्यात्। तेनाद्यन्तयोस्तु सत्रेष्विं (द्रा० श्रौ० ४ १.१४) त्येतत् प्रवर्तते ॥१६॥

**अहीनन्यायं धानंजय्यः ॥१७॥**

स्वत एवाहीनत्वात् अहीनधर्म एवेति ॥१७॥

---

1. T. om. द्विरात्र...चात्वाल देशे इति (L. 2) V[2] My[1-2] अहर्गणेषु, L. अहीनेषु for द्विरात्रप्रभृत्यहीने। V[2]PT. °मानैः for °मान°;
2. My[2] चात्वाले for चात्वालदेशे।
3. LM[1-3] च for तु।
6. V[2] My[1-2] चात्वाले for चात्वालदेशे।
7. V[2] My[1] स्वयमेव तेन T स्वयमतेन for स्वमतेन;
19. PCL. अहीनधर्मत्वात् for अहीनत्वात्।

**मन्द्रं प्रातःसवने स्तुवीरन् ॥१८॥**

मन्द्रमध्यमक्रुष्टानीति त्रीणि वाचः स्थानानि । तेषां प्रथमेन प्रातः सवने स्तुतिः कार्या ॥१८॥

**उत्तरोत्तर्युत्तरयोः सवनयोः ॥१९॥**

उत्तरयोः सवनयोः उत्तरोत्तरस्वरयुक्तं स्तवनं कार्यम् ॥१९॥

**समेन वोभयोः ॥२०॥**

अथवा समानेनैव स्वरेणोत्तरयोः सवनयोः स्तुतिर्मध्यमेन क्रुष्टेन वा ॥२०॥

**एतस्यां वेलायां प्राश्नीयुः ॥२१॥**

रागतः प्राप्तप्रातरशनस्यायं कालनियमः । तेनातिरात्रे सायमशने न कालनियमः । केचित् त्वातृतीयसवनसमाप्तेरितः परं न भोक्तव्यमित्याहुः ॥२१॥

**अनुसवनं तु सत्रेषु ॥२२॥**

सत्रेषु अनुसवनं भोजनम् ॥२२॥

कस्मिन् काले इति चेदाह—

**सवनमुखीयान् भक्षयित्वा सत्रेषु नाराशꣳसेषु ॥२३॥**

तेषु नाराशंसेषु सत्रेषु भोजनम् ॥२३॥

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले प्रथमः खण्डः ॥१॥

---

7. V[2] om. एव ।

10. V[1] राग° for रागतः, My[2-3] प्राप्तस्य for प्राप्त° ।

## द्वितीयः खण्डः

**वपायां हुतायां धिष्ण्यानुपतिष्ठेरन् ।।१।।**

सवनीयस्य यशोर्वपायां हुतायां धिष्ण्योपस्थानं कार्यम् ।।१।।

**चात्वाले तु मार्जनं पूर्वं सत्रेष्विदमापः प्रवहतावद्यं च मलं च यद्यच्चाभिदुद्रोहानृतं यच्च शेपे अभीरुणमापो मा तस्मादेनसो दुरितात्पान्तु विश्वतो निर्मामुञ्चामि। शपथान्निर्मा वरुणादुतनिर्मा यमस्य षड्विंशात् सर्वस्मादेव किल्विषात् सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च वयं द्विष्मः इति ।।२।।**

सत्रेषु तु प्रागुपस्थानान्मार्जनं कृत्वा धिष्ण्योपस्थानम्। जैमिनिस्तु सर्वेष्वपि क्रतुषु मार्जनमाह। अत्र धिष्ण्योपस्थाने अध्वनामध्वपत (तां० ब्रा० १.४ १) इति मन्त्रः प्रथमोऽधीतः। सूत्रकारस्तु तं मन्त्रमत्राविनियोज्योत्तरत्र रौरिक्युपस्थाने शाखान्तरीये विनियुङ्क्ते। सूत्रनिदानं मृग्यम्। अन्ये त्वाहुः। प्रत्यक्षाम्नानबलात् ताण्डिशाखिनामस्माकमादित्योपस्थानमध्वनामध्वपत इत्यनेन कार्यमिति। जैमिनिरप्यादित्योपस्थानं प्रथममनेन मन्त्रेणोक्तवान् ।।२।।

**सम्राडसीत्याहवनीयमुपस्थायोदञ्चो गत्वास्ताव चात्वाल शामित्रानुदङ्मुखास्तुथोनभो संमृष्ट इति ।।३।।**

उत्तरवेदेः पश्चात् स्थित्वा सम्राडसीत्यौत्तरवेदिकमाहवनीयमुप-

---

11. V[2] असत्रेषु, My[1] T. सत्रेषु for सर्वेषु:
13. P. रौद्रिक्युप° for रौरिक्युप; V[2]My[1] T. om. शाखान्तरीये; V[1] शाखान्तरे for शाखान्तरीये।
19. T. °वेद्याः for °वेदेः; V[2] गत्वा for स्थित्वा।

स्थायोदञ्चो गत्वा बहिष्पवमानदेशे तिष्ठन्त उदङ्मुखास्तस्मादास्तावदेशं चात्वालं च शामित्रं स्तुथो नभो संमृष्ट (तां० ब्रा० १ ४.३) इति त्रिभिर्मन्त्रैर्यथाक्रममुपतिष्ठेरन्निति ।।३।।

**विभुरसीत्याग्नीध्रीयमुपतिष्ठेरन् ।।४।।**

गतम् ।।४।।

**तमुत्तरेण संचरः सर्वत्र ।।५।।**

आग्निध्रीयमग्निमुत्तरेणैव सर्वदा संचरः कार्यः। प्राक् च प्रत्यक् च गच्छद्भिः ।।५।।

**दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्धानमाहवनीयं च पृष्ठहोमाय ।।६।।**

उत्तरयोः सवनयोर्यस्मिन् काले हविर्धानं प्रविशति ग्रावयोर्योजनादिकार्यार्थम् । यदा च पृष्ठहोमार्थमाहवनीयं प्रस्तोता गच्छति तदा दक्षिणेनाग्नीध्रीयं संचरः कार्यः। ततोऽन्यत्र सवत्रोत्तरेणैवेति। पृष्ठहोमायेति विशेषणं प्रायश्चित्तहोमेषु निवृत्त्यर्थम् ।।६।।

**पूर्वस्यां सदसो द्वारि प्रत्यङ्मुखास्तिष्ठन्तो बह्विरिति होतुर्धिष्ण्यम् । ७।।**

उपतिष्ठेरन्निति शेषः ।।७।।

**श्वात्र इति मैत्रावरुणस्य ।।८।।**

मैत्रावरुणस्य धिष्ण्यं श्वात्र इत्युपतिष्ठेरन् । सदसो द्वार्येव तिष्ठन्तः ।।८।।

---

1. My[1] °मुखान्तम् for °मुखास्तस्मात् ।
12. My[2] om. यदा च पृष्ठहोमार्थम् ।
14. v[2] My[1] °होम° for °होमेषु ।

**तुथ उशिगन्धारिरवस्युरिति ब्राह्मणाच्छंसिप्रभृतीनामुदङ्चः ॥९॥**

तुथ (तां० ब्रा० १.४.३-४) इत्यादिमन्त्रचतुष्टयस्य प्रतीकोपादानं ब्राह्मणाच्छ ंसिपोतृनेष्ट्रच्छावाकानां चतुर्णां च चतुर्भिर्मन्त्रैस्तत्रैव तिष्ठन्त उदङ्मुखा उपतिष्ठेरन् ॥९॥

**शुन्ध्युरिति मार्जालीयं तत्रैव तिष्ठन्तः ॥१०॥**

तत्रैव सदसो द्वारि तिष्ठन्तो मार्जालीयं दक्षिणामुखा उपतिष्ठेरन् । सामर्थ्यात् ॥१०॥

**ऋतधामेत्यौदुम्बरीम् ॥११॥**

सदसो द्वार्येवोपतिष्ठन्त औदुम्बरीं प्रत्यङ्मुखा उपतिष्ठेरन् ॥११॥

**समुद्र इति ब्रह्मणः सदनम् ॥१२॥**

द्वार्येव तिष्ठन्तः । केचित्तु ब्रह्मणः सदनोपस्थानं साग्निचित्ये क्रतौ नान्यत्रेत्याहुः । तदयुक्तम् । विशेषाकथनात् । अग्नीष्टकचितस्यापि ब्रह्मसदनस्य औदुम्वरीयपत्नीशालादिवद् धिष्ण्यत्वोपपत्तेश्च ॥१२॥

**उत्तरेण सदो गत्वान्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरिति प्रजहितम् ॥१३॥**

ब्रह्मसदनोपस्थानानन्तरमुत्तरेण सदो गत्वा सदसः पश्चादन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्तोऽहिरिति प्रजहितं पुराणं गार्हपत्यमुपतिष्ठेरन् ॥१३॥

---

4. PCL. v[1]My[2-3]. धिष्ण्यान् for च ।

4-5. T. om. तत्रैव...उपतिष्ठेरन् ।

6. v[2]My[1] om. शुन्ध्युरिति...°तिष्ठेरन् (L. 7).

7. C. मार्जालीये for मार्जालीयं ।

12. PC. before केचित् add पुनः; T. सदो° for सदनो° ।

13. PC. अनि° for अग्नी°

16. v[1-2] प्राज°, T प्रजा for प्रज°

**अज इति गार्हपत्यम् ॥१४॥**

यस्मादौत्तरवेदिकमग्निं प्रणयन्ति स गार्हपत्यः ॥१४॥

**सगरा इति दक्षिणाग्नेरायतनम् ॥१५॥**

स्पष्टम् ॥१५॥

**कव्य इति दक्षिणं वेद्यन्तम् ॥१६॥**

दक्षिणं महावेदिपार्श्वं दक्षिणामुखा उपतिष्ठेरन् ॥१६॥

**तत्रैव तिष्ठन्तः सर्वान्त्समन्वीक्षमाणाः पातमेति ॥१७॥**

उपरि स्थितान् सर्वानेव धिष्ण्यान् पुनः समन्वीक्षमाणाः पात मेति (१.८.१२.३) संहृत्योपतिष्ठेरन् ॥१७॥

**एकैकमुपस्थायैतद्ब्रूयुरिति शाण्डिल्यः ॥१८॥**

तं तं धिष्ण्यमुपस्थाय तदानीमेव तं तं समन्वीक्षमाणाः पात मेति मन्त्रं ब्रूयुर्न सर्वोपस्थानान्त इति शाण्डिल्यः ॥१८॥

ननु च प्रत्येकं पात मेत्युपस्थाने वहुवचनविरोधः स्यादत आह—

**बहुशब्दानेकवत् कुर्वन्तः ॥१९॥**

वहुवचनान्येकवचनवत् कुर्वन्त इत्यर्थः। तद्यथा सम्राडसि कृशानुरित्युक्त्वा पाहि मेऽग्ने रौद्रेणानीकेन पिपृहि नमस्ते अस्तु मामा हिꣳसीरिति ॥१९॥

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले द्वितीयः खण्डः ॥२॥

---

2. T. अन्तर्वेदिकं for औत्तरवेदिकम्
7. v²My¹ समीक्षमानाः for समन्वीक्षमाणाः
8. v²My समीक्षमाणाः for समन्वीक्षमाणाः
11. My¹ T. तत्तत् धिष्ण्यम् for तं तं धिष्ण्यम्; v²My¹ T. तदा तमेव तत्तत् for तदानीमेव तं तं; My³. ततः for तं तं
12. T. सब्यो° for सर्वो°; v² T. °स्थानं for स्थानान्ते
16. V² व: for ते

## तृतीयः खण्डः

अथ शाखान्तरीयमुपस्थानं दर्शयति—

**रौरुकीणि चेत्कुर्युरादित्यं प्रथममुपतिष्ठेरन्नध्वनामिति ॥१॥**

रौरुकिणो नाम केचिच्छाखिनस्तैरधीतानि तानि यजूंषि स रौरुकीणि। तानि यदि कुर्युस्तदा **प्रथममध्वनामि** (तां० ब्रा० १.४.१) त्यादित्योपस्थानम् ॥१॥

**आहवनीयमुपस्थाय तमेवापिजोसि जायमान इत्यपिजोसि नवजात इति वायुयमग्निमनुप्रहरन्ति तमभिप्रेत्य ॥२॥**

सम्राडसीत्याहवनीयमुपस्थाय तमेव पुनरपिजोसि जायमान (इत्यपि जोसि नवजात) इति द्वयोर्मन्त्रयोरन्यतरेण उपतिष्ठेरन्। ननु च किमर्थं पुनरुपस्थानमिति। अत्रेदमुच्यते **यमग्निमनुप्रहरन्ति तमभिप्रेत्येति।** यमग्निं मथित्वा आहवनीये प्रहरन्त्यध्वर्यवस्तमभिप्रेत्य पुनरुपस्थानम्। यद्यप्ययमग्निः पृथङ्नोपलभ्यते तथापि तद्बुद्ध्योपस्थानं कार्यम्। तदुक्तम्—अभिप्रेत्येति। तथा आश्वलायनोऽपि यूपादित्याहवनीयनिर्मंथ्यानिति मथित्वा प्रहृतस्यासेरुपस्थानमुक्तवानिति ॥२॥

**यदा चात्वालमथोत्करं तुमुलोऽस्याक्रन्दं कृत्वेति ॥३॥**

यदा चात्वालमुपस्थितवन्तस्तदा तुमुलोऽसीत्युत्करमुपतिष्ठेरन् ॥३॥

---

3. My[1] T. रौरीकाणि. My[3]. रौरिकाणि for रौरुकीणि T. अध्वानम् for अध्वानाम्

5. T. अध्वानम् for अध्वनाम्; v[2]CL My[1]. तथा for तदा.

7. My[1] तमेवावि for तमेवापि; My[1]. इत्यवि for इत्यपि

8. V[1]P प्रहरति for प्रहरन्ति

9. T. अवि for अपि

14-15. V[1]C °निर्मन्थ्या मथित्वा, P °निमथ्यान् अग्निमथित्वा for निर्मन्थ्यानिति मथित्वा; My. आहवनीयानां for आहवनीय°

17. v[2]My[1]. यथा for यदा; v[1] उत्करे for उत्करम्

**यदा शामित्रमथ यत्राऽवध्यं निखनन्त्युवध्यगोहोऽसि पार्थिव इति ।।४।।**

यत्राध्वर्यव अवध्यं निखनन्ति तं प्रदेशमुवध्यगोह इत्युपतिष्ठेरन्निति । अवध्यं पशुशकृत् तस्य गूहनार्थः श्वभ्रः अवध्यगोहः ।।४।।

**यदाग्नीध्रीयमथ यत्राच्छावाक आसीनो होतर्युपह्वमिच्छत्युपह्व्योऽसि नमस्य इत्युपह्व्योऽसि तनूपा इति वा ।।५।।**

आग्नीध्रीयोपस्थानानन्तरमच्छावाकस्योपह्वस्थानमुपस्थेयम् किं पुनस्तत् ? यत्रासीनोऽच्छावाको होतुरनुज्ञामाकाङ्क्षते उपाऽस्मान् ब्राह्मणान् ब्राह्मणा उपह्वयध्वमिति ।।५।।

**यदा ब्रह्मणः सदनमथ सदस्यस्य सदस्योऽसि मलिम्लुच इति ।।६।।**

ब्रह्मसदनोपस्थानं कृत्वा सदस्यस्य सदनमुपस्थेयं सदस्योऽसीति मन्त्रेण ।।६।।

**यदा दक्षिणं वेद्यन्तमथ प्राजापत्यमसीति पत्नीशालामैन्द्रमसीति सदो वैष्णवमसीति हविर्धानमैन्द्राग्नमसीत्यग्नीध्रीयं वैश्वदेवमसीति वा ।।७।।**

यदा दक्षिणं वेद्यन्तमुपस्थितवन्तस्तदा प्राजापत्यमसीत्यादि मन्त्रचतुष्टयेन पत्नीशालादिचतुष्टयमुपस्थेयम् ।।७।।

---

4. V²My¹. om. अवध्यं . . .गोहः

6. L. नमस्यते for नमस्यः; L. तनुनपाः for तनुपाः

8. My² उपस्थानम् for उपह्वस्थानम्

9. PCT उपो अस्मान्, My¹ उपोऽस्मान् My² उपस्यान् for उपास्मान्

10. V²My¹ T. om ब्राह्मणान्

18. दक्षिण° for दक्षिणं;

**अथ तथैव समस्तेन ॥८॥**

सर्वान्ते यथापूर्वमुक्तमुपस्थानम् । तथा समस्तेन मन्त्रेणोपतिष्ठेरन् ॥८॥

समस्तमेव मन्त्रं शाखान्तरीयं पठति—

**सर्वे स्थ सोम्यासः सर्वे सोमं पिबत सर्वे सोमस्य पीतिमानशध्वे पातमेति । समानं परम् ॥९॥**

पातामाग्नयो रौद्रेणानीकेने (तां० ब्रा० १.४.१५) ति मन्त्रशेषोऽस्माकं रौरुकिणां च समान इत्यर्थः एवं शाखान्तरीयमुपस्थानमुक्तम् ॥९॥

अथोपस्थानानन्तरं कृत्यमाह—

**ऋतस्य द्वारौस्थ इत्यपरौ द्वारबाहू सदसः संमृज्य मामा संताप्तमिति सदः प्रविशेयुः ॥१०॥**

स्पष्टम् ॥१०॥

**दक्षिणेनौदुम्बरीं गत्वा तस्या उत्तरत उपविशेयुर्नमः सखिभ्यः इति ॥११॥**

इदमपि स्पष्टम् ॥११॥

**पूर्वेण प्रस्तोतारं प्रतिहर्ता गच्छेत् ॥१२॥**

यदा दक्षिणेनौदुम्बरीं गत्वा उपवेशनार्थमुदङ्मुखा गच्छन्ति तदा उद्गातुः सव्यं पार्श्वं प्रतिहर्ता परित्यज्य प्रस्तोतुर्दक्षिणपार्श्वस्य उदङ्मुखो गच्छेदित्यर्थः ॥१२॥

---

2. T v[2] My[1] om. उक्तमुपस्थानम् । तथा.

3. Tv[2] My[1]. पठन्ति for पठति.

10. V[2] My[1], CMy[3] om. सदः.

16. T. °वेशाय for °वेशार्थम्

17. My[2] परीत्य for परित्यज्य

**एतस्यां वेलाया ँ समुपह्वयेरन्त्सर्वे सत्रेषु ॥१३॥**

उपह्वानमनुज्ञानम्। उपवेशनानन्तरं **सत्रेषु** यजमानाः अन्योन्यमनुजानीरन् उपहूत इत्येवमनुज्ञाप्रदानम्। अनुज्ञानस्य च प्रार्थना पूर्वत्वात् यजमाना उपह्वयध्वमिति प्रार्थनमर्थसिद्धम् ॥१३॥

**मिथोऽन्यत्र ॥१४॥**

सत्रेभ्योऽन्यत्रोद्गातॄणां **मिथ** एवोपाह्वानं कार्यम्। नान्येषामध्वर्य्वादीनाम्। तत्रोद्गाता प्रथममितरावानुजानीयात्। ततः प्रस्तोतेतरौ ततः प्रविहर्तेतरौ ॥१४॥

**सर्वे यजमानम् ॥१५॥**

**सर्वे** त्रयोऽप्युद्गातारो **यजमानमु**पवयेरन्। उद्गातार उपह्वयध्वमिति यजमानेन प्रार्थिताः सर्वे उपहूत इत्यनुज्ञां कुर्युः ॥१५॥

**द्वारबाहुसंमार्जनप्रभृत्येतत्सर्वं कुर्युर्यदा धिष्ण्यानुपतिष्ठेरन् ॥१६॥**

**यदा** यदा धिष्ण्योपस्थानमुत्तरयोः सवनयोः क्रियते तदा तदा सर्वत्र तदनन्तरं द्वारबाहुसंमार्जनप्रभृत्युपह्वानान्तं कुर्युः ॥१६॥

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले तृतीयः खण्डः ॥३॥

---

2. CMy[1] °वेशान्तरं for °वेशनानन्तरम्

## चतुर्थः खण्डः

अथोद्गातुरार्त्विज्य समासे प्रकारं वक्तुमाह—

**याजमान ब्रह्मत्वे चेदुद्गाता कुर्यात् ॥१॥**

इति। रोगादिना ब्रह्मयजमानयोः स्वकार्याशक्तौ तत्कर्म कर्तुमुद्गाता यदीच्छेदित्यर्थः। अत एवानुवादाज्ज्ञायते ऋत्विजामेकस्य कर्माशक्तावितरस्तत्कर्म कुर्यात् ॥१॥

अथ प्रकारमाह—

**आग्नीध्रीयमुपस्थाय पूर्वेण परिक्रामेत् ॥२॥**

इति। आग्नीध्रीयमुपस्थाय तं पूर्वेण परिक्रामेत्। प्रदक्षिणमित्यर्थः ॥२॥

**सदसानुपस्थाय तत एवेक्षमाणः पात्नीशालान् ॥३॥**

सदसि भवान् धिष्ण्यान् होत्रीयप्रभृतीन् ब्रह्मसदनपर्यन्तानुपस्थाय तत एव सदसो द्वार्येव तिष्ठन्नीक्षमाणः पात्नीशालान् प्राग्वंशगतान् धिष्ण्यानुपतिष्ठेत। पात्नीशालपदेन दक्षिणवेद्यन्तोऽपि गृह्यते ॥३॥

**इतरथेतरौ ॥४॥**

इतरौ प्रस्तोता प्रतिहर्ता च इतरथा पूर्वोक्तेन अन्तर्वेदि प्रत्यङ्मुखास्तिष्ठन्त (द्रा० श्रौ० २-२-१३) इत्यनेन प्रकारेण पात्नीशालानुपतिष्ठेयाताम् ॥४॥

**ऋतस्य द्वारौ स्थ इति पूर्वौ द्वारबाहू सदसः संमृज्य दक्षिणस्य पुरस्तादुदङ्मुख उपविशेदिति शाण्डिल्यः ॥५॥**

दक्षिणस्य द्वारबाहोः पुरस्तात् सदसो बहिरुदङ्मुख उपविशेदिति ॥५॥

---

2. PCMy[3] समाप्ते for समासे

13. My[3] om. अपि

16. T My[1] एतेन for अनेन

**तस्यैव पश्चात् प्रत्यङ्मुख इति धानंजय्यः ॥६॥**

तस्यैव दक्षिणस्य द्वारबाहोः पश्चादन्तःसदसि **प्रत्यङ्मुख** उपविशेदिति **धानंजय्यः**। तदिदमुपवेशनं याजमानमुक्तम् ॥६॥

**उक्ते प्रवेशनोपवेशने ॥७॥**

प्रवेशनोपवेशनार्थौ मन्त्रौ पूर्वमेवोक्तार्थावित्यर्थः। **मामासं ताप्तमिति** प्रवेशनमन्त्रः। **नमः सखिभ्य इति** उपवेशनमन्त्रः। उभयोरपि धानंजय्यमते प्रयोग। शाण्डिल्यमते तु बहिः सदस उपवेशनप्रवेशनमन्त्रो निवर्तते ॥७॥

**ऋत्विक्पथेन गत्वा समस्तोपस्थानप्रभृतिसमानम् ॥८॥**

एवं यजमानोपवेशनं कृत्वा तत उत्थाय **ऋत्विक्पथेन** पश्चाद् **गत्वा पातमाग्नय** (तां० ब्रा० १-४-१५)। इति समस्तधिष्ण्योपस्थान प्रभृति **समानं** कर्म ब्रह्मण उद्गातुश्च तन्त्रेणानुष्ठेयमित्यर्थः। सदस उत्तरतो यो मार्गः स ऋत्विक्पथः। तत्र समस्तोपस्थानप्रभृतिवचनात्। पूर्वत्र याजमाने समस्तोपस्थानं नास्तीति गम्यते ॥८॥

**दक्षिणार्धे तु सदसः पूर्वमुपवेशनम् ॥९॥**

अपरया द्वारा सदः प्रविश्य तदुद्गातुः प्रवेशनात् पूर्वं सदसो दक्षिणार्धे उपवेशनं कार्यम् ॥९॥

कथमित्याह—

---

2. My[1] प्राङ्मुखः for प्रत्यङ्मुखः
6. V[2] T यजमानप्रवेश° V[1]C. प्रवेश° for प्रवेशन°; V[1]C. उपवेश° for उपवेशन°
9. T. याजमानोपवेशनान्तं for यजमानोपवेशनं
11. V[1]CP उत्तरः for उत्तरतः
14. TV[1] सदः for सदसः
15. T. अंद्गात्रोपवेशनात्, My[3]V[1] उद्गात्रोपवेशनात् for तदुद्गातुः प्रवेशनात्

**प्रस्तोतुः प्रत्युपवेशनं ब्रह्मोपवेशनेन ॥१०॥**

इति। प्रस्तोतुराभिमुख्येनोपवेशनं ब्रह्मोपवेशनेन कार्यम्। ब्रह्मोपवेशन-प्रकारेण कार्यम् ॥१०॥

तदेव सप्रकारमाह––

**निरस्तः परावसुरिति दक्षिणा तृणं निरस्येत् ॥११॥**

**आवसोः सदने सीदामीत्युपविशेत् ॥१२॥**

स्पष्टे ॥११-१२॥

**नमः सखिभ्यः पूर्वसद्भ्यो नमोऽपरसद्भ्यो भूर्भुवः स्वर्बृहस्पति-ब्रह्माहं मानुष ओमित्युक्त्वौदुम्बरीं गत्वोपविशेत् ॥१३॥**

नमःसखिभ्य इति मन्त्रजपो ब्रह्मोपवेशनाङ्गम्। बृहस्पतिर्ब्रह्माहं मानुष इति मन्त्रलिङ्गात्। तेन ब्रह्मत्वविधानप्रकरणे यद्वक्ष्यति-उक्तेत्तरसदस्युपवेशनं कार्यम् इति। तत्र मन्त्रजपान्तमुपवेशनमिति सिद्धं भवति। अथ मन्त्रजपा-नन्तरमौदुम्बरीं गत्वा समन्त्रकमौद्गात्रमुपवेशनं कार्यम् ॥१३॥

**अनुपविशेयातामितरौ ॥१४॥**

इतरौ प्रस्तोतृप्रतिहर्तारावौद्गात्रोपवेशनमेवानुपविशेयाताम्। न ब्रह्मो-पवेशनकाल इत्यर्थः ॥१४॥

**एतेनानुपूर्व्येण सर्वं यथासनं चिकीर्षेत् ॥१५॥**

योऽयं सदस्युपवेशने क्रमः अनेनैव क्रमेण सर्वं याजमानं ब्रह्मत्वमौद्गात्रं च कर्तुमिच्छेत्। यथासनमिति। स्वे स्वे स्थाने इत्यर्थः ॥१५॥

---

2-3. T. om. ब्रह्मोपवेशनप्रकारेण कार्यम्

10. My[3] °वेशनान्तं for वेशनाङ्गं

11. PC. उक्तं, My[1] उक्त°, v[2] उत्तर° for उक्ते; T. प्रवेशनोपवेशने for सदस्यपवेशनं;

12. T.V[1]L My[3] om. कार्यम्; T. om कार्यमिति, तत्र मन्त्रजपान्तमुपवेशनम्; V[2]My[1]. तत् for तत्र; My[1]V[2]. om. मन्त्रजपान्तमुपवेशनम्

15. My[1] T om. प्रस्तोतृप्रतिहर्तारौ;

**ग्लापयेच्चेदध्यौदुम्बर्येव ॥१६॥**

यद्युपवेशनत्रयं स्वे स्वे स्थाने गत्वा कर्तुमशक्तस्तदा औदुम्बर्यामेवोपवेशनत्रयमपि तत्तन्मन्त्रतः कार्यमिति। अध्यौदुम्बरीति सप्तम्यर्थेऽव्ययीभावः ॥१६॥

**सदस्य एवमेव धिष्ण्यानुपतिष्ठन् ब्रह्माणमनुप्रविशेत् ॥१७॥**

**सदस्यो** नाम षोडशर्त्विग्भ्योऽन्यः कर्मणामुपद्रष्टेत्यापस्तम्बः। सोऽप्युक्तेन प्रकारेण **धिष्ण्यानुपतिष्ठन् ब्रह्माणमनु** सदः प्रविशेत् ॥१७॥

**ब्राह्मणाच्छंसिनं वा ॥१८॥**

स्पष्टम् ॥१८॥

**तेनास्य समुपहवः स्यात् ॥१९॥**

तेन ब्रह्मणा ब्राह्मणाच्छंसिना वा सह सदस्यस्य समुपहवोऽन्योन्यमनुज्ञानं **स्यात्**। ब्रह्मन्नुपह्वयस्व सदस्योपह्वयस्वेत्युक्ते उपहूत इति प्रतिवचनम् ॥१९॥

**भक्षश्च समानः ॥२०॥**

**भक्षो**ऽपि तयोरन्यतरेण सदस्यस्य **समानः**। एकस्मिंश्चमसे सहभक्षणं कार्यमित्यर्थः ॥२०॥

**बीभत्सेयातां चेन्नानाचमसौ स्याताम् ॥२१॥**

यदि ब्रह्म ब्राह्मणाच्छंस्यसदस्यावेकस्मिंश्चमसे सहभक्षणात् **बीभत्सेयातां** तदा पृथक् चमसौ **स्याताम्**। अत एवानुवादात् ज्ञायते आस्यसंस्पृष्टेन चमसेन सोमभक्षणं कार्यमिति। अन्यथा बीभत्साभावात्। न हि चमसाद् धारां स्रावयित्वा भक्षणे बीभत्सागन्धोऽप्यस्ति ॥२१॥

---

11. V[1]CL My[3] om. सह
14. My[2-3] TL. सोमभक्षः for भक्षः
17. P. om. ब्रह्म°; V[2]LT om. °ब्राह्मणाच्छंसि°
20. PC. add तद्° before भक्षणे

**सर्पत्सु न शून्यं सदः कुर्यात् ॥२२॥**

संस्थिते सवने यदा ऋत्विजो निःसर्पन्ति तदा तेषु निःसर्पत्सु शून्यं सदो न कुर्यात्। निःसर्पणकाले स्वयं सदस्येव तिष्ठेत्। अशून्यत्वायेत्यर्थः ॥२२॥

**तस्य दधिभक्षान्तं कर्म ॥२३॥**

तस्य दधिद्रप्सभक्षणान्तं सुत्येऽहनि कर्मेत्यर्थः ॥२३॥

**स निवर्तेत सत्रेषु ॥२४॥**

सत्रेषु सदस्यो न वरणीय इत्यर्थः ॥२४॥

**विसंस्थिते सवने पूर्वया द्वारान्तरेण होतुर्धिष्ण्यं मैत्रावरुणस्य च संचरः ॥२५॥**

विसंस्थिते असमाप्ते सवने। सवनमध्ये इति यावत्। होतुर्मैत्रावरुणस्य च धिष्ण्ययोर्यदन्तरालं तेन सर्वेषां संचरः ॥२५॥

**तद्यथैतं तद्यथैतम् इति ॥२६॥**

तत्तदानीं सवनमध्ये यथैतमेव पुनः प्रवेशः कार्यः इति ॥२६॥

इति च्छन्दोगसूत्रस्य दीपेऽस्मिन् धन्विना कृते।
चतुर्थपटले वृत्तो वासुदेवः प्रसीदतु ॥

इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे चतुर्थः पटलः समाप्तः ॥४॥

इति द्राह्यायणश्रौतसूत्रे चतुर्थे पटले चतुर्थः खण्डः ॥४॥

---

11. V¹L. अन्तराले गतेन for अन्तरालं तेन
12. V¹C यथेतं यथेतम् for यथैतं तद् यथैतम्
13. V¹C My¹ यथेतं for यथैतं

## पञ्चमः पटलः

### प्रथमः खण्डः

**चमसं प्रतिगृह्य प्रस्तोता दक्षिण ऊरावाधाय दक्षिणेन पाणिना विधायासीत ॥१॥**

सवनमुखीयं चमसाध्वर्युणाहृतमुद्गातॄणां चमसं प्रस्तोता प्रतिगृह्य स्वस्य दक्षिण ऊरावाधाय होतुर्भक्षणकालं प्रतीक्षमाण आसीत ॥१॥

**उपहूयमानायामिडायामनूपधारयेदनुपघ्नन् ॥२॥**

इडोपह्वानकाले स्वं चमसमिडापात्रवदास्यसंमितं धारयेत्तं चमसस्थं सोमरसमनुपघ्नन् अङ्गुलीभिरस्पृशन्नित्यर्थः ॥२॥

**वषट्कर्तुरनुभक्षꣳ सर्वत्र भक्षयेयुः ॥३॥**

वषट्कर्तुश्चमसेषु भक्षितेषु पश्चादुद्गातारः स्वीयं चमसं भक्षयेयुः। एवमेव सर्वत्र। न केवलमत्रैव सवनमुखीयप्रचारे ॥३॥

**मिथ उपहूयोद्गाता प्रथमः ॥४॥**

उपहूयेत्यन्तर्भावितण्यर्थोऽयम्। उपह्वानमनुज्ञानं मिथोऽनुज्ञाप्य त्रयोऽपि भक्षयेयुः। तत्रोद्गाता प्रथमो भक्षयेत्। मिथ उपहूयेति वचनादुद्गातृचमसं वषट्कर्ता न भक्षयेदिति गम्यते। यदि स्यात्तस्याप्यनुज्ञापनमवश्यं कार्यम्। नानुपहूतेन सोमः पातवा इति श्रुतेः ॥४॥

---

5. PC. चमसमध्वर्युणा for चमसाध्वर्युणा
8. PC. स्वयं for स्वं
9. P अनूस्पृशन, T. स्पृशन for अस्पृशन्
12. TV[3]My[1] प्रकारे for प्रचारे

**दक्षिणमनु बाहुं दण्डं कृत्वा श्येन इत्यवेक्ष्येन्दविति द्विरल्पं भक्षयेद्यथा सवनं छन्दांस्यादिशन् ।।५।।**

आत्मनो **दक्षिणं बाहुमनु** चमसस्य **दण्डं कृत्वा** तिर्यञ्चं चमसं धारयित्वा **श्येनो** नृचक्षा **इत्यवेक्ष्येन्दविन्द्र**पीतस्ये**ति द्विर्भक्षयेत्**। **अल्पमल्पं** सकृन्मन्त्रेण सकृत् तुष्णीं **यथासवनं छन्दां**सि **स्यादिशन्निति**। अयमर्थः त्रिष्टुप् छन्दस इति माध्यंदिने सवने जगती छन्दस इति तृतीयसवने। तथैवोत्तरमन्त्रपाठात् ।।५।।

**ऊर्ध्व इति मुख्यान् प्राणानभिमृशेत् ।।६।।**

भक्षणानन्तरमूर्ध्वः सप्तर्षीनिति सप्त **मुख्यान् प्राणान्** चक्षुषी नासिके श्रोत्रे मुखं चा**भिमृशेत** ।।६।।

**सोम रारन्धीति हृदयम् ।।७।।**

**सोम गीर्भिरिति नाभिम् ।।८।।**

उभयत्राभिमृशेतेत्यनुषङ्गः ।।८।।

**एवमितरौ कुर्यातां प्रतिहर्ता पश्चात् ।।९।।**

**एवमेवेतरौ** प्रस्तोतृप्रतिहर्तारौ भक्षणं **कुर्याताम्**। तयोः **प्रतिहर्ता पश्चाद्** भक्षयेत् ।।९।।

**तं स आप्याययेदभिमृश्याप्यायस्वेत्येतया गायत्र्या ।।१०।।**

तं चमसं प्रतिहर्ताप्याययेत्। द्रोणकलशात् सोमरसमादाय यत् तेन वर्धनमप्यायनमन्त्रेणाभिमर्शनमात्रं वा। द्वयमप्युक्तं कात्यायनेन **भक्षयित्वा मन्त्रेणालभेरन्**। **सोमं वासिञ्चेयुरिति**। गायत्र्येति वचनमुत्तरत्र **गायत्र्यैवानुसवनमि** (द्रा० ५-१-१४) ति सूत्रे **आप्यायस्व समेतु ते** (तां० ब्रा० १-५-८) इति मन्त्रप्रतिपत्त्यर्थम् ।।१०।।

---

17. V[1]CL My[1-3] om. यत्

**सर्वे वा ॥११॥**

त्रयोऽप्युद्गातारश्चमसमाप्याययेयुः ॥११॥

**तां तृतीयसवने द्विर्ब्रूयुः ॥१२॥**

तामाप्यायस्वे (ऋ० १-९१-१७) त्येतामृचं द्वितीयसवने द्विरुक्त्वा अप्याययेत्। जगतीसंक्त्यर्थं जागतं तृतीयसवनम् ॥१२॥

**सं ते पया ँ सीति माध्यंदिने ॥१३॥**

सं ते पया ँ सी (ऋ० वे० १-९१-१८)ति त्रिष्टुभाप्याययेत्। त्रैष्टुभं माध्यंदिनमिति ॥१३॥

**गायत्र्यैवानुसवनमाप्याययेदिति शाण्डिल्यः ॥१४॥**

आप्यायस्वे (ऋ० वे०१-९१-१७) त्येतस्या एव पाठात्। एवं सर्वेषु- चमस गणप्रचारेषु सामान्येन भक्षणमुक्तम् ॥१४॥

अथ विशेषमाह—

**द्वितीयाः सवनेषु नाराशंसाः ॥१५॥**

इति। प्रतिसवनं वह्वश्चमसगणाः। तत्र द्वितीयाश्चमसगणाः नाराशंस-देवत्याः ॥१५॥

**पूर्वयोश्च तृतीयौ ॥१६॥**

चकारो भिन्नक्रमः। पूर्वयोः सवनयोस्तृतीयचमसगणौ नाराशंसौ ॥१६॥

ततः किमित्याह—

**तेषामनवेक्ष्य भक्षणम् ॥१७॥**

इति। तेषां नाराश ँ सानां श्येनो नृचक्षा इत्यनेन अनवेक्ष्य भक्षणं कार्यम् ॥१७॥

---

11. T. भक्षणप्रकारेषु for °गणप्रचारेषु

अथ तेषां भक्षणमन्त्रमाह—

**अवमैरिति प्रातः सवने औवैरिति माध्यंदिने काव्यैरिति तृतीयसवने ॥१८॥**

अवमैस्त इति प्रातः सवने नाराशंसभक्षणम्। न पुनरिन्दविन्द्रपीतस्येत्यनेन। औवैः काव्यैरित्युत्तरयोः सवनयोः॥१८॥

**पितृभिरिति सर्वत्रानुसं हरेत्॥१९॥**

अवमैरित्यादि त्रिष्वपि मन्त्रेषु पितृभिर्भक्षितस्येत्येतत् प्रत्येकमनुषञ्जेत्॥१९॥

**प्रत्यभिमर्शने यथाकामी॥२०॥**

नाराशंसे भक्षिते प्राणादिप्रत्यभिमर्शने याथाकाम्यं स्यात्॥२०॥

**प्रथमद्वितीयौ पूर्वयोः सवनयोराप्याययेत्॥२१॥**

पूर्वयोः सवनयोः प्रथमद्वितीयौ चमसगणौ भक्षणानन्तरमाप्याययेत्। नेतरान्॥२१॥

**प्रथमं तृतीयसवने॥२२॥**

आप्याययेदित्यनुषङ्गः। अथोद्गातृभिरात्मीयचमसस्यैवाप्यायनम्। इतरैरपि यथास्वमाप्यायनं कार्यमिति। अत्र सर्वत्र सुब्रह्मण्यस्य न भक्षणम्। अनुक्तत्वात्। तस्य स्तुतावनन्वयाच्च। जैमिनिकल्पे तु तस्यापि भक्षणमुक्तम्। अयमेव कल्पकारयोर्मतभेदः प्रभाकरगुरोर्मीमांसावार्तिककारस्य च विप्रतिपत्तेर्मूलम्॥२२॥

एवं भक्षणकथां समाप्यावृत्तिस्तोत्रेषु वक्तव्यमाह—

---

15. $V^2My^{1-3}$ तृतीयसवने प्रथमचमसभक्षणानन्तरमाप्याययेन्नेतराविति ($My^{2-3}$ °न्नेतराविति) for आप्याययेदित्यनुषङ्गः; $V^1$CT अत्र for अथ

16. $V^2My^2$ T. om. अत्र...मूलम् (L. 19)

**आवृत्तिषु तृणे प्रतिगृह्य प्रस्तोता प्रयच्छेद्यथाप्रस्तरम् ॥२३॥**

इति। येपु स्तोत्रीयाः पुनः पुनरावर्तन्ते तान्यावर्तीनि पवमानव्यतिरिक्तानि स्तोत्राणि। तेषु अध्वर्युणाहृतौ स्तोत्रोपाकरणदर्भौ **प्रतिगृह्य प्रस्तोता प्रयच्छेत्**। कस्मै कथं प्रयच्छेदित्यत्रोक्तं **यथा प्रस्तरमिति**। **ब्रह्मन्त्स्तोष्यामः प्रशास्तरि** (श० ब्रा० ४-६-६-६) ति मन्त्रमुक्त्वा प्रस्तरवदुद्गात्रे प्रयच्छेदित्यर्थः ॥२३॥

**अनाह्रियमाणयोर्न मन्त्रं जह्यात् ॥२४॥**

यदा पृष्ठ्ये षडहे दर्भयोः स्थाने अरण्योराहरणं तदापि **ब्रह्मन्त्स्तोष्यामः प्रशस्तरिति** ब्रूयादित्यर्थः ॥२४॥

**तथैव जङ्घामुपहत्य युञ्ज्यात् स्तोमं दीक्षायै तपसो मनसो वाच इति ॥२५॥**

यथा प्रस्तरेण **तथैव** तृणाभ्यां दक्षिणां तु **जङ्घामुपहत्य स्तोममुद्गाता युञ्ज्यात्**। चतुर्भिर्मन्त्रैर्**दीक्षायै तपसो मनसो वाच** इति पदचतुष्टयं मन्त्रचतुष्टयस्य प्रतीकोपादानं प्रतिमन्त्रं **प्रजापतिस्त्वे** (द्रा० श्रौ० ५-१-२७) त्यनुषङ्गं वक्ष्यति। तत्र **दीक्षायै वर्णेन प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानायेति** प्रथमो मन्त्रः। **तपसो रूपेण प्रजापतिस्त्वेति** द्वितीयः। **मनसो महिम्ना प्रजापतिस्त्वेति** तृतीयः। **वाचो विभूत्या प्रजापतिस्त्वेति** चतुर्थः। एतैश्चतुर्भिर्मन्त्रैरेकस्मिन्नेव स्तोत्रे स्तोमयोगः कार्यः ॥२५॥

पक्षान्तरमाह—

**नाना धानंजय्यो यत्रानन्तराणि चत्वारि ॥२६॥**

इति। **यत्र** आनन्तर्येण **चत्वार्या**वृत्तिस्तोत्राणि पूर्णानि लभ्यन्ते तत्र

---

2. V[2]My[1] T यत्र for येपु
4. V[2]My[1]T. om. कस्मै कथं प्रयच्छेत् V[2]My[1]T. om ब्रह्मन्त्स्तोष्यामः प्रशस्तरिति
8. PC. अरण्यादेः for अरण्योः
17. My[1-2] V[2] after चतुर्भिः ins अपि;
18. My[2] अस्मिन् for एकस्मिन्

चतुर्षु स्तोत्रेषु चतुरो मन्त्रान् क्रमेण प्रथमं विभजेत्। न पुनः पुनरेकस्मिन्नेव स्तोत्रे मन्त्रचतुष्टयमिति। तद्यथा सर्वेषु पृष्ठचेषु उक्थ्येषु रात्रिपर्यायेषु चेति। **अनन्तराणीति** वचनं विजातीयपवमानव्यवहितान्यावृत्तिस्तोत्राणि गृहीत्वा मन्त्रविभागो न कार्य इत्येवमर्थम्। तेन प्रातःसवने सोमातिरेकनिमित्तमावृत्तिस्तोत्रमारभ्य माध्यंदिनपवमानादुत्तराणि च त्रीणि गृहीत्वा तेषु मन्त्रविभागो न कार्यः ॥२६॥

**अन्तःसर्वेषां प्रजापतिस्त्वेति ॥२७॥**

**सर्वेषां** चतुर्णामपि मन्त्राणां **प्रजापतिस्त्वा** युनक्त्वित्ययं मन्त्रो भवेत्। अन्ततोऽनुषङ्ग इत्यर्थः। इदं च पक्षद्वयसाधारणम् ॥२७॥

अथ यत्र चत्वार्यावृत्तिस्तोत्राणि पूर्णानि लभ्यन्ते यथा अग्निष्टोमसंस्थे षोडशिसंस्थे च। तत्राप्यावृत्तिस्तोत्राणां चतुष्कशो विभजने सति एकैकमवशिष्यते तथा वाजपेये द्वौ। तत्र कथं स्तोमयोगः। अत आह-

**प्रथमेनाल्पीयस्सु ॥२८॥**

इति। **अल्पीयःसु** चतुर्भ्यो न्यूनेषु स्तोत्रेषु प्रथमेनैव मन्त्रेण स्तोभं युञ्ज्यात् ॥२८॥

**तत्प्रभृतीनि रात्रौ ॥२९॥**

रात्रिपर्यायेषु प्रत्येकं चतुःस्तोत्रेषु प्रथमप्रभृतींश्चतुरो मन्त्रान् क्रमेण विभजेत्। ननु च **यत्रानन्तराणि चत्वारी** (द्रा० श्रौ० ५-२-२६) त्यनेनैव सिद्धमेतत्। सत्यम्। अषोडशिकेऽतिरात्रे सिद्धम्। यदा पुनः षोडशिमानतिरात्रस्तदा षोडशिनमुपक्रम्य चतुर्षु चतुर्षु मन्त्रविभागः स्यात्। तन्निवृत्त्यर्थमुक्तं प्रथमप्रभृतीनेव मन्त्रान् **रात्रौ** विभजेदिति। तदापि षोडशिनः प्रथमेनैवानुमन्त्रणम्। **प्रथमेनाल्पीयःस्वि** (द्रा० श्रौ० ५-२-२८)ति वचनात् ॥२९॥

---

1. S[1-2] My[1-3] T. एवं for न, TV[2]My[1]. om. एव;
2. T V[2]My[1] om. तद्यथा...चेति (L. 3)

**तथातिरिक्तस्तोत्रेषु ॥३०॥**

अप्तोर्यामेऽतिरिक्तस्तोत्रेष्वपि चतुर्षु तथैव प्रथमप्रभृतीनेव मन्त्रान् रात्रौ विभजेत्। तत्रापि संधिस्तोत्रमारभ्य विभागे प्राप्ते तन्निवृत्त्यर्थं वचनम् ॥३०॥

एवं धानंजय्यमतं समाप्य मतान्तरमाह––

**सर्वैरेकैकं यथाम्नायं शाण्डिल्यः ॥३१॥**

इति। **दीक्षायै वर्णेनेति** चतुर्भिरपि मन्त्रैरेकैकं स्तोत्रं युञ्ज्यात्। **प्रजापतिस्त्वा युनक्तु प्रजाभ्योऽपानायेत्येतद्यथाम्नायमेव सकृदन्ते प्रयोज्यम्।** न प्रतिमन्त्रमनुषङ्ग इति विशेषः ॥३१॥

**आवृत्तिन्यायः संधौ ॥३२॥**

आवृत्तिस्तोत्राणां यो धर्मः स संधिस्तोत्रेऽपि स्यात्। तस्यानावृत्तित्वादेवमुक्तम्। तेन स्तोमयोगः कुशास्तरणमित्यादयो धर्माः स्युः। तथा **प्रथमेनाल्पीयःस्विति** प्रवर्तते ॥३२॥

**उपवसथ्येऽहनि न समामनेरन् ॥३३॥**

सुत्यायाः पूर्वदिवसे न स्वाध्यायमधीयीरन्। सुत्येऽहनि वाचो ग्लानिर्मा भूदित्येवमर्थमिति निदानकारः ॥३३॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले प्रथमः खण्डः ॥१॥**

---

2. $V^1$ $My^{2,3}$ om. रात्रौ

## द्वितीयः खण्डः

**प्रस्तोता तु कुशाः कारयेद्यज्ञियस्य वृक्षस्य ।।१।।**

उपवसथ्येऽहनीत्यनुवर्तते। **कुशा** नाम स्तोत्रीयगणनार्थाः काष्ठाः ता **यज्ञियस्य वृक्षस्य** अश्वत्थादेः संबन्धिनीः **कारयेत्** ।।१।।

**खदिरस्य दीर्घसत्रेष्वेके ।।२।।**

स्पष्टम् ।।२।।

क्रियाप्रकारमाह—

**प्रादेशमात्रीः कुशपृष्ठास्त्वक्तः समामज्जतोऽङ्गुष्ठपर्वपृथुमात्रीः प्रज्ञाताग्राः ।।३।।**

इति। **कुशपृष्ठास्त्वक्त** इति त्वक्प्रदेशे कुशतृणवदुन्नतपृष्ठाः स्युः। **समामज्जतः** काष्ठान्तर्गतो रसो मज्जा। तदवस्थानदेशे समाः स्युः। काष्ठं भित्वा तदन्तः प्रदेशे समं तक्षयेदित्युक्तं भवति। **प्रज्ञाताग्रा** इति। यदेव वृक्षेऽवस्थितस्य काष्ठस्याग्रं तदेवेदानीं प्रज्ञातं कार्यम् ।।३।।

**कारयित्वा गन्धवतीभिरोषधीभिरनुलिप्य सर्पिषा सत्रेष्वेके कुशाविधानेन वसनेन परिवेष्ट्य क्षौमशाणकार्पासानां केनचिदुपर्यौदुम्बर्या वासयेत् ।।४।।**

एवं **कारयित्वा** हरिचन्दनादिभिरोषधीभिरनुलिप्य क्षौमशाणकार्पासानामन्यतमेन कुशास्तरणेन वाससा **परिवेष्ट्य** सदस्यौदुम्बर्या **उपरि वासयेत्** कुशा विधीयन्ते स्तीर्यन्ते यस्मिंस्तत् कुशाविधानम्। सत्रेषु सर्पिषा अनुलेपनमेके आहुः ।।४।।

---

4. V[1]CLMy[1] यज्ञार्हस्य for यज्ञियस्य

13. PCL om. अव°; P. om. काष्ठस्य; TL. after अग्रं ins अग्रस्य; PV[2]L. after इदानीं ins. अपि

**तां श्वोभूते कुशैरूर्ध्वाग्रैः परिवेष्ट्यैवंजातीयेनैव वसनेन प्रदक्षिणमूर्ध्वदेशेन परिवेष्ट्य स्पृष्टोऽनपश्रित उद्गायेदिति गौतमः ।।५।।**

इदमुद्गातुः कर्म । **श्वोभूते** सुत्येऽहनि **तामौदुम्बरीमुद्गाता कुशैर्दर्भैरूर्ध्वाग्रैः परिवेष्ट्य एवंजातीयेन** पूर्वोक्तेन क्षौमादीनामन्यतमेन वाससा चोर्ध्वदेशेन परिवेष्ट्य **स्पृष्ट्वानपश्रित उद्गायेत्** । तस्यां शरीरभागमनिक्षिप्य स्पर्शनमात्रं कृत्वेत्यर्थः । **स्पृष्ट** इति कर्तरि निष्ठा ।।५।।

अनपश्रयणे हेतुमाह--

**धिष्ण्योऽयं भवति न धिष्ण्यमासादयेत् ।।६।।**

इति । औदुम्बर्यपि कश्चित् **धिष्ण्यो**ऽग्निरेव । तथा च धिष्ण्योपस्थाने तदुपस्थानमप्युक्तम् । न च धिष्ण्यमग्निं कश्चिदासादयितुमर्हति । तस्मादनपश्रित एव गायेत् ।।६।।

**धृष्टमपश्रयतेति धानंजय्यः ।।७।।**

**धृष्टं** निर्भयम् । धिष्ण्योऽयमग्निरिति भीतिर्न कार्येत्यर्थः ।।७।।

कुत इत्याह--

**स एव तर्दूर्जिश्रितः प्रजाभ्य ऊर्जं विभजतीति ह्याह ।।८।।**

इति । **ऊर्ग्वा उदुम्बरः साम वै देवानामन्नम्** इति च प्रकृत्य ब्राह्मणम् । **स एव तर्दूर्जिश्रितः प्रजाभ्य ऊर्जं विभजतीति** ऊर्ग्रूपायामौदु-

---

2. T. om. स्पृष्टो...परिवेष्ट्य (L. 6);
6. L. स्पृष्टः for स्पृष्ट्वा T. °भाग्यम् for °भागम्;
7. PV[1] अनाक्षिप्य for अनिक्षिप्य; PMy[1-3] TL. after °मात्रम् ins. एव.
11. L कंचिद् for कश्चित्
15. T. after आह adds. उपश्रयणार्थोऽयं भवतीति
16. L और्जं, My[1] T ऊर्जंत, My[2-3] ऊर्जितः for ऊर्जि.
17. V[2] My[2] प्रकृत्या for प्रकृत्य;
18. TMy[1] अर्जं My[3] अर्जित for ऊर्जि.

म्बर्यामपश्रितमूर्ध्वरूपं साम उद्गाता देवेभ्यो विभजतीति ब्राह्मणार्थः। एतदुक्तं भवति । यदिदमौदुम्बर्यामपश्रितमुद्गायति तदिदमन्नमवष्टभ्यान्नं देवेभ्यो ददातीति। यद्यनपश्रित उद्गायेत्तदा देवेभ्योऽन्नं दत्वा स्वयं रिक्त एव स्यात् ॥८॥

**स्तोष्यमाणानां मध्ये वैष्टुतं वसनं प्राक्समासं वोदक्समासं वोपरि दशमास्तीर्य तत्र प्रस्तोता कुशा विदध्यात् प्रस्तावान्तेषु ॥९॥**

आवृत्तिस्तोत्रैः **स्तोष्यमाणानामुद्गातॄणां मध्ये** विष्टुतिगणनार्थं कुशास्तरणं वासः **प्राक्समासं वोदक्समासं वोपरिदशमास्तीर्य तत्र प्रस्तोता कुशा विदध्यात्**। प्रस्तावभक्त्यन्तेषु ॥९॥

**आद्येऽनेकप्रस्तावासु ॥१०॥**

अनेकप्रस्तावयुक्तासु स्तोत्रीयासु महानाम्न्यादिषु प्रथमप्रस्तावान्ते कुशाविधानम् ॥१०॥

**अप्रस्तावास्वादौ ॥११॥**

सन्तनि यण्वादौ प्रस्तावभक्तिरहितासु स्तोत्रीयासु स्तोत्रीयोपक्रम एव कुशाविधानम् ॥११॥

**उदगग्रं प्रथमं विष्टावं प्राक्संस्थं प्रत्यग्वा ॥१२॥**

विष्टावो नाम पर्यायस्य त्रेधा विभक्तस्य एकैको भागः स्तोत्रीयाभ्यासरूपः। तेषु **प्रथमं विष्टावमुदगग्रं** प्रागपवर्गं प्रत्यगपवर्गं वा कुर्यात् उदगग्राभिः कुशाभिः क्रमेण पुरस्तात् प्रत्यग्वा निहिताभिर्गणयेदित्यर्थः ॥१२॥

**तं पश्चिमेन मध्यदेशेनोदक्संस्थं प्रागग्रं प्रत्यग्वा ॥१३॥**

---

2-3. V³ om. तदिदमन्नमवष्टभ्य

3. V³ उद्गायति for उद्गायेत्

21. T. मध्यमदेशेन for मध्यदेशेन

तस्य प्रथमविष्टावस्य मध्यदेशतः पश्चादुदगपवर्गं प्रागग्राभिः प्रत्यगग्राभिर्वा द्वितीयं विष्टावं गणयेत् ॥१३॥

**तं पश्चिमेनोदगग्रं प्रत्यक्संस्थम् ॥१४॥**

स्पष्टम् ॥१४॥

**एवं विधाः पर्याया उत्तरोत्तराः ॥१५॥**

एवं त्रयोऽपि पर्यायाः उत्तरोत्तरतः कुशाविधानेन कार्याः ॥१५॥

**मिथः पर्यायविष्टावान् संदध्यात् ॥१६॥**

इतरेतरं विष्टावेषु कुशाः संश्लेषयेत् । पर्यायेषु च ॥१६॥

**पर्यायादिषु हिंकारं स्तुवीरन् ॥१७॥**

**हिंकारमिति** णमुल्प्रत्ययान्तः । प्रतिपर्यायं हिंकृत्येत्यर्थः । पर्यायो नाम त्रेधा विभक्तस्य स्तोमस्यैकैको भागः । अत्र त्रिवृदादिस्तोमानां पर्यायविष्टावक्लृप्तिर्ब्राह्मणेनैवोक्तेति न सूत्रकारस्य कृत्यमस्ति । यद्येवं हिंकारोऽपि तत एव सिद्ध इति न सूत्रकारेण वक्तव्यः । सत्यम् । **तिसृभ्यो हिंकरोती** (तां० ब्रा० २-२-१) ति एकत्वश्रुतेरुद्गातुरेव हिंकारे प्राप्ते त्रयाणामपि प्राप्त्यर्थं हिंकारं स्तुवीरन्नित्युक्तम् ॥१७॥

**उत्तमां प्रस्तुत्यैषेति शꣳसिष्यन्तं ब्रूयात् ॥१८॥**

**उत्तमां** स्तोत्रीयां प्रस्तोता **प्रस्तुत्यैषेति शꣳसिष्यन्तं** प्रतिब्रूयात् । असमाप्त एव स्तोत्रे शस्त्रारम्भप्रबोधनार्थम् ॥१८॥

---

1. V[1-2]CL. मध्यमदेशतः for मध्यदेशतः
6. PCT. उत्तरतः उत्तरतः, My[3] उत्तरतः for उत्तरोत्तरतः; V[1]My[2] °विधाने for °विधानेन
12. PMy[2]C °कार° for °कारस्य
17-18. TV[2]My[1] स्तोत्रशस्त्रयोः संतत्यर्थम् for असमाप्त एव स्तोत्रे शस्त्रारम्भप्रबोधनार्थम्

**स्तुतस्य स्तुतमसीति यजमानवाचनम् ॥१९॥**

स्तोत्रे समाप्ते इति शेषः ॥१९॥

**सवनसंस्थासु प्रशास्त्रोक्ता यथेतरमपरया द्वारा निष्क्रम्य पश्चिमेनाग्नीध्रीयं मूत्रं कुर्युः ॥२०॥**

प्रशास्त्रा मैत्रावरुणेन सर्पतेत्युक्ताः अर्थप्राप्तस्य मूत्रकालनियमः ॥२०॥

**वाचं यच्छेयुर्याविदुदक्याः स्युः ॥२१॥**

यावदुदकाचमनेन शुद्धास्तावद् वाग्यताः स्युः ॥२१॥

**एतन्मृगतीर्थम् ॥२२॥**

अग्नीध्रीयस्य पश्चाद्यो देशः स मृगतीर्थं नाम ॥२२॥

**तेन भूयः शम्यापरासाद् गच्छेयुः ॥२३॥**

तेन मृगतीर्थेन शम्यापरासाद् अतिरिक्तं देशं न गच्छेयुः । हस्तेन वेगयुक्तेन शम्या प्रास्ता यावन्तं प्रदेशं गच्छेत् स शम्यापरासः ॥२३॥

**यो भूयो जिगमिषेदाप्नानेन गच्छेत् ॥२४॥**

यस्तु शम्यापरासादतिरिक्तं देशं गन्तुमिच्छति स आप्नानेन तीर्थेनैव गच्छेत् ॥२४॥

इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले द्वितीयः खण्डः ॥२॥

---

3. TMy^2-3 यथैतम् for यथेतरम्

5. V^1C. प्रसर्पत for सर्पत; Tv^2 °करणकालनियतोऽयं for °कालनियमः

## तृतीयः खण्डः

**अथ धिष्ण्यानुपतिष्ठेरन् ॥१॥**

सवनसंस्थानन्तरं निष्क्रान्ताः कृतावश्यकाः पुनराप्नानेन तीर्थेन प्रपद्य यथापूर्वं धिष्ण्योपस्थानं कुर्युः ॥१॥

**समस्तेनोत्तरयोः सवनयोरिति गौतमशाण्डिल्यायनौ ॥२॥**

उत्तरयोः सवनयोः **यातमाग्नय** समस्तेनैव मन्त्रेणोपस्थानम् । नेतरैः । इत्येकं मतम् ॥२॥

**सर्वेणेति धानंजय्यः ॥३॥**

सर्वेण सर्वैरपि मन्त्रैर्यथास्वमुपस्थानमिति मतान्तरम् ॥३॥

**अनुपस्थानꣳ शाण्डिल्यः ॥४॥**

स्पष्टम् ॥४॥

**एवमेव निष्क्रम्य पृथक्स्तोत्रेभ्यः समस्तेनोपतिष्ठेरन्याग्यूर्ध्वमुक्थेभ्यः ॥५॥**

तृतीयसवने पृथक्स्तोत्रेभ्य ऊर्ध्वं यानि स्तोत्राणि षोडशिसामादीनि तदर्थमेवापरया द्वारा निष्क्रम्य **पातमाग्नय** इति समस्तेनोपस्थानं प्रतिस्तोत्रं कार्यम् ॥५॥

तत्र विशेषमाह—

**पर्यायेभ्यस्तु रात्रेः ॥६॥**

रात्रिसंबन्धिभ्यः पर्यायेभ्यः एव पृथक्पृथगुपस्थानम् । न पुनः प्रतिस्तोत्रमिति । तेन शोडशिस्तोत्र वाजपेये च बृहत्स्तोत्रे संधौ च पृथक्पृथगुपस्थानम् । तथातिरिक्तस्तोत्रेष्वपि प्रतिस्तोत्रमुपस्थानमिति पूर्वसूत्रेणोक्तं भवति ॥६॥

---

6. P.T.L. नेतरत् for नेतरैः

19. P. My[1-3] एवं for एव

**यथासनमुपविश्य प्रस्तोता हविर्धानं गच्छेन्मध्यंदिने ॥७॥**

**यथासनमुपविश्य** यजमानोपहव कृते च गमनम् । एतत्सर्वं कुर्युर्यदा **धिष्ण्यानुपतिष्ठेरन्नि** (द्रा. श्रौ. ५.३.१) ति वचनात् । यद्येवं तेनैव सिद्धत्वाद् **यथासनमुपविश्येति** न वक्तव्यम् । तथा **हविर्धानं गच्छेदि**त्यपि न वक्तव्यम्, **एतत् सर्वं कुर्यादुत्तरयोः पवमानयो**रि (द्रा. श्रौ. ३.४.३३) त्यतिदेशात् । सत्यम् । नियमार्थमेतत् सूत्रम् । प्रस्तोतैव गच्छेन्नेतरावित्येको नियमः । तथैवोपवेशनानन्तरं गच्छेत् न पूर्वम् इत्यपरो नियमः । अन्यथा प्रस्तोतुरुपवेशनस्य दृष्टप्रयोजनाभावात् उपस्थाने कृते तदानीमेव हविर्धाने गमनं स्यात् । तन्निवृत्यर्थ**मुपविश्यै**वेति वचनमदृष्टार्थम् ॥७॥

**हुत आदित्यग्रहे प्रतिहर्तार्भवे ॥८॥**

इदमपि नियमार्थम् । **आर्भवे** पवमाने **प्रतिहर्तै**व गच्छेद्यथासनमुपविश्यादित्यग्रहहोमानन्तरम् ॥८॥

**उभयत्र सर्वे सत्रेषु ॥९॥**

**सत्रेषु** तु **उभयत्रापि** आर्भवे माध्यंदिने पवमाने च त्रयोऽप्युद्गातारो हविर्धानं गच्छेयुः, सवत्र होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रायं हविर्धानं गच्छेयुः । **दक्षिणेनोत्तरयोः सवनयोर्यदा हविर्धानमि** (द्रा. श्रौ. ४.२.६) ति वचनात् । गत्वा च हविर्धानं ररात्यालम्भनादिपवित्रनिष्पीडनान्तं कृत्वा निःसर्य प्रवृतहोमौ च हुत्वा सदस्यागत्य **योम आत्मे** (तां. ब्रा. १.३.४) त्युपवेशनान्तं कृत्वा पवमानस्य ऋग्जपादि कर्तव्यम् ॥९॥

---

1. T My[1] My[3] माध्यं for मध्यं
17. V[2] My[1] T. om. हविर्धानं; PCL V[1-2] om. च; v[2] My[1-2] T. प्रशुक्रौत्विति देवामन्त्रजपान्तं for पवित्रनिष्पीडनान्तं
19. V[2] My[1-2] T. after कर्तव्यम् add :—अत्र सर्पण वेलायामुद्गातृप्रतिहर्त्रोरपि सर्पण कार्यम् । एतत् सर्व (a) कुर्युरुत्तरयोः पवमानयोरिति वचनात् । तथा उपग्रन्थकारेण उभयोर्वा सर्पणयोः प्रतिहर्तापच्छिद्येतेति माध्यंदिनेऽपि सवने प्रतिहर्तुः (b) सर्पणं कर्तव्यम् इति उक्तम्) । आपस्तम्बोऽप्याह-बहिष्पवमानवन्माध्यंदिनं पवमानं सर्पन्तीति ।

(a) My[1-2] T. कुर्याद् for कुर्युः; (b) My[2] सर्पणानुदारात् for सर्पणं कर्तव्यम्

**पवमानयोरुत्तरयोर्धिष्ण्यविहरणे मार्जालीयꣳहरन्तः पश्चिमेन यजमानꣳहुत्वा तेनैव प्रतिहरेयुः॥१०॥**

सदसः पूर्वया द्वारा प्रविश्य यजमानं पश्चिमेन **मार्जालीयं** हृत्वा तेनैव पुनः प्रतिहृत्य मार्जालीयस्थाने विदध्युः । अदृष्टार्थमेतत् । इदं चाध्वर्यवं विकल्पते । अध्वर्युसूत्रे अनुक्तत्वात् ॥१०॥

**माध्यंदिनेन स्तुत्वा सत्रेषु दधिघर्मस्य भक्षयेयुः समुपहूय दधिक्राव्ण इति ॥११॥**

स्पष्टम् ॥११॥

**तस्या उत्तमं पादं दशमेऽहन्यभ्यस्येयुः ॥१२॥**

**दशमेऽहनि परोक्षमनुष्टुभमुपयन्तीति** ब्राह्मणेन प्रत्यक्षानुष्टुभां परिहरणीयत्वात् । तदर्थोऽभ्यास इति ॥१२॥

**पूर्वेण पत्नीशालामन्तरेणाग्नीध्रीयꣳसदश्च तीर्थेन दक्षिणा नयेयुः ॥१३॥**

दक्षिणादानकाले महावेदेर्दक्षिणपार्श्वे पूर्वमेव दक्षिणाः स्थाप्याः । ताः **पूर्वेण पत्नीशाला**मुदीचीं नीत्वा पुनराग्नीध्रीयं **सदश्चान्तरेण** प्राचीं नीत्वा पुनस्तीर्थेनोदीचीं **नयेयुः** ॥१३॥

**सर्वासां देवस्य त्वेति पुरस्ताज्जपः ॥१४॥**

सर्वदक्षिणानां प्रतिग्रहे **देवस्य त्वे** (तां. ब्रा. १.८.१) ति पुरस्ताज्जपः कार्यः ॥१४॥

**वरुणस्त्वेति यथादैवतं तत्प्रतिगृह्णीयात् ॥१५॥**

**यथादैवत**मिति । यस्य द्रव्यस्य या देवता प्रतिग्रहमन्त्रे पठिता तामादिश्य **तत् प्रतिगृह्णीयात्** । यथा **वरुणायाश्वम्** (तां. ब्रा. १.८.२) अग्नये हिरण्यमि (तां. ब्रा. १.८.५) त्यादि ॥१५॥

**यथाजाति मृगान् ॥१६॥**

---

4. T. V[2] My[1] प्रहृत्य for प्रतिहृत्य

10. L. प्रत्यक्षम् for प्रत्यक्ष

**वायवे मृगमि** (तां. ब्रा. १.८.१३) ति मृगप्रतिग्रहमन्त्रे **यथाजाति मृगाना**-दिशेत् । वायवे हरिणं वायवे खड्गमित्येवम् । सर्वस्वदक्षिणे क्रतौ मृगस्यापि शशहरिणादेर्गृहे विद्यमानस्य दानमस्ति ॥१६॥

**अप्राणच्च ॥१७॥**

उत्तानायाङ्गिरसाय **अप्राणदिति** मन्त्रे अप्राणदपि यथाजात्यादिशन् प्रतिगृह्णीयात् । तद्यथा—उत्तानायाङ्गिरसाय नः शय्यासनमित्येवम् ॥१७॥

**पुंवन्मिथुनान्यन्यत्राजाभ्यः ॥१८॥**

मिथुनप्रतिग्रहे पुंस इव मिथुनानां देवतामादिशेत् । यथा वरुणायाश्वावित्यादि । **अन्यत्राजाभ्य** इति वचनमजमिथुने स्त्रियाश्च पुंसश्च पृथक् पृथग्देवताम्नानात् । तद्यथा अग्नयेऽजमग्नीषोमाभ्यामजामि (तां. ब्रा. १.८.५-६) ति ॥१८॥

**तेन क इदमित्युपरिष्टाज्जपः ॥१९॥**

**तेनामृतत्वमशीयेत्यादिप्रतिग्रहीत्रे** (तां. ब्रा. १.८.२-१६) इत्यन्तं तथा **क इदं कस्मा अदादित्यादि** कामैतत्ते (तां. ब्रा. १.८.१७) इत्यन्तं द्वयमप्युपरिष्टाज्जपेत् ॥१९॥

**तत्रोहापादीनि पदानि ॥२०॥**

तेषु मन्त्रेषु यानि पदान्यूहमापद्यन्ते तान्यूहापादीनि वक्ष्याम इत्यर्थः ॥२०॥ तान्येवाह—

**त्वा देवि दक्षिणेऽद इति च यत्तत्स्यात्तेन दात्र इदमाविशैतत्ते भुञ्जतीति मामा हिꣳसीरिति च ॥२१॥**

---

2. P. सर्वत्र दक्षिणा⁰ for सर्वस्वदक्षिण⁰

2-3. T. My[2] om. शशहरिणादेर्गृहे विद्यमानस्य

4. V[1] My[1] T. अप्राणात् for अप्राणत्

5. V[2] आदिश्य for आदिशन्

8. PV[1] My[2-3] पुरुष⁰ for पुंस इव

T. My[3] अश्वम् for अश्वौ

**वरुणस्त्वा नयतु देवि दक्षिणे** इत्यत्र पदत्रयं यथार्थमूह्यम्। **वरुणो वो नयतु देव्यो दक्षिणा** इत्येवम्। **अद इति च यत्तत्स्यादिति**। अस्यायमर्थः। अद इति द्वितीयान्तं च पदमूह्यम्। यत्संख्यं यल्लिङ्गं च तद् द्रव्यं स्यात्तेनाकारेणोह्यम् इति। ननु च अद इति द्वितीयान्तं पदं नास्ति। सत्यम्। वरुणायाश्वमित्यादिषु प्रतिग्राह्यद्रव्यवचनानां द्वितीयान्तानामेतदुपलक्षणम्। तेनाश्वमश्वावित्यादिलिङ्ग-वचनोहः कार्यः। तथा **तेनामृतत्वमशीय वयोदात्र** इत्यत्र **तेन दात्र** इति पदद्वयमूह्यम्। ताभ्याममृतत्वमशीय वयो दातृभ्यामिति। दातृशब्दो यजमानवाची। तथा **क इदं कस्मा अदादित्यत्र इदमाविशैत**दिति पदत्रयमूह्यम्। **इदमिमामिति**। अत्र **कामं समुद्रमाविशेति** तैत्तिरीयाणां मन्त्रपाठः। छन्दोगानामपि। नूनं शाखान्तरे तथैव पाठः। यतः सूत्रकारेणैवमुपात्तम्। तत्पक्षे आविशेत्यस्याख्यातस्य दक्षिणापरत्वात् यथार्थमूहः। आविश आविशतं आविशतेति। अस्माकं तु **कामः समुद्रमाविशदिति** पाठः। तदानीमाविशदित्यस्य कामपरत्वादूहो नास्ति। तथाहि काम एव समुद्रवत् प्रभूतां दक्षिणां निर्भयमाविशेत्। नाहमिति मन्त्रार्थः। तथा **कामैतत्त** इत्यत्राप्येतच्छब्दस्य यथार्थमूहः। कामैतत्ते कामैषा त इत्यादि। **कामैतत्त** इत्यत्र ते शब्दस्य नास्त्यूहः। एतच्छब्दप्रदर्शनार्थं तस्य सहपठितस्य सूत्रेणोपादानमिति। तथा **अन्नस्यान्नपतिः प्रादादि** (ता. ब्रा. १.८.७) त्यस्मिन्मन्त्रे भुञ्जतीति हिꣳसीरिति च पदद्वयमूह्यम्। यथा भुञ्जत्यो मामा हिꣳसिष्टेति ॥२१॥

**अश्व रथं चेद्दद्यात् ॥२२॥**

यद्यश्वैर्वाहनैर्युक्तं रथं यजमानो दद्यात्तदा विशेषं वक्ष्याम इत्यर्थः ॥२२॥

---

2. T. V[2] My[1] om. अस्य

3. V[2] My[1] यज्जातीयं यल्लिङ्गं च न द्रव्यं स्यादिति for यत्संख्यं ··· ऊह्यमिति

6-7. V[1] यथा for तथा P. C. L. om. अत्र पदद्वयम्;
P. after दातृभ्यां ins. दातृभ्यः

13-14. P. C. समुद्रं तद्वत् पटिता दक्षिणा for समुद्रवत् प्रभूतां दक्षिणां
V[1] L. om. तथाहि ··· एतच्छब्दस्य

18. My[2] after हिꣳसिष्टेति adds : भुञ्जतीत्यपः संबोधनमिति

**पूर्वेणाग्नीध्रीयमवस्थाप्य पुरस्ताज्जपं जपित्वा दर्भमुष्टिनाऽश्वमुखानि संमृज्यात् द्वाभ्यां द्वाभ्यामश्वनामभ्यामेकैकस्याश्वोऽसीत्येतत्प्रभृतिभिरुदक्संस्थमिति धानंजय्यः ॥२३॥**

**अश्वोऽसि** अत्योऽसि मयोऽसि हयोऽसीत्यश्वनामान्यष्टौ पठितानि । तानि विभज्य **द्वाभ्यां** द्वाभ्यामेकैकमश्वमुदगपवर्गं **संमृज्यात्** । तेन सामर्थ्याच्चतुर्भिरश्वैर्युक्तस्य रथस्य प्रतिग्रहेऽयं धर्मः । उदक्संस्थमिति वचनात् प्राङ्मुखः प्रत्यङ्मुखो वा रथोऽवस्थाप्यः ॥२३॥

**धुर्यौ प्रथममित्यपरम् ॥२४॥**

धुर्यौ आभ्यन्तरावश्वौ प्रथमं संमृज्यात् ॥२४॥

**दक्षिणं पूर्वं तथा प्रष्टी ॥२५॥**

तथैव **प्रष्टी** बहिर्युक्तावश्वौ संमृज्यात् । तयोरपि **दक्षिणं पूर्व**मित्यर्थः । अस्मिन्नपि मते यथापाठमेव मन्त्रक्रमः ॥२५॥

**सर्वाण्येकैकस्मिन्नुदक्संस्थमिति शाण्डिल्यः ॥२६॥**

अष्टावप्यश्वनामानि प्रत्येकमश्वेषु प्रयुञ्ज्यादुदगपवर्गम् ॥२६॥

**सर्वाण्येकस्मिꣳस्तूष्णीमितराणीत्यपरम् ॥२७॥**

अष्टावप्यश्वनामान्येकस्मिन्नेव दक्षिणेऽश्वे प्रयोज्यानि । **तूष्णीमितरान्** संमृज्यात् ॥२७॥

**एतान्येवाश्वास्वश्वतरेष्वश्वतरीषु च यथार्थमूहेत् ॥२८॥**

**एतान्येव** अश्वनामानि बडवादिषु यथार्थमूहेत् । तत्र बडवासु स्त्रीलिङ्गमात्रस्यैवोहः । यथाश्वास्यत्यासीति । वृषासीत्येतस्य स्थाने स्त्र्यसीत्यूह्यम् । मयोऽसीति मयः शब्दः सकारान्तः सुखवचनः । सुखमसीत्यर्थः । तदनूह्यमेव ।

---

6. V² प्रतिविभज्य, My¹ प्रविभज्य, for विभज्य

7. V²My¹ ⁰ग्रहवचनात् for ⁰ग्रहे · · · इति वचनात्; My³ ग्रहोऽयं, T. ⁰ग्रहवद् for ⁰ग्रहेऽयं

13. P. C. मन्त्रे for मते

19. T. V² My¹ om. एतान्येव · · · ऊहेत्

अत्योऽसीति सन्ततगमनार्थशब्दः । शिष्टानि पञ्चनामानि अश्वजातिवाचकानि । तत्स्थानेऽश्वरथविषयेऽश्वतरशब्दः कार्यः । तत्रापि स्त्रियामश्वतर्यसीत्याद्यूहनीयम् ॥२८॥

**त्रिभिश्चेदर्धान्येकस्मिन्नर्धानि द्वयोः ॥२९॥**

यद्यश्वरथस्त्रिभिरश्वैर्युक्तः स्यात्तदानीमर्धानि चत्वार्यश्वनामानि एकस्मिन् ब्रूयात् । इतराणि चत्वारि द्वयोरश्वयोः समं विभज्य ब्रूयात् ॥२९॥

**द्वैधं द्वयोः ॥३०॥**

यदि द्वाभ्यामश्वाभ्यामेव रथो युक्तः स्यात्तदा द्वयोरश्वयोर्द्वैधमश्वनामानि समं विभजेत् ॥३०॥

इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले तृतीयः खण्डः ॥३॥

---

1. $V^1$ L. C. सतत$^0$ for संतत$^0$
2. T. $V^2$ $My^1$ अश्वतर$^0$ for अश्वरथ$^0$; $V^2$ $^0$विष्टये for $^0$विषये
8. $V^1$. om. अश्वयोः; T. om. एव

## चतुर्थः खण्डः

**आदित्यानामिति रथशिर आलभ्य जपेत् ॥१॥**

संमार्जनानन्तरमादित्यानामि (तां. ब्रा. १.७.२) ति जपेत् ॥१॥

**यद्रथ्यं स्याद्वायोरिति चर्मण्यं प्रतिगृह्णीयान्नक्षत्राणामित्यस्थिमयं सूर्यस्येत्ययोलोहे हिरण्यं च ॥२॥**

तत्र यद्रथ्यं रथाङ्गं चर्मलोहहिरण्यादिनिर्मितं स्यात्तत्र वायोरिति चर्मविकारं प्रतिगृह्णीयात् । अस्थिमयं गजदन्तादिनिर्मितम् । अयोलोहे हिरण्यमिति । आयसं ताम्रं सौवर्णं चेत्यर्थः ॥२॥

**दक्षिणेन रथं गत्वा रथन्तरमसीति दक्षिणं चक्रमालभेत ॥३॥**

स्पष्टम् ॥३॥

**वामदेव्यमसीत्यधिष्ठानम् ॥४॥**

अधिष्ठानमुपवेशनस्थानम् ॥४॥

**बृहदसीत्युत्तरं चक्रम् ॥५॥**

गतम् ॥५॥

**अङ्कान्यङ्कु इति चक्रे एव संमृज्यात् ॥६॥**

ये पूर्वमालब्धे चक्रे । ते एव । पुनरपीत्येवशब्दार्थः ॥६॥

**वैश्वानर इति दक्षिणेन पादेनारोहेत् ॥७॥**

रथमिति शेषः ॥७॥

**तदपि वेदितमवपन्नं दक्षिणं चक्रं निर्वर्त्य खमन्वीक्षयेत् पूर्वस्यान्तेन ते त्वाग्नय इति ॥८॥**

---

3. $V^2$ $My^{1-3}$ T. जपः for जपेत्

6. T. om. स्यात्तत्र · · · °निर्मितम् (L. 7)

15. $My^1$ एवं for एव;

16. $My^3$ एवं पूर्व बलीवर्दे for ये पूर्वमालब्धे; T. after ये adds :—एवं

19. P. आवपन्नं for अवपन्नं; $V^1$ CL. $My^1$ निवृत्य, for निर्वर्त्य

**तच्चक्रमक्षभङ्गादिनावपन्नं** विनष्टं यजमानेनाप्यावेदितं चेद् दक्षिणं चक्रं निर्वर्त्य अक्षान्निष्कृष्य तस्य चक्रस्य द्वारं यजमानं दर्शयेत्। प्रतिग्रहीता **पूर्वस्य** मन्त्रस्यान्तेन **ते त्वाग्नयः पप्रयः पारयन्त्वित्यनेन**। तत्र न इत्यसमच्छब्दस्य स्थाने **ते त्वाग्नय** इति युष्मच्छब्दं यजमानमभिप्रेत्य प्रयुञ्ज्यात् ॥८॥

**ते मेतीतरो ब्रूयात् ॥९॥**

**इतरो** यजमानः **ते माग्नयः पप्रयः पारयन्त्विति** ब्रूयात् ॥९॥

**आरुह्य जपेद् गिदैषत इति ॥१०॥**

स्पष्टम् ॥१०॥

**तदपि वेदितं शमरथं शाखास्तम्भमालभ्यान्तरा चक्रवर्त्मन्येतेनैवान्वीक्षेत ॥११॥**

**शमरथः** शान्तरथः। जीर्णरथ इत्यर्थः। यजमानेन जीर्णोऽयमिति निवेदितं रथं चक्रवर्त्मनोर्मध्येनावकाशेन **गिदैष** (तां. ब्रा. १.७.७) त इत्येतेनैव निरेक्षेत। **तदिति** नपुंसकलिङ्गं छान्दसम् ॥११॥

**कृशेति सव्यानभीशूना यच्छेत् ॥१२॥**

**सव्यानभीशून्** रश्मीनायच्छेत् ॥१२॥

**दासेति दक्षिणानवगृह्णीयात् ॥१३॥**

**दक्षिणान्** अभीशून् ॥१३॥

**अवरुह्य सकृद्वारुणमुक्त्वा यथादैवतमादिश्योपरिष्टाज्जपं जपेदिति गौतमः ॥१४॥**

**रथादवरुह्य वरुणस्त्वा नयतु देवि दक्षिण** इत्येकं वरुणमन्त्रं बहुवचनेनोहेन सकृदुक्त्वा **यथादैवतमश्वांश्च रथं चादिश्य** तेनामृतत्वमशीयेत्युपरिष्टाज्जपमूहेन सकृद् ब्रूयात्। तद्यथा **वरुणो वो नयतु देव्यो दक्षिणा वरुणायाश्वानुत्तानायाङ्गिरसाय रथं तैरमृतत्वमशीयेति** ॥१४॥

---

2. P. L. om. निर्वर्त्य
3. V[2] My एतेन for अनेन
9. C. L. My[2] °स्तम्बम् for °स्तम्भम्
23. V[2] तेन for तैः

**संमार्जनप्रभृत्येतत्सर्वं कृत्वा विमुच्य नाना पुरस्ताज्जपोपरिष्टाज्जपौ वारुणमश्वेभ्यो रथाय चेति धानंजय्यः ॥१५॥**

**अश्वसंमार्जनप्रभृत्यवरोहणान्तं** कर्म **कृत्वा** रथादश्वान् **विमुच्य** पृथगेव **पुरस्ताज्जपोपरिष्टाज्जपौ वारुणं चेति** मन्त्रत्रयमश्वेभ्यो रथाय च कार्यम्। न तन्त्रेणेत्यर्थः ॥१५॥

**ग्लायेच्चेद्यथासनं वैतत्सर्वं जपेत् ॥१६॥**

यद्यक्षमः प्रतिग्रहीता स्यात्तदा **यथासनं** सदस्येवासीन एवाश्वनामप्रभृतिमन्त्रं **जपेत्** ॥१६॥

**पृष्ठ्यं चेद्दद्यात्प्राग्वारुणादश्वनामानि जपेत् ॥१७॥**

पृष्ठे साधुः पृष्ठ्यः। पृष्ठेन वहने शिक्षित इत्यर्थः। तं चेद् दद्यात् तदा **वरुणस्त्वा नयत्वि**त्यतः प्रागश्वनामानि **जपेदिति**। द्विविधोऽश्वः। पृष्ठे दान्तो वहने दान्तश्चेति। तथा चापस्तम्बः—**मातृमन्तं पितृमन्तं पृष्ठे वहे च दान्तम्** इति ॥१७॥

**पुरस्ताज्जपाद्वा ॥१८॥**

स्पष्टम् ॥१८॥

**तथा दान्तेषु ॥१९॥**

**दान्तेषु** सुशिक्षितेष्वप्यश्वेषु **तथैवा**श्वनाम्ना जपः कार्यः ॥१९॥

**यद्रथ्यं स्यात्तेन तत्प्रतिगृह्णीयात् ॥२०॥**

---

3. T. om. अश्व · · · वारुणं चेति (L. 4)
4. P. रथार्थं for रथाय
9. P पृष्ठं for पृष्ठ्यं;
10. P. पृष्ठये for पृष्ठे : P. वहनेन for वहने T. V[2] पृष्ठ्यं चेद्दद्यादिति पृष्ठ्यं लक्षणयुक्तं श्रेष्ठमश्वं for पृष्ठे · · · तं चेद्
11. T. om. द्विविधो° · · · दान्तमिति (L. 13)
17. T My[2] शिक्षितेषु for सुशिक्षितेषु; V[2] My[1] T. °नाम जपं कुर्यात् (V[2] My[1] कुर्युः) for °नाम्ना जपः कार्यः

यद् रथगतं व्रीहियवादिकं तत्सर्वं रथमन्त्रेणैव **प्रतिगृह्णीयात्** । रथप्रतिग्रहेण तत् प्रतिगृहीतं भवति । न पृथक् प्रतिग्रहः कार्य इत्यर्थः । यत् पूर्वमुक्तं **वायोरिति चर्मण्यं प्रतिगृह्णीयादि** (द्रा. श्रौ. ५.४.२) त्यादि तदपृथग्भूते रथावयवे मन्त्रविशेषविधायकम् । अत्र तु पृथग्भूतं व्रीहियवादिकं **रथ्यमित्युच्यते** ॥२०॥

**अन्नस्येति प्राग्वारुणादवेः ॥२१॥**

**अवेः प्रतिग्रहे** क्रियमाणे **वरुणस्त्वा नयतु देवी** (तां. ब्रा. १.८.२) त्यतः प्राग**न्नस्यान्नपतिरि** (तां. ब्रा. १.८.७) ति मन्त्रं जपेत् ॥२१॥

**पुरस्ताज्जपाद्वा ॥२२॥**

स्पष्टम् ॥२२॥

**ग्नास्त्वा कृन्तन्निति वसनस्य ॥२३॥**

वस्त्रस्य प्रतिग्रहे **ग्नास्त्वाकृन्तन्नि** (तां. ब्रा. १.८.६) ति मन्त्रं प्राग्वरुणाज्जपेत् । पुरस्ताज्जपाद्वा ॥२३॥

**तद्वदस्येदतान्तवे ॥२४॥**

कार्पासतन्तुविकारस्तान्तवम् । **अतान्तवे** वल्कलादौ वस्त्रे **ग्नास्त्वाकृन्तन्नि** (तां. ब्रा. १.८.६) **ति** मन्त्रं त्यजेत् ॥२४॥

**हिरण्यमल्पीयोऽभोगादागच्छेदौदुम्बर्यामाश्लेषयेत् ॥२५॥**

उपभोगायापर्याप्तं हिरण्यमेकमानं द्विमानं वा गच्छेत्सदसः स्थूणाया**मौदुम्बर्यामाश्लेषयेत्** ॥२५॥

**आग्नीध्रीये वा जुहुयात् ॥२६॥**

तूष्णीमग्निमुद्दिश्य त्यजेत् ॥२६॥

**समस्तान् व्रीहियवानेकक्रतौ प्रतिगृह्णीयात् ॥२७॥**

---

2. V². om. यत्पूर्वम् · · · इत्यादि (L. 3)

5. M वरूणादश्वनामानि जपेत् for वारुणादवेः

15. P. मन्त्रस्य for मन्त्रं; P My¹ V² जपेत् for त्यजेत्

16. My² आयच्छेत् for आगच्छेत्

17. P. पर्याप्त⁰ for अपर्याप्तं; T. सदस्य⁰ for सदसः

एकस्मिन् क्रतौ ये व्रीहियवाः दत्ताः तानुभयान् समस्यैव तन्त्रेण प्रजापतये व्रीहियवानिति मन्त्रेण प्रतिगृह्णीयात् । न पृथक् पृथक् । प्रजापतये व्रीहियवानिति समस्यैव मन्त्राम्नानात् । अन्यथा प्रजापतये व्रीहीन् प्रजापतये यवान् इति व्यस्यैवाम्नानं स्यात् । यत्र पुनर्व्रीहियवयोरेक एव दीयते तत्र मन्त्रो व्यत्यासेन प्रयोज्यः । प्रजापतये व्रीहीन् प्रजापतये यवानिति । एकक्रताविति वचनं क्रतुभेदेन दत्तानां व्रीहियवानां समस्य प्रतिग्रहनिवृत्त्यर्थम् ॥२७॥

**तथा तिलमाषान् ॥२८॥**

तथा **तिलमाषानपि क्षेत्रपतये तिलमाषानिति** मन्त्रेण समस्यैव प्रतिगृह्णीयात् ॥२८॥

**प्राजापत्येनानादिष्टदेवताः प्रतिगृह्णीयात् ॥२९॥**

अनादिष्टदेवतादक्षिणाः प्राजापत्येन प्रतिगृह्णीयात् गर्दभादिकम् । प्रजापतये गर्दभम् । प्रजापतये महिषमिति ॥२९॥

**तूष्णीमयज्ञे दक्षिणा इति धानंजय्यः ॥३०॥**

श्रौताग्निसंबन्धं यत्कर्म स यज्ञः । तस्मादन्यत्र स्मार्तादिषु **तूष्णीमेव** दक्षिणाप्रतिग्रह इति **धानंजय्यः** । तथा चापस्तम्बः **त इमे तास्तन्त्राणां दक्षिणानां प्रतिग्रहणाः स्युः** इति ॥३०॥

---

1. PC My[2] trans. एकस्मिन् क्रतौ after $^0$यवाः and add : स्युः । (V[2] उक्ताः for स्युः)
   P. C. before दत्ताः add : एककाले सह, My[2] एककाले स्व$^0$; T. om. तन्त्रेण; My[3] तन्मन्त्रेण for तन्त्रेण
3. My[1]. T. om. अन्यथा ·· स्यात् (L. 4)
4. P. व्यत्ययस्यैव, My पृथगेव for व्यस्यैव
   C My[1-3] व्यासेन for व्यत्यासेन; T मन्त्राभ्यासेन for मन्त्रो व्यत्यासेन
8. T. om. तथा तिलमाषानपि
13. M. दधाति for इति
14. V . om. $^0$अग्नि$^0$
15. My[3] तास्त्रीणां for तास्तन्त्राणां

**भूर्भुवः स्वरिति गौतमः ॥३१॥**

**ओमिति वोमिति वा ॥३२॥**

व्याहृतिभिः प्रणवेन वा स्मार्तादौ प्रतिग्रह इति मतान्तरम् ॥३२॥

इति द्राह्यायणश्रौतसूत्रे पञ्चमे पटले चतुर्थः खण्डः ॥४॥

५ इति छन्दोगसूत्रस्य पञ्चमः पटलोऽधुना ।
व्याख्यातो धन्विना सम्यगनुगृह्णन्तु सूरयः ॥

७ **इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे पञ्चमः पटलः समाप्तः ॥५॥**

## षष्ठः पटलः

### प्रथमः खण्डः

**पूर्वं नाराशंसं भक्षयित्वाहवनीये प्रस्तोता पृष्ठहोमं जुहुयात् । यत्पृष्ठं स्यात्तदादिश्यादः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहृतमिमं यज्ञमभिसंवसाना होत्रास्तृप्यन्तु सुमनस्यमानाः स्वाहेति पूर्वाम् ॥१॥**

मरुत्वतीयशस्त्रानन्तरं प्रथमं **नाराशंसं भक्षयित्वा** तस्याप्यायनं च कृत्वा होतृमैत्रावरुणधिष्ण्यावन्तरेण पूर्वया द्वारा निष्क्रम्य दक्षिणेनाग्नीध्रीयमाहवनीयं गत्वा **अदः पिबतु** इति मन्त्रेण **पृष्ठहोमं जुहुयात्** । **यत्** साम रथन्तरं बृहद्वा पृष्ठस्तुतिसाधनं **स्याददः पिबतु** इति **तदादिश्य** जुहुयात् । तद्यथा रथन्तरं पिबतु सोम्यंम् । बृहत् पिबतु सोम्यमित्यादि ॥१॥

**स्वाहाकारेणोत्तराम् ॥२॥**

केवलं स्वाहेति द्वितीयाहुतिः कार्या ॥२॥

**द्वैधं जुहुयादिति धानंजय्यः ॥३॥**

**अदः पिबत्विति** मन्त्रं **द्वैधं** विभज्य **जुहुयादित्यर्थः** ॥३॥

तं विभागमेवाह—

**अदः पिबतु सोम्यं मध्वायुर्दधद्यज्ञपतावविहृतं स्वाहेति पूर्वाम् ॥४॥**

इति ॥४॥

**इमं यज्ञमित्युत्तरां होतृकपृष्ठेभ्य इति ॥५॥**

**इमं यज्ञमिति** मन्त्रखण्डेन **उत्तरां** जुहुयादिति **होतृकपृष्ठेभ्यो** वामदेव्यादिभ्य

---

7. V[1] L. om. प्रथमं नाराशंसं

9. PC. om. यत्साम · · · तदादिश्य जुहुयात् (L. 10)

14. T तद्द्वैधं for द्वैधं

15. V[1] मन्त्रार्धे, L. मन्त्रार्धे for मन्त्रं द्वैधं, T. द्वेधा for द्वैधं

इति होतृकैर्मैत्रावरुणादिभिः वामदेव्यादीनामनुशंसनाद् होतृकपृष्ठे व्यपदेशः। चत्वारि हि पृष्ठसामानि। होतुः पृष्ठं प्रथमम् ॥५॥

**रेवतीषु वारवन्तीयमिति षष्ठे पृष्ठादेशं गौतमः ॥६॥**

पृष्ठ्यः षडहस्य षष्ठेऽहनि **रेवतीषु वारवन्तीयं पृष्ठं भवतीति** (तां. ब्रा. १३.१०.४) ब्राह्मणम्। तत्र **रेवतीषु वारवन्तीयं** पिबत्विति पृष्ठादेशः कार्यः। ननु च **वारवन्तीयं पिबत्विति** साममात्रमादेष्टव्यम्। किमर्थं रेवतीष्विति ऋचामादेशः क्रियते। उच्यते। नैवायमृगादेशः। किंतु सामादेश एवायम्। निमित्तसप्तमी चेयम्। रेवतीसाम्नि निमित्ते रेवतीसामार्थं वारवन्तीयं पिबत्वित्यर्थः कुत एतत्। वारवन्तीयमेव पृष्ठं तत् किमन्यार्थं पिबति। नैवम्। रेवतीसाम्न एव पृष्ठत्वात्। तथा च रथन्तरादिपृष्ठसाम्नां सृष्टिवर्णने **स रेवतीरसृजत तद्गवां घोषोऽन्वसृज्यते** (तां. ब्रा. ७.८.१३) ति ब्राह्मणं रेवतीनामेव पृष्ठत्वमाह। तथा निदानकारेणापि योनिद्वारेण रेवतीनामेव पृष्ठत्वमिति वर्णितम्। केनचित्तु दोषेण पृष्ठस्थानात् प्रच्याव्य पवमाने स्थापिताः **आपो वै रेवत्यस्ता यत्पृष्ठं कुर्युरपशुर्यजमानः स्यात्। तस्मात् पवमाने कुर्वन्ती** (तां. ब्रा. १३.९.१६) ति पवमाने

---

1. T. अनुशासनात् for अनुशंसनात्
   My² after व्यपदेशः adds : क्रियते;
2. P होतृभिः for हि
4. T. om. पृष्ठं · · · पिबत्विति (L. 5)
5. P. षष्ठादेशः for पृष्ठादेशः
9. V¹ अयज्ञार्थं for अन्यार्थं, T. V² My¹ षष्ठेऽहनि for वारवन्तीयमेव · · · नैवम्; V¹ अपीति for पिबति
10. रथन्तरादिष्ट⁰ for रथन्तरादिपृष्ठ⁰
11. T. My¹ V² om. रेवतीनामेव पृष्ठत्वमाह
12. V² om. एव; My³ P. V² केचित् for केनचित्
    T. अदोषेण for दोषेण;
13. V² पृष्ठयात् for पृष्ठस्थानात्
14. V¹ after इति adds :—ब्राह्मणेन;

स्थित्वा अपि योनिद्वारेण पृष्ठकार्यं कुर्वन्तीति । यथा राजा स्वयं असंनिहित एव स्वकीयैः पुरुषैर्लोकरक्षणं करोति । गृह्णाति च निर्वेशम् । तद्वत्तेन वारवन्तीयद्वारेण रेवत्यः पिबन्त्वित्यादेशस्यार्थ इति ॥६॥

**महाव्रतमिति व्रते ॥७॥**

महाव्रतेऽहनि **महाव्रतं** पिबन्त्वित्यादेशः । गायत्रबृहद्रथन्तरभद्रराजनानां समुदायो महाव्रतम् ॥७॥

**रेवत्यश्च वारवन्तीयं चेति धानंजय्यः ॥८॥**

यद्यपि रेवतीसामैव स्वयोनिमुखेन पृष्ठं तथापि वारवन्तीयमपि साक्षात्तत्र भवतीति द्वयमप्यादेष्टव्यम् ॥८॥

**यावन्ति पृष्ठस्थानानि स्युः सर्वाण्येव प्रसंचक्षीत ॥९॥**

**यावन्ति** पृष्ठस्तुतौ सामानि भवन्ति तानि **सर्वाणि** स्वरूपेणैवाप्तोर्यामादौ निर्दिशेत् । यथाप्तोर्यामे गर्भकारस्तवने बृहद्वैराजे पिबतामिति ॥९॥

**पिबतु दधदिति च यथार्थमूहेत् ॥१०॥**

पिबतां पिबन्तु दधती दधन्तीति ॥१०॥

**बृहता रथन्तरेण वा स्तोष्यमाणः प्राक्स्तोमयोगाद् दश व्याहृतीर्मनसा ध्यायेदैरमिति ॥११॥**

**ऐरं वै बृहदैडं रथन्तरमित्यादि असौ वै लोको बृहद्रथन्तरमित्येवमन्तं** ब्राह्मणपठिता दश व्याहृतयः । तत्र रथन्तरस्य पञ्च व्याहृतयः । बृहतः पञ्च । उभयोरपि व्यतिषक्तास्ताः सर्वा अपि उभयोगानि मनसा ध्यायेत् ॥११॥

**रथन्तर एवर्चं यस्ते गोष्विति ॥१२॥**

**यस्ते गोष्वि** (तां. ब्रा. ७.७.१९) त्यृचं रथन्तरगान एव व्याहृत्यन्न्तरं ब्रूयात् ॥१२॥

---

1. My[1] T. V[2] स्तोत्रीयामुखेन for योनिद्वारेण
2. V[1] निर्देशं for निर्वेशं
   P. ⁰वन्तीयोद्धारेण fore वन्तीयद्वारेण
5. V[2] after आदेशः ins. च
11. P. C. My[2] L. after एव ins. अप्तोर्यामादौ
17. V[1]. om. आदि; V[1] My[1-2] T. after बृहद् ins. अयं
19. V[2] My[1] T. after गाने add : प्रत्येकं

**युक्त्वा स्तोममेतद् ब्रूयादिति शाण्डिल्य ऋचं पूर्वं व्याहृतिभ्य इति ॥१३॥**

स्तोमयोगानन्तरं **यस्ते गोष्वि** (तां. ब्रा. ७.७.१९) ति **एतद्ब्रूयात्**। तत्रापि व्याहृतिभ्यः **पूर्वमेव ऋचं ब्रूयात्**। तत उत्तरं व्याहृतीर्मनसैवेति **शाण्डिल्यः** ॥१३॥

**इतरद्धानंजय्यः ॥१४॥**

**इतरत्** पूर्वोक्तं धानंजय्यस्य मतम् ॥१४॥

**रथन्तरे प्रस्तूयमाने सर्वत्र संमीलेत् ॥१५॥**

सर्वास्वपि स्तोत्रीयासु रथन्तरप्रस्तावे संमीलनमुद्गात्रा कार्यम्। **स्वर्दृशं प्रतिवीक्षेतेति** ब्राह्मणात् प्रथमायामेवर्चि संमीलनं स्यादित्याशङ्क्य तन्निवृत्यर्थं **सर्वत्रेति** वचनम् ॥१५॥

**एकैकं मनसाक्षरᳪं स्तोभैर्वाचा युगपत् संयुज्याद् भकारादिभिरकारान्तैरक्रान्तैः प्रथमस्वरैरुत्तमो द्वितीयः स्वरः प्राक् प्रतिहाराच्चतुरक्षरᳪं शिष्ट्वा ॥१६॥**

प्रस्तावानन्तरमार्चिक**मेकैकमक्षरं मनसा** स्मरन् तत्तत् स्थाने **वाचोच्चार्यमाणैः स्तोभैर्युगपदेव संयुज्यात्**। कीदृशैः स्तोभैरित्याह **भकारादिभिरकारान्तैरिति**। भमेत्येवं रूपः **अक्रान्तैः** असंक्रान्तैः। अविलम्बितैरित्यर्थः। कुतः पुनर्विलम्बशङ्का। रथन्तरमधिकृत्याक्षरेणाक्षरेण प्रतिष्ठापयतोद्गेयम् इति सामान्यवचनात् प्रत्यक्षरं प्रतिष्ठाप्य गाने विलम्बः स्यात्। तन्निवृत्यर्थम**क्रान्तैरि**ति वचनम्। तेषा**मुत्तमः** स्तोभो **द्वितीयः स्वरः**। अन्ये प्रथमस्वराः। **प्राक् प्रति**हारभक्तेश्**चतुरक्षरं शिष्ट्वा** ततः पूर्वमेव स्तोभप्रयोगः ॥१६॥

---

1. T. तृचपूर्वं for ऋचं पूर्वं
5. $V^{1-2}$ इतरं for इतरत्; P. C. L. My[1] $V^2$ धानंजय्यम् for धानंजय्यः
9. $V^2$ संमिलनं for संमीलनं
11. P. My[3] संमृज्यात् for संयुज्यात्
12. $V^2$ आक्रान्तैः T. संक्रान्तैः for अक्रान्तैः
    L. उत्तरः for उत्तमः
15. P My[3] संमृज्यात् for संयुज्यात्

**तत्सर्वत्र प्रतिवीक्षेत ॥१७॥**

तत् चतुरक्षरं गीयमानं **प्रतिवीक्षेत**। तदानीं संमीलनं न कार्यमित्यर्थः। स्वदृशं प्रतिवीक्षेतेति उपलक्षणमिति दर्शयितुं **सर्वत्रे**ति वचनम् ॥१७॥

**स्तुत्वा वरं चोदयेत् ॥१८॥**

रथन्तरेण **स्तुत्वा** यजमानं वरं चोदयेत् वरो मे देय इति ॥१८॥

**तस्यापृष्ठस्य सतो निवर्तेरन् धर्माः सह स्तोभैरिति गौतमः ॥१९॥**

**तस्य** रथन्तरस्य पृष्ठादन्यत्र पवमानादौ स्थितस्य **स्तोभैः सह धर्माः** पृष्ठहोमादयो वरचोदनान्ता न कार्याः। तथा ब्राह्मणोक्ताश्च धर्मा वागित्यादेयं क्षिप्रंगेयमित्येवमादयो न स्युः ॥१९॥

**स्तोभा एवान्वीयुरिति धानंजय्यः ॥२०॥**

पृष्ठादन्यत्र **स्तोभा एव** प्रवर्तेरन्निति **धानंजय्यः** ॥२०॥

**अग्निष्टोमसामसंधिषाम्णोरेवापृष्ठं स्तोभेदिति शाण्डिल्यः ॥२१॥**

अपृष्ठभूतं रथन्तरमग्निष्टोमसंधिस्तोत्रयोरेव **स्तोभेन्न** पवमानगतमिति **शाण्डिल्यः** ॥२१॥

**सर्वत्रास्वस्तोत्रीयं न स्तोभेदिति स्थविरो गौतमः ॥२२॥**

**सर्वत्र** पृष्ठस्थाने ततोऽन्यत्रापि स्वस्तोत्रीयविधुरं रथन्तरं **न स्तोभेदिति स्थविरो गौतम** इति। तन्मते **कया नश्चित्र आभुवदि** (सा. ६८२-४) त्येतासु पृष्ठस्थानेऽपि रथन्तरस्तोभनिवृत्तिरिति ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले प्रथमः खण्डः ॥१॥**

---

5. T. My[1] om. रथन्तरेण ... चोदयेत्
6. L. My[1] T. पृष्ठस्य for अपृष्ठस्य
9. V[2] T. इत्यादयः for इत्यादेयं;
10. V[2] om. एवम्
12. V[1] C. L. after प्रवर्तेरन् ins. अन्ये निवर्तेरन् क्रेता My[1] इतरे निवर्तेरन
15. T. °गानम् for °गतम्
18. V[2] अस्वस्त्रीयासु रथन्तरान्न for स्वस्तोस्त्रीय ... रथन्तरं न; V[1] C. °व्यतिरिक्तं for विधुरं रथन्तरं; My[1] स्वस्तोत्रीयासु for स्वस्तोत्रीयविधुरं
20. V[2] My[1] om. अपि

## द्वितीयः खण्डः

**वामदेव्येन स्तोष्यमाणः प्राक्स्तोमयोगाद् गावो अश्वाजावयो व्रीहयो यवा इति मनसा ध्यायेत् ॥१॥**

**वामदेव्येन स्तोष्यमाणो गावो अश्वा** इति मन्त्रे **मनसा ध्यायेत्** । अत्रा-निरुक्तं गेयमि (तां. ब्रा. ७.९.१७) ति ब्राह्मणम् । तत् **कया नश्चित्र आभुवद्** (सा. ६८२-४) इति स्तोत्रीयस्यानिरुक्तदेवतात्वप्रशंसार्थम् । तद्व्यतिरिक्तानि त्रीण्यपि पृष्ठस्तोत्राणि निरुक्तानि । तेषु प्रत्यक्षम् इन्द्रपदश्रवणात् । तलवकारिणस्तु गायत्रसामवत् प्रणवेनैवानिरुक्तं वामदेव्यं गेयमित्याहुः ॥१॥

**ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीत ॥२॥**

**ब्राह्मणाच्छंसी** यत्सामानुशंसति तद्ब्रह्मसाम । तृतीयं पृष्ठं नौधसश्यैतादि । तस्मिन् गीयमाने **यजमानस्याभिलषितं सिध्यत्वित्युपासीतेति** ॥२॥

**तथेतर उद्गायन् ॥३॥**

**इतरो**ऽप्युद्गाता **तथैवोपासीत** ॥३॥

**आर्भवेण स्तुत्वा पुरोडाशादेकैकं पिण्डं त्रीꣳस्त्रीन्वा परया द्वारा हविर्धानं प्रपद्याधस्तात् स्वस्य चमसस्य कुर्युर्यदा सन्नः स्याद्-अत्र पितरो मादयध्वं यथाभागमावृषायध्वम् (मं.ब्रा. २.३.६) इति ॥४॥**

तृतीयसवने **आर्भवेण** पवमानेन **स्तुत्वा** नाराशंससादनानन्तरमुत्थाय **पुरोडाशादेकैकं** शकलं **त्रीꣳस्त्रीन्वा** गृहीत्वा **परमा द्वारा हविर्धानं** प्रविश्य **स्वस्य चमसस्याधस्तान्निवपेयुर्यदा सन्नः स्यादिति** । यदा स्वीयश्चमसो भक्षणानन्तरं सन्नः सादितः स्यात्तदेत्यर्थः ॥४॥

---

6. My$^{1}$ V$^{1}$ L T. °देवतस्य for °देवतात्व°

7. My$^{20}$ स्तोत्रीयाणि for °स्तोत्राणि

P My$^{2-3}$ before तलवकारिण: add : सामशाखिनस्तत्सूत्रकर्ता:

12. V$^{1}$ यजमान: स्वा°; V$^{2}$ यजमान: सर्वा° for यजमानस्या°

19. P C My$^{1-3}$ सादानात् अनन्तरम् for °सादनानन्तरम

21. T. स्वीयचमस° for स्वीयश्चमसो;

22. V$^{2}$ आसन्न: for सन्न:

**ताम्माह्रियमाणं प्रतिमन्त्रयेरन्-अमीमदन्त पितरो यथाभागमा-वृषायिषत (मं० ब्रा० २-३-७) इति ॥५॥**

तं नाराशंसं स्वीयं चमसं भक्षणायाह्रियमाणमित्यर्थः ॥५॥

**सौम्यमाहृतमुद्गातावेक्षेतायुर्मे प्राण (तां० ब्रा० १-५-१७) इति ॥६॥**

सौम्यं चरुमध्वर्युभिराहृतम् ॥६॥

**पुनरस्मासु दध्मसीत्यन्तः ॥७॥**

**आयुर्मे प्राण** (तां १.५.१७) इत्यस्य मन्त्रस्य **पुनरस्मासु दध्मसीत्यवसानम्** । ननु किमर्थं मन्त्रान्तोपादानम् । उत्तरसूत्रे तच्छब्देन परामर्शार्थम् । किंच । अनुक्ते मन्त्रान्ते **येनाह्याजिमि** (तां. ब्रा. १.५.१९) त्युत्तरमन्त्रोपादानात्ततः प्राक् सर्वमेको मन्त्रः स्यात् । तन्निवृत्यर्थं वचनम् । ननु एवं **यन्मे यमं वैवस्वतमि** (तां. ब्रा. १.५.१८) त्युत्तरमन्त्राम्नानं किमर्थम् । उच्यते । **यन्मे मनो यमं गतमि** (तां. ब्रा. १.५.१७) ति पूर्वेण मन्त्रेण सह तुल्यार्थत्वाद् विकल्पते । आम्नानबलादित्यभिप्रायः ॥७॥

**तं दशमेऽहन्यभ्यस्येत् ॥८॥**

**पुनरस्मासु दध्मसीति** मन्त्रं **तं दशमेऽहन्यभ्यस्येत्** । प्रत्यक्षानुष्टुप्निवृत्यर्थम् । दशमेऽहनि **परोक्षमनुष्टुभमुपयन्ति । यत्प्रत्यक्षमुपेयुः प्रजापतिमृच्छेयुरि** (तां. ब्रा. ४.८.९) ति ब्राह्मणात् प्रत्यक्षानुष्टुभो वर्जनीयाः इति ॥८॥

**यन्मे मादे स्थाने यन्मे यममित्येके ॥९॥**

दशमेऽहनीत्यनुवर्तते । दशमेऽहनि **यन्मे मनो यमं गतमिति** पूर्वमन्त्रस्य **स्थाने यन्मे यमं वैवस्वतम्** इत्येव कुर्यात् । न विकल्पः कार्य **इत्येके** । कुतः । उत्तरो हि मन्त्रः स्वरूपतः एवानुष्टुप् न भवति । पञ्चपदत्वात् । पूर्वस्तु स्वरूपतोऽनुष्टुप् । स किमर्थमभ्यासेनान्यथा प्रकृत्य प्रयुज्यते इति ॥९॥

---

3. T. भक्षयित्वा for भक्षणाय°

6. V[2] My[1] om. अध्वर्युभिः

13. V[1] C. आम्नाय° for आम्नान°

16. P. My[2-3] C. T. °अनुष्टुप्त्व° for 'अनुष्टुप्'

**पूर्वेण त्वेवावेक्षेत ॥१०॥**

तु-शब्दः पूर्वमतनिरासार्थः । एवकारो भिन्नक्रमः । दशमेऽहनि पूर्वयानुष्टुभाप्यवेक्षणं विकल्पेन कार्यमेवेत्यर्थः । कुतः तस्मिन्नहनि दधिघर्मभक्षणादावभ्यासेनैव प्रत्यक्षानुष्टुप्त्वं परिहृत्य प्रयोगदर्शनात् ॥१०॥

**तस्मिन्नङ्गुली अवधायाङ्गुष्ठानामिके इत्येकेऽक्षिणी विमृजीत येनाह्याजिमि (तां० ब्रा० १-५-१९) ति ॥११॥**

तस्मिन् सौम्यचरौ द्वे अङ्गुली चाङ्गुष्ठानामिके वावधाय ताभ्यामक्षिणी विमृजीत ॥११॥

**एवमितरौ कुर्याताम् । प्रतिहर्ता पश्चात् ॥१२॥**

अवेक्षणमक्षिविमार्जनं च कुर्याताम् ॥१२॥

**तमुत्तरेण प्रतिहर्तारं हरेयुः ॥१३॥**

तं सौम्यं चरुं प्रतिहर्तारमुत्तरेण हरेयुः ॥१३॥

**द्रव्येप्सुर्भुञ्जीतैनं गच्छत्यन्यतरां रोगार्तो वाहतेन वाससा प्रच्छाद्य दक्षिणार्द्धं सदसो गत्वा ॥१४॥**

यद्यर्थलिप्सुरुद्गाता स्यात्तदैव चरुं भुञ्जीत । अन्यतरां यां कांचित्समृद्धिं प्राप्नोति । रोगार्तो वा भुञ्जीत । अरोगो वा स्यात् म्रियते वा । न पुनर्व्याधिनाभिभूयते इत्यर्थः । उभयोरपि दक्षिणार्द्धं गत्वा सदसोऽहतेन वाससा प्रच्छाद्य भोजनं यथान्यो न पश्येत् ॥१४॥

**यज्ञायज्ञीयस्य हिंकारं प्रति पत्नीमुद्गातेक्षेत ॥१५॥**

अथ यज्ञायज्ञीयस्तुतिकाले सामावयवभूतं हिंकारं प्रति पत्नीमुद्गातेक्षेत । न पुनः पर्यायादिभूतं हिंकारं प्रति । कुत एतत् । हिंकारं प्रति संख्यापयन्त्या तृती-

---

2. $V^2$ $My^1$ पूर्वां for पूर्वया'

7. T. $My^1$ सौम्ये for सौम्य' ; T. C. $My^1$ चाव for वाव°

15. $V^1$ om. अन्यतरां यां कांचित् समृद्धिं प्राप्नोति and ins. अन्यतरामसौ गतिं गच्छति before अरोगो' (L. 16)

21. P C. पर्याय' for पर्यायादि'

**यायाः संख्यापयन्ति** (तां. ब्रा. ८.४.१३-४) ब्राह्मणे तिसृषु स्तोत्रीयासु तत्र हुंकारे वीक्षणविधानात् । यद्येवं तेनैव सिद्धे किमर्थं सूत्रम् । उच्यते । **उद्गात्रा संख्यापयन्ती** (तां. ब्रा. ८.७.१२) ति ब्राह्मणमध्वर्युणामवेक्षणं प्रति प्रयोजकव्यापारं विधत्त इति गम्यते । तन्माभूदिति । सूत्रं न प्रयोजकव्यापारविधौ तात्पर्यम् । किंतु उद्गातुरवेक्षणविधानम् इति भावः ॥१५॥

**निधनं प्रति पत्नी दक्षिणामूरुमभिषिञ्चेत् ॥१६॥**

स्पष्टम् ॥१६॥

**तृतीयाया ꣳ स्तोत्रीयायां प्रस्तुतायां सर्वं तदुदकं निनयेत् ॥१७॥**

प्रथमे पर्याये **यज्ञायज्ञा वो अग्नय** (सा. ७०३) इत्यस्या ऋचस्तृतीयाभ्यास इत्यर्थः ॥१७॥

**उत्तमायां स्तोत्रीयायां भुवद्वाजायि भुवद्वाजेष्वित्यभ्यस्येन्नामिति च निधनमनुष्टुभमुत्तमामक्षरेणान्त इति ह्याहेति ॥१८॥**

एकविंशतिकृत्वो यज्ञायज्ञीयमभ्यस्यते । तत्रोत्तमेऽभ्यासे **भुवद्वाज** इति चतुरक्षरमभ्यस्येदनुष्टुप्त्वसिध्यर्थम् । तथा **उत त्राता तनूनामि**त्यत्र ऋगन्त्याक्षरं **नामि**त्येतन्निधनं कुर्यात् । न पुनर्यथाधीतं वाङ्निधनम् । उभयत्रापि प्रमाणमाह—**अनुष्टुभमुत्तमां संपादयती** (तां. ब्रा. ८.७.२) ति । **अक्षरेणान्ततः प्रतिष्ठाप्यमि**ति ब्राह्मणमाहेति । **इतो वै प्रातरूर्ध्वानि च्छन्दाꣳसी** (तां. ब्रा. ८.७.१) त्यारभ्या-

---

2. V[2] उद्गाता for उद्गात्रा;
3. L. यतीति for यन्तीति
4. P. C. My[2-3] प्रयोजकविधौ व्यापारविधौ for प्रयोजकव्यापारविधौ
5. P. C. My[1-2] अवेक्षणम् for अवेक्षणविधानम्
9. P. after ऋचः ins. उद्गायति
11. P. V[1] My[2-3] वाजाइ for वाजायि
14. P. अनुष्टुभ [ : ] V[1] अनुष्टुभ⁰ for अनुष्टुप्त्व⁰
    P. C. ऋगन्तम् for ऋगन्त्य⁰
17. V[2] आदिशति for आहेति

**तुष्टुभमुत्तमां संपादयती** (तां. ब्रा. ८.७.२) ति ब्राह्मणम् । तस्यायमर्थः । **गायत्रं प्रातः सवनं त्रैष्टुभं माध्यंदिनं सवनं जागतं तृतीयसवनमि** (नि. सु. ३.५.४ तां. ब्रा. ७.४.६) ति। एवं प्रातःसवनमारभ्य रूढानां छन्दसां यज्ञायज्ञीयस्तोत्रे प्रथमायामृचि प्रत्यवरोहादुत्तमायां चानुष्टुप्त्वसंपादनादस्मिन् लोके यजमानः प्रतिष्ठितो भवति । इतरथा छन्दसामारोहात् स्वर्ग एव स्थितः स्यात् । नेमं लोकमागच्छेदिति । तथा **यस्य वै यज्ञा वागन्ता भवन्तीत्युपक्रम्याक्षरेणान्ततः प्रतिष्ठाप्यम्** (तां. ब्रा. ८.६.१३) इत्यन्तं ब्राह्मणम् । तस्यायमर्थः । यज्ञायज्ञीयस्य वाङ्निधनत्वात्तदन्तः क्रतुर्वागन्तो भवेत् । तदानीमनृतवदनाद् यज्ञ नश्येत् । किं पुनरनृतम् । गकाररहितस्य वाशब्दस्य प्रयोगः । वागिति प्रयोक्तव्ये गकाररहितं वाशब्दं प्रयुञ्जानः शब्दानृतं करोति । तथा च **किमनृतं किमक्षरमिति** प्रस्तुत्य निदानकारः **गकारलोपं ब्राह्मणं क्षिपती** (नि. सू. २.१०) ति । तत्परिहारार्थं वागिति कृत्स्नमेवाक्षरमन्ततः कार्यमित्येके । सूत्रकारस्तु आर्चिकमेवान्त्यमक्षरमक्षरेणेत्युक्तं मन्यते । **अष्टाक्षरेण प्रथमाया ऋचः प्रस्तौती** (तां. ब्रा. ७.७.१) त्यादावक्षरशब्दस्यार्चिकविषयत्वात् ॥१८॥

**अनभ्यासं त्वाचार्याः ॥१९॥**

तु शब्दः पक्षनिवृत्यर्थः । अभ्यासमकृत्वा यथाधीतमेव गायेत् । कुतः । **अनुष्टुभमि** (तां. ब्रा. ८.७.२) त्येतद्ब्राह्मणं **यज्ञायज्ञा वो अग्नये** (सा. ७०३) इत्येतामृचं स्वरूपतो बृहतीमनुष्टुभं कृत्वा प्रशंसति । तथा हि **यज्ञा वो अग्नये गिरा च दक्षस इति द्वादशाक्षरमि** (तां. ब्रा. ८.७.१) त्यादिना **यज्ञागिराप्र इत्यक्षरपञ्चकं केवलमभ्यस्य** तेनाक्षरान्तराण्यधिकानीति । अनुष्टुबेवेयमिति

---

6. $V^{1-2}$ यज्ञस्य for यस्य

8. $My^1$ वचनात् for वदनात्

9. L. $^0$रहित$^0$, P. $^0$रहितं for $^0$रहितस्य

13. P. T. $My^{1-3}$ $V^2$ अक्षेपणेति for अक्षरेणेति

16. $My^1$ प्रत्यक्ष$^0$ for पक्ष$^0$

17. T. $My^{1-3}$ after अनुष्टुभम् add : उत्तमाम्

18. $V^1C$. om. तथाहि

20. $V^1$ अनुष्टुप्स्वेवेयम् for अनुष्टुबेवेयम्

प्रशंसा क्रियते। यद्यप्येकमक्षरमूनं तथापि न **वा एकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामि** (ऐ. ब्रा. १·६·२) ति श्रुतेरनुष्टुबेवेयमिति। अथवा वागिति निधनाक्षरेण सह द्वात्रिंशदक्षरा। तथा च निदानकारः **कथं द्वादशस्तोत्रेष्वानुष्टुभो भागः स्यादि**त्युपक्रम्याह—**यथैतद्ब्राह्मणं द्वादशाक्षरमेकादशाक्षरमष्टाक्षरं वा द्वात्रिंशी** (नि. सू. ३·३) ति। **उत्तमामि**त्यस्यायमर्थः। द्वादशस्तोत्रेषूत्तमस्तोत्रगतां **यज्ञायज्ञा वो अग्नये** (सा. ७०३) इत्येनामृचमिति ॥१९॥

## निधनं च यथाम्नायं शाण्डिल्यः ॥२०॥

**निधनम**पि यथाधीतमेव **शाण्डिल्यः अक्षरेणान्ततः प्रतिष्ठास्यामि** (तां. ब्रा. ८·६·१३) त्यत्राक्षरशब्दस्वरमाह अष्टाक्षरं द्वादशाक्षरमित्यादौ स्वरैरेवाक्षरगणनात् तेनायमर्थः। यद्यपि वागिति प्रयोगकाले ककारलोपादनृतापत्तिः तथाप्याकारेण अक्षरेण समापनान्नासौ दोष इति। यथा इडानिधने साम्नि अर्धेडाप्रयोगे सर्वथानृतपरिहारो नास्ति। व्यञ्जनेन समापनात्। नैव मन्द्रस्वरेण समापनादिति। यथाधीतमेव निधनं ब्राह्मणमभिनन्दतीति। तथा च निदानकारः **स्वरतन्त्राण्यक्षराणि भवन्ति। स्वरान्ततामेवाक्षरस्येत्येतद् ब्राह्मणमेवावोचद्** (नि. सू. २·१०) इति ॥२०॥

## तद्यदानुशंसन् होतापोहिष्ठीयां ब्रूयात्तदेनमन्वालभेरन्नपावृण्वाना ॥२१॥

---

3. T. My[1] द्वात्रिंशस्तोत्रे for द्वादशस्तोत्रेषु; P. My[2-3] अनुष्टुभः for आनुष्टुभः

5. V[1] द्वात्रिंशदिति for द्वात्रिंशीति

9. V[1] C. om. अत्र; T. [0]शब्दं for [0]शब्द[0]

10. P. My[1-3] T. गकार[0] for ककार[0]

11. V[2] My[2] after अक्षरेण add :—स्वरेण

यज्ञायज्ञीयस्तोत्रमनुशंसन् होता यदापोहिष्ठीयाः शंसति **तदा तमन्वाल-भेरन्**। सशिरःप्रावरणमपावृत्योद्गातारस्ततः पूर्वं स्तोत्रोपाकरणप्रभृति कर्णवर्जं शिरो वेष्टयितव्यम् । **आकर्णाभ्यां प्रावृत्यम्** (तां. ब्रा. ८·७·७) इति वचनात् ॥२१॥

**अन्यस्थानगतस्य सतो निवर्तेरन् धर्माः ॥२२॥**

अग्निष्टोमस्तोत्रादन्यत्र पवमानादौ गतस्य यज्ञायज्ञीयस्य शिरःप्रावरणादयो **धर्मा निवर्तेरन्**। स्तोत्रप्रयुक्ता धर्माः । न सामप्रयुक्ता इत्यर्थः ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले द्वितीयः खण्डः ॥२॥**

---

2. V[2] om. पूर्वं; T. स्तोत्रापा° for स्तोत्रोपा°

## तृतीयः खण्डः

**यदन्यदग्निष्टोमसाम स्यात्तस्य स्युः ॥१॥**

यत्र **यज्ञायज्ञीयादन्यद्** बृहदाद्यग्निष्टोम **स्यात्तस्यापि** पत्न्यवेक्षणशिरः प्रावरणादिधर्माः **स्युः** ॥१॥

**अहिंकारेऽपि प्रतिहारवेलायां पत्नीमुद्गातावेक्षेत ॥२॥**

तत्र हिंकाराभावेऽपि तत्तत्साम्नः **प्रतिहारवेलायां** पत्न्यवेक्षणम् । सत्यपि हिंकारे तमनादृत्य प्रतिहारवेलायामेवेक्षणम् । **प्रतिहारवेलायामिति** वचनात् ॥२॥

**अनुब्राह्मणमार्चिकान् सन्नामान्त्सर्वत्र कुर्युरप्यन्यस्मिन्त्साम्नि ॥३॥**

**ऐरं कृत्वोद्गेयमपर्प्री वयमिति वक्तव्यम्; सुशंसिषमिति वक्तव्यम्** (तां. ब्रा. ८.६.१०-१२) इत्येवमादीनार्चिकान्त्संनामान् यथाब्राह्मणं कुर्युः । **सर्वत्रे**ति वचनं रथन्तरादावप्यस्**थुष इति वक्तव्यम् सुस्थुष इतिवे** (तां. ब्रा. ७.७.१६) त्यादि ब्राह्मणोक्तविकारपरिग्रहार्थम् । **अप्यन्यस्मिन्त्साम्नीति** पृष्ठस्थाने अग्निष्टोमस्थाने च यद्यपि रथन्तरादेरन्यत् साम स्यात्तदापि विकारसिद्ध्यर्थम् । तेनाग्निष्टोमस्तोत्रे **यज्ञायज्ञा वो अग्नये** (सा. ७०३) इत्यत्र सामान्तरगानेऽपि आर्चिकसंनामसिद्धिः । स्थानप्रयुक्तः संनामः । न सामप्रयुक्त इत्युक्तं भवति ॥३॥

**तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु भक्षयित्वा स्तोमं विमुञ्चेयुर्ऋतस्य त्वेति ॥४॥**

**तृतीयसवने सर्वेषु स्तोत्रेषु समाप्तेषु** सोमभक्षणानन्तरं स्तोमविमोचनं कुर्युः **ऋतस्य त्वे** (तां. ब्रा. १.६.५) ति । मन्त्रजप एव स्तोमविमोकः । तत्र **विमुञ्चामीति** पदसमन्वयात् ॥४॥

---

3. V[1] My[1] om. यत्र

7. T. My[2] अवेक्षणम् for एवेक्षणम्

12. V[2] तस्थुषः, My[1] उस्थुषः for अस्थुषः, V[2] इत्येवमादि for इति वेत्यादि

14. T. V[2] My[1] रथन्तरात् for रथन्तरादेः

20. P. C. My[2.3] ⁰मोचकः for ⁰मोकः

**दक्षिणैः पाणिभिः कुशाः संलोभयेयुः ॥५॥**

स्तोमविमोकानन्तरं संलोभनं कुशानां समाहरणमेकीकरणम् । अनेनैतत् ज्ञायते । प्रथमस्तोत्रे यत्र स्थाने या कुशा विहिता सैव तत्रावधार्य स्तोत्रान्तरेऽपि प्रयोज्येति ॥५॥

**प्रतियोजनमेके यजमानवचनादनन्तरम् ॥६॥**

प्रतिस्तोमयोगं प्रतिस्तोत्रमित्यर्थः प्रतिस्तोत्रं **स्तुतस्य स्तुतमसी** (तां. ब्रा. १·६·३) ति **यजमानवाचनादनन्तरं** स्तोमविमोचनं कुशासंलोभनं च कुर्यादित्येके इति ॥६॥

**अत्र वा ॥७॥**

**यजमानवाचनादनन्तर**मित्यनुवर्तते । **अत्र वा** सर्वस्तोत्रसमाप्तौ वा यजमानवाचनादनन्तरं सोमभक्षणात् पूर्वमेव द्वयमपि कुर्यात् ॥७॥

**यजमानं वाचयेत्तन्तवे मा ज्योतिषेति ॥८॥**

तृतीयसवने संलोभनानन्तरं **तन्तवे मा ज्योतिषेति** यजमानं **वाचयेत्** ॥८॥

**असावनु मा तनुहि ज्योतिषेति यथाज्येष्ठं पुत्रान् ॥९॥**

**असावनु मा तनुहि ज्योतिषेति यथाज्येष्ठं पुत्रा**नादिश्य यजमानं वाचयेद्यथा नारायणशर्मन्ननु मा तनुहीति ॥९॥

**जनिष्यमाणा इत्यजातेषु ॥१०॥**

**अजातेषु** जनिष्यमाणेषु पुत्रेषु **जनिष्यमाणा** अनु मा तनुत ज्योतिषेति बहुवचनं कृत्वा वाचयेत् ॥१०॥

**जातेष्वजातेषु च पुत्रा इत्येव सत्रेषु ॥११॥**

**सत्र**विषये **जातेषु** जनिष्यमाणेषु **च पुत्रा** अनु मा तनुत ज्योतिषेति तन्त्रेण सकृद्वाचयेन्न यथाज्येष्ठं पृथक् पृथगिति ॥११॥

---

2. T. V[1] My[1] सवेषु स्तोत्रेषु समाप्त इत्यनुवर्तते for स्तोमविमोकानन्तरं

6. V[1] om. °मित्यर्थः ··· । अत्रवा (L. 10)

10. T. om. अत्र वा; T. °स्तोम° for °स्तोत्र°

14. V[2] तनुत for तनुहि

**वषट्कृते हारियोजनस्य यथैतमपरया द्वारा निष्क्रामन्तो जपेयुः सोमेहानु मेहिही (तां० ब्रा० १-६-६) ति ॥१२॥**

**सुभूरसी (तां० ब्रा० १-६-७) त्यादित्यमुपतिष्ठेरन् ॥१३॥**

स्पष्टे ॥१२-१३॥

**अस्तमितश्चेद्गार्हपत्यं चन्द्रमसं नक्षत्राणि वा ॥१४॥**

गार्हपत्यः शालामुखीयः ॥१४॥

**आग्नीध्रीये द्वे आहुती जुहुयुरपां पुष्पमसी (तां० ब्रा० १-६-८) ति पूर्वां स्वाहाकारेणोत्तराम् ॥१५॥**

स्पष्टम् ॥१५॥

**हारियोजन्यो नाम धाना द्रोणकलशे भवन्ति । तासामुद्गाता प्रथम आददानः समुपहूता भक्षयिष्याम इति ब्रूयात् ॥१६॥**

तासां धनानामेकदेशमाददानः उद्गातेत्यर्थः ॥१६॥

**तथेतरौ ॥१७॥**

स्पष्टम् ॥१७॥

**उन्नेतर्युपहवमिष्ट्वा हारियोजनस्य त इति तिरोह्न्यस्येत्यति रात्रे सर्वत्र वा यथाधीतं द्विरुपघ्राय पश्चादाहवनीयस्यान्तः परिधि निवपेयुः ॥१८॥**

उन्नेतर्युह्वयस्वेत्येवमनुज्ञाप्य **हारियोजनस्य ते** (तां. ब्रा. १.६.९) इति धाना **द्विरुपघ्राय पश्चा**दौत्तरवेदिकस्याग्नेरन्तः **परिधि** धाना **निवपेयुः**। अथ यद्यति-रात्रः स्यात्तदा **हारियोजनस्य त इति** मन्त्रे **स्तुत स्तोमस्य शस्तोक्थस्येत्य**स्यानन्तरं

1. $V^{1-2}$ C $My^1$ यथेतम् for यथैतम्

10. $V^2$ हार्योजनः for हारियोजन्यः

18. $My^1$ befor उन्नेतरि add : अनुप्रसृतेषु भस्मान्ते; T. अनुप्रहृतेषु भस्मान्त्येप उपस्पृश्याष्टौ शकलान्याहवनीयेऽनुप्रहरेयुः (देवकृतस्यैतत्प्रभृतिभिरिकारान्तैरिति)

20. $V^1$C. शस्तोत्थस्य for शस्तोक्थस्य

**तिरोह्णयस्येति** पदं प्रक्षेप्तव्यम् । संधिचमसभक्षणमन्त्रे तथैवाम्नानात् । तत उत्तरेषु सर्वेष्वपि भक्षेषु तत् पदं प्रयोक्तव्यम् । तेषां सर्वेषां तिरो-अहन्यत्वात् । पूर्वेद्युरभिषुतः सोमोऽपरेद्युर्हूयमानो रात्र्या तिरोहितेऽह्नि हूयमानत्वात्तिरो अहन्य इत्युच्यते । अथवा **सर्वत्र यथाधीतमेव** हारियोजनभक्षणमन्त्रः । यद्यप्यतिरात्रे हारियोजनस्तिरो अहन्यस्तथापि तद्भक्षणमन्त्रे **तिरो** अहन्यस्येत्यनाम्नानात् तत्प्रयोगः ॥१८॥

**अनुप्रहृतेषु भस्मान्ते ॥१९॥**

यदि पूर्वमेवाग्नौ परिधयोऽनुप्रहृतास्तेषामभावे **भस्मान्ते** धाना निवपेयुः ॥१९॥

**अप उपस्पृश्याष्टावष्टौ शकलान्याहवनीयेऽनुप्रहरेयुर्देवकृतस्ये (तां० ब्रा० १-६-१०) त्येतत्प्रभृतिभिरिकारान्तैः ॥२०॥**

**इकारान्तैरिति अवयजनमसीत्येवमन्तैः** । नात्र स्वाहाकारः । पाठाभावात् । केचित्तु बौधायनसूत्रे पाठात् स्वाहाकारं कुर्वन्तीति ॥२०॥

**सकृदेव सर्वाण्युत्तमेनेति शौचिवृक्षिः ॥२१॥**

अष्टावपि शकलानि **सकृदेव** मन्त्राष्टकमुक्त्वा उत्तममन्त्रान्तेऽनुप्रहरेयुरिति **शौचिवृक्षिराचार्यः** । केचित्तु व्याचक्षते । उत्तमेनैव मन्त्रेण न पूर्वैरिति । तदयुक्तम् । इतरमन्त्राम्नानवैयर्थ्यात् ॥२१॥

---

2. $V^2$ $My^2$ तिरो अहन्यत्वात् for तिरोअहन्यत्वात्
3. $V^2$ T. तिरोअह्णयः for तिरोअहन्यः
5. $V^2$ $My^2$ तिरोअहन्यः for तिरोअहन्यः
   $V^2$ T. $My^2$ तिरोअह्णस्य for तिरोअहन्यस्य
8. $My^2$ $My^1$ T. J. अन्तः (T. J. om. अन्तः) परिधिनिवपनं पूर्वमुक्तम् । अथ यदि परिधिषु प्रहृतेषु हारियोजनहोमः Herafter $My^2$ goes further :—तदानीं भस्मान्ते निवपनम् । अत्र तैत्तिरीयकं यत् प्रहृत्य परिधीन् जुहुयादिति । हारि [ · · · ] हृद्रयमुक्तम् for यदि पूर्वम् · · · निवपेयुः (L. 9)
13. P. C. $My^{2\text{-}3}$ कारान्तं for $^0$कारं
17. P. C. $My^3$ L. $^0$आम्नाय$^0$ for $^0$आम्नान$^0$

**अप्सुषोमा नाम चमसाश्चात्वालदेशेऽद्भिः पूर्णाः ॥२२॥**

अप्सुषोमा नाम चमसाश्चात्वालदेशे एकधनावशिष्टाभिरद्भिः पूर्णा अध्वर्युणा स्थापिता भवन्ति ॥२२॥

**तेषु हरितानि तृणानि प्रास्तानि भवन्ति ॥२३॥**

हरितानि तृणानि दूर्वादीनि । अध्वर्युणेति शेषः ॥२३॥

ततः किमित्याह—

**ते स्वं स्वं चमसं पर्युपविश्याप्सु धौतस्ये (तां० ब्रा० १-६-११) त्यवमृश्य जपेयुः ॥२४॥**

इति । स्पष्टम् ॥२४॥

**मधुमन्नमि (तां. ब्रा. १-६-१२) ति पाणीनुपजिघ्रेरन् ॥२५॥**

स्पष्टम् ॥२५॥

**शमद्भ्यः (तां. ब्रा. १-६-१३) इत्युदञ्चं चमसं निनयेयुः ॥२६॥**

निनयेयुः परासिञ्चेयुरित्यर्थः ॥२६॥

**कामे (तां० ब्रा० १-६-१४) त्यभ्यात्ममावर्तयेयुः ॥२७॥**

आत्माभिमुखं चमसमावर्तयेयुः ॥२७॥

**ऊर्गि (तां. ब्रा. १-६-१५) त्युरःसु पाणीन् निदधीरन् ॥२८॥**

**प्राणसोमे (तां. ब्रा. १-६-१६) ति मुख्यान् प्राणानभिमृशेरन् ॥२९॥**

**आग्नीध्रीयं गत्वा दधिभक्षं भक्षयेयुरसमुपहूय दधिक्राव्णः (तां० ब्रा० १-६-१७) इति ॥३०॥**

स्पष्टानि ॥२८-३०॥

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले तृतीयः खण्डः ॥३॥

---

2. My[1] trans. अप्सु ... अद्भिः after पूर्णाः

5. My[2] om. हरितानि दूर्वादीनि, My[2] अध्वर्युभिः for अध्वर्युणा; My[1] T. before हरितानि add तेषु; T. My[1] दूर्वाः तेनैव अध्वर्युणा प्रस्थापिता भवन्ति for दूर्वादीनि ... शेषः; V[2] तेषु हरिततृणानि दूर्वास्तेनैवाध्वर्युणा प्रास्तानि भवन्ति for हरितानि ... शेषः

14. T. My[1] अध्यात्मम् for अभ्यात्मम्, V[2] आवर्तेयुः, My[1] आवर्तयेरन् for आवर्तयेयुः

## चतुर्थः खण्डः

**अग्निष्टपतीत्यवभृथसाम ॥१॥**

अवभृथं गच्छतां रक्षोविनाशनार्थं यत्साम **तदवभृथसाम** तत्काले गायेत् ॥१॥ कथमित्याह—

**तस्यावृद्यथा प्रथमस्य प्रवर्ग्यसाम्नः ॥२॥**

इति। **तस्य** स एव गानप्रकारः यथा प्रथमविहितप्रवर्ग्योद्वासनसाम्नो गानम्। **पश्चात्तिष्ठन्नध्वर्युप्रेषितस्त्यग्ना इरिति** गायेदि (द्रा. श्रौ. २·२·१) त्यादिना यदुक्तं तत्सर्वमत्र कार्यम् ॥२॥

**सर्व ऋत्विजो निधनमुपेयुः ॥३॥**

तत्र प्रवर्ग्योद्वासनसाम्नि प्रवर्ग्योपयुक्तानामेव निधनवचनम् इह तु सर्व एव षोडश **ऋत्विजो** यजमानः पत्नी च **निधनमुपेयुः**। **पुरुषः पुरुषो निधनमुपैतीति** श्रुतेः ॥३॥

**इष्टाहोत्रीयमभिषेचनीये समस्येति वा ॥४॥**

राजसूये ऽभिषेचनीयेऽहनि **इष्टाहोत्रीयमवभृथसाम समस्येति वा** साम **समस्य मन्यवे विशः** (सा. १३७) इत्येतस्यां गीयमानम् ॥४॥

**अश्वत्रिरात्रे नानावभृथानि सामानि ॥५॥**

अश्वमेधोऽश्वत्रिरात्रः। तस्मिन् त्रीण्यप्यहानि पृथक् पृथगवभृथानि भवन्तीति केषांचिदध्वर्यूणां सूत्रम् ॥५॥

**तेषां प्रथमस्य सनादग्न इत्यवभृथसाम ॥६॥**

**तेषां प्रथमस्य** अहः सनादग्ने (सा. ८०) **इत्यवभृथसाम** ॥६॥

---

3. P. C. My[3] गच्छतः, T. गच्छतस्तु for गच्छतां

6. My[1] V[2] T[2] °विहितस्य for °विहित°

7. P. C. My[2-3] अग्नायिरिति for अग्नाइरिति

14. P. C. L. हि, T. साम्नि for अहनि

15. V[2] My[1] T. om. समस्य ··· गीयमानम्

**यद्वा उ विश्पतिरि(सा० ११४)ति द्वितीयस्य त्वग्नायिरिति वा ॥७॥**

स्पष्टम् । तृतीयस्याह्नः प्राकृतमेव साम । विशेषावचनात् ॥७॥

**अवभृथेष्टौ सꣳस्थितायामवभृथनिचुम्पुण निचेरुरसि निचुम्पुणाऽवदेवैर्देवकृतमेनोऽयासिषमवमर्त्यैर्मर्त्यकृतं पुरु राव्णो देवरिषस्याहो (V. S. ३.४८.) त्यप उपस्पृश्य त्रिरभ्युक्षेरन् ॥८॥**

उपस्पर्शनं स्नानम् । तत्समन्त्रकं तुष्णीमञ्जलिना त्रिरभ्युक्षेरन् । केचित्तु विपरीतमाहुः ॥८॥

**आदित्यमुपतिष्ठेरन्नुद्वयं तमसस्परि ज्योतिः पश्यन्त उत्तरꣳस्वः पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तम(V. S. २०.२१)मिति ॥९॥**

स्पष्टम् ॥६॥

**अस्तमितश्चेदाहवनीयं ॥१०॥**

आहवनीयमौत्तरवेदिकम् ॥१०॥

**तस्मिन्त्समिध आदध्युरेधोऽस्येधिषीमही (V. S. २०.२३) ति प्रथमाम् । समिदसि समेधिषीमहीति द्वितीयाम् यदेनश्चकृमा वयं यद्वान्यकृतमारिमानया समिधा वयꣳतदपमृज्महे इति तृतीयाम् ॥११॥**

स्पष्टम् ॥११॥

**तमेवोपतिष्ठेरन्नपो अद्यान्वचारिꣳ रसेन समसृक्ष्महि पयस्वानग्न आगमं तं मा सꣳसृज वर्चसे (V. S. २०.२२) ति ॥१२॥**

स्पष्टम् ॥१२॥

**प्रागुदयनीयादतिरात्रादप्सुषोमान्तमहः सत्रेषु ॥१३॥**

सत्रेषु अन्त्यवर्जं सर्वाण्यहान्यप्सुषोमान्तान्येव स्युः । अन्त्येऽहनि प्रकृतिवदाहवनीयोपस्थानान्तं सर्वं कुर्युः ॥१३॥

---

3. My[1] T. प्रकृतम् for प्राकृतम्

20. V[1-2] My[1-2] गन्महि for सृक्ष्महि

**दधिभक्षान्तमहीनेषु ॥१४॥**

**अहीनेषु** अन्त्यवर्जं दधिभक्षान्तान्येवाहानि स्युः ॥१४॥

**यावन्त्यहानि राजानं भक्षयेयुस्तावत्स्वब्राह्मणायोच्छिष्टं न दद्युः ॥१५॥**

सोमपानदिवसेषु सर्वेऽपि ऋत्विजो ब्राह्मणव्यतिरिक्तायोच्छिष्टं न दद्युः ॥१५॥

**अद्भिर्वा प्रोक्ष्य दद्युः ॥१६॥**

यद्यवश्यमब्राह्मणाय देयं तदा प्रोक्ष्य दद्युः ॥१६॥

अदानमेव सर्वथा श्रेय इत्यभिप्रायेणाह—

**तदेष श्लोकः—सोममेतत्पिबत यत्किञ्चाश्नीत ब्राह्मणाः ।**
**मा ब्राह्मणायोच्छिष्टं दत्त मा पात् सोममसोमपः इति ॥१७॥**

हे ब्राह्मणाः ऋत्विजः सुत्यादिवसेषु यत् किंचान्नं भुङ्ध्वं तत्सर्वं सोममेव यूयं पिबत । सोमपानमेव तदित्यर्थः । तस्माद ब्राह्मणेभ्यः क्षत्रियादिभ्यः उच्छिष्टं मा दत्त । किमर्थमितिचेत् तत्रोक्तम् **मा पात्सोममसोमप** इति । **असोमपः** सोमपानानर्हः क्षत्रियादिर्मा सोमं पिबत्वित्येवमर्थमिति । दाननिषेधोऽयं प्रकरणात् क्रत्वर्थः ॥१७॥

**एतं परिक्रमं सर्वक्रतुषु विद्यात् ॥१८॥**

**ऋत्विगार्षेयोऽनूचानः** (द्रा. श्रौ. १·१·७) इत्युपक्रम्य यावदेतदनुक्रान्तं तत्सर्वं क्रतुषु विद्यादित्यतिदेशोऽयम् ॥१८॥

**एष ज्योतिः ॥१९॥**

**एषः** सर्वक्रतूनां प्रकृतिभूतो ज्योतिष्टोमोऽस्माभिरनुक्रान्तः ॥१९॥

---

6. T. before अद्भिः adds :—यदि तावत्स्वहःसु अब्राह्मणाय देयं तदा
7. T. om. यद्यवश्यं ··· दद्युः, My[2] after ब्राह्मणाय ins. इदमुच्छिष्टं
10. My[2] V[1] L C. before ब्राह्मणाय add : मा
16. V[1] एव, for एतं, P L My[2·3] °क्रामं for क्रमं
17. T. एवं for एतद्
18. T. कर्तव्यमित्यादेशः for विद्यादित्यतिदेशः

**सर्वे कामाः सर्वे कामाः ॥२०॥**

अस्य ज्योतिष्टोमस्य फलं स्वर्गपुत्रपशवन्नादयः सर्वे कामा इति । नित्यस्यैव-मृणसंस्तुतस्य ज्योतिष्टोमस्य कामसंयोगोऽयम् ॥२०॥

इति द्राह्यायणश्रौतसूत्रे षष्ठे पटले चतुर्थः खण्डः ॥१२॥

इति च्छन्दोगसूत्रस्य दीपेऽस्मिन् धन्विनिर्मिते ।
समाप्तः पटलः षष्ठः प्रीयतां देवकीसुतः ॥६॥

इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे षष्ठः पटलः ॥६॥

**इति द्राह्यायणश्रौतसूत्रे द्वितीयः प्रपाठकः समाप्तः ॥२॥**

तृतीयः प्रपाठकः

सप्तमः पटलः

## प्रथमः खण्डः

**षोडशि साम्ना स्तोष्यमाणो यथासनमुपविश्य हविर्धानं गत्वा षोडशिग्रहमवेक्षेतोद्गाता यस्मादन्य इति ॥१॥**

ननु च अग्निष्टोमादनन्तरमुक्थ्येऽभिधातव्ये कथं षोडशिनः प्रस्तावः । उच्यते उक्थ्ये विशेषतो वक्तव्याभावात् षोडशिनि तत्सद्भावाच्च प्रस्तावः । अत्र केचिदाहुः—अग्निष्टोमानन्तरमत्यग्निष्टोमो नाम द्वितीया संख्या । सा च ब्राह्मणस्य अनित्या । तत्र यज्ञायज्ञीयस्तोत्रानन्तरं षोडशिस्तोत्रमिति । तदनन्तरं प्रस्ताव इति । तदयुक्तम् तदानीं यथासनमुपविश्येत्यनुवादासंभवात् । तथा हि उक्थ्यानन्तरो यः षोडशी तस्यैव पृथक् धिष्ण्योपस्थानं यथासनमुपवेशनं च । न पुनरुक्थ्यात् पूर्वभूतस्य षोडशिनः । कुत एतत् । **समस्तेनोपतिष्ठेरन् यान्यूर्ध्वमुक्थ्येभ्यः** (द्रा. श्रौ. ५·३·५) इति वचनात् । तस्माद् यथोक्त एव प्रस्तावहेतुरिति । किंच । न वयमत्यग्निष्टोमं कल्पब्राह्मणयोरधीमहे । येन तदभिप्रायेण प्रस्तावः स्यात् । न च स्वशाखाधीते षोडशिनि मन्त्रविनियोगसंभवे शाखान्तरीयमत्यग्निष्टोममभिप्रेत्य मन्त्रविनियोगो युक्तः । न चासौ नित्यः । कुतः । **स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पाः**

---

5. $V^1$C T. एव for अवं°

6. P $My^3$ $V^2$ L. अग्निष्टोम° for अग्निष्टोमात्; $V^2$ $My^{1\cdot2}$ T वक्तव्ये for अभिधातव्ये; $V^1$ after प्रस्तावः add : इति

7. P C उक्ये for उक्थ्ये PC $My^{2\cdot3}$ L. °संभवात् for °सद्भावात्

9. $V^2$ $My^{1\cdot2}$ T. °स्तोत्रीय° for °स्तोत्र°; $My^{1\cdot2}$ नित्या for अनित्या

13. $My^1$ प्रस्तावे for प्रस्ताव°

15. $V^2$ $My^{1\cdot2}$ after °अधीते ins. चतुर्थेपादे, T. चतुर्थे पादे

16. $My^{1\cdot2}$ T $V^2$ after असौ add : ब्राह्मणस्य
$My^2$ °कल्पाः for °विकल्पाः

**आग्निष्टोमग्रमुकथ्यतातिरात्र्यमि** (द्रा. श्रौ. २२·१·१७) ति संस्थानुक्रमणे सूत्रकारेण तस्यानुपादानात् । **त्रयो वर्णविकल्पाः** (क्षु. क. २·१·१) इत्यत्र कल्पकारेणापि नित्येष्वनुपादानात् । ननु च ब्रह्मत्वविधाने सूत्रकारः सप्तसंस्थास्वेनमप्यनुक्रामति । सत्यम् । नानुक्रमणमात्रान्नित्यत्वसिद्धिः । अनुक्रमणस्य ब्रह्मत्वविषयप्रदर्शनार्थत्वात् । ननु च गौतमेन चत्वारिंशत्संस्कारेषु पाठान्नित्यः स्यात् । न । एवं राजन्यविषयतयापि पाठोपपत्तेः । राजन्यस्याप्यसौ वैकल्पिक एव । अस्माकमनध्ययनात् । **अत्यग्निष्टोमे राजन्यस्य गृह्णीयादि** (Ts. ६·६·११·४) ति शाखान्तरेऽपि वाक्यशेषात् विकल्पावगतेः । इत्यलमनेन । अक्षरार्थस्तु उकथ्यचमसभक्षणानन्तरं निष्क्रम्य धिष्ण्योपस्थानोपवेशने कृत्वा पुनर्निष्क्रम्य षोडशिग्रहमवेक्षेतेति ॥१॥

## एवमेव प्रातःसवने ॥२॥

**प्रातःसवनेऽप्येवमेवोपवेशनानन्तरं** पूर्वया द्वारा निष्क्रम्यावेक्षेत ॥२॥

## यदि चोत्तरयोरपि गृह्णीयुः ॥३॥

**उत्तरयोरपि** सवनयोर्यदि षोडशिनमध्वर्यवो **गृह्णीयुः** तदाप्यवेक्षणं तत्रोपवेशानन्तरं कार्यम् । प्रातः सवने वा प्रतिसवनं वा धाराग्रहाणामन्ते षोडशिनं गृह्णीयादित्यध्वर्युभिरुक्तम् ॥३॥

---

1. V² My¹ before संस्था⁰ ins. नित्य⁰
3. V¹ My²⁻³ एतम् for एनम्
4. P C. सप्तत्व⁰ for सत्यम् । न⁰
5. V² My¹ T. Om. गौतमेन
6. V¹ ML. मैवम् for न । एवं
7. My² अनध्यवसानात् for अनध्ययनात्; V¹ CL. before अत्यग्नि ins. अपि; V² My¹⁻² T My⁴. तैत्तिरीयकश्रुतौ स एनं वजो भूत्वा इन्धे निर्वा दहतीति पाक्षिकदोषश्रवणात् for अत्यग्निष्टोमे ··· ⁰अवगतेः (L. 8).
15. V¹ CL My¹·⁴ ⁰सवने for ⁰सवनं; V¹ CL My¹·⁴ वार् for वा; C वार्धा; P वार्चा⁰ for वा धारा⁰; p ग्रहणमन्त्रे for ग्रहाणामन्ते

**अश्वः कृष्णः पूर्वस्याꣳ सदसो द्वारि प्रत्यङ्मुखस्तिष्ठेदिति शाण्डिल्यः ॥४॥**

**अपरस्यां प्राङ्मुख इति धानंजय्यः ॥५॥**

स्तुतिकाल इति शेषः ॥५॥

**कृष्णाभावे श्यावः ॥६॥**

**तदभावे यः कश्चाश्वः ॥७॥**

**गौर्वाजोऽश्वाभावे ॥८॥**

स्पष्टानि ॥६-८॥

**यो यः सामाङ्गं ब्रूयात्स हिरण्यं धारयेत् ॥९॥**

**यो यः** प्रस्तोतोद्गाता प्रतिहर्ता वा **सामाङ्गं** स्वां स्वां भक्तिं **ब्रूयात् । स हिरण्यं** धारयित्वा गायेत् । अत्रैकमेव हिरण्यमन्योन्यस्मै प्रदाय गायेत् । कुत एतत् । **हिरण्यꣳसंप्रदायꣳषोडशिना स्तुवते** (तां. ब्रा. १२·१३·२५) इति श्रुतेः । संप्रदायमिति णमुल्प्रत्ययान्तः ॥९॥

**उद्गाता निधनमुपयत्सु ॥१०॥**

तेषु **निधनमुपयत्सु** हिरण्यमुद्गातैव धारयेत् ॥१०॥

**सर्वे वाभिमृशेयुः ॥११॥**

अथवा निधनकालेऽपि तद्धिरण्यं **सर्वेऽभिमृशेयुः** ॥११॥

**अपसर्पति प्रथमं पर्यायं गायेच्छन्नम् ॥१२॥**

अस्तमयार्थमादित्येऽपसर्पति सति षोडशिनः **प्रथमं पर्यायं छन्नमस्पष्टं गायेत्** ॥१२॥

**विषिते द्वितीयं मध्यमेन ॥१३॥**

**विषिते** समयाविषिते अर्धास्तमिते सूर्ये द्वितीयं पर्यायं मध्यमेन स्वरेण गायेत् ॥१३॥

---

1. $V^1$C पूवस्याः for पूर्वस्यां

7. $V^{1\text{-}2}$ C. अजा for अजः

12. $V^1$ C. समुदायं, $V^2$ संप्रदायः for संप्रदायं

18, 19. PC. अव for अप

21, 22. $V^2$ $My^2$ $My^4$ विषुते for विषिते

**अस्तमिते तृतीयमाविः ॥१४॥**

अस्तमिते सूर्ये तृतीयं पर्यायं आविः प्रकाशम् उच्चैः स्वरेण गायेत् । षोडशिनः संधिस्तोत्रत्वादेवमुक्तम् । अत्र तैत्तिरीयकम् समयाविषिते सूर्ये षोडशिनः स्तोत्रमुपाकरोती (Ts. ६·६·११·६) ति । व्याख्यातं चैतद् बोधायनेन । अर्धास्तमित इत्येवेदमुक्तं भवतीति ॥१४॥

**यदोपाकुर्युः स्तुवीरन्नेवाह्नि छन्न ँ रात्रावाविः ॥ १५॥**

अथवा यदाध्वर्यवः षोडशिनः स्तोत्रमुपाकुर्वन्ति, तदानीमेव स्तुवीरन् । न पुनर्यथोक्तकालः प्रतीक्ष्य इत्यर्थः । तदा चाह्नि चेदुपाकरणम् । तदा छन्नम् । रात्रौ चेत् प्रकाशं गेयम् ॥१५॥

**उद्गात्रे दद्यादश्वहिरण्ये दक्षिणावत्सु ॥१६॥**

दक्षिणावत्सु सत्रव्यतिरिक्तेषु क्रतुषु स्तुत्यङ्गभूतमश्वं च हिरण्यं चोद्गात्रे दद्यात् ॥१६॥

एवं पञ्चविंशब्राह्मणे दशरात्रस्य चतुर्थेऽह्न्युत्पादितस्य षोडशिनः स्तुतिप्रकार उक्तः । दशरात्रश्च द्विविधः । सत्रमहीनं चेति । तत्र षोडशिग्रहचमसभक्षे विशेषमाह—

**सत्र एव ग्रहस्य भक्षयेयुरैन्द्र ँ सह इति ॥१७॥**

इति । ऐन्द ँ सह (तां. ब्रा. १.६.१) इति मन्त्रेण षोडशिग्रहभक्षणम् । तच्च सत्र एवेत्यर्थः ॥१७॥

**उदस्य हरिवदहरिकासु चेत्स्तुवीरन् ॥१८॥**

यदा हरिशब्दवर्जितासु ऋक्षु षोडशिना स्तुवीरन् तदानीम् ऐन्द्र ँ सह इति भक्षणमन्त्रेऽपि हरिवत्पदमुदस्यापोह्य ब्रूयुः । अहरिकास्विति हरिशब्दरहिता-

---

3. My[1,4] ⁰विषुते for ⁰विषिते

5. My[1,4] एवम् for एवेदम्

8. P. ⁰करणे for ⁰करणं

15. P. ⁰भक्षण⁰, My ⁰भक्षणे, for ⁰भक्षे

17. V[2] My[1-2] ⁰ग्रहं भक्षयेत् for ⁰ग्रहभक्षण

21. P भक्षणमन्त्रेण, T. भक्षणमन्त्रः for भक्षणमन्त्रे

स्वित्यर्थः ॥१८॥

**अनुष्टुप्छन्दसा चमसस्य ॥१९॥**

सत्र इत्यनुवर्तते । **इन्द्रविन्द्रपीतस्य त इन्द्रियावतोऽनुष्टुप्छन्दसः** (तां. ब्रा. १.६.२) इति षोडशि **चमसस्य** सत्रे भक्षयेयुः ॥१९॥

**पूर्वेण वा ॥२०॥**

सत्र इत्येव । **ऐन्द्रꣳसहः** (तां. ब्रा. १.६.१) इत्यनेन **वा** चमसं भक्षयेयुः ॥२०॥

**तथा कुर्वन्निन्द्रश्च सम्राड्वरुणश्च राजा तौ ते भक्षं चक्रतुरग्र एतं तयोरहमनुभक्षं भक्षयामि वाग्जुषाणा सोमस्य तृप्यत्वि-(S. V. ८.३७) ति ग्रहस्य ॥२१॥**

तथा कुर्वन्निति सत्रे पूर्वेण चमसभक्षणं कुर्वन्नित्यर्थः । तदानीमिन्द्रश्च सम्रा-डिति ग्रहस्य भक्षणम् ॥२१॥

**इन्द्रमिद्धरी (V. S. ८.३५) इति शाण्डिल्यो वाग्देवी सोमस्य पिबत्वित्येतदधिकया ॥२२॥**

सत्र इति ग्रहस्य नेति द्वयमप्यनुवर्तते । **इन्द्रमिद्धरी** इत्यनया ऋचा वाग्देवीति यजुरन्तरया ग्रहभक्षणं सत्र इति । एवं सत्रे ग्रहचमसयोर्भक्षणप्रकार उक्तः ॥२२॥

अथ सत्रव्यतिरिक्ते प्रकारमाह—

**ऐन्द्रꣳसह इति चमसस्यासत्रे ॥२३॥**

**ऐन्द्रꣳसह** (तां. ब्रा. १.६.१) इत्यनेनैव मन्त्रेण सत्र व्यतिरिक्तेषु चमसभक्षणम् । नानुष्टुप्छन्दसे (तां. ब्रा. १.६.२) ति मन्त्रेणेति । एवं चतुर्थोत्पन्नः षोडशी सहैव धर्मैरन्यत्र प्रवर्तते । **द्वादशाहस्य षोडशिमन्तावतिरात्रावि** (आ. क. ६.१.१) त्या-दाविति मन्तव्यम् ॥२३॥

**त्रिष्टुप्छन्दसा वाजपेयसाम्नि भक्षयेयुरिति गौतमः ॥२४॥**

---

4. $V^1$ षोडशिभक्षः, for षोडशि चमसस्य सत्रे भक्षयेयुः; L. चमसं for चमसस्य and Om. सत्रे

10. $V^1$ मन्त्रेण for सत्रे

18. $V^1$ C. before चमस⁰ add : च; $My^1$ T. ⁰रिक्ते for ⁰रिक्तेषु

22. $V^1$ TC $My^2$ भक्षयेत् for भक्षयेयुः

**अनुष्टुप्छन्दसेति धानंजय्यशाण्डिल्यौ ॥२५॥**

स्पष्टे ॥२४-२५॥

**अनुष्टुप्छन्दसा रात्रौ ॥२६॥**

रात्रिपर्यायेषु **अनुष्टुप्छन्दसेति** चमसभक्षणं सर्वत्र ॥२६॥

**पृथक् तृचेभ्यः संधौ हिंकुर्युः ॥२७॥**

संधेरनावृत्तिस्तोत्रत्वादेकहिंकारत्वे प्राप्ते इदं वचनम् । तृचानां नानादेवतात्वात् पृथग्घिकारः कार्य इत्यभिप्रायः । सामभेदो वा देवता भेदो वा हिंकारस्य प्रयोजकः ॥२७॥

**इष्टयजुष इति भक्षः ॥२८॥**

संधिस्तोत्रे **इष्टयजुष** (तां. ब्रा. १.६.४) इति चमसभक्षणम् ॥२८॥

**गायत्रच्छन्दसातिरिक्तस्तोत्रेष्विति गौतमः ॥२९॥**

अप्तोर्यामेऽतिरिक्तस्तोत्रेषु **गायत्रच्छन्दसा** चमसचमसभक्ष इति गौतमः ॥२९॥

**पृथग्भक्षछन्दोभिरनुपूर्वमिति धानंजय्यशाण्डिल्यौ ॥३०॥**

चत्वारि तावदतिरिक्तस्तोत्राणीति । तेषु क्रमेण गायत्र्यादीनि चत्वारि भक्षच्छन्दांसि पृथक् भवेयुरित्यर्थः ॥३०॥

**अनुष्टुप्छन्दसा वा ॥३१॥**

चतुर्ष्वपि स्तोत्रेषु रात्रिवदनुष्टुप्छन्दसेति भक्षणम् । तेषां रात्रिवृद्धिमात्रत्वात् ॥३१॥

**अच्छन्दसा वा ॥३२॥**

अथवा छन्दःशब्दरहितेन मन्त्रेण चमसभक्षणम् ॥३२॥

---

6. V² My¹ T My⁴ before संधे: add :—रात्रौ संधिस्तोत्रे पृथगेव तृचानामुपक्रमे हिंकुर्यात् ।

7. V¹ साममेदे देवता मेदे for साम भेदो ··· ⁰भेदो

13. V² आनुपूर्व्यम् for अनुपूर्वम्

15. PC LT. भक्षयेयुः for भवेयुः

17. V² My¹ after स्तोत्रेषु add : गायत्रेषु

**संधिवद्वा ॥३३॥**

यद्वा संधिस्तोत्रवदिष्टयजुष इति भक्षणम् । तदेवमतिरिक्तस्तोत्रेषु चमसभक्षणे पञ्चपक्षा उक्ताः ॥३३॥

**इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले प्रथमः खण्डः ॥१॥**

---

2. P. Om. अतिरिक्त स्तोत्रेषु; P V[1] Om. भक्षणम् । · · · चमस०

3. V[1-2] ०भक्षणाः My[1] भक्षाः for पक्षाः

## द्वितीयः खण्डः

एवं तावत्सप्तानां सोमसंस्थानामौद्गात्रमुक्तम् । महन्मे वोच (द्रा. श्रौ. १.१.१०) इत्यादि मन्त्रविनियोगश्च उक्तः । रश्मिरसीत्यनुवाकद्वयं ब्रह्मत्वविधाने विनियोक्ष्यते । अथ याजकस्य प्रसङ्गात् प्रायश्चित्तमाह—

**आहिताग्निरसोमयाजी परꣳसोमेन याजयित्वा परिभक्षं कुर्वीत ॥१॥**

इति । स्वकीयानग्नीन् सोमेनानिष्ट्वा परयज्ञे यत्सोमभक्षणं स परिभक्षः । वर्जनार्थे परिशब्दः । परिभक्षणनिमित्तं प्रायश्चित्तमपि लक्षणया परिभक्ष इत्युच्यते । यथातिथिमाहूतमभोजयित्वैव स्वयं परगृहे भुञ्जीत । तादृशमेतत् । यदाहिताग्नेरसोमयाजिनः परयज्ञे सोमभक्षणं तस्मात् तन्निमित्तं वक्ष्यमाणं प्रायश्चित्तं कुर्यात् ॥१॥

**सोमयाज्यपीति शाण्डिल्यः ॥२॥**

सोमयाजिनोऽपि परयज्ञे सोमभक्षणं स्वकीयैरग्निभिर्विना दुष्टमेवेति भावः ॥२॥

**हुतायां प्रातराहुतावाज्यं गार्हपत्येऽधिश्रित्योदगुद्वासयेत् ॥३॥**

हुते प्रातरग्निहोत्रे परिभक्षं संकल्प्य अन्यमाहवनीयं प्रणीयाज्याधिश्रयणम् ॥३॥

**कंसे चमसे वा द्रप्सानवधाय दक्षिणाग्नावुपसादयेत् ॥४॥**

दारुमयश्चमसः । चमस प्रणयनमभिप्रेतम् । तस्य क्लृप्तत्वाद् । दधिसंबन्धिनो द्रप्सा अभिप्रेताः । आपस्तम्बकल्पे तेषामेवोपदेशात् । इहापि विरोधाभावाच्च ॥४॥

**स्फ्यदर्भमुष्टी च ॥५॥**

दक्षिणाग्नावुपसादयेदित्येव ॥५॥

**पश्चिमेन गार्हपत्यं गत्वा पश्चादाहवनीयस्योपविश्य स्रुवेण स्रुच्याज्यं गृह्णीयात् । यावद्गृहीती स्यात् ॥६॥**

---

10. My[1,4] before तस्मात् add : स परिभक्षणं; My[2] तस्मिन् for तस्मात्

16. P My[2-3] ⁰भक्षणं, My[1] ⁰भक्ष्यं for ⁰भक्षं

19. PC my[1] स च for चमस⁰; V[1-2] my[4] after प्रणयन⁰ ins. ⁰प्रणीता⁰

यावन्ति गृहीतान्यस्येति यावद्गृहीती यजमानः । स यदि पञ्चावत्ती स्यात् पञ्चगृहीतमाज्यं गृह्णीयात् । यदि चतुरवत्ती चतुर्गृहीतमिति ॥६॥

**तज्जुहुयाद् इमामग्ने शरणि मीमृषो न इममध्वानं यमगाम दूरात् । आपिः पिता प्रमतिः सोम्यानां भूमिरस्यृषिकृन्मर्त्यानां (ऋ० वे० १-३१-१६) स्वाहेति ॥७॥**

स्पष्टम् ॥७॥

**एवमेव गृहीत्वापां पुष्पमस्योषधीनांं रसोऽग्नेः प्रियतमा तनूरिन्द्रस्य प्रियतमंं हविः स्वाहे (तां०ब्रा०१-६-८) ति ॥८॥**

एवमेवेति स्रुवेण स्रुचि चतुर्गृहीतं पञ्चगृहीतं वा गृहीत्वेत्यर्थः ॥८॥

**आज्यस्य पूर्वान् ग्रहान् गृहीत्वा दध्न उत्तमं विश्वेभ्यो देवेभ्यः स्वाहेति ॥९॥**

जुहुयादित्येव । आज्यस्य पूर्वांस्त्रीन् ग्रहान् गृहीत्वा दध्नश्चतुर्थं गृह्णीयाच्चतुरवत्ती । पञ्चावत्ती पञ्चमं ग्रहम् ॥६॥

**दधिशेषं स्रुच्यानीयोदङ्ङावृत्य प्राश्नीयात्तव सोमव्रते वयं मनस्तनूषु पिप्रतः प्रजावन्तो अशीमहीति ॥१०॥**

स्पष्टम् ॥१०॥

**प्रक्षाल्य स्रुचं यथेतं प्रत्याव्रज्य प्राचीनावीती भूत्वाप उपस्पृश्य दक्षिणाग्नेः स्थण्डिलंं समूह्याद्भिः संप्रोक्ष्य स्फ्येन सकृदुल्लिख्योल्मुकमुपनिधाय दर्भानुपस्तीर्याप उपनिनीयामीषां द्रप्सानां निपृणुयादवमेभ्यः पितृभ्यः स्वधा सहभक्षेभ्य इति प्रथमम् ॥११॥**

निपृणुयान्निर्वपेदित्यर्थः ॥११॥

---

3. T. My. शरणीममी for शर्णि ; M. भ्रेपो for मृषो
4. T. अपिहि, M. आवी: for आपिः ; L. M. प्रमितिः for प्रमतिः
   T. C. °स्मृषि° for °स्पृषि°;
5. P. मर्यानां for मर्त्यानां
20. My[1] समुह्य for समूह्य

**और्वेभ्यः काव्येभ्य इत्येवमेव दक्षिणा पृथक् ॥१२॥**

पूर्वं न्युप्तस्य दध्नो दक्षिणत और्वेभ्यः पितृभ्यः स्वधेति ।
निपृणं तस्य दक्षिणतः काव्येभ्यः पितृभ्यः स्वधेति ॥१२॥

**अत्र पितरो मादयध्वं यथाभागमावृषायध्वमित्युक्त्वोदङङावृत्यासित्वा यावन्मन्येत तावत् ॥१३॥**

यावन्तं कालं लोके पुरुषस्य दध्यशनाय पर्याप्तं मन्यते तावन्तं कालं पितॄनपश्यन्नासित्वेत्यर्थः । यदि पश्येल्लज्जया पितरो नाश्नीयुरिति तैत्तिरीयकैराम्नातम् । पराङावर्तते ह्लीकाहि पितरः (T. १-३-१०-५-६) इति ॥१३॥

**अभिपर्यावर्तमानो जपेदमीमदन्त पितरो यथाभागमनन्तरिताः पितरः सोमपीथाद् इति ॥१४॥**

तत आभिमुख्येन दधिद्रप्सान् पर्यावर्तमानो जपेत् ॥१४॥

**तान् दर्भान् द्रप्सांश्च दक्षिणाग्नौ प्रहरेत् ॥१५॥**

येषु दर्भेषु ये दधिद्रप्साः पितृभ्यो दत्तास्तानुभयानपि प्रहरेत् ॥१५॥

**इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले द्वितीयः खण्डः ॥२॥**

---

7. V[1] पश्यन् for पश्यत्

8. P C My[2-3] क्लीबाः V[1] हीकाः for ह्लीकाः

## तृतीयः खण्डः

यज्ञोपवीती भूत्वाप उपस्पृश्य गृहान् व्रजन् जपेत् । उपशिवेन मनसा गृहानैमि मानुषान् । गृहामा विभीत मा वेपिद्ध्वमूर्जं विभ्रत एमस्यूर्जं बिभ्रद्वः । सुमनाः सुमेधा गृहानैमि मनसा दैवेन । येषामध्येति प्रवसन्येषु सौमनसो बहुर्गृहानुपह्वयामहे । ते नो जानन्तु जानत उपहूता इह गावः । उपहूता अजावयोऽथो अन्नस्य यो रस उपहूतो गृहेषु नः इति ।।१।।

अग्न्यागारान्निष्क्रम्य स्वीयान् गृहान् व्रजन् जपेत् ।।१।।

पश्चाच्छालाग्नेरुपविश्य जपेदिह गावः प्रजायध्वमिहाश्वा इह पुरुषाः । इहो सहस्रदक्षिणोऽपि पूषा निषीदत्विति ।।२।।

शालाग्निरौपासनः ।।२।।

अग्नेस्तृणानि प्रत्यूह्य यः सुहृत्तमभि भाषेत ।।३।।

औपासनाग्नेः परिस्तरणतृणान्यपचित्य सुहृद्भाषणं कार्यम् ।।३।।

गोषु गा अपि सृजेत् । उपेदमुपपर्चनमासु गोषूपपृच्यताम् उपर्षभस्य रेतस्युपेन्द्र तव वीर्ये (ऋ० वे० ६-२८-८) इति ।।४।।

अथ स्वीयानां गवां ग्रामगवीष्वपि सर्गं मन्त्रतः कुर्यात् ।।४।।

मेमा इन्द्र गावो ऋषन्मो आसां गोपति ऋषन्मा साम मित्रयुर्जन इन्द्र मा स्तेन ईशत (AV २०-१२७-१३) इति ।।५।।

गा निरीक्ष्य जपेदिति शेषः । एतदन्तं प्रायश्चित्तमिति शेषः ।।५।।

---

18. V[2] My[4] My[1] गतेषु गोषु for ग्रामगवीषु; P. संसर्गमन्ततः for सर्गं मन्त्रतः

अथ कल्पकारेण प्रथमक्लृप्तं गवामयनमनुसंधास्यन् सर्वेषु सत्रेषु सत्रिणां तावद् धर्मानाह—

**सत्राय दीक्षिष्यमाणाः संवदेरन् सह नः साधुकृत्या नानापापकृत्या यदस्मिन्त्सत्रेऽथ यत्पुरा चकृम कर्तास्मश्च यथोपस्थितमेव नस्तदिति ॥६॥**

इति । **अस्मिन् सत्रे** अस्माकमन्यतमेन यत् क्रियते तद्यदि साधु तत्सहैवास्माकमस्तु । यद्यसाधु तन्नानैव । तस्यैवेत्यर्थः । अथ यत्सत्रस्य पुरस्तादुपरिष्टाच्च वयं कृतवन्तः करिष्यामश्च **तद्यथोपस्थितं** यथाप्राप्तमेवास्तु । येन यत्साध्वसाधु वा कृतं तत्तस्यैवेत्येकः संवादः इति ॥६॥

संवादान्तरमाह—

**यो नोऽव्रत्यं चरेद्दीक्षितो नः स दीक्षितान् याजयेत् ॥७॥**

इति । संवदेरन्नित्यनुषङ्गः । दीक्षाङ्गभूतसत्यवदनब्रह्मचर्यादिनियमो व्रतम् । तद्विरुद्धा**व्रत्यम्** । तद् यदि कश्चित् कुर्यात् सो **दीक्षित** एवास्तु केवलम् । सत्यम् । अस्माकमितरेषां याजकमात्रम् । नासौ सत्रफलभागीत्यर्थः ॥७॥

यद्येवं संवादादेव परकीयदोषास्पर्शः । तर्हि अविज्ञातवृत्तेनापि पुरुषेण सह दीक्षायां न दोषः स्यान्नेत्याह—

**संवत्सरं ह स्म पूर्वेऽन्योन्यस्य क्रोधमाक्रोशं निभृतं शीलमिति संविज्ञाय दीक्षन्ते ॥८॥**

इति । ऋषयः **पूर्वे संवत्सर**मेकमन्योन्यगुणदोषौ परीक्ष्यैवादीक्षन्त । तस्मात् परीक्षणगुणेन सुवृत्तेनैव सह दीक्षितव्यमिति । क्रोधाक्रोशौ प्रसिद्धौ । **निभृतं** दमः । **शील**मनसूयादि ॥८॥

**तेषां दीक्षाप्रभृति पत्नीशालायां भोजनसंवेशने स्याताम् ॥९॥**

**उपवसथ्यप्रभृत्याग्नीध्रीये ॥१०॥**

**संधिवेलयोर्वाचं यच्छेयुः ॥११॥**

स्पष्टानीति ॥

---

2. T. तद् for तावद्

3. CL. दीक्ष्यमाणाः for दीक्षिष्यमाणाः

13. $V^2$ व्रत्यं for अव्रत्यम्; T. $V^2$ $My^{1-2,4}$ om. सत्यम्

**विचक्षणान्तां वाचं भाषेरन् ॥१२॥**

अत्रापस्तम्बः चनसितं विचक्षणमिति नामधेयान्ते दधातीति । यथा हे देवदत्त विचक्षणेत्येवमादीनि ॥१२॥

**न कंचनाभिवादयेरन् ॥१३॥**

**न शूद्रेण संभाषेरन् ॥१४॥**

स्पष्टे ॥१३-१४॥

**नाधिष्ण्य उत्तपेरन् ॥१५॥**

आहवनीयादयो धिष्ण्याः तद्व्यतिरिक्ते लौकिकेऽग्नौ नोत्तपेरन् । भोजनार्थानां हरीतकीलाजादीनां भर्जनम् । अथवा शीतवातापनोदनार्थं हस्तादिप्रतपनमुत्तपनम् ॥१५॥

**न प्रतीच्या द्वारा पत्नीशालाया निष्क्रामेयुः ॥१६॥**

स्पष्टम् ॥१६॥

**प्राञ्चमुदञ्चं वोच्चारं कुर्वीरन् ॥१७॥**

देवयजनात् प्राग्देशे उदग्देशे वा मूत्रपुरीषोत्सर्गं कुर्युः । प्राङ्मुख उदङ्मुखो वेति केचिद्व्याचक्षते ॥१७॥

**न बहु वदेयुः ॥१८॥**

गतम् ॥१८॥

**न दन्तान् दर्शयेयुः ॥१९॥**

हासादौ न दन्तान् दर्शयेयुः ॥१९॥

**नोच्चैर्जक्षुः ॥२०॥**

उच्चैर्भक्षो न कार्यः ॥२०॥

**नाहुतस्याश्नीयुः ॥२१॥**

आहुतशिष्टं न कदाचिद् अश्नीयुः । शरीरधारणाशक्तौ त्वैन्द्रं पञ्चशरावमोदनं निर्वपेरन् यद्योदनीयन्तीति वाजसनेयकसूत्रम् ॥२१॥

---

22. My[1] आहुते V[2] हुते for आहुत⁰;

23. P My[2-3] ⁰शिष्टां for शिष्टं

**नैनानन्योन्यानश्नतः पश्येत् ॥२२॥**

अन्येनादर्शनं सत्रिणामेव साद्‌गुण्यार्थं प्रकरणात् यथा श्राद्धस्यापरपात्रैरदर्शनम् ॥२२॥

**सर्वेषां सवनानां प्राश्नीयुः ॥२३॥**

त्रिष्वपि सवनेषु प्राश्नीयुरनुष्ठानशक्तयः ॥२३॥

**क्रोधानृते वर्जयेयुः ॥२४॥**

स्पष्टम् ॥२४॥

**एतानि व्रतानि दीक्षासु ॥२५॥**

दीक्षादिवसेष्वेवैतानि व्रतानि । न ततः परम् इत्यर्थः ॥२५॥

**दीक्षोपसत्सु वा ॥२६॥**

**वा सत्रान्तात् ॥२७॥**

अथवा आ सत्र समाप्तेरेतानि व्रतानि स्युः ॥२७॥

**उदयास्तमयावभ्याश्रावणं च बहिर्वेदि प्रसृते वर्जयेयुः ॥२८॥**

बहिर्वेदी प्रसृते निर्गमे सतीत्यर्थः । उदयास्तमयवेलायां न बहिर्वेदिं गच्छेयुः । तथा बहिर्वेदिगते आश्रावणं च न कुर्युरित्यर्थः ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले तृतीयः खण्डः ॥३॥**

---

2. $My_2$ करणात् $V^2$ प्रकरणं for प्रकरणात्
   $V^{1\text{-}2}$ CL. अपपात्रैः for अपरपात्रैः

13. P प्रसुते for प्रसृते

## चतुर्थः खण्डः

**तेषां चेदेनाꣳस्त्रयाणां किंचिदेयाद् गृहपतावुपहवमिच्छेरन् ॥१॥**

**तेषाम्** उदयास्तमयाश्रावणानां **त्रयाणां** मध्ये **किंचिदेकमेनान्** सत्रिणो बहिर्वेदिगतानवर्जनीयमुपनमेत् । तदा गृहपतावु**पहव**मनुज्ञानमिच्छेयुः । गृहपत उपह्वयस्वेति ॥१॥

**तं चेदुद्गातरि ॥२॥**

गृहपतिश्**चेत्** त्रयाणां किंचिदुपनमेत् । तदासौ गृहपतिरु**द्गातर्यु**पहवमिच्छेत् ॥२॥

कुत इत्याह—

**एष वै यजमानस्य प्रजापतिर्यदुद्गाते (तां० ब्रा० ७-१०-१६) ति ह्याह ॥३॥**

इति । गतम् ॥३॥

**दीक्षानुपूर्व्येण वा सर्वेषु ॥४॥**

अथवा **सर्वेषु** सत्रिषु प्रत्येकं दीक्षाक्रमेणोपहवमिच्छेत् ॥४॥

**परिहृतासु वसतीवरीषु संविशेयुः ॥५॥**

स्पष्टम् ॥५॥

**तेषां चेत् कश्चित् प्रेयादतीर्थेन निर्हृत्याहार्येणानाहिताग्निं दहेयुः । पत्नीं चैवम् ॥६॥**

**तेषां** सत्रिणां मध्ये यदि **कश्चित्** म्रियेत स यद्यनाहिताग्निः स्यात् तमाप्नानतीर्थादन्येन मार्गेण वेदेर्निर्हृत्य आहार्येण लौकिकमग्निमाहृत्य तेन **दहेयुः** । तथैव पत्नीमपि ॥६॥

---

5. P C L T अनुज्ञाम् for अनुज्ञानम्

13. $V^2$ L. $My^1$ om. गतम्

14. $V^2$ सत्रिषु, $My^1$ T. $My^4$ सत्रेषु for सर्वेषु

**अरण्योरग्नीन् समारोप्यते आप्नानेन निर्हृत्य निर्मन्थ्येनाहिताग्निम् ॥७॥**

यद्याहिताग्निः स्यात्तस्याग्नीनरण्योः समारोप्यते अरण्यावाप्नानेन तीर्थेन निर्हृत्य निर्मन्थ्येन तं दहेयुः ॥७॥

एवं सत्रिणां धर्मा उक्ताः । अथ गवामयनमनुसंधत्ते—

**मध्यमस्य रात्रिपर्यायस्य दैवोदासꣳहोतृषाम स्यादौर्ध्वसद्मनं वा ॥८॥**

इति । अत्र कल्पकारेण **क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिक** (आ. क. १.१.१) इत्युक्तम् । ब्राह्मणेनैव क्लृप्त इत्यर्थः । ब्राह्मणे च रात्रिपर्याये दैवोदासमौर्ध्वसद्मनं चेति सामद्वयं होतृषामत्वेन विहितम् । तत्राहीनगतेऽतिरात्रे **दैवोदासम् । सत्रगते त्वौर्ध्वसद्मनमिति** निदानकारः । तत्र सूत्रकारो योनिच्छन्नविशेषाद् विकल्पमाह । ननु च **और्ध्वसद्मनमपि शर्वरीषु प्रोहन्ती** (तां. ब्रा. ९.२.१०) ति ब्राह्मणं सत्रविषयम् । नैवम् । न तावत् प्रोहन्तीति बहुवचनात् सत्रविषयत्वम् । **ऐडेन बृहतीमारभन्ते** (तां. ब्रा. ७.३.१४) इति वत् सत्रव्यतिरिक्तेऽपि बहुवचनोपपत्तेः । न चापिशर्वरीशब्दः सत्रवचनः । रात्रिगतस्तोत्रीयावचनत्वात् । याभिः स्तोत्रीयाभिर्देवाः शर्वर्या अप्यसुरानपातुदन्त । **न केवलमह्नस्ता अपि**शर्वर्य इति बह्वृचब्राह्मणे उक्तम् । **अपि शर्वर्य अनुस्मसीत्यब्रुवन्नपिशर्वराणामपि शर्वरत्वम्** । (ऐ. ब्रा. ४.५.५) इति । तेनायमर्थः । और्ध्वसद्मनं **पुरोजिती वो अन्धस** (सा. ६९७-९) इति पावमान्यामुत्पन्नमपि पवमानस्थानमतिलङ्घ्यापि शर्वरीषु रात्रिस्तोत्रीयासु असुरनिरासार्थं प्रोहन्ति ब्रह्मवादिन इति । तेत सत्रविषयमेतद्वचनम् । ननु च **स्व आयतने सत्रमास्त** (तां. ब्रा. ९.२.१२) इति

---

11. निदानकारः नि. सू. 8.1 PC $My^{2-3}$ अग्नि⁰ for योनि⁰;
12. T. om. ननु च;
13. P $Mp^{2-3}$ C. om. नैवम् · · · विशयत्वम् (L. 14)
14. $My^{3}$ चेत्, $V^{1}$ तत् for ⁰वत्
16. P C T $My^{1-3}$ L. $V^{2}$ नुदन्त for तुदन्त,
17. $V^{2}$ CL $My^{1}$ अब्रुवन्तदपि for अब्रुवन्नपि
20. $V^{2}$ $My^{1-2}$ T. $My^{4}$ भ्रातृव्यनिरसनार्थं for असुरनिरासार्थं



F. 22

वाक्यशेषात् सत्रविषयं स्यात् । तदपि न । तस्य प्रशंसार्थत्वात् । कथम् दीर्घसत्रेषु अप्यौर्ध्वसद्मनेनैव विघ्नकारान् शत्रून् निहन्ति । किं पुनरन्यत्र ॥८॥

अथाभिप्लवस्य द्वितीयेऽह्नि कल्पकारः—**परीतोषिञ्चता सुतमि** (सा. १३१३-५) **ति माधुच्छन्दसं च भर्गश्च यशो वे** (आ. क. १.३.३) ति भर्गयशसी विकल्पयति । तत्र सूत्रकारो मतभेदानाह—

**अभिप्लवस्य द्वितीयेऽह्नि भर्गो यश इति प्राग्विषुवतो व्यत्यासꣳ स्यातामिति गौतमः ॥९॥**

इति । **विषुवतः प्राक्** त्रयोविंशतिरभिप्लवाः । तेषां प्रथमेऽह्नि **भर्गो द्वितीये यशः** पुनस्तृतीये भर्गश्चतुर्थे यश इत्येवं व्यत्यस्येत् ॥९॥

**ऊर्ध्वं च त्रिष्वभिप्लवेषु ॥१०॥**

विषुवत **ऊर्ध्वमपि त्रिष्वभिप्लवेषु** भर्गो यदा इति व्यत्यस्येत् ॥१०॥

**यशो भर्ग इति परेषु ॥११॥**

ततः **परेषु** अष्टममासप्रभृति **यशो भर्ग** इत्यस्य व्यत्यासं स्यात् । एवं गौतममतम् ॥११॥

मतान्तरमाह—

**सकृद्द्विर्वा यशः पुरस्तात्तथोपरिष्टाद् भर्ग इतरेष्वपरम् ॥१२॥**

इति । विषुवतः **पुरस्तात् सकृद् द्विर्वा यशः** स्याद् । विषुवत **उपरिष्टादपि सकृद् द्विर्वा यशः** स्यात् । अन्यत्र सर्वत्र **भर्ग** एव स्यात् ॥१२॥

मतान्तरमाह—

**भर्गः पूर्वस्मिन् पक्षसि यश उत्तरस्मिन्नित्यपरम् ॥१३॥**

---

1. $My^{1-2,4}$ $V^2$ T. विषयत्वं for विषयं; P $My^{1-3}$ om. न; T. ⁰शेषवशात् for ⁰शेषात्
3. $V^2$ $My^1$ कथम् for अथ
5. $V^{1-2}$ $My^1$ C ⁰भेदेन for ⁰भेदान्
8. P C $My^3$ om. त्रयो
16. $My^2$ om. विषुवत उप⁰ .... यशः स्यात् (L. 18)

इति । स्पष्टम् ॥१३॥

अथाभिप्लवस्य चतुर्थेऽहनि वीङ्कं शुद्धाशुद्धीयं वेति कल्पकारः । तत्राह—

**एताभ्यामुक्ते वीङ्कशुद्धाशुद्धीये ॥१४॥**

इति । भर्गयशोन्यायस्तत्राप्यनुसंधेय इत्यर्थः ॥१४॥

**विषुवत ऊर्ध्वं वीङ्कमेव स्यादिति धानंजप्यः ॥१५॥**

गतम् ॥१५॥

अथाभिप्लवस्य पञ्चमेऽहनि कल्पकारः—अर्वा सोम द्युमत्तम (सा. ९९४-६) **इति गायत्रं च यण्वं चापत्यं सन्तनि शाक्वरवर्णं तान्युत्तरेष्वभिप्लवेषु ॥** (आ. क. १.६.३) इति । तस्यायमर्थः । प्रथमेऽभिप्लवे गायत्रादूर्ध्वं यण्वमुत्तरेषु द्वितीयादिषु अभिप्लवेषु यण्वस्थाने अपत्यादयः क्रमेण स्युरिति । तत्र [अयं श्लोकः]

प्रथमो यण्वयुक्तः स्याद् ।
द्वितीयोऽपत्ययुग्भवेत् ।
तृतीयः संतनिस्थानम्
तुर्यः शाक्वरवर्णयुक् ॥ [इति]

तत्र सूत्रकार आह—

**पञ्चमेऽहनि यदहर्ग्रामेगेयꣳसन्तनि स्यान्मानवात् पूर्वं वात्रꣳ स्यात् ॥१६॥**

इति । **यदहरिति** । यदा तृतीयेऽभिप्लवे पञ्चमेऽहनि **ग्रामेगेयं सन्तनि स्यात्**

---

4. P. द्वयोः, My[2] न्यायशः V[1] LC द्वायः for न्यायः

6. T. My[4] V[2] My[1] om. गतम्

9. PC My[3] om. प्रथमेऽभिप्लवे

10. V[2] T. My[4] द्वितीयतृतीयचतुर्थेषु for द्वितीयादिषु;

T. अपत्यं सन्तनि शाक्वरवर्णमिति क्रमेणस्यात् for अपत्यादयः ··· स्युः

14. T. V[2] My[4] तुरीयः, P. चतुर्थं for तुर्यः

तदा बृहत्यां **मानवात् पूर्वं वाभ्रं स्यात्** । अन्यथा सन्तनिमानवयोः तुल्यान्तयोः संनिपाते जामिदोषः स्यात् । तथा च वक्ष्यति—**सर्वेषां तुल्यान्तसंनिपाते जामी** (द्रा. श्रौ. १८.१.८) ति । ननु एवमनुपमपि पूर्वं स्यात् । न केवलं वाभ्रम् । नैवम् । **ऐडेन बृहतीमारभन्ते** (तां. ब्रा. ७.३.१४) इति प्रकृतशास्त्रोक्तसंपत्तये वाभ्रेणैव बृहत्यारम्भः । तस्यैडानिधनत्वादिति । अत्र यण्वादिसामचतुष्टयं संतनिगुणयोगात् संतनीति व्यपदेष्टुं शक्यम् । तत्रैष **स्य धारया सुत** (सा. ५८४) इत्यत्रोत्पन्नस्य संतनिनः परिग्रहार्थं **ग्रामेगेयम्** इति विशेषणं विस्पष्टार्थम् ॥१६॥

अथाभिप्लवस्य षष्ठेऽहनि कल्पकारः—**इन्द्रायेन्दो मरुत्वत** (सा. १०७६-८) **इति गायत्रं चाश्वसूक्तं च संकृदिषोवृधीयं कुर्यात्** । **मृज्यमानः सुहस्त्ये** (सा. १०७९-८०) **त्यैडं चौक्ष्णोरध्रं त्रिणिधनमायास्यं च सकृत् समन्तं कुर्यात्** (आ. क. १.७.३) इति । प्रतिमासं सकृत् सकृदित्यर्थः । कदा पुनस्तदिति चेत् । अत आह—

**इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये षष्ठे ॥१७॥**

इति । **षष्ठेऽहनि इषोवृधीयसमन्ते पृष्ठ्यानन्तर्ये** सति कुर्यात् । पृष्ठ्यषडहात् पूर्वस्मिन्नभिप्लव इत्यर्थः । एवं तावत् यण्वादिसंतनिभेदात् सामान्तराणां केषांचिद्भेदाच्चत्वारोऽभिप्लवाः परस्परं भिन्नाः । तत्र चतुर्थो यौक्ताश्वयशः शुद्धाशुद्धीय शाक्वरवर्णेषोवृधीयसमन्तैः षड्भिः सामभिः प्रथमादभिप्लवाद् भिद्यते । प्रथमश्च ह्राविष्मतभर्गवीङ्कयण्वैश्चतुर्भिस्तस्माद् भिद्यते ॥१७॥

एवं मध्यमावाह । तत्र पूर्वस्मिन् पक्षसि षष्ठे मासे त्रिष्वेवाभिप्लवेषु कर्तव्येषु सत्सु एकोऽभिप्लवो लोपनीयः । पुनः कोऽसाविति चेत् । अत आह—

**पूर्वस्मिन् पक्षसि त्रिषु चतुर्थोऽभिप्लवो लुप्येत ॥१८॥**

इति **अन्ताल्लोपो वृद्धिर्वेति** न्यायात् ॥१८॥

---

4. P. आरभेत for आरभन्ते
   P V[1] °शास्त्रार्थ° for °शास्त्रो°

19. My[2] वक्तव्येषु for कर्तव्येषु

**एत एवावृत्ता ऊर्ध्वं विषुवतोऽभिप्लवाः ॥१९॥**

**एत एव** चत्वारोऽभिप्लवा उत्तरस्मिन् पक्षस्यावृत्ताः स्युः ॥१९॥ कथम् । प्रथमः शाक्वरवर्णयुक्तः स्याद् द्वितीयः संतनियुक्तः स्यात् तृतीयोऽथयुक्तश्चतुर्थो यण्वयुक्त इति ।

**तेषां प्रतिलोममहान्युपेयुः ॥२०॥**

तेषामभिप्लवानामहानि अपि **प्रतिलोमानि** कुर्युः । न केवलं तेनैवेति ॥२०॥

**पृष्ठ्यस्वरसाम्नां च ॥२१॥**

**प्रतिलोममहान्युपेयुरित्यनुवर्तते** ॥२१॥

**दशरात्रसमीपे त्रिषु चतुर्णामावृत्तानां प्रथमो लुप्येतेति धानंजय्यः ॥२२॥**

**दशरात्रसमीपे** द्वादशे मास इत्यर्थः । तत्र **त्रिष्वेवाभिप्लवेषु** आवृत्तेषु कर्तव्येषु **प्रथमः** शाक्वरवर्णयुक्तो **लुप्येत** ॥२२॥

**उत्तम इषोवृधीयसमन्ते स्यातामिति ॥२३॥**

**उत्तमे** यण्वयुक्ते **इषोवृधीयसमन्ते स्यातामिति** धानंजय्यः ॥२३॥

**विपरीतमेतच्छाण्डिल्यायनस्य ॥२४॥**

स्पष्टम् ॥२४॥

**विषुवतसमीपे च त्रिषु ॥२५॥**

**च**कारो मतद्वयाकर्षणार्थः । **विषुवत्समीपे** सप्तमे मासे **च** त्रिष्वेवाभिप्लवेषु कर्तव्येषु मतभेदेन प्रथम उत्तमो वाभिप्लवो लुप्यत इत्यर्थः ॥२५॥

**अभाव इषोवृधीयसमन्तयोः ॥२६॥**

**सकृदिषोवृधीयं कुर्यादि** (आ. क. १.७.३) ति वचनात् प्रथमे एव मासे सकृत् करणम् । नात्रेति । स्वमतमेतत् ॥२६॥

---

18. T. My[4] My[2] विषुवतः for विषुवत्°

22. P. नान्यत्र for नात्र; T. My[1] मतम् for स्वमतम्

**भावस्त्वाचार्याणां भावस्त्वाचार्याणाम् ॥२७॥**

प्रतिमासं **भावः** स्यात् । प्रयोगः स्यादिषोवृधीयसमन्तयोरिति **आचार्याः** ॥२७॥

इति द्राह्यायणश्रौतसूत्रे सप्तमे पटले चतुर्थः खण्डः ॥४॥

इति च्छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
सप्तमे पटले स्पष्टं षोडश्यादि निरूपितम् ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे सप्तमः पटलः समाप्तः ॥७॥**

4. My[2] दीपेऽस्मिन् धन्विना कृते for दीपे धन्विविनिर्मिते

अष्टमः पटलः

## प्रथमः खण्डः

**अथातो गवामयनविकल्पाः ॥१॥**

वक्ष्यन्ते इति शेषः ॥१॥

**सर्वं ज्योतिष्टोमेनैके ॥२॥**

कृत्स्नमपि गवामयनं एकेनैव ज्योतिष्टोमेन पुनःपुनरभ्यस्तेन कार्यमित्येके ॥२॥

**अतिरात्रचतुर्विंशनवाहव्रतातिरात्रा वा यथास्थानं स्युः । शेषो ज्योतिष्टोमेन ॥३॥**

अतिरात्रः । चतुर्विंशं द्वितीयमहः । अभिजित्त्रयः स्वरसामानो विषुवान् पुनश्चावृत्तास्त्रयः स्वरसामानो विश्वजिदिति नवाहः । व्रतं महाव्रतम् । अतिरात्रः । एतानि त्रयोदशाहानि यथास्थानं स्युः । अन्यत् सर्वं ज्योतिष्टोम इति ॥३॥

**अत्र वा गो आयुषी दशरात्रमित्युपाहरेत् स संवत्सरप्रबर्हः शङ्खाहतमिति च ॥४॥**

अत्रैव कल्पे गो आयुषी दशरात्रं चावयेत् । तस्य संवत्सरप्रबर्ह इति शाखान्तरे संज्ञा । शङ्खाहतमिति च ॥४॥

**नवाहोभिर्वयं कल्पयामो यथैतद्ब्राह्मणम् ॥५॥**

पृष्ठ्याभिप्लवादीनां नानाभूतैरहोभिर्वयं कल्पयामः । यथैतत् पञ्चविंशब्राह्मणमधीमह इति ॥५॥

---

3. P. trans. अथ पृष्ठ्ये ··· उदीरितम् पटल 10 ख° 4 before अथातो ···

10. V[1] C. om. अतिरात्र ··· ज्योतिष्टोम इति ; (L. 12) L. My[2,4] om. अतिरात्रः । V[1] ins. अतिरात्रात् after अभिजित् and om. त्रयः

11. P. om. अतिरात्रः; My[4] अतिरात्री प्रायणीयोदनीयौ for अतिरात्रः

13. V[2] My[1,4] शाखा° for शंख; V[2] My[1,4] संवत्सरं for संवत्सर°;

15. My[1-2] V[2] संवत्सरं for संवत्सर° My[4] T. My[1] प्रवहः, CL. प्रवहर्षः for °प्रबर्हः;

16. V[2] My[1] शाखा° for शंख°

18. F C My[2-3] L. T. कथं for यथा

**अतिरात्रमुभयसामानं कुर्वन्नान्धीगवादुत्तरे औदलबृहती ॥६॥**

अत्र शाखान्तरे **अतिरात्र उभयसामा स्यादिति** ब्राह्मणम् । तस्य क्लृप्तिरनेनोच्यते—**उभयसामानं** बृहद्रथन्तरसामानं कर्तुमिच्छन्नान्धीगवस्योपरिष्टादौदल **बृहती** कुर्याद् इति ॥६॥

**षोडशिमाꣳश्चेदौदलस्थाने नानदम् ॥७॥**

यदि **षोडशिमा**नुभयसामा चातिरात्रः स्यात्तदानी**मौदलस्थाने नानदं** कुर्यात् ॥७॥

ननु एवमार्भवे पवमाने सप्तदशस्तोमातिरेकः स्यात् । अधिकसामा वा स्यादत आह—

**पूर्वो बृहतः सामतृचः ॥८॥**

इति । यदा तृचे सामत्रयमेकैकस्यामृचि पृथगानन्तर्येण गीयते तदा तत् **सामतृच** इत्युच्यते । बृहतः पूर्वः सामतृचः कार्यः । तद्यथा—**पुरोजिती वो अन्धस** (सा. ६९७-९) **इति श्यावश्वं प्रथमायाम् । अन्धीगवं द्वितीयायाम् । औदलं तृतीयायाम् । बृहत् तिसृषु** (आ. क. ५.१२.१) इति । एवं पूर्वाणि त्रीणि सामानि एकर्चानि कुर्यादित्यर्थः ॥८॥

**चतुर्विंशमरथन्तरमेके ॥९॥**

**चतुर्विंशं** द्वितीयमहस्तद्रथन्तररहित**मेके** ॥९॥

**रथन्तरपृष्ठं वा बृहदनुष्टुप्कम् ॥१०॥**

**अथवा** चतुर्विंशं **रथन्तपृष्ठं** कृत्वा **बृहदनुष्टुप्कं** कुर्यात् । **पुरोजिती वो अन्धस** (सा. ६९७-९) इत्यनुष्टुभि बृहत्साम यस्य तद् **बृहदनुष्टुप्क**मिति । तत्र क्रौञ्चस्थाने बृहत् कार्यम् । न पुनरधिकम् । स्तोमविरोधात् ॥१०॥

---

1. V[1] CL. उभयतः for उभय°
2. P. करणेन for °रनेन; My[1] L. V[2] T. एतेन for अनेन
4. V[2] My[1-4] T. after कुर्यात् add :—औदलस्य क्लृप्तिः स्तोमसंख्याविधानाम । अविरोधं च दर्शयिष्यति
15. My[2] om. अर्थः

अथ चतुर्विंशमहरग्निष्टोम उक्थ्योवेति ब्राह्मणे (तां. ब्रा. ४.२.११-१३) विकल्पितम् । तत्राग्निष्टोमपक्षे यथास्तोत्रीयाभिरन्तर्भावितोक्थ्यमहः स्यात् । तथा दर्शयति—

**अग्निष्टोमसंस्थं चेत् त्रिंशान्याज्यानि षट्त्रिंशानि पृष्ठानि ॥११॥**

उक्थ्यपक्षे त्रीणि शतानि षष्टिश्च स्तोत्रीया भवन्ति । अग्निष्टोमेऽपि तथैव ताः संपादयेत् । कथम् । त्रिंशान्याज्यानि स्युः । षट्त्रिंशानि पृष्ठानि स्युः । इतराणि चत्वारि चतुर्विंशान्येवेति ॥११॥

पुनरपि प्रकारचतुष्टयं चतुर्भिः सूत्रैराह—

**षट्त्रिंशानि वा होतृकसामानि ॥१२॥**

होतृकाः मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः । तेषामनुशंसनीयानि यानि सामानि पूर्वयोः सवनयोस्त्रीणि त्रीणि तानि **षट्त्रिंशानि** स्युः । इतराणि षट्चतुर्विंशान्येव ॥१२॥

**पृष्ठानां चाष्टाचत्वारिंशानि ॥१३॥**

होतृकसामानीत्यनुवर्तते । चतुर्णां **पृष्ठानां** मध्ये यानि होतृकसामानि तान्यष्टाचत्वारिंशानि स्युः । इतराणि नव स्तोत्राणि चतुर्विंशान्येव ॥१३॥

**सर्वाणि वा त्रिंशानि स्तोत्राणि ॥१४॥**

**सर्वाणि** वा द्वादश (? त्रिंशानि) **स्तोत्राणि** ॥१४॥

**व्यत्यासं वा त्रिणवत्रयस्त्रिंशौ ॥१५॥**

द्वादशस्वपि स्तोत्रेषु आदित आरभ्य **त्रिणवत्रयस्त्रिंशौ व्यत्यासं** स्याताम् ॥१५॥

**एतदन्तरुक्थ्यम् ॥१६॥**

एतच्चतुर्विंशमहरग्निष्टोमसंस्थं यथोक्तैः **पञ्चभिः** प्रकारै**रन्तरुक्थ्यम्** । अन्तरुक्थ्यमन्तर्भावितोक्थ्यमित्याचक्षते ॥१६॥

---

7. My[1] अथ for कथं

11. एषां for तेषां My[1,4] P. C. LT. om. यानि

**अभिप्लवꣳस्वरसाम्नश्च ज्योतिष्टोमे तन्त्रे एके कल्पयन्ति ॥१७॥**

ज्योतिष्टोमिकान्येव सामानि गृहीत्वा तत्रैव विशेषाम्नाननिबन्धनं विकारं कुर्वन्त्यभिप्लवः स्वरसाम्नामिति । अभिप्लवस्य पृष्ठ्यः प्रकृतिः । षडहत्वसामान्यात् पूर्वेणोपदेशाच्चेति कल्पकारस्य पक्षः ॥१७॥

**तथा सताꣳशाट्यायनिनः षडहविभक्तीरनुकल्पयन्ति ॥१८॥**

**तथा सतां** ज्योतिष्टोमिकतन्त्राणामेव सतां केचित् **षडहविभक्तीरनुकल्पयन्ति** अग्निविभक्तिरिन्द्रविभक्तिः स्वरविभक्तिर्निधनविभक्तिरिडाविभक्तिरित्येवं विभक्तिपञ्चकं पृष्ठ्ये षडहे ब्राह्मणे (तां. ब्रा. १०-७-११) क्लृप्तम् ॥१८॥

**द्विविधमभिप्लवमेके ॥१९॥**

राथन्तरी बार्हती च द्वे विधे यस्य स द्विविधः ॥१९॥

तमेव दर्शयति—

**उपवत्यग्रियवती च व्यत्यासं प्रतिपदौ राथन्तरबार्हतानि चाज्यानि ॥२०॥**

**उपास्मै गायता नर** (सा. ६५१-३) इति **उपवती** राथन्तरी । **पवस्व वाचो अग्रिय** (सा. ७७५-७) इत्यग्रियवती बार्हती । एते बहिष्पवमानप्रतिपदौ व्यत्यासं स्याताम् । तथा राथन्तराण्यग्न **आयाहि वीतये** (सा. ६६०) । इत्यादीन्याज्यानि **अग्निं दूतं वृणीमहे** (सा. ७९०) इत्यादीनि च बार्हतानि व्यत्यासं स्युः ॥२०॥

---

3. P. ⁰ष्टोमकानि for ⁰ष्टोमिकानि; T. ऋक्सामानि for सामानि; T. ⁰निबद्धं for निबन्धनं

5. V[1] CL. ⁰कारः for ⁰कारस्य पक्षः

8. P. एकं विमक्तिपञ्चमं for एवं विभक्तिपञ्चकं (L. 9)

11. V[2] My[4] T. My[1] बृहद्रथन्तरनिमित्तकद्विविधाद्वयस्य for राथन्तरी ··· यस्य

15. P. अग्न आयाहि वीतयेऽग्निं दूतं वृणीमहे इत्येतानि for उपास्मै ···· बार्हतानि (L. 18)

**आज्यप्रतिपदौ वा ॥२१॥**

**आज्यप्रतिपद** इति षष्ठीसमासोऽयम् । आज्यानां याः प्रतिपदः प्रथमान्याज्यस्तोत्राणि तानि **वा** व्यत्यासं राथन्तरबार्हतानि स्युः । उत्तराणि त्रीणि आज्यानि कल्पोक्तानि षाडहिकान्येव स्युः । **आज्यप्रतिपदा वेति** क्वचित् पाठः । आज्यानि च प्रतिपदश्चेत्याज्यप्रतिपत् । समाहारद्वन्द्वे तृतीयैकवचनम् । आज्यप्रतिपदा वा कल्पयेत् इति सूत्रशेषः । अर्थस्तु पूर्वोक्त एव ॥२१॥

अथो हव विधस्य साधारणमाह—

**औशनकावे अन्त्ये ॥२२॥**

**औशनकावे** पवमानयोरन्त्यसामनी षट्स्वपि दिवसेषु स्याताम् ॥२२॥

**पार्थयामे वा बार्हतानाम् ॥२३॥**

अथवा बृहत्पृष्ठानामह्नां **पार्थयामे** सामनी पवमानयोरन्त्ये स्याताम् ॥२३॥

**स्वयोन्यभीवर्तो रथन्तरपृष्ठेषु ॥२४॥**

**तं वो दस्ममृतीषहम्** (सा. ६८५-६) इत्येतासु स्वयोनिषु **अभीवर्तः** स्यात् ॥२४॥

**श्यैतर्क्षु बृहत्पृष्ठेषु ॥२५॥**

**अभि प्र वः सुराधसम्** (सा. ८११-२) इत्येतासु ॥२५॥

---

3. V[2] My[1,4] T. after स्तोत्राणि ins. इत्यर्थः; V[2] My[1] T. om. व्यत्यासं V[2] My[1] इतराणि for उत्तराणि त्रीणि My[4] om. त्रीणि आज्यानि

4. V[2] My[1,4] om. षाडहिकानि; V[2] T. My[1,4] केचिदाज्यप्रतिपदा वेति तृतीयान्तं पठन्ति । तदानीं कल्पयेदित्यध्याहारः । जातावेकवचनम् । पूर्वोक्त एवार्थः for आज्यप्रतिपदा ··· पूर्वोक्त एव (L. 6)

7. V[2] T. My[1,4] om. अथो[0] ··· आह

11. My[2,4] पवमानान्त्ये for पवमानयोरन्त्ये; My[1,4] V[2] om. सामनी My[4] om. स्याताम्

एवं विधाद्वयमुक्तम् । अथ पृष्ठ्याषडहमधिकृत्याह—

**व्यूढं पृष्ठ्यमेके ॥२६॥**

इति । कल्पकारस्तु समूढमेवेच्छति । छन्दोमसंयोगाभावात् । छन्दोमैरपि सहैव व्यूढस्वरूपस्य ब्राह्मणे क्लृप्तत्वाच्च ॥२६॥

**तस्य समूढात् प्रथमस्याह्नो बहिष्पवमानम् ॥२७॥**

**अस्य प्रत्नामनुद्युतम्** (सा. ७५५-६३) इति नवर्चस्य बहिष्पवमानस्य नवाहयोगकारितत्वाच्छन्दोमैर्विच्छिन्ने व्यूढेषडहे समूढप्रयुक्तमेव **बहिष्पवमानं** युक्तम् ॥२७॥

**समूढमेके रथन्तरबृहत्पृष्ठम् ॥२८॥**

स्पष्टम् ॥२८॥

**नानापृष्ठे वोत्तरे चतुरहे रथन्तरबृहती व्यत्यासं पवमानेषु ॥२९॥**

अथवा बृहद्रथन्तरवैरूपवैराजशाक्वररैवतैर्नानाभूतपृष्ठे षडहे व्यूढे समूढे च उभयोरप्युत्तरस्मिंश्चतुरहे **पवमानेषु रथन्तरबृहती** व्यत्यासं स्याताम् ॥२९॥

कथमित्याह—

**बृहतीषु रथन्तरमनुष्टुप्सु बृहत् ॥३०॥**

तृतीयपञ्चमयोरह्नोर्माध्यंदिने पवमाने **बृहतीषु** ऋक्षु **रथन्तरं** चतुर्थषष्ठयोरह्नोरार्भवे पवमाने **अनुष्टुप्सु** बृहदित्यर्थः ॥३०॥

---

1. My[2] विधान० for विधा०

3. P V[1] C ०कारा: for कार:; P V[1] C इच्छन्ति for इच्छति; T. असमूढम् for समूढम्; T. छन्द:० for छन्दो० T. My[4] My[1] तै: for छन्दोमै:

4. T. My[4] om. व्यूढस्वरूपस्य; V[1] CL My[2] व्यूह० for व्यूढ०

5. My[2] समूढवत् for समूढात्

7. My[4] T. V[2] ०कारित्वात् for ०कारितत्वात्; T. V[2] छन्दामानामभावाच्च व्यूढेऽपि for छन्दोमैर्विच्छिन्ने व्यूढे; V[2] षडह० for समूढ०

17. V[2] T. My[4] om. पवमाने

**ते द्वितीये ॥३१॥**

ते बृहद्रथन्तरे तत्र **द्वितीये** साम्नी अधिके स्याताम् ॥३१॥

**बृहदुत्तमꣳसमूढे ॥३२॥**

**समूढे** षडहे **बृहत्**साम द्वितीयं स्यात् । किंतु अनुष्टुभि क्रियमाणानां साम्ना**मुत्तमꣳ**स्यात् । **आगन्तुनामन्ते निवेश** इति न्यायात् । ननु च व्यूढेऽपि तुल्योऽयं न्यायो रथन्तरे च । नैवम् । व्यूढपक्षे पवमानान्त्यस्य साम्नो निधनवत्वात् तेन सह बृहतः संनिपाते जामिदोषः स्यात् । समूढे तु स्वरं पवमानान्त्यमिति न दोषः । तथा रथन्तरस्योत्तमत्वेऽपि आष्कारणिधनेन संनिपाताज्जामिदोषः । तेन द्वितीयमेव रथन्तरं कार्यम् ॥३२॥

**आष्कारणिधनात् पूर्वं कौल्मलबर्हिषम् ॥३३॥**

तृतीयेऽह्नि बृहत्यां रथन्तरागमे क्रियमाणे **कौल्मलबर्हिष**मप्यागमयितव्यमित्यर्थः ॥३३॥

**आन्धीगवाच्छ्यावाश्वम् ॥३४॥**

तथा चतुर्थेऽह्नि बृहदागमेऽपि **श्यावाश्व**मागमयितव्यम् **आन्धीगवात्** पूर्वमिति ॥३४॥

**उपोत्तमं समूढे ॥३५॥**

**समूढे** बृहदुत्तमं कार्यमित्युक्तम् । तस्योत्तमस्य बृहतः समीपे ततः पूर्वं श्यावाश्वमित्यर्थः । अन्यथा नानदश्यावाश्वयोः स्वारत्वाज्जामिदोषः ॥३५॥

**इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले प्रथमः खण्डः ॥१॥**

---

4. P ⁰साम्नः for साम; My$^{1}$ किं च for किंतु
5. My$^{1}$ after निवेशः adds : स्यात्
14. P C V$^{1}$ My$^{2-3}$ om. तथा My$^{1}$ T. My$^{4}$ ⁰गवस्य पुरस्तात् for ⁰गवात् पूर्वम्
17. V$^{1}$ CL बृहत् for बृहतः
18. V$^{1}$ My$^{1\cdot 2}$ P. after दोषः add :—इति मानवान्तः
19. V$^{1}$ My$^{1\cdot 2}$ P चतुर्थस्य पञ्चमः for अष्टमे पटले प्रथमः

## द्वितीयः खण्डः

**आनूपोपक्रमा बृहती पञ्चमे ॥१॥**

**पञ्चमे**ऽह्नि बृहत्यामानूपोपक्रमः कार्यः । तत उत्तरं रथन्तरम् । **ते द्वितीये** इति वचनात् ॥१॥

तदनन्तरं मानवे प्राप्ते आह—

**मानवात् पूर्वं हारायणम् ॥२॥**

इति । जामिदोषपरिहारार्थं **पूर्वम्** इत्युक्तम् ॥२॥

**मधुश्चुन्निधनादाकूपारम् ॥३॥**

षष्ठेऽहनि **सोमाः पवन्त इन्दवः** (सा. ११०१-३) इत्यनुष्टुभि **मधुश्चुन्निधनात् पूर्वम् आकूपारम्** आगमयितव्यम् ॥३॥

**उपोत्तमं समूढे ॥४॥**

व्याख्यातमेतत् ॥४॥

ननु एवमधिकसामद्वयागमे स्तोत्रीयाषट्कमतिरिक्तमिति स्तोमातिरेकः स्यात् । अत आह—

**बृहतः पूर्वे त्रय एकर्चाः ॥५॥**

इति । बृहतः पूर्वाणि त्रीणि सामान्येकर्चानि कुर्यात् । तत्र स्तोत्रीयाषट्कं लुप्तम् । न स्तोमविरोधः ॥५॥

**रथन्तरादुत्तरे ॥६॥**

त्रय इत्यनुवर्तते । **रथन्तरादुत्तरे** त्रय एकर्चाः कार्याः ॥६॥

**षष्ठे च बृहतो व्यूढे ॥७॥**

**व्यूढे** षडहे **षष्ठे च** अहनि **बृहत** उत्तरे त्रय एकर्चाः स्युः । न पूर्वे ॥७॥

ननु च तृतीयेऽहनि बृहत्यां षट् सामानि । तत्र त्रयाणामेकैकर्चत्वविधानादितरेषु त्रिषु तृचेषु क्रियमाणेषु पुनरपि स्तोमातिरेकः स्यात् । अत आह—

---

3. My[1-2] V[2] before पञ्चमे add : रथन्तरागमे क्रियमाणे

23. L. om. त्रिषु

**नित्यौ च शशकर्णौ तृतीये ॥८॥**

इति । **तृतीयेऽहनि शशकर्णौ च नित्यौ** कार्यौ । शशकर्ण [वत्] तृचैकर्च्चक्लृप्तिः शशकर्ण इत्युच्यते । यथा शशकर्णस्य मूलमग्रं च तनु [नी] भवतः । मध्यं स्थूलम् । एवं बृहत्यां सामजातस्यादितोऽन्ततश्च द्वावेकर्च्चौ तनू भवतः । मध्ये तृचे क्रियमाणं साम स्थूलं भवति । एवं क्लृप्ता बृहती शशकर्णक्लृप्तेति बहुशो व्यपदिश्यते । तेनात्र बृहत्यां पुनरप्यादितोऽन्ततश्च द्वावेकर्च्चौ कार्यौ । तदेवं पञ्चैकर्चाः । रथन्तरात् पूर्वमेकः परस्ताच्चत्वारः । रथन्तरमेकं मध्ये तृचे कार्यमिति । **शशकर्णा**विति द्विवचनं किमर्थम् । उच्यते कल्पकारेण तृतीयेऽहनि अभीवर्तकालेये अधिके क्लृप्ते । तद्यथा—**तृतीयस्याह्नोऽभि सोमास आयव** (सा. ८५६-८) **इति पौरुमद्गं प्रथमायाम् तस्यामेवाभीवर्तः । कालेयं द्वितीयायाम् । गौतमं तृतीयायाम् । समानमितरम्** (आ. क. १.१०.१) इति । तदानीमपि शशकर्णौ नित्य इत्येवमर्थं द्विवचनमिति ॥८॥

**पृष्ठ्येऽभीवर्तकालेये बृहतीष्वनुकल्पयेदिति गौतमः ॥९॥**

---

2. V² My¹ T. My⁴ बृहत्यां ब्राह्मणविहितसामचतुष्टयपक्षे प्रथमोत्तमे सामनी शशकर्णौ शशकर्णस्य मुलाग्रसदृशौ । एकर्चावित्यर्थः । तद्वदत्रापि तौ नित्यावेकर्चाविवेत्यर्थः । शशकर्णसादृश्यात् शशकर्णशब्दः for शशकर्णौ ··· इत्युच्यते (L. 3); V² My¹ T. before तृतीये add : यथा

5. V² My¹ T. My⁴ क्लृप्तानि एकर्चतृचस्थानानि शशकर्ण इत्युच्यते । तथा च निदानकारः—तृचप्रथमावयवमेकर्चं कृत्वा तस्मिन्नेव तृचे द्वे तृचस्थे (My⁴ सामनी for तृचस्थे) मध्ये पुनरध्यास्यायां तत एकर्चान्तं शशकर्णक्लृप्तां बृहतीत्याचक्षत इति for क्लृप्ता ··· कार्यौ (L. 6).

7. P V¹ C My²·³ एकं ··· चत्वारि for एकः ··· चत्वारः; V² My¹ T. My⁴ om. रथन्तरमेकं ··· द्विवचनमिति ॥ (L. 12)

**यत् सामावसृजेयुरव स्वर्गाल्लोकात् पद्ये रन्** (तां. ब्रा. ४.३.६) इति गवामयने प्रत्यहमकरणं दोषश्रुतेरभीवर्तस्तावन्नित्यः । कालेयमपि तृतीयसवनसंतानार्थतया श्रवणान्नित्यमेवेति मन्यते ॥९॥

**नेति धानंजय्यः ॥१०॥**

अभीवर्तस्तावत् पृष्ट्ये षडहे षडहविभक्तिनाशप्रसङ्गात् ब्रह्मसामत्वेन न कर्तव्यः । नापि पवमाने । श्रुत्यभावात् ॥१०॥

**व्यूहन्नानुकल्पयेदिति शाण्डिल्यायनः ॥११॥**

व्यूहन्निति शत्रन्तम् । व्यूहन् पृष्ठ्यं कुर्वन्नभीवर्तकालेये न कुर्यात् । प्रत्यक्षब्राह्मणविरोधात् । समूढे तु कुर्यादेव ॥११॥

एवं पृष्ठ्याभिप्लवयोर्विशेषा उक्ताः । अथाभिजित्प्रभृतिषु विशेषमाह—

**एकविंशत्यहकारिण उपरिष्टादभिजितः पृष्ठ्यमुपयन्ति प्राक् च विश्वजितः स्वरसाम्नश्चोक्थ्यान् ॥१२॥**

ये मध्ये गवामयनमेकविंशतिरात्रं सत्रं कुर्म इति मन्वानास्तत्सदृशमभिजिदादिकं कल्पयन्ति त **एकविंशत्यहकारिणः** । ते अभिजिदादीनां क्रमान्यथाकरणं संस्थान्तरं च कल्पयन्तीत्यर्थः । ननु चाभिद्विश्वजितौ एकविंशातिरात्रे न स्तः ।

---

2. $V^{1}$ after नित्यः adds : इत्यर्थः; T. $My^{1}$ निवृत्यर्थः for नित्यः
T. $My^{4}$ after अपि add : ब्राह्मणे; $My^{1}$ संतानार्थं तथा for संतानार्थतया;

3. T. $My^{4}$ उत्पन्नत्वात् for श्रवणात्
$V^{2}$ $My^{1}$ om. मन्यते; $V^{1}$ CL मन्यन्ते for मन्यते

5. $V^{1}$ L C. om. तावत् $V^{2}$ T. $My^{4}$ om. षडह . . . प्रसङ्गात्

6. T. $My^{4}$ $V^{2}$ after कर्तव्यः add :—प्रत्यहं पृथगेव ब्रह्मसामभिः षडहविभक्तिक्लृप्ते

11. $V^{1\text{-}2}$ $^{0}$अहः$^{0}$ for $^{0}$अह$^{0}$

14. $V^{2}$ T. $My^{4}$ काया$^{0}$ for क्रमा$^{0}$

15. P $^{0}$अहकारिणे for $^{0}$अतिरात्रे

तत्स्थानेऽतिरात्रयोः पाठादिति कथमेकविंशत्यहकारित्वम् । सत्यम् । तावन्मात्रमेव भिद्यते । अन्यत्सर्वं तद्वदेव भवतीत्येकविंशत्यहकारित्वमुक्तम् ॥१२॥

**अभिजिद्विश्वजितौ व्यतिहरन्त्येके ॥१३॥**

स्पष्टम् ॥१३॥

अथ रथन्तरपृष्ठोऽभिजित्स्यात् । तदा विशेषमाह—

**अभिजितो रथन्तरपृष्ठस्य राथन्तरी प्रतिपद् होतुराज्यं च ॥१४॥**

स्पष्टम् ॥१४॥

**अभिवायुमित्यौशनम् ॥१५॥**

**अभिवायुम्** (सा. १४२६-८) इति पार्थं कल्पकारोक्तमपोह्यौशनमन्त्यं कार्यम् ॥१५॥

**ज्योतिष्टोमं परम् ॥१६॥**

औशनात् परं पृष्ठादिकं यत्तत्सर्वं ज्योतिष्टोमिकमेव कुर्यात् ॥१६॥

तत्रापवादमाह—

**सुज्ञानमुष्णिहि ॥१७॥**

इति । पौष्कले प्राप्ते इदं वचनम् ॥१७॥

यदि ज्योतिष्टोमिकं प्रवर्तते तदा **पुरोजिती वो अन्धस** (सा. ६९७-९) इति श्यावाश्वान्धीगवयोरेव ज्योतिष्टोमिकत्वात् अभिजिति आर्भवस्य त्रिणवस्तोमत्वात् सामान्तराभावे स्तोमसंपत्तिर्न स्यात् । अत आह—

**श्यावाश्वात् पूर्वे गौरीवितबृहती ॥१८॥**

इति । गौरीवितबृहतोरधिकयोरनुष्टुभि निवेशः कार्यः । सफसुज्ञाने च तृचस्थे

---

2. My[1] T. My[4] om. भवति

13. V[1] P. om. यत्तत्सर्वं V[2] My[1] ज्योतिष्टोमकं My[2] ज्योतिष्टोमिक for ज्योतिष्टोमिकं

18. T. My[4] om. अभिजित्यार्भवस्य त्रिणवस्तोमत्वात्

21. P My[2-3] C. अविकृतयोः for अधिकयोः

**उष्णिक्ककुभोस्तृचैकर्चत्वमव्याघातेने** (द्रा. श्रौ. १६.३.२६) ति वचनात् । तेन त्रिणवस्तोमसंपत्तिरित्यर्थः ॥१८॥

अथ स्वरसामसु विशेषमाह--

**स्वयोनिनी रथन्तरबृहती स्वरसामस्वेके ॥१९॥**

इति । अत्र कल्पकारस्तु बृहद्रथन्तरयोः स्वयोनिव्यतिरेकेण स्तोत्रीयमकल्पयत् । **यज्जायथा अपूर्व्य** (सा. १४२९-३१) **इति रथन्तरम्** (आ. क. २-२४) **मत्स्यपायि ते महः** (सा. १४३२-४) **इति बृहत्** (आ. क. २.३.४) इति । **एके** तु स्वयोनिमेवेच्छन्तीति । **यज्जायथा अपूर्व्ये**त्यस्यां योनौ स्वरसंज्ञकानि चत्वारि सामानि भवन्ति तानि येषु ते स्वरसामानः इति ॥१९॥

अत्र कल्पकारस्तानि स्वराणि आर्भवेषु प्रत्यहं पृथगेवोपाकल्पयत् । सूत्रकारस्तु तेषां पृष्ठत्वमपीच्छन् तत्प्रकारं दर्शयति--

**स्वरपृष्ठाश्चेत् स्वरसामिकेषु पृष्ठस्तोत्रीयेषु यथास्वम् ॥२०॥**

इति । यदि स्वरसामानः **स्वरपृष्ठाश्चि**कीर्षितास्तदा स्वरसामसंबन्धिषु बृहद्रथन्तरपृष्ठस्तोत्रीयेषु कल्पकारोक्तेषु **यज्जायथा अपूर्व्य–मत्स्यपायि ते मह.** (सा. १४३२-३४) इति **प्रत्यस्मै पिपीषते** (सा. १४४०-२; आ. क. २.४.४) इत्येतेष्वेव स्वराणि पृष्ठानि कुर्यात् । **यथास्वमि**ति कोऽर्थः । यस्मिन्नहनि यत्स्वरमार्भवे लब्धं तस्मिन्नहनि तत्स्वरं पृष्ठं कुर्यात् ॥२०॥

तदानीं विशेषमाह--

---

8. $V^2$ $My^4$ स्वयोनौ for योनौ;

9. P C $My^3$ सन्ति for भवन्ति

10. $My^1$ $V^2$ T. $My^4$ अतिस्वाराण्यार्भवेषु कल्पकारेण क्लृप्तानि for अत्र . . . उपाकल्पयत्

13. T. $My^4$ स्युः for चिकीर्षिताः

14. $My^1$ T. $My^4$ $V^2$ om. कल्पकारोक्तेषु; P C कल्पोक्तेषु for कल्पकारोक्तेषु

**स्वराणि चार्भवान्त्यानि ॥२१॥**

इति । अत्र कल्पकारेणाप्यार्भवेष्वनुष्टुभि गौरीवितं तृचे कुर्यात् । तत्स्थाने सामतृचं वेति पक्षद्वयमुक्त्वा प्रथमे पक्षे ऐडं कावमन्त्यम् द्वितीये पक्षे स्वारं काव-मित्युक्तम् । तद्यथा **ऐडं कावमन्त्यं स्वारं यदि विकल्पयेदि** (आ. क. २.२.५) त्यादि । तत्र स्वरपृष्ठत्वपक्षे स्वराण्येवार्भवन्त्यानि स्युः । न पुनरैडानीत्यर्थः । स्वरपृष्ठत्व पक्ष एव कर्तव्यः ॥२१॥

विशेषमाह--

**द्वैगतगौतमयोः स्थाने रथन्तरम् ॥२२॥**

प्रथमोत्तमयोः स्वरसाम्नोर्माध्यंदिने पवमाने **द्वैगतगौतमयोः स्थाने रथन्तरं** कुर्यात् ॥२२॥

**अन्तरिक्षस्य गौतमम् ॥२३॥**

**अन्तरिक्षस्य** साम्नः स्थाने **गौतमम्** ॥२३॥

**स्वरस्य बृहद्द्वितीये ॥२४॥**

**द्वितीये** स्वरसाम्नि आर्भवे पवमाने **स्वरस्य** स्थाने **बृहत्** कुर्यात् ॥२४॥

**नित्यश्च सामतृचः ॥२५॥**

---

2. T. V[2] त्रिष्वप्यहस्सु आर्भवान्त्यानि स्वराण्यैडानि वा स्युरिति विकल्प उक्तः । स्वरपृष्ठत्वपक्षे नायं विकल्पः ! किंतु स्वराण्येवार्भवान्त्यानि स्युरिति for आर्भवेषु · · · ऐडानीत्यर्थः (L. 5)

9. V[2] T. My[4] after रथन्तरं add :—पृष्ठस्थानात् प्रच्युतमनुगृहीतं

12. T. My[4] after अन्तरिक्षस्य add :—उत्तमेऽहनि

14. T. My[4] पृष्ठस्थानात् प्रच्युतं for स्वरस्य स्थाने

15. V[2] T. My[4] before साम⁰ add : वैकल्पिकः;

द्वितीयेऽह्नि आर्भवे पवमाने कल्पकारोक्तः सामतृचोऽपि नित्य एव स्यात्। न वैकल्पिकः। आर्भवे पवमाने ऐडमावश्यकमिति तल्लाभार्थमित्यर्थः ॥२५॥

प्रथमद्वितीययोस्तु स्वरसाम्नोर्न सामतृचः कार्य इत्यभिप्रायेणाह—

**औदलत्वाष्ट्रीसाम्नोरुद्धारः ॥२६॥**

सामतृचान्त्ययोरौदलत्वष्ट्रिसाम्नोरुद्धारः कार्यः स्तोमसंपत्त्यर्थम्। तेन प्रथमेऽह्नि अनुष्टुभि गौरीवितगौतमयोस्तृचे करणम्। उत्तमेऽह्नि गौरीवितान्धीगवयोस्तृचे करणम्। अन्यथा स्तोमासंभवात् ॥२६॥

अथ विषुवति विशेषमाह—

**विषुवतो दिवैके प्रातरनुवाकमुपाकुर्वन्ति ॥२७॥**

तथाचाश्वलायनः—विषुवान् दिवाकीर्त्यमुदिते प्रातरनुवाकः (आ. श्रौ. ८.६.१२) इति ॥२७॥

**बहिरस्यैके बहिष्पवमानेन स्तुवते ॥२८॥**

अहीनबहिष्पवमानैः सदसि स्तुवीरन् प्रथमादह्नोऽन्यत्र। आद्यन्तयोस्तु सर्वेष्वि (द्रा. श्रौ. ४.१.१३-४) ति वचनात् सदसि बहिष्पवमानं प्राप्तं तदेके बहिरेवास्मिन्नहनि कुर्वन्तीत्यर्थः ॥२८॥

**अग्निरिन्द्रायोपास्मै पवस्व वाच इति स्तोत्रीयं शुङ्गाः ॥२९॥**

अग्निरिन्द्राय (सा. १८२५) उपास्मै (सा. ६५१) पवस्व वाचः (सा. ७७५)

---

1. T. My[4] V[2] after पवमाने add : यः
V[2] My[4] T. गौरीवितेन सह विकल्पित इत्यर्थः। किमर्थम्। आर्भवपवमानस्यैडसामसिध्यर्थम्। अन्यथा अप्रतिष्ठितं तृतीयसवनं स्यात् इति दोषश्रुतेः। प्रथमोत्तमयोः for नित्यः ··· प्रथम द्वितीययोः (L. 3)
6. T. My[4] V[2] My[1] before तृचे add : नित्यमेव; T. My[4] V[2] My[1] after गवयोः नित्यमेव
7. T. My[4] V[2] My[1] स्तोमो न संभवेत्। आर्भवान्तर्गतयोः स्वरयोरभावात् for स्तोमासंभवात्
10. V[2] विषुवति दिवाकीर्त्ये for विषुवान् दिवाकीर्त्यम्

इत्येतास्तिस्र ऋचः संभृत्य बहिष्पवमाने स्तोत्रीयं प्रतिपत्तृचं कुर्वन्ति शुङ्गा नाम शाखिनः ॥२९॥

**वात आवात्विति माषशरावयः ॥३०॥**

**माषशरावयो** नाम केचिच्छाखिनो वात आवत्विति तृचं स्तोत्रीयमाहुः ॥३०॥

**यज्ञायज्ञीयभासे व्यतिहरन्त्येके ॥३१॥**

विषुवति यज्ञायज्ञीयभासयोरन्योन्यस्थानव्यतिहारमेके ॥३१॥

**बण्महां असि सुर्य (सा० १७८८-९) इन्द्रमिद्देवतातये (सा० १५८७-८) श्रायन्त इव सूर्यम् (सा० १३१९-२०) इति महादिवाकीर्त्यस्य स्तोत्रीया विकल्पन्ते ।३२॥**

**विभ्राड् बृहत् पिबतु सोम्यम्** (सा. १४५३-५) इत्यनेन सह त्रयस्तृचाः प्रत्येकं विकल्पन्ते ॥३२॥

**इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले द्वितीयः खण्डः ॥२॥**

---

1. $V^{1-2}$ $My^2$ P C संहृत्य for संभृत्य

7. $V^1$ L. अन्योन्यं for अन्योन्य⁰

13. PCL $V^1$ इति चतुर्थस्य षष्ठः खण्डः for इति ... पटले द्वितीयः खण्डः

## तृतीयः खण्डः

**बृहत्पृष्ठश्चेदग्नियवती प्रतिपत् ॥१॥**

यदि **बृहत्पृष्ठो** विषुवान्स्यात् तदानीम**ग्नियवती प्रतिपत्** ॥१॥

**तृतीयात् साहस्रादाज्यानि नित्यैर्विकल्पन्ते ॥२॥**

साहस्रा नाम चत्वार एकाहा तेषां **तृतीयात् साहस्रात् आज्यानि** कल्पकारोक्तैर्नित्यैर्विकल्पन्ते । **अग्निं दूतं वृणीमहे** (सा. ७९०-२) इत्युभयान्याज्यानि स्युरित्यर्थः ॥२॥

**उत्सेधस्थाने रथन्तरम् ॥३॥**

स्पष्टम् ॥३॥

**तस्य महादिवाकीर्त्यम् ॥४॥**

विषुवति बृहत्यां पञ्च सामानि सन्ति । उत्सेधः प्रथमः । रथन्तरं पञ्चमम् । तत्र प्रथममपोह्य रथन्तरं स्यात् । तत्स्थाने **महादिवाकीर्त्यं** पञ्चममिति ॥४॥

**अयं सोमः (सा० १४७१-३) इति पार्थम् ॥५॥**

स्पष्टम् ॥५॥

**आभिजातानि पृष्ठानि ॥६॥**

अभिजितो यानि **पृष्ठानि** तान्यत्र पृष्ठानि स्युः ॥६॥

तत्र विशेषमाह—

**इन्द्रक्रतौ श्यैतम् ॥७॥**

**इन्द्र क्रतुं न आभरे** (सा. १४५६-७) ति प्रगाथे **श्यैतं** स्यात् ॥७॥

---

5. L. आज्याद्यानि for आज्यानि
My⁴ V² My¹ केचित् for चत्वारः; My⁴ V² My¹ after एकाहाः add : क्रमेण समाम्नाताः

11. PC om. सन्ति

19. P C प्रगाथं for प्रगाथे

**गोः ककुबुष्णिहौ ॥८॥**

गोष्टोमस्यैकाहिकस्य ककुबुष्णिहावाहरेत् ॥८॥

**उद्धरति पिपीलिकामध्यम् ॥९॥**

**पर्यूषु प्र धन्व वाजसातये** (सा. १३६४-६) इति कल्पोक्तां पिपीलिकामध्यामनुष्टुभमुद्धरेत् ॥६॥

**श्यावाश्वविकर्णगौरीवितान्धीगवौदलभासान्यनुष्टुभि ॥१०॥**

**पुरोजिती वो अन्धसः** (सा. ६९७-९) इत्यनुष्टुभि श्यावाश्वादि सामषट्कं स्यात् ॥१०॥

**औदलस्थाने वाङ्निधनं क्रौञ्चम् ॥११॥**

स्पष्टम् ॥११॥

**अरण्येगेये तृचयोः ॥१२॥**

तेषां षण्णां साम्नां मध्ये ये **अरण्येगेये** भासविकर्णे ते **तृचयोः** स्याताम्। इतराण्येकर्चानि ॥१२॥

**व्रतात् परे ॥१३॥**

अनुष्टुभः परे ये सामनी पवमानान्त्यमग्निष्टोमसाम च ते द्वे अपि महाव्रतादाहरेत्। तद्यथा–**सूर्यवतीषु कावमन्त्यम्। यज्ञायज्ञीयमग्निष्टोमसाम** (आ. क. ३.७.५.६) इति ॥१३॥

अथ विश्वजिति विशेषमाह––

**विश्वजिति यज्ञायज्ञीयबृहती व्यतिहरन्त्येके ॥१४॥**

स्पष्टम् ॥१४॥

**बृहत्पृष्ठश्चेत् तृतीयात् साहस्रात् प्रातःसवनम् ॥१५॥**

---

2. My[1] T. My[4] एकाहस्य for ऐकाहिकस्य

4. P C कल्पकारोक्तां for कल्पोक्तां

15. P पवमानार्थम् for पवमानान्त्यम्

कालेयस्थाने समन्तम् ॥१६॥

अयं सोम (सा० १४७१-३) इति पार्थम् ॥१७॥

आभिजितानि पृष्ठानि ॥१८॥

इन्द्रक्रतौ श्यैतम् ॥१९॥

गोः ककुबुष्णिहौ ॥२०॥

उद्धरति पिपीलिकामध्याम् ॥२१॥

स्पष्टानि सूत्राणि ॥१५-२१॥

अनुष्टुप्प्रभृति व्रतात् ॥२२॥

आर्भवे पवमानेऽनुष्टुप्प्रभृति अग्निष्टोमसामान्तं महाव्रतादाहरेत् ॥२२॥

अथोत्तरे पक्षसि अयनविकल्पान् दर्शयति—

उत्तरे पक्षस्ययनविकल्पाः ॥२३॥

वक्ष्यन्त इति शेषः ॥२३॥

अभिप्लवपृष्ठ्यान् प्रतिलोमानुपयन्त्यहरावृत्तकारिणः ॥२४॥

केवलमहोभिरावृत्तमुत्तरं पक्षं ये कुर्वन्ति ते अहरावृत्तकारिणः । अभिप्लवपृष्ठ्यानिति पूर्वनिपातोऽभिप्लवानां पूर्वानुष्ठानार्थः । यथा पूर्वपक्षसि कृतमेवमुत्तरस्मिन्नपि प्रथममभिप्लवान् कृत्वा पश्चात् पृष्ठ्यं कुर्युः । केवलमह्यन्येव तेषां प्रतिलोमानि स्युरित्यर्थः । तथा च तैत्तिरीयकम्–उपरिष्टान्मासान् पृष्ठ्यानुपयन्ती (तै. सं. ७.५.१.६) ति ॥२४॥

---

1. P. before कालेय$^0$ adds :—अय ॐ सोम इति पार्थमिति

10. $V^1$ C वक्ष्यति for पक्षसि; P. after विकल्पान् adds :—गमनविकल्पान्

14. P C आवर्त$^0$, T. $My^4$ अवृत्ति$^0$ for आवृत्त$^0$

14. P आवृतम् for आवृत्तम्; P. आवर्त, T. $My^4$ आवृत्ति for आवृत्त$^0$

17. $My^1$ T. पृष्ठ्यानि, $My^4$ पृष्ठानि for पृष्ठ्यान्

**पृष्ठ्याभिप्लवाननुलोमान् मासावृत्तकारिणः ॥२५॥**

प्रथमं पृष्ठ्यं कृत्वा पश्चादभिप्लवान् कुर्युः तदानीमनुलोमान्यहानि स्युः। उभयावृत्तकारिण उभयं कुतः ? **पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणश्चत्वारोऽभिप्लवाः षडहाः समास** (तां. ब्रा. २४.२०.१) इति ब्राह्मणात्। तदुक्तं सूत्रकारेण- **एत एवावृत्ता ऊर्ध्वं विषुवतोऽभिप्लवास्तेषां प्रतिलोममहान्युपेयुः** (द्रा. श्रौ. ७.४.१९-२०) इति ॥२५॥

**गो आयुषी च व्यतिहरन्ति ॥२६॥**

स्पष्टम् ॥२६॥

**उत्तमं संभार्यं कुर्वन् सप्तमान् मासान् पृष्ठ्याभिप्लवानुद्धरेत् ॥२७॥**

पृष्ठ्याभिप्लवैरन्यैश्च कतिपयैरहोभिर्यः संश्रियते मासः स संभार्यः षष्ठश्च सप्तमश्चोत्तमश्च। तत्रोत्तरस्मिन् पक्षसि यद्युत्तममेव मासं संभार्यं कर्तुमिच्छेत्तदा सप्तमान् मासान् पृष्ठ्याभिप्लवानुद्धरेत् ॥२७॥

**पञ्चायनमासान् कृत्वा दशरात्रमिश्रादभिप्लवमुद्धरेत् ॥२८॥**

अयनमासो नाम पृष्ठ्यपञ्चमैश्चतुर्भिरभिप्लवे निर्मितः। तान् सप्तमप्रभृतिपञ्चमासान् कृत्वा दशरात्रमिश्रादुत्तमान्मासादभिप्लवमेकमुद्धरेत्। अभिप्लवमित्येकत्वं विवक्षितम्। एवमेकसंभार्य उत्तरः पक्षः। तदानीमावृत्तैः स्वरसामभिर्विश्वजिता चोत्तमो मासः पूर्यते ॥२८॥

---

1. P C. आवर्त॰, T. आवृत्ति for आवृत्त॰
4. P. समाप्तः for समासः
7. V[1] My[2-3] विपरि॰ for व्यति॰
11. P संह्रियते for संश्रियते॰
13. My[4] मासात् for मासान्
14. My[1,4] T. before पञ्च॰ add :—कथं तर्हीहःक्लृप्तिः। अत आह
 (My[4] तस्य for तर्हीहः)

**तथा सति पूर्वे पक्षसि विकल्पः ॥२९॥**

**तथा सति** एकसंभार्यत्वपक्ष इत्यर्थः । तदानीं पूर्वस्मिन्नपि पक्षसि षष्ठो मासः प्रथमो वा संभार्यः इति विकल्पः ॥२९॥

प्रथमस्य संभार्यत्वप्रकारं दर्शयति—

**षष्ठादभिप्लवपृष्ठ्यानुद्धृत्य चतुर्विंशाद् द्वितीयादह्नः उत्तरान् कुर्यात् ॥३०॥**

**समौ पक्षौ चिकीर्षन् पञ्चायनमासान् कृत्वा दशरात्रमिश्रं मासमुद्धरेत् ॥३१॥**

इति । यदि सर्वात्मना पक्षयोः साम्यमिच्छेत्तदा सप्तमं मासमेकं संभार्यं कृत्वा ततः परानष्टमप्रभृतीन् पञ्चायनमासान् कुर्यात् । उत्तमं संभार्यं लुम्पेदिति ॥३०-३१॥

किं चेत्याह—

**पञ्चदशौ पक्षौ व्रतस्यापरिमात्कम् ॥३२॥**

इति । महाव्रतेऽहनि व्रतस्तोत्रस्य **पक्षौ** बृहद्रथन्तरे **पञ्चदशौ** स्तोमावेव स्याताम् । तयोरेकं सप्तदशं ब्राह्मणे क्लृप्तम् । तन्निवृत्यर्थं पञ्चदशावित्युक्तम् । एवं च सति चतुर्विंशमहाव्रतेऽहनि समस्तोत्रीये भवत इति उभयोरपि पक्षयोः साम्यसिद्धिः । **अपरिमात्कमिति** कोऽर्थः । त्रयोदश परिमादो ब्राह्मणे क्लृप्ताः । **प्राणेन पुरस्तादाहवनीयमुपतिष्ठन्त** (तां. ब्रा. ५.४.१) इत्यादयः । तद्रहितं महाव्रतं कुर्यादित्यर्थः ॥३२॥

---

2. My² My⁴ om. अपि
4. V² My¹ My⁴ ⁰प्रकृतिं, P C ⁰पक्षं for ⁰प्रकारं
5. My¹⁻² V² T. My⁴ om. द्वितीयादह्नः
6. My¹⁻² V² T. My⁴ after कुर्यात् ॥ add :—षष्ठान्मासादुद्धृत्य चतुर्विंशाद् द्वितीयादह्नः उत्तरान् कुर्यादिति ॥
7. V¹ C. om. ⁰ मिश्रं
16. P. ⁰माणे, L ⁰मादो, T. ⁰मादे for ⁰मादो
17. T. My¹ तत्र हि for तद्रहितं

**बृहत्पृष्ठं विश्वजितम् ॥३३॥**

पक्षयोः साम्यमिच्छन् बृहत्पृष्ठं विश्वजितं कुर्यादित्यर्थः ॥३३॥

अथायुषमधिकृत्याह—

**विश्वजित आयुषमेक उपयन्ति ॥३४॥**

इति। विश्वजित उत्तरं कुर्वन्तीत्यर्थः ॥३४॥

**तथा सति गो आयुषोरैकाहिके बृहत्यौ ॥३५॥**

तदानीं गो आयुषोर्माध्यंदिने पवमाने ऐकाहिके बृहत्यौ न सांवत्सरिके इत्यर्थः। ननु च ऐकाहिकभूतयोः सांवत्सरिकयोश्च गो आयुषोर्बृहतीभेदो नास्ति। तत् सत्यम्। तद्गतानि सामानि भिद्यन्ते। तदभिप्रायो बृहतीशब्द इति ॥३५॥

अथ दशरात्रमधिकृत्याह—

**दशरात्रमेक आवर्तयन्ति ॥३६॥**

इति। अविवाक्यमहरारभ्य त्रिवृदन्तं प्रतिलोमं कुर्वन्ति। कुतः। अभिप्लवादिवद् दशरात्रस्यापि गणत्वादुत्तरस्मिन् पक्षसि गणानामावृत्तेश्चेति। अत्र निदानकारेणोक्तम्—**न वयमावर्तयामोऽनुपेतः पूर्वे पक्षसि दशरात्रस्तं कस्मादावर्तयाम** (नि. सू. ५-१०) इति। ननु च माभूत्तस्यावृत्तिः। तदन्तर्गतस्य पृष्ठस्यावृत्तिरस्तु तस्य पूर्वे पक्षसि कृतत्वात्। नैवम्। व्यूहसमाधिभङ्गात्। तथा हि पृष्ठस्योत्तरे त्र्यहे छन्दोमेषु चान्यैरव्यवहितेषु व्यूहः क्लृप्तः। आवृत्तिपक्षे समूढेन पूर्वत्र्यहेण व्यूढानामह्नां व्यवायः स्यात् ॥३६॥

अत्र दशमाहरन्ते मानसं स्तोत्रं ब्राह्मणे क्लृप्तम् तत्र विशेषमाह—

**तस्माद् व्रतं यदा परं व्रतान्ते मानसं सांवर्गजिता गौतमाः ॥३७॥**

---

12. My[4] द्वादशाहस्य दशाहस्यावृत्ति° for अविवाक्यमहरारभ्य

15. V[2] My[1] T. My[4] दशरात्रान्तर for तदन्तर्;

16. V[2] तदन्तस्य T. ततः for तस्य

T. °समानाधिभंगप्रसंगात् for °समाधिभंगात्

17. PC. प्राप्तः for क्लृप्तः

**यदा येषु सत्रेषु दशरात्रात् परं** महाव्रतं क्रियते तदा महाव्रतान्ते **मानसं कार्यम्**। यदा पुनर्न क्रियते तदा दशरात्रान्त एव कार्यम् । कुत एषा व्यवस्था। **ब्राह्मणे मनसा प्रस्तौति मनसोद्गायति** (तां. ब्रा. ४.९.९) इत्युक्त्वा किमर्थमेवं क्रियत इत्याशङ्क्यासमाप्तस्य **समाप्त्यै। यद्वै वाचा न समाप्नुवन्ति मनसा तत् समापयन्ति** (तां. ब्रा. ४.९.१०) इति वचनात्। तस्यायमर्थः । यत् पूर्वोक्तेन कृत्स्नेन वाचोगतेन स्तोत्रशस्त्ररूपेणावाप्तुं न शक्यते तस्य प्राप्त्यर्थं मानसम् इति। तेन वाचोगतसमाप्तौ मानसकरणावगमात् वाचा कृत्यं महाव्रतमपि समाप्यैव मानसं कार्यम्। व्रताभावे दशमान्त एवेति। ननु एवमुदयनीयान्ते मानसप्रसङ्गः। नैवम् । प्रायणीयोदयनीययोर्मध्यवर्तिपदसाधारणं वाचोगतम् । तस्य सर्वस्य समाप्तौ मानसं कार्यमिति भावः। किंच प्रायणीयोदयनीययोरेकत्वात् प्रायणीयकृतेनोदयनीयः कृत एवेत्येष गौतमानामभिप्रायः ॥३७॥

**इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले तृतीयः खण्डः ॥३॥**

---

6. V[2] My[1] तत्[0] for तस्य
7. My[2] महाव्रतसमाप्त्यैव for महाव्रतमपि समाप्यैव;
8. V[1] दशमान्तम् for दशमान्ते
10. T. My[4] My[1] V[2] प्रायणीयोक्तत्वात प्रायणीयेन कृतेन for प्रायणीयोदनीययोरेकत्वात् प्रायणीयकृतेन (L. 11)

## चतुर्थः खण्डः

**ज्योतिषामयनविकल्पाः ॥१॥**

ज्योतिषां सोमसूर्यनक्षत्राणां यदयनं नानारूपं गमनं तन्निमित्ताः संवत्सरविकल्पाः गवामयने वक्ष्यन्ते ॥१॥

**तत्र यदादितोऽन्ततस्तदूर्ध्वं विषुवतः ॥२॥**

तत्र यन्मासानामादितो वक्ष्यामस्तद्विषुवत ऊर्ध्वमन्ततः स्यात् ॥२॥

**मासि मास्याद्यस्याभिप्लवस्य स्थाने त्रिकद्रुकाः स षट्त्रिंशदूनो नाक्षत्रः ॥३॥**

गवामयनस्य पूर्वे पक्षसि प्रतिमासमाद्याभिप्लवस्य स्थाने त्रिकद्रुका एव स्युः। उत्तरस्मिन् पक्षसि प्रतिमासमन्त्यस्याभिप्लवस्य स्थाने त्रिकद्रुका एव स्युः। तत्र **यदादितोऽन्ततस्तदि** (द्रा. श्रौ. ८.३.२) ति वचनात्। स नाक्षत्रः संवत्सरो भवति। षट्त्रिंशदहोभिरूनः ॥३॥

कुत इत्याह—

**सप्तविंशिनो हि मासाः ॥४॥**

यस्मात् सप्तविंशतिपरिमिता **मासाः सप्तविंशिनो** भवन्ति। तस्मान्नाक्षत्रोऽयं संवत्सरः ॥४॥

---

5. $V^2$ ततः for तद्

7. $V^1$ om. आद्यस्य; $V^2$ $My^2$ T. $My^4$ आद्य⁰ for ⁰आद्यस्य

9. $V^1$ CL. ⁰प्लव⁰ for ⁰प्लवस्य; $V^2$ $My^1$ प्रथम⁰ for आद्य

10. $My^2$ after अन्त्यस्य add : अस्य

11. PC. after नाक्षत्रः add : एव

13. T. कुवते for कुतः

14. L $My^2$ T. ⁰विंशतिनो for ⁰विंशिनो

15. P $My^1$ ⁰विंशतिनो for ⁰विंशिनो

**षष्ठाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौश्च ज्योतिरेवावृत्ते स नवोनो नाक्षत्र एव त्रयोदशी ॥५॥**

षष्ठमासाद्यस्याभिप्लवस्य स्थाने ज्योतिर्गौश्चेति दिवसद्वयमेव स्यात् । **आवृत्ते** सप्तमे मासे अन्त्याभिप्लवस्य स्थाने **ज्योतिरेवै**कं स्यात् । सोऽयं **नवोनो नाक्षत्रः** संवत्सरस्त्रयोदशमासवान् ॥५॥

**युग्ममासेष्वाद्यस्याभिप्लवस्य स्थाने तत्पञ्चाहः स षडूनश्चान्द्रमसः ॥६॥**

गवामयनस्य **युग्ममासेषु** द्वितीयचतुर्थषष्ठादिष्वाद्याभिप्लवस्थाने अभिप्लवपञ्चाह एव स्यात् । **स** षडहोन**श्चान्द्रमसः** संवत्सरः ॥६॥

**षष्ठादौ त्रिकद्रुकानभिप्लवं चोपदध्यात् सोऽष्टादशाधिकः पौर्णमासी प्रसवस्तैर्यगयनिक आदित्यस्य ॥७॥**

षष्ठमासादौ **त्रिकद्रुकानभिप्लवं च** नवाहमधिकमुपदध्यादावपेत्तथैव सप्तमेऽपि मासे तृतीयाभिप्लवादूर्ध्वं नवाहमुपदध्यात् । **सोऽ**यमष्टादशदिवसोऽ**धिकः** सूर्यस्य संवत्सरः । पौर्णमास्यां प्रथमसुत्या यस्य स **पौर्णमासीप्रसवः** । तदा पौर्णमास्यां सुत्यां कुर्यादित्यर्थः । **तैर्यगयनिक** इति कोऽर्थः । आदित्यस्य यत्तिर्यग्गमनं दक्षिणायनमुत्तरायणं च तत्र कदाचिदादित्यः षण्मासान् दक्षिणत एति नव चाहानि । तथा **षण्मासानुत्तरत एति नव चाहानि** इति । निदानकारेणोक्तम् । तिर्यगयनविशेषनिमित्तः संवत्सरस्तैर्यगयनिकः इति । सावनस्तु संवत्सर एको **ब्राह्मणक्लृप्तः** ॥७॥

---

9. My[4] before स adds :—उत्तरस्मिन् पक्षसि युग्ममासाः । अष्टमदशमद्वादशाः । तेषु त्रिष्वन्त्याभिप्लवस्थाने तत्पञ्चाहः ज्योतिर्गौरायुर्गौरायुरिति ।

10. My[1] V[2] अष्टादशप्रसवः for अष्टादशाधिकः पौर्णमासी प्रसवः (L. 11)

14. P. before पौर्णमास्यां adds . यस्य; V[2] My[4] om. तदा ··· कुर्यादित्यर्थः; V[1] C. om. प्रथम ··· पौर्णमासी[0]

18. V[2] T. समानः for सावनः;

19. T. ब्राह्मणे for ब्राह्मण

अथेदानीमुत्सर्गिणामयनं प्रस्तौति—

**उत्सर्जनानि मासि मासि ॥८॥**

उत्सर्जनं कर्मलोपः । स तु बहुप्रकार इति बहुवचनम् । मासि मासि उत्सर्जनं कार्यमित्यर्थः । काम्यं चैतत् । यथोक्तमापस्तम्बेन—**तदेतत् पौत्रीयं पशव्यमायुष्यं स्वर्ग्यम्** (आप. श्रौ. २१.२५.१२) इति ॥८॥

**यथान्त एवमावृत्तानामादिः ॥९॥**

यथा पूर्वस्मिन् पक्षसि मासान्त उत्सर्जनमेवमावृत्तानां मासानामादावुत्सर्जनं स्यात् ॥९॥

तदेव दर्शयति—

**पूर्वेष्वभिप्लवेषु षष्ठमहरुक्थ्यं कृत्वाऽग्निष्टोममुत्तमे ॥१०॥**

इति । प्रथमे मासि तावत् **पूर्वेषु** त्रिष्वभिप्लवेषु **षष्ठमहरुक्थ्य**संस्थं **कृत्वा** उत्तमे च चतुर्थेऽभिप्लवे षष्ठमहरग्निष्टोमसंस्थं कुर्यात् । सोऽयमुक्थ्यसंस्थालोपो नाम किंचिदुत्सर्जनमिति ॥१०॥

प्रकारान्तरमाह—

**तद्वैकत्रिकस्तोमम् ॥११॥**

इति । अथवा उत्तमस्याभिप्लवस्य **तत्** षष्ठमहरेकत्रिकस्तोमं स्यात् । यस्याह्नस्तोत्रेष्वेकौ च त्रिकश्च स्तोमौ बहिष्पवमानप्रभृतिव्यत्यासेन भवतः तदेकत्रिकं स्तोमम् । सोऽयं स्तोत्रीयालोपो नामोत्सर्गः ॥११॥

---

4. V² पौत्र्यं for पौत्रीयं

7. T. My¹ My⁴ V² after मासान्त add एव
PC मासादौ for मासानामादौ

9. V² om तदेव दर्शयति

11. PC. तावता for तावत्

17. PC V¹ एकश्च for एकौ च

18. PCL. स्तोत्रीयाणां for स्तोत्रीया°

तदानीं विशेषमाह—

**असृक्षतेति बहिष्पवमानम् ॥१२॥**

इति । षष्ठस्याह्नोऽसृक्षते (सा. १०३४) ति एकस्यां **बहिष्पवमानम्** । ऋङ्नियमार्थमेतत् सूत्रम् ॥१२॥

**गायत्रं गायत्र्यामाश्वमैडं बृहत्यां गोष्ठो वा ॥१३॥**

माध्यंदिने पवमाने **गायत्र्यां गायत्र**मेकमेव साम स्यात् । **बृहत्यामाश्वमैड**मेव स्यात् । **गोष्ठो वा** साम । अपूर्वो विधिरयमप्रकृतत्वादश्वगोष्ठयोः ॥१३॥

**अया रुचे (सा० १५९०) ति गायत्रपार्श्वमार्भवः ॥१४॥**

अयमप्यपूर्वो विधिः तदिदमुत्सर्जनद्वयमा **वा एते संवत्सरं प्याययन्ति** (तां. ब्रा. ५.१०.१) इति खण्डेन ब्राह्मणे दर्शितम् । तत्रैव खण्डे अहरुत्सर्गं तृतीयं प्रकारं विधाय तस्याह्नः स्थाने सवनत्रयतुल्यः पशुर्विहितः ॥१४॥

तत्र शाखान्तरीयं विशेषं दर्शयति—

**सवनविधं पशुं कुर्वन्नुत्तममभिप्लवपञ्चाहं कृत्वा षष्ठस्थाने सवनविधः पशुः ॥१५॥**

ब्राह्मणोक्तं सवनतुल्यं **पशुं कुर्वं**श्चतुर्थेऽभिप्लवे **पञ्चाहं कृत्वा षष्ठस्थाने** पशुं कुर्यात् ॥१५॥

---

1. P प्रकारान्तरम्, V² CL My² विकारम् for विशेषम्
4. T. My⁴ om. सूत्रम्
6. V² om. बृहत्याम् . . . स्यात्; V¹ CL. om. आश्वम्; T. My⁴ ऐडमाश्वं for आश्वमैडं
7. P. अपूर्व⁰, V² पूर्वे for अपूर्वो P LC. अप्राकृतत्वात् for अप्रकृतत्वात्
9. PC V¹ L इदमपि पूर्ववत् for अयमप्यपूर्वो विधिः
   My¹ T. उत्सर्जनं for उत्सर्जनद्वयम्
11. V² तस्याश्व⁰, T. तस्याज⁰ for तस्याह्नः

तत्रैव विकल्पमाह –

**प्रथमं वाभिप्लवपञ्चाहं कृत्वा मासान्ते सवनविधः पशुः ॥१६॥**

**प्रथममभिप्लवपञ्चाहं कृत्वा** षष्ठं लोपयित्वा तदनुग्रहाय मासान्ते पशुं कुर्यात् ॥१६॥

**सर्वानूनानेके ॥१७॥**

**एके** शाखिनः **सर्वान्** मासान् **ऊनान्** एव ब्रुवते । त्यक्तस्याह्नोऽनुग्रहाय सवनविधः पशुः कार्यः । किंतु त्यक्तं त्यजेदेवेत्यर्थः ॥१७॥

तेषामेव शाखिनामुत्सर्गप्रकारमाह –

**प्रथमं वाभिप्लवपञ्चाहं कुर्युः ॥१८॥**

स्पष्टम् ॥१८॥

**अहनी वा समस्येयुरभिप्लवपृष्ठ्ययोः सांनिपातिके ॥१९॥**

संनिपाते भवं सांनिपातिकम् । **ते द्वे अहनी समस्येयुः**। एतदुक्तं भवति । चतुर्थाभिप्लवस्य षष्ठमहः पृष्ठ्यस्य च प्रथममहः एकस्मिन्नेव दिवसे कुर्यात् । सोऽयमहर्द्वयसमासो नामोत्सर्ग इति ॥१९॥

**अभिप्लवयोरुत्तमे ॥२०॥**

**उत्तमे** द्वादशे मासि **अभिप्लवयो**रेव सांनिपातिकमहर्द्वयं समस्येयुः । पृष्ठ्यसंनिपाताभावात् ॥२०॥

एवमूनकारिणमुत्सर्गिणां दीक्षायां विशेषमाह––

**तथा सत्येकादश्यां पूर्वपक्षस्य दीक्षित्वा त्रयोदश दीक्षाः कुर्वीरन् ॥२१॥**

त्रयोदशदीक्षाकरणं किमर्थम् । विषुतः पूर्वस्य स्वरसाम्नो मासान्त्यस्य पूर्वपक्षे संपत्त्यर्थं यदि प्रकृतिवद्द्वादशदीक्षाः स्युः । तदानीमसौ स्वरसामा पूर्वार्धस्योत्तममहरमावास्यायां संपद्यते । ततश्च पूर्वपक्षमासा अभिसंपद्यन्त इति ब्राह्मणोक्तं न सिध्यतीति ॥२१॥

---

10. V[2] My[1] T. om स्पष्टम्

**सप्तदश वा ।।२२।।**

सप्तदशदीक्षाकरणं सर्वेषामेव मासानां पूर्वपक्षे समाप्त्यर्थम् ।।२२।।

**व्यत्यासं वा पूर्णोनान् ।।२३।।**

आद्यो मासः पूर्णः स्यात् । द्वितीयो मास ऊनः स्यात् । एवमेव व्यत्यासमुत्तरानपि मासान् कुर्यात् ।।२३।।

**ऊनपूर्णानावृत्ताञ्छालंकायनिनः ।।२४।।**

आवृत्तेषु मासेषु विपरीतो व्यत्यासः । प्रथम ऊनः कार्यः । द्वितीयः पूर्णः ।।२४।।

**एकाष्टकादीक्षिण उपसर्गिणः ।।२५।।**

ये त्यक्तमहः पुनरुत्सृजन्ति सवनविधेन पशुना स्वीकुर्वन्ति ते **उपसर्गिण** इति उच्यन्ते । त एकाष्टकायां दीक्षेरन् । ये पुनस्त्यक्तमहः सर्वथोपेक्षन्ते तेषां पूर्वमेवोक्तम् तथा सत्येकादश्यां दिक्षित्वे (द्रा. श्रौ. ८.४.२१) त्यादि ।।२५।।

**ते तूष्णीमेव त्रिंशमहरासीरन् ।।२६।।**

त्रिंशतोऽह्नां पूरणं त्रिंशमिह त्यक्तमहरुच्यते । तस्मिन्नहनि **तूष्णीमेवासनम्** ।।२६।।

**सवनविधेन वा पशुना यजेरन् ।।२७।।**

अथवा सवनपशुः कार्यः ।।२७।।

अथोपसर्गिणामूनकारिणां च साधारणमाह—

**अध्वर्युब्रह्मचैः समयं कृत्वा दीक्षेरन्नेवमच्छिद्रलोपो भवतीति भवतीति ।।२८।।**

---

2. $My^2$ $V^1$ साम्नां for मासानां

7. $V^2$ $My^1$ समासेषु for मासेषु; T. आद्यन्तेषु for आवृत्तेषु

12. $V^1$ C L. एक for एव

13. $V^1$ C. इहत्यकम् for इह त्यक्तम्; T. अत्यक्तं for त्यक्तं

18. T. अध्वर्युः for अध्वर्यु$^0$

अध्वर्युबह्वृचा बहुप्रकारानुत्सर्गानाहुः । षडहैर्मासान् संपाद्याहरुत्सृजन्तीति । तेन तैः समयं कृत्वा तदुक्तमस्मदुक्तं वैकं प्रकारं निश्चित्य दीक्षादिकं कुर्युः । तथा सति कर्मविलोपः सिद्ध्यतीति ॥२८॥

इति द्राह्यायणश्रौतसूत्रे अष्टमे पटले चतुर्थः खण्डः ॥४॥

कल्पोक्तं ब्राह्मणोक्तं च यथावदवधारयन् ।
अष्टमं पटलं व्याख्याद्धन्वी मेधाविनां प्रियः ॥

इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे अष्टमः पटलः समाप्तः ॥८॥

---

1. $V^2$ $My^1$ T. $My^4$ अध्वर्यवस्तु for अध्वर्युबह्वृचाः

4. P. इति चतुर्थस्याष्टमः खण्डः for इति · · · चतुर्थः खण्डः ।

5. P. इति द्राह्यायणकृत् सूत्रे दीपे धन्विविनिर्मिते । द्वितीये दशके वृत्तः प्रथमः पटलोऽधुना for कल्पोक्तं · · · मेधाविनां प्रियः ।(L. 6)

## नवमः पटलः

### प्रथमः खण्डः

अत्र पृष्ठ्ये षडहे प्रत्यहं पृष्ठस्तोत्रकाले धर्मान् वक्तुमुपक्रमते—

**पृष्ठ्ये रथमतिवहेयुः पश्चात् प्राञ्चं दक्षिणतो वोदञ्चं बहिर्वेदि रथन्तरस्य स्तोत्रे ॥१॥**

बहिर्वेदि पश्चात् सन्तं रथं प्राञ्चं वहेयुः । अथवा दक्षिणतः स्थितमुदञ्चं वहेयुः ॥१॥

**बृहतो दुन्दुभिमाहन्युः ॥२॥**

बृहत्स्तोत्रे दुन्दुभिघोषं कुर्युः ॥२॥

**उपवाजयमाना वैरूपेण स्तुवीरन्नुपवाज्यमाना वा ॥३॥**

उपवाजनं नाम व्यजनेन वातोत्पादनम् । तत् कुर्वन्तः स्तुवीरन् । यजमानपुरुषैर्वीज्यमानाः वा स्तुवीरन् ॥३॥

**वाचयित्वा यजमानं वातं वात आ वात्वि (सा० १८४०-२) ति तृचेनानुमन्त्रयेत ॥४॥**

यजमानवाचनानन्तरं व्यजनोत्पादितं वातं तृचेनानुमन्त्रयेत ॥४॥

**वैराजस्य स्तोत्र उपाकृत उपर्यनूरुशकलं निधाय तृणे च तस्योपरि तिरश्चीमरणिं निधायाध्यात्मं प्रजननं कृत्वा त्रिःप्रदक्षिणमभिमन्थेत् गायत्रं छन्दोऽनुप्रजायस्व त्रैष्टुभं जागतमानुष्टुभं वैराजमिति गौतमः ॥५॥**

---

3. V[2] My[1] T. My[1] कर्माणि for धर्मान्

6. P C स्थितं, My[2] संततं, T. संततं सन्तं for सन्तं; T. प्रोहेयुः for वहेयुः;

7. P C L. नयेयुः for वहेयुः

10. My[2] ⁰वीज्यमानाः for वाज्यमाना

12. V[1-2] My[1] T. My[2] वाज्यमानाः for ⁰वीज्यमानाः

15. PC वायुं for वातं

19. V[2] My[1-2] My[4] वैराजपञ्चमं for वैराजम्

उद्गातुरुरोरुपरिष्टादन्वञ्चं शकलं निधाय तथैव स्तोत्रोपाकरणार्थे तृणे बर्हिषी च निधाय शकलस्योपरिष्टात् तिरश्चीमरणिं निधाय प्रजननमुत्तरारणिमध्यात्ममुपरिष्टात् कृत्वा मन्थेत् मन्त्रपञ्चकेन । त्रैष्टुभमित्यादिषु छन्दोऽनुप्रजायस्व इत्यनुषङ्गात् पञ्च मन्त्रा इति ॥५॥

**चतुर्भिरिति धानंजय्यः ॥६॥**

**त्रिभिरिति शाण्डिल्यः ॥७॥**

**अरण्योः संधानमालभ्योपजिघ्रेत्पाणी तेजोऽसि तेजो मयि धेहीति ॥८॥**

स्पष्टानि ॥६-८॥

**मथ्यमाने सोमं युञ्ज्यात् ॥९॥**

मथ्यमानेऽग्नौ स्तोमयोगविधानान्मन्थनोपक्रममात्रमुद्गातुरिति गम्यते ॥९॥

**जाते स्तुवीरन् ॥१०॥**

**वाचयित्वा यजमानं पुनरूर्जा निवर्तस्व पुनरग्न इषायुषा । पुनर्नः पाह्यꣳहसः ॥ सह रय्या निवर्तस्वाग्ने पिन्वस्व धारया विश्वप्स्न्या विश्वतस्परि (सा० १८३२-३) इत्यनुमन्त्र्याभिजुहुयात् ॥११॥**

स्पष्टे ॥१०-११॥

**तदुक्तं ब्राह्मणेन ॥१२॥**

प्रेद्धो अग्ने दीदिही (सा. १३७५) ति समन्त्रको होमो ब्राह्मणेन विहितः (तां० ब्रा० १२.१०.२०) । अत्र अग्निप्रणयनमाध्वर्यवम् । सूत्रकारेणोद्गातुर्विधानाभावात् ॥१२॥

---

1. V[1] CL after उपरिष्टात् add :—मन्थेत्;

3. V[1] after पञ्चकेन trans त्रैष्टुभमित्यादिषु छन्दोऽनुप्रजायस्वेत्यनुषंगात् पञ्च मन्त्रा इति; V[2] My[1] after कृत्वा ins. त्रिर्

19. V[2] My[1] T. My[1] मन्त्रेण for समन्त्रकः

20. P °प्रहरणम्, V[1] C °प्रहरणनाम, L. °प्रहरणनम् for °प्रणयनम्

**स्वाहाकारेणोत्तराम् ॥१३॥**

केवलं स्वाहाकारेणोत्तरामाहुतिं जुहुयात् ॥१३॥

**अपः सावका उपनिधाय महानाम्नीभिः स्तुवीरन् ॥१४॥**

अवकायुक्ताः सावकाः ॥१४॥

**यो यः सामाङ्गं ब्रूयात् स उदघोषं जनयेत् ॥१५॥**

यो यः सामाङ्गं ब्रूयात् स उदके घोषं जनयन् ब्रूयात् ॥१५॥

**वाचयित्वा यजमानं ता निनयेदास्तावेऽनाधृष्टासि तां त्वा सोमो राजावतु यामपीथा उपतिष्ठन्त आपो ये शाक्वरा ऋषभा ये स्वराजस्ते अर्षन्तु ते वर्षन्तु ते कृण्वन्त्विषमूर्जꣳरायस्पोषं तद्विदेयेति । समन्या यन्तीति वा समुद्रं वः प्रहिणोमीति वा ॥१६॥**

आस्तावे स्तुतिसमीपदेश इति ॥१६॥

**सर्वैर्वा ॥१७॥**

सर्वैर्वा पूर्वोक्तैर्मन्त्रैर्निनयेयुः न विकल्पितैरित्यर्थः ॥१७॥

**अष्ठीवतोरवका उपोहेरन् ॥१८॥**

यथास्वमष्ठीवतोः कटिप्रदेशयोरवका उपोहेरन् वाससोऽभ्यन्तरम् ॥१८॥

**छदिषि वर्षकामोऽध्यासयेदिति शाण्डिल्यः ॥१९॥**

अवका इत्यनुवर्तते निदध्यादित्यर्थः ॥१९॥

**गोष्ठे पशुकामः ॥२०॥**

**सभायां यशस्कामः ॥२१॥**

**श्मशानेऽभिचरन् ॥२२॥**

स्पष्टानि ॥२०-२२॥

**इति द्राह्यायणश्रौतसूत्रे नवमे पटले प्रथमः खण्डः ॥१॥**

---

8. P T °पीता for पीथा

10. C. °देषेति for °देयेति

12. $V^1$ C. °देशसमीपे for °समीपदेशे

14. $V^1$ $My^{1-2}$ T. निनयेरन् for निनयेयुः

18. $V^1$ om. अवका इत्यनुवर्तते । निदध्यादित्यर्थः ।

## द्वितीयः खण्डः

**वारवन्तीयस्य स्तोत्रे धेनूः संवाशयेयुर्दक्षिणतः कृत्वोत्तरतो वत्सान् ॥१॥**

षष्ठेऽहनि वारवन्तीयं पृष्ठम् । तत्स्तुतिकाले धेनूः संवासयेयुः । कथमित्याह-दक्षिणतो बहिर्वेदि धेनूः कृत्वा तासां वत्सान् बहिर्वेद्युत्तरतः कृत्वेति । वत्सैः पृथक् कृतानां धेनूनां यथा शब्दो जायते तथा कार्यमिति ॥१॥

**पूर्वेण सदः संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीरुत्सृजेयुः ॥२॥**

सदसः पुरस्तात् धेनूर्वत्सांश्च संसृज्य पश्चिमेनाग्नीध्रीयमुदीचीर्धेनूरुत्सृजेयुः ॥२॥

**वाचयित्वा यजमानं गोनामभिरनुमन्त्रयेत हव्ये काम्ये चन्द्रे ज्योत इडेरन्तेजुष्टे सूनरि मयि वो रायः श्रयन्तामिड एह्यदित एहि जुष्टे जुष्टिं ते गमेयमुपहूता उपहवं वोऽशीयेति ॥३॥**

गोनामभिर्धेनूरनुमन्त्रयेत ॥३॥

**सहर्षभा इति वा ॥४॥**

**उभाभ्यां वा ॥५॥**

स्पष्टे ॥४-५॥

**अद्भिश्चेदुपाकुर्युस्ता निनयेदास्ताव आपो हिष्ठीयाभिः ॥६॥**

यद्यध्वर्यवोऽद्भिः स्तोत्रमुपाकुर्युस्तदा स्तोत्रसमाप्तौ स्तुतिदेशे ता आपो निनयेत् ॥६॥

**षष्ठेऽहनि संस्थितेऽबहुवादिनः स्युः ॥७॥**

अबहुवादिन इति बहुभाषणं न कुर्युरिति ॥७॥

**न चाधीयीरन्नोत्तरस्याह्न उपाकरणात् ॥८॥**

उत्तरस्याह्न उपाकरणात् पूर्वं स्वाध्यायाध्ययनमपि न कुर्युरिति वाग्देव्याः श्रमापनोदनार्थम् ॥८॥

**सर्पिर्मधुभ्यामृत्विजो भोजयेदहीनेष्वन्यतरेण वा ॥९॥**

षष्ठेऽहनि संस्थिते सर्पिर्मधुभ्यां व्यञ्जनभूताभ्याम् ऋत्विजो भोजयेदन्यतरेण वा ॥९॥

**सर्पिषैव तृतीयसवने सत्रेषु ॥१०॥**

सत्रेषु सर्पिषैव भोजयेत् । निषिद्धं हि मध्वशनं दीक्षितानामिति भावः ॥१०॥

**एतस्यान्यतरस्मिं स्त्र्यहेऽति ग्राह्याणां**

**भक्षयेयुः स्तुत्वा पृष्ठेन ॥११॥**

एतस्य षडहस्यान्यतरस्मिं स्त्र्यहे उत्तरस्मिन्स्वा पृष्ठेन स्तुत्वातिग्राह्य भक्षणम् ॥११॥

**विषुवद्व्रतयोश्च ॥१२॥**

विषुवति महाव्रतेन च पृष्ठेन स्तुत्वा भक्षयेयुः ॥१२॥

अथ भक्षणस्य मन्त्रं कालं चाह —

**त्रिष्टुप्छन्दसा पूर्वं चमसेभ्यः ॥१३॥**

इति गतम् ॥१३॥

**अन्यत्र चैतस्मिन् काले यानाहरेयुः ॥१४॥**

अन्येष्वप्यहःसु एतस्मिन् पृष्ठ्यस्तुत्यनन्तरकाले यान् ग्रहानाहरेयुस्तानपि त्रिष्टुप्छन्दसा भक्षयेत् (?येयुः) ॥१४॥

**सहधर्मः सर्वत्र पृष्ठ्यः स्यात् ॥१५॥**

न केवलं गवामयने यत्र-यत्र पृष्ठ्यो भवति तत्र तत्र सर्वत्र यथोक्तैर्धर्मैरन्वितो भवेत् पृष्ठ्यः ॥१५॥

---

5. $\mathrm{My}^{4}$ $\mathrm{V}^{2}$ $\mathrm{My}^{1}$ after भावः add :—अत्र ब्राह्मणम् । न बहुवदेन्नान्यं पृच्छेन्नान्यस्मै प्रब्रूयान्मध्वाशयेद्धृतं वेति ।

12. $\mathrm{My}^{4}$ अतिग्राह्य भक्षणं कुर्युः for भक्षयेयुः

19. $\mathrm{V}^{1}$ C. om. सर्वत्र;

20. $\mathrm{V}^{2}$ $\mathrm{My}^{1}$ $\mathrm{My}^{4}$ om. One यत्र and one तत्र

**दशमव्रते च ॥१६॥**

दशरात्रस्य दशममहरविवाल्यं महाव्रतं च सर्वत्र यथास्वं वक्ष्यमाणैर्धर्मैरन्वितैः स्याताम् । न केवलं गवामयने ॥१६॥

**अभीवर्तस्तोत्रीयानाभिप्लविकान् पृष्ठ्ये शंसयेद् ब्राह्मणाच्छंसिना कालेयचोऽच्छावाकेन सर्वत्र यदा पवमाने स्याताम् ॥१७॥**

यदा पृष्ठ्ये षडहे माध्यंदिने पवमाने कल्पकारोक्ते अभीवर्तकालेये स्यातां तदानीमभीवर्तस्तोत्रीयानभिप्लवे कृतान् **तं वो दस्ममृतीषहमित्यादि** षट्प्रगाथान् क्रमेणैकैकं पृष्ठ्ये शंसयेत् । तत्र ब्राह्मणाच्छंसिनाभीवर्तस्य शंसयेत् । कालेयस्याच्छावाकेन । तत्र प्रथम द्वितीययोरह्नोर्नौधसश्यैतयोर्ब्रह्मसाम्नोरभीवर्तस्य च समानस्तोत्रीयत्वान्न पृथगनुशंसनम् । तृतीयादिष्वेव । तद्यथा **वयं त्वा सुतावन्तः** (सा: ९-६४) इत्येतं शस्त्वा **आ त्वा सहस्रमा शतम्** (सा. १३९१) इत्यनुशंसयेत् ॥१७॥

**सर्वत्रेन्द्रक्रतुं ब्राह्मणाच्छंसिनोर्ध्वं विषुवतः प्रागतिरात्रात् ॥१८॥**

विषुवत ऊर्ध्वं सर्वेष्वहःसु प्रागुदयनीयादतिरात्रात् अस्तूयमानमपि **इन्द्रक्रतुं न आभरेति** प्रागथं ब्राह्मणाच्छंसिनानुशंसयेत् ॥१८॥

**इति द्राह्यायणश्रौतसूत्रे नवमे पटले द्वितीयः खण्डः ॥२॥**

---

8. L. My[2] आदीन् for आदि

## तृतीयः खण्डः

**विश्वजिति वैराजे धर्मान् कुर्यात् ॥१॥**

सर्वपृष्ठो विश्वजित् । तत्र वैराजे पृष्ठे अग्निमन्थनादिधर्मान् कुर्यात् । ननु च षडहप्रयुक्ताः धर्माः कथं विश्वजिति स्युः । उच्यते । एकत्र क्रतौ षण्णां पृष्ठानां संनिपातो होतुः पृष्ठस्थाने प्रयोगश्च धर्मनिमित्तमिति मन्यते ॥१॥

**इतरेष्वपि पृष्ठेष्वित्याचार्यमतिः ॥२॥**

पृष्ठसंनिपात एव धर्मनिमित्तं न पृष्ठस्थाने प्रयोगः । तेन विश्वजिति रथन्तरादिष्वपि तत्तद्धर्माः स्युः । एतेन सर्वपृष्ठाप्तोर्यामो व्याख्यातः इति ॥२॥

अथ दशरात्रस्य सप्तमेऽहन्यार्भवे पवमाने गायत्र्यां गायत्रंमौक्षमिति सामद्वयं ब्राह्मणे विहितम् । तत्र शाखान्तरविहितं सामद्वयमाहृत्य समुच्चिन्वन् स्तोमातिरेकप्रसङ्गात् त्रीणि सामान्येकर्चानि करोति ।

**सप्तमेऽहन्यग्नेरर्कोऽध्यर्धेडं च सोमसाम मौक्षस्य पूर्वयोः ॥३॥**

इति अन्त्यस्तोत्रीयायां मौक्षं कृत्वा ततः पूर्वयोरितरत्सामद्वयमित्येवं सामतृचं कुर्यात् । गायत्रं तृचे कुर्यादिति भावः ॥३॥

प्रकारान्तरमाह—

**मौक्षसोमसामनी गायत्रस्योत्तरयोरग्नेरर्कंस्तिसृष्विति वा ॥४॥**

इति । स्पष्टम् । अत्र गायत्रमौक्षाभ्यामेव स्तोमसंपत्तेः ब्राह्मणनैरपेक्ष्याच्च शाखान्तरोपसंभारो वैकल्पिक इत्याहुः । तथा निदानकारः—सप्तमेऽहन्यग्नेरर्कः

---

7. PC before तेन add :—विश्वजिद्धर्मनिमित्तं न पृष्ठस्थाने प्रयोगः

8. $V^2$ $My^1$ om. तत्तद्
$V^{1-2}$ T. $My^2$ °पृष्ठोऽप्तो° for °पृष्टाप्तो°

9. $My^1$ T. $My^4$ om. पवमाने

18. $V^2$ $My^1$ T. $My^4$ प्रथमायां गायत्रं गीत्वा तस्योत्तरयोर्मौक्षसोमसामनी for स्पष्टम्; PCL om. ब्राह्मणनैरपेक्ष्याच्च

कृताकृतो भवत्यब्राह्मणविहितत्वात् (नि. सू. ४.७) इति ॥४॥

**साकमश्वेडानां संक्षारौ व्यतिहरन्त्येके ॥५॥**

अथाष्टमनवमयोरह्नोर्माध्यंदिने पवमाने साकमश्वमिडानां संक्षारश्चेति क्रमेण सामद्वयं विहितम् (तां. ब्रा. १४.९.१७ , १५.३.१४) । तयोर्व्यतिहारमेके शाखिनः कुर्वत इत्यर्थः ॥५॥

**सुरूपक्रौञ्च एकर्चयोरेके ॥६॥**

अष्टमेऽह्न्यार्भवे पवमाने षोडशसामानि विहितानि (तां. ब्रा. १४.११)। तेषु स्तोमातिरेकप्रसङ्गादवश्यं द्वावेकर्चौ कार्यौ। तत्र **द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येण** (द्रा. श्रौ. १६.३.२५) ति वचनात् ऐषिरत्रैतयोरेकर्चाकरणमिति स्वपक्षः। पक्षान्तरं तु सुरूपक्रौञ्चयोरेकर्चाकरणमिति ॥६॥

अथ नवमेऽह्न्याह—

**नवमस्य ज्यौतिष्टोमः पर्यासः साप्तमिक इत्येके ॥७॥**

इति। नवमस्य बहिष्पवमाने **तृच उत्तमो भवती** (तां. ब्रा. १५.१.१२) **ति** ब्राह्मणम्। कः पुनरसौ तृच इति न ज्ञायते। तत्राध्ययनाभावात्। तत्रेदमाह— ज्योतिष्टोमसंबन्धिपर्यासः स्यात् सप्तमाहःसंबन्धी वेति। **पर्यास** शब्दोऽन्तवचनः।

---

1. PCL. after इति add :—सूत्रद्वयमपि द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेत्यस्यापवादः इति

3. PCL om. अह्नोः

7. PCL V[1] गायत्र्यां सुरूपमनुष्टुभि क्रौञ्चं ब्राह्मणे विहितम् त एवैकर्चे स्याताम्। न त्वैषिरत्रैताविति केचित्। विपर्यास एव स्वपक्षः। द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणेति वचनात् इति for पवमाने ··· एकर्चाकरणमिति (L. 10). T. My[4] [0]षोडशि[0] for [0]षोडश[0]

12. My[1-2,4] T. ज्योति[0] for ज्यौति[0]

14. V[2] My[1] T. My[4] after तत्र ins. अपि; My[1] T. My[4] om. न

15. My[1] My[4] दातुवचनः for [0]अन्तवचनः

उत्तमस्तृच इत्यर्थः । अत्र ब्राह्मणे माध्यंदिने पवमाने गायत्र्यां सोमाष्टकं विधाय **परीतो षिञ्चता सुतम्** (सा. १३१३) इति बृहत्यामेकादशसामानि विहतानि (तां. ब्रा. १५.३.१८-३३) । तद्यथा पृष्ठं कौल्मलबर्हिषमर्कपुष्पं दैर्घश्रवसं वैयश्वमाभीशवमिति षट् ग्रामे गेयानि । देवस्थानं संकृति भर्गो यश इति चत्वार्यरण्येगेयानि । ततो वासिष्ठमित्येकादश । **असावि सोमो अरुष** (सा. १३१६) इति जगत्यां सामद्वयं विहितम् (ता. ब्रा. १५.३.३४-३५) । दीर्घतमसोऽर्कोऽन्त्यः सामराजं वेति । तत्र सर्वेषां तृचकरणे स्तोमातिरेकप्रसङ्गात् कथं क्लृप्तिरिति न विद्मः ॥७॥

तत्रेदं प्रतिपाद्यते—

**तस्य बृहत्यामरण्येगेयानि तृचेषु पृष्ठं च ॥८॥**

इति । **तस्य** नवमस्याह्नो **बृहत्यां** देवस्थानप्रभृत्यरण्येगेयं सामचतुष्टयं **तृचेषु** कुर्यात् । **पृष्ठं च** ग्रामगेयमपि तृच एव कुर्यात् । शिष्टानि षट् सामानि सर्वाणि एकर्चानि स्युः ॥८॥

तत्र नियममाह—

**वासिष्ठमध्यास्यायाम् ॥९॥**

इति । **श्रीणन्त** (सा. १३१४-५) इत्यध्यास्याम् ऋचि वासिष्ठं स्यात् ॥९॥

**वैयश्वं प्राग् भर्गादाभीशवं यशसः ॥१०॥**

पूर्वपठितमपि **वैयश्वं** स्थानादुत्कृष्य **भर्गात्** पूर्वं निवेशयेत् । जामिदोषपरिहारार्थं तथा**भीशवमपि यशसः** पूर्वं निवेशयेत् । द्वयमपि प्रथमायामेव स्यात् ।

1. PCL. om. माध्यंदिने · · · विधाय
11. My[1] V[2] T. My[4] before तृचेषु ins. एव
12. PCL. तृचेषु for तृच एव
16. PCL V[1] परिस्वानः for श्रीणन्तः
20. PCL. एवम् for द्वयमपि प्रथमायाम्

किमर्थं तर्हि तयोः पूर्वपाठः । ग्रामेगेयत्वात्तैः सह पाठः । न पुनरनुष्ठानार्थमिति । तत्र पृष्ठादुत्तराणि कौल्मलबर्हिषादीनि त्रीणि सामानि सामतृचं कुर्यात् । कुतः । **त्रीनेकतृचे नानास्तोत्रीयास्वि** (द्रा. श्रौ. १६.३.१२) ति वचनात् तदेतदेकं गतम् ॥१०॥

मतान्तरमाह—

**सप्तैव तृचेषु वैराजमित्यपरम् ॥११॥**

इति । नावश्यमरण्येगेयं तृचे ग्रामेगेयमेकर्च इति नियमः । किंतु येषां संनिपाते जामिदोषो न भवति तानि यानि कानिचित् सप्त गृहीत्वा तृचेषु कुर्यात् । इतरत् सामचतुष्टयं विकल्पार्थमिति तदानीमध्यास्य विलुप्यते । अनपेक्षितत्वात् ॥११॥

अथ यज्ञगत्यां सामद्वयमुक्तं तद्विकल्पत इत्याह—

**दीर्घतमसोऽर्कोऽन्त्यः सामराजं वा ॥१२॥**

गतम् ॥१२॥

यदा पुनः सामराजं पवमानान्त्यं तदा विशेषमाह—

**पृष्ठचस्योत्तरयोर्दीर्घतमसोऽर्को माण्डवं चैडꣳसामराजेऽन्त्ये ॥१३॥**

इति । **परीतो षिञ्चते** (सा. १३१३) ति प्रथमायां पृष्ठं कृत्वा **तस्योत्तरयो-र्दीर्घतमसोऽर्को माण्डवं चैड**मित्येवं सामतृचं कुर्यात् । सामराजस्य पवमानान्त्यत्व-पक्ष इत्यर्थः । तत्रानाम्नातमपि माण्डवं सूत्रकारः शाखान्तरात् कल्पितवान् ॥१३॥

---

1. V[1] after इति ins. अथ

9. My[1] My[4] om. तदानीमध्यास्य PCL. अपि for वि°

19. P. after कल्पितवान् adds : इति । इति तृतीयस्य षष्ठः खण्डः ।

अथ दशमेऽहनि बहिष्पवमानब्राह्मणम् । **पञ्चानामह्नामनुरूपैः प्रत्यवयन्ती** ति । **तथा तन्नवर्चो भवती** (ता. ब्रा. १५.७.६) ति च । तदस्पष्टमिति मत्वा व्याचष्टे—

**दशमस्य बहिष्पवमानं द्वितीयप्रभृतीनां पञ्चानामह्नामनुरूपाः प्रथमाच्च बहिष्पवमानं तन्नवर्चम् ॥१४॥**

इति । पृष्ठ्यषडहस्य द्वितीयप्रभृतीनामह्नां बहिष्पवमानेषु ये **अनुरूपास्तृचा**-स्तानत्राहरेत् । **प्रथमाच्च** कृत्स्नं **बहिष्पवमान**माहरेत् । **तन्नवर्च**मिति ब्राह्मणे-नोक्तमुच्यते ॥१४॥

**अनुरूपेषु तृचाः प्रतिलोमाः ऋचो नवर्चे इति गौतमः ॥१५॥**

**तत्रानुरूपेषु तृचाः प्रतिलोमाः** स्युः । **असृक्षत प्र वाजिन** (सा. १०३४) इति । षष्ठस्याह्नो रूपं प्रथममाहरेत् । ततः पञ्चमस्य । इत्येवं **नवर्चे** तु **ऋचः** प्रति-लोमाः स्युः । **उपास्मै गायता नर** (सा. ६५१) इत्युपक्रम्य **अस्य प्रत्नामनुद्युत**-मि (सा. ७५५) त्येवमन्तम् । कुत एतत् । अनुरूपैः प्रत्यवयन्ति यथाह्यारुह्य प्रत्यवरोहेत्तादृक् तदिति । प्रातिलोम्य विधानात् ॥१५॥

**सर्वत्र तृचा इति धानंजय्यः ॥१६॥**

नवर्चेऽपि **तृचा** एव प्रतिलोमाः स्युः । न पुनर्ऋच इत्यर्थः ॥१६॥

**यथाधीतं नवर्चमिति शाण्डिल्यायनः ॥१७॥**

नवर्चे नास्त्येव प्रातिलोम्यमिति मतान्तरम् । कुतः **नवर्चो भवती** (ता. ब्रा. १५.७.६) त्येतावन्मात्रश्रुतेरिति ॥१७॥

**सर्वत्रर्चः प्रतिलोमा इति शाण्डिल्यः ॥१८॥**

---

14. My[2] एतत् for एवम्;
15. V[1-2] My[1] प्रति[0] for प्राति[0]P. तथा for तादृक्
18. My[2] नवर्चः for नवर्चम्

अनुरूपेषु नवर्चेषु च ऋच एव प्रतिलोमाः स्युः । न पुनस्तृचा इत्यर्थः । तेन **पवस्वेन्दो वृषासुत** (सा. ७७८) इति द्वितीयस्याह्नोरूपं प्रथममाहृत्य प्रतिलोमा ऋचः कुर्यात् । एवं क्रमेण उत्तरेषामपीति । अत्र ब्राह्मणम्-**प्रजापतिं वा एतेनाह्ना परिवेविषती** (तां. ब्रा. १५.७.३) त्यादि । तस्यायमर्थः । अस्मिन्नहनि ऋत्विजां कर्तव्यस्य विस्मृतौ न केनचित् विवाच्यम् । तथा सति विस्मरणदोषोद्भावेन प्रजापतेर्भोजनविघ्नः कृतः स्यादिति । एवं दोषमुक्त्वा पुनरपि ब्राह्मणम्—**तद्व वा आहुः** ?व्यवद्यम् (तां. ब्रा. १५.७.४) इत्यादि । तस्यायमर्थः । यथातिथये भोजनार्थमन्नमपथेनाह्लियमाणं प्रतिषेधन्ति एवं कर्तव्यस्य विस्मृतौ विवचनेन प्रतिबोधनं कार्यमिति ॥१८॥

तत्र **यावत्यनुष्टुप् तावतीं वाचं संपाद्य विब्रूयुः** (तां. ब्रा. १५.७.५) इति ब्राह्मणम् । तदाचष्टे—

**अप्रतिभामेतस्मिन्नहन्यनुष्टुप्मात्रां कृत्वाचक्षीरन् ॥१९॥**

इति । कर्तव्यस्य विस्मृतिरप्रतिभा । तामनुष्टुप्परिमितां वाचं कृत्वा ब्रूयुः । अप्रतिभां निरस्य कर्तव्यं स्मारयेयुरित्यर्थः ॥१९॥

तत्र मन्त्रस्याप्रतिभाने यदि मन्त्रोऽनुष्टुप् स्यात् तदा तं कृत्स्नं मन्त्रं पठेयुः प्रतिबोधनाय । अथ यदि छन्दोऽन्तरं तत्र प्रकारमाह—

**ज्यायसिच्छन्दसि लुम्पेयुरक्षराणि ॥२०॥**

अनुष्टुभो ज्यायसि छन्दसि **त्वामिद्धिहवामहे** (सा. ८०९) इत्यादावप्रतिभाने द्वात्रिंशदक्षरं मन्त्रं पठित्वा विरमेयुः । तत्र ऊर्ध्वमप्यप्रतिभाने शिष्टं पठित्वा पुनरपि तं मन्त्रं अनुष्टुप्मात्रमभ्यस्येयुः ॥२०॥

---

1. PC after अर्थः । add : तथा and tranp. अत्र ब्राह्मणं · · · अस्मिन्नहनि (L. 3) here

13. PC. om. कृत्वा;

14. PC. आप्रतिहारं for अप्रतिभां
V[1] C. स्मारयेत् for स्मारयेयुः

**कनीयस्यभ्यस्येयुः ॥२१॥**

अनुष्टुभः कनीयसि छन्दसि गायत्र्यादौ कृत्स्नं पठित्वा पुनरपि गायत्र्याः पादमनपेक्षितमभ्यस्येयुः । अनुष्टुप्त्वार्थमिति ॥२१॥

**वाचैव विब्रूयुरिति धानंजय्यो वागनुष्टुबि (तां० ब्रा० १०.३.१३) ति हि ब्राह्मणं भवति ॥२२॥**

**वाचैव** विवचनं कार्यम् । नानुष्टुबादरणीयेति मतान्तरम् । तथा चाश्वलायनोऽप्याह—**संशये बहिर्वेदि स्वाध्यायप्रयोगः** (आ. श्रौ. ८.१२.११) इति । कर्मविस्मरणे तु अनुष्टुभा लोकेन विवाच्यम् । तद्यथा—

"**पृष्ठहोमस्त्वया कार्यस्तदनन्तरमृग्जपः । ततश्च स्तोमयोगः स्यात्ततः स्तोत्रं ततो जपः ।**" इति ॥२२॥

**अग्निष्टोमसाम्ना स्तुत्वा प्राक्पत्नीसंयाजेभ्यो यदेभिः प्रसृते परार्ध्यं व्रजितं स्यात्तद्गत्वा प्रत्याव्रज्य मनसानुत्साहे हुतेषु पत्नीसंयाजेषु गार्हपत्य उद्गाता जुहुयादुपसृजन्धरुणं मात्रे मातरं धरुणो धयन् रायस्पोषमिषमूर्जमस्मासु दीधरत्स्वाहेति पूर्वां स्वाहाकारेणोत्तराम् ॥२३॥**

**प्रसृतं** नाम बहिर्वेदि संचारदेशः । तत्र **यदेभिर्यजमानैः परार्ध्यं व्रजितम् ।** परः खण्डः अर्द्धोत्तरं व्रजितं गतं भवेत् । तावन्तं प्रदेशं गत्वा **प्रत्याव्रज्य जुहुयादित्यन्वयः** । मनसानुत्साह इति गमनाशक्तौ मनसैव गमनागमनं भावयेत् । इत्यन्तं प्रदेशं गतोऽस्म्यागतोऽस्मीति चेति ॥२३॥

**इति द्राह्यायणश्रौतसूत्रे नवमे पटले तृतीयः खण्डः ॥३॥**

---

2. My$^{1}$ after छन्दसि adds :—त्वामिद्धि हवामह इत्यादावप्रतिभाने

3. V$^{2}$ My$^{1\text{-}2}$ after अनपेक्षितम् ins. अपि$^{0}$

18. PC प्रसुतः for प्रसृतं; PC $^{0}$प्रदेशः for देशः

20. T. My$^{4}$ V$^{2}$ $^{0}$अशक्तो for $^{0}$अशक्तौ

## चतुर्थः खण्डः

**आह्वनीयं गत्वाऽय्ँसहोहा इति त्रिरुद्गाता गायेत् ॥१॥**

होमानन्तरमाहवनीयमौत्तरवेदिकमग्निं गत्वा गायेत् ॥१॥

**निधनमितरावनूपेयाताम् ॥२॥**

स्पष्टम् ॥२॥

**अभिदक्षिणमावृत्य पूर्वया द्वारा सदः प्रविशेयुः ॥३॥**

गानं कृत्वा प्रदक्षिणमावृत्य पूर्वया द्वारा सदः प्रविशेयुः ॥३॥

**यदाध्वर्युरुपाकुर्यात्तदा मानसेन स्तुवीरन् ॥४॥**

स्पष्टम् ॥४॥

**आयं गौः पृश्निरक्रमीद् (सा० १३७६-८) इति गायत्रेण ॥५॥**

स्पष्टम् ॥५॥

**पृथक् स्तोत्रीयाभ्यो हिंकारम् ॥६॥**

प्रतिस्तोत्रीयमुपक्रमे हिंकृत्य गायेत् ॥६॥

**त्रिकेण स्तोमेनास्तोमयोगायजमानवाचनाकुशाविधानेन ॥७॥**

स्तोमयोगरहितेन यजमानरहितेन कुशाविधानरहितेन च त्रिकेण स्तोमेन स्तुवीरन् ॥७॥

**प्रतिहारवेलायां प्रतिहर्तापान्यात् ॥८॥**

अपाननमुच्छ्वासः ॥८॥

**उत्तमां प्रस्तुत्यैषेति होतारमीक्षेत ॥९॥**

स्पष्टम् ॥९॥

**सर्वमेतस्मिन् स्तोत्रे मनसा कुर्युः समीक्षणेन विज्ञापयन्तः ॥१०॥**

अन्योन्यं **समीक्षणेन** प्रस्तावादिभक्तीनामुपक्रमं च समाप्तिं च विज्ञापयन्तः स्तुवीरन् ॥१०॥

---

2. $V^1$ CL after गत्वा add :—पश्चात्तिष्ठन्तो°
5. $V^2$ $My^1$ om. स्पष्टम्
6. P प्रदक्षिणम् for दक्षिणम्
18. P $My^{1,4}$ अपानम् for अपाननम्; P अनुच्छ्वासः for उच्छ्वासः

**यदाध्वर्युर्भक्षं प्रयच्छन्मन्येत तस्य मनसोपहूय कस्त्वा कं भक्षयामीति भक्षयेयुः ॥११॥**

यदाध्वर्युः समीक्षणेन भक्षप्रदानं कुर्वन् मन्येत तदा तस्य मनसा मन्त्रेण भक्षयेयुः ॥११॥

**ब्रह्मोद्यं वदन्ती (तां. ब्रा. ४.९.१२) ति ॥१२॥**

श्रुत्युपादानमेतत् ॥१२॥

व्याख्यानार्थं तद् व्याचष्टे—

**गायत्रीं त्रिर्ब्रूयुरिति धानंजय्यः ॥१३॥**

**तत्सवितुर्वरेण्य**मित्येतां **गायत्रीम्** । सा हि वेदानां माता परब्रह्मणश्च प्रतिपादिकेति तत्कथनं ब्रह्मोद्यमिति धानंजय्यः ॥१३॥

**चतुर्होतारमभिप्रेत्यैतदिति गौतमः ॥१४॥**

अत्र तैत्तिरीयकम्—**चतुर्होतॄन् होता व्याचष्टे स्तुतमनुशंसति शान्त्यै** (तै. ब्रा. २.२.७.३) इति । तथा **एतद्वै देवानां परमं गुह्यं ब्रह्म यच्चतुर्होतारः** (तै. ब्रा. २.२.१.४) इति च । तांश्चतुर्होतॄन् चित्तिस्रुक्चित्तमित्यादीन् पञ्चानुवाकान् (तां. ब्रा. २.२.४.१) मनस्यनुशंसनरूपान् अभिप्रेत्यैतद् वाक्यं ब्रह्मोद्यं वदन्तीति गौतमस्य पक्षः ॥१४॥

---

1. P CL. भक्षणं for भक्षं

7. My[1] My[4] व्याख्यानम्; V[1] तां for तद्

9. My[1] My[4] T. साक्षाद् ब्रह्मणः प्रतिपादिका स्वयं च बहुवेदानामसौ माता for वेदानां ··· पादिकेति (L. 10)

10. T. My[1] My[4] तस्या वचनं for तत्कथनं

12. My[4] T. V[2] My[1] चित्तिः स्रुक्चित्तमाज्यमिति पञ्चानुवाकाश्चतुर्होतारोऽध्वर्युभिरधीतास्तेषामाद्यं होता व्याचष्टे । स्तुत्यनुशंसनत्वेन तस्य वचनं ब्रह्मोद्यमिति गौतमः for अत्र ··· पक्षः (L. 16)

**तर्के वा कथयेयुर्यथाऽश्वत्रिरात्र इति शाण्डिल्यः ॥१५॥**

यथाश्वमेधे वादिप्रतिवादिरूपेण तर्के प्रश्नप्रतिवचने कुर्वन्ति एवमत्रापि स्यात् । तद्ब्रह्मोद्यमिति ॥१५॥

**प्रजापतिं परिवदन्ति ॥१६॥**

दुर्लभस्त्वं प्रजापते दुराराधश्च त्वं हि पुरुषोत्तमोऽपि सन् स्वमात्मानं मायया छादयसि । तथापि त्वां दशमेनाह्ना वयं गृहीतवन्तः । क्वेदानीं गमिष्यसीत्येवं परिवादः । तथा च ब्राह्मणम्—**आप्त्वैवैनं तद्व्याचक्षते तावदायामैनमिति** (तां. ब्रा. ४.९.१४) । यथा महावने मत्तगजमुपायेन गृहीत्वा संतुष्टाः परिवदन्ति क्वेदानीं दुर्ग्रहो गूढचारी गमिष्यसीति । तादृशमेतदिति ॥१६॥

**पापैः कर्मभिरित्येके न त्वधीमहे ॥१७॥**

प्रजापतिकृतैः **पापैः कर्मभिः** परिवदेयुरि**त्येके** । **न तु** तथा वयम**धीमहे** । किंतु परिवादमन्त्रमधीमहे । तस्मात् यथोक्त एव परिवाद इति ॥१७॥

**अपि वाध्वर्युब्रह्मचानां किंचित्स्यात् ॥१८॥**

**अपि वाध्वर्युब्रह्मचानां किंचित्**परिवादरूपमधीतं तेन वा परिवदेयुः । यथा

---

2. P My² C तर्कयोः कथनम् for तर्के प्रश्नप्रतिवचने कुर्वन्ति; V² °रूपेक्षणतर्के for °रूपेण तर्के; T. °मेधादि प्रतिवादिन्वपेक्षणतर्के for °मेधे ... तर्के

7. P V¹C. आप्त्या for आप्त्वा

8. V¹ C om. संतुष्टा,

9. V¹C दुर्बुद्धे गन्तुं शक्तिः for दुर्ग्रहो गूढचारी गमिष्यसि

11. T. °वादयेयुः for °वदेयुः

12. My² °मात्रम् for °मन्त्रम्; V¹ C. अन्वीमहे for अधीमहे

13. P CL. om. किंचित् स्यात्

14. P CL. इत्येके for यथा

अकुशलो वायं प्रजापतिर्यो दंशमशकान् ससृजे यः स्तेनानित्यादि । तथा बह्वृचानां प्रजापतिर्वै स्वां दुहितरमभ्यध्यायत् (ऐ. ब्रा. ३.३३.१) इत्यादि ॥१८॥

**एतस्यां वेलायां वरान् वृणीरन्मनसा यानिच्छेयुः ॥१९॥**

मनसा प्रार्थितान् वरान् वृणीरन् । न वाचा ॥१९॥

**अभयं धानंजय्यः सर्वकामानपराधात् ॥२०॥**

अभयमेव वृणीरन् । तत्रैव सर्वकामानामनपराधात् । अपराधः प्रच्युतिः ॥२०॥

**उत्तरत उद्गातौदुम्बरीं गृह्णीयात् पश्चात् प्रतिहर्ता दक्षिणतो ब्रह्मा पुरस्तादितरे सर्वे ॥२१॥**

स्पष्टम् ॥२१॥

**अथ जपेयुरिह धृतिरिह स्वधृतिरिह रन्तिरिह रमध्वं मयि धृतिर्मयि स्वधृतिर्मयि रमो मयि रमध्वमिति वौभौ वा ॥२२॥**

स्पष्टम् ॥२२॥

**वाग्यता अपिधाय द्वारे आसीरन्नानक्षत्रप्रवचनात् ॥२३॥**

सदसः पूर्वापरे द्वारे अपिधाय वाग्यता आसीरन् यावदुदितानि नक्षत्राणीति वदन्ति तावन्तं कालम् औदुम्बरीग्रहणं मन्त्रजपश्च वाग्यमनाङ्गम् ॥२३॥

**प्रोक्ते नक्षत्रे पूर्वया द्वारोपनिष्क्रम्य सुब्रह्मण्याप्रणवैर्वाचं विसृजेरन्निति धानंजय्यः ॥२४॥**

नक्षत्राण्युदितानीति प्रोक्ते निष्क्रम्य सुब्रह्मण्यायाः प्रणवानुक्त्वा वाचं विसृजेरन् ॥२४॥

---

5. V[1] C. उभयं for अभयं

6. My[2] कामानपरोधात्, My[4] ⁰कामानपराधात् for ⁰कामानामनपराधात्

20. My[2] सुब्रह्मण्यायां for सुब्रह्मण्यायाः, V[2] My[1] T. My[4] सुब्रह्मण्याह्वानकाले सर्वेऽपि सुब्रह्मण्योमितित्रिः for सुब्रह्मण्यायाः प्रणवान्

**श्रुत्वैवाहूयमानाया इति शाण्डिल्यः ॥२५॥**

श्रुत्वैव प्रणवान् वाग्विसर्गः ॥२५॥

**वरवरणवाग्यमने यजमान एव कुर्यादहीनेषु ॥२६॥**

स्पष्टम् ॥२६॥

**कृत्वेतरे यथार्थं कृत्वेतरे यथार्थम् ॥२७॥**

इतरे यजमानव्यतिरिक्ताः प्रजापतिपरिवादान्तं यथा स्वं कर्म कृत्वा यथार्थं गच्छेयुः । औदुम्बरीग्रहणं मन्त्रजपं च ते न कुर्युः । तयोर्वाग्यमनाङ्गत्वात् ॥२७॥

**इति द्राह्यायणश्रौतसूत्रे नवमे पटले चतुर्थः खण्डः ॥४॥**

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
नवमः पटलो वृत्तो वासुदेवः प्रसीदतु ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रे दीपे नवमः पटलः ॥९॥**

**इति द्राह्यायणश्रौतसूत्रे तृतीयः प्रपाठकः समाप्तः ॥३॥**

---

1. My[3] शाण्डिल्यायन; for शाण्डिल्यः
2. My[4] आहूयमानायाः सुब्रह्मण्यायाः प्रणवान् श्रुत्वैव तुष्णीं for श्रुत्वैव प्रणवान् वाग्⁰; V[2] My[1] T. तूष्णीं for वाग्⁰
6. My[2] V[1] C. ⁰वादि for वादान्तं यथास्वं कर्म
8. P. इति तृतीयस्याष्टमः खण्डः ॥8॥ for इति ··· नवमे पटले चतुर्थः खण्डः ॥4॥
9. P. कल्पोक्तं ब्राह्मणोक्तं च यथावदवधारयन् ।
अष्टमं पटलं व्याख्याद्धन्वी मेधाविनां प्रियः ॥
for द्राह्यायण ···· प्रसीदतु ॥

## चतुर्थः प्रपाठकः

## दशमः पटलः

### प्रथमः खण्डः

अथ महाव्रतं प्रस्तौति—

**महाव्रतस्य पृष्ठ उपाकृते युक्त्वा स्तोमं परिमादो गायेदिति भाडितायनः ॥१॥**

इति । गायत्रं बृहद्रथन्तरे भद्रं राजनमिति सामपञ्चकं संहृत्य पृष्ठस्तुतिसाधनं महाव्रतमित्युच्यते । तद्योगात् क्रतुरपि । तत्र **प्रणवेन पुरस्तादाहवनीयमुपतिष्ठन्ते** (तां. ब्रा. ५.४.१) इत्यादि ब्राह्मणेन त्रयोदश परिमादो महाव्रतस्तोत्राङ्गतया क्लृप्ताः । तासां गानकालमाह सूत्रकारः स्तोमयोगानन्तरं **गायेत्** इति । **परिमाद** इति स्तोत्राङ्गतया प्रयोगकाले महाव्रतस्य पक्षिणो लोमनखस्थानीयानां साम्नां नामधेयम् ॥१॥

**प्रतिगृह्य तृणेऽयुक्त्वेति गौतमशाण्डिल्यौ धानंजय्यश्च ॥२॥**

उपाकरणदर्भौ **प्रतिगृह्य** स्तोमयोगमकृत्वैव गायेदिति मतान्तरम् ॥२॥

**प्रागेव स्तोत्रोपाकरणादित्येके ॥३॥**

पृष्ठोपाकरणात् पूर्वमेव परिमादो गायेदित्येके ॥३॥

**दक्षिणेनाग्नीध्रीयं गत्वोत्तरेणाग्निं प्राणप्रभृतिभिरुपतिष्ठेरꣳस्तदुक्तं ब्राह्मणेन ॥४॥**

---

6. $My^{1-2}$ मटि⁰ for माडि⁰

7. $V^{1-2}$ गायत्र्यां for गायत्रं; $V^{1-2}$ राजानम् for राजनम्

10. P $V^{1-2}$ L. गानम् for गानकालम् P.$V^{2}$ L $My^{2}$ om. इति after गायेत्

11. $V^{1}$ CLP before स्तोत्र⁰ add स्तोत्रं PCL. om. महाव्रतस्य ··· साम्नां

14. P $V^{1}$ ⁰करणादूर्ध्वं for ⁰करणदर्भौ

अग्निशब्देन चित्याग्नेरभिधानमिति । ब्राह्मणेनैवोपस्थानं सर्वमुक्तम् ॥४॥

तत्र विशेषमाह—

**सर्वाण्युद्गाता सकृत् सकृद्गायेन्निधनमितरावनूपेयाताम् ॥५॥**

इति । **सर्वाण्युद्गातैव गायेत्** । कथं तर्हि ब्राह्मण **उपतिष्ठन्त** इति बहुवचनम् । इतरयोरपि निधनवचनेऽन्वयाद् बहुवचनम् इति ॥५॥

**अपि मध्ये निधनेषु ॥६॥**

अन्तर्निधनेष्वपि प्रस्तोतृप्रतिहर्तारावनूपेयाताम् ॥६॥

**आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् ॥७॥**

आद्यन्तस्तोभयुक्तेषु प्राणादिसामसु प्रतिपादं **स्तोभेत्** । त्रिवृदादिस्तोमाभावेन प्राणादीनां परिसामत्वात् यथाध्ययनं गाने प्राप्ते वचनमेतत् ॥७॥

**तेनैव प्रत्याव्रज्य पुच्छम् ॥८॥**

**तेनैव** उक्तेन मार्गेण **प्रत्याव्रज्य पुच्छम्** अपानसाम्ना ब्राह्मणोक्तेनोपतिष्ठेरन् ॥८॥

**व्रतपक्षयोः पूर्वेण दक्षिणं पक्षम् ॥९॥**

तत्र **व्रतपक्षाभ्यां पक्षावुपतिष्ठन्ते** (तां. ब्रा. ५.४.३) इति ब्राह्मणम् । तत्र प्रतिपक्षं सामद्वये प्राप्ते व्यवस्थामाह—**व्रतपक्षयोर्मध्ये पूर्वेण** साम्ना **दक्षिणं पक्षम्**उत्तरेण साम्नोत्तरं पक्षमिति । अत्र ब्राह्मणम्—**प्रजापतेर्हृदयेनापि कक्षमुपतिष्ठन्ते** (ता. ब्रा. ५.४.४) इति । तत्र द्वावपि कक्षौ भवतः ॥९॥

तत्र नियममाह—

**उत्तरमपि कक्षमुपतिष्ठेरन् ॥१०॥**

इति । **वसिष्ठस्य निहवेन चात्वालमुपतिष्ठन्ते** (तां. ब्रा. ५.४.५) **वैश्वदेव्यामृचि भवति** (ता. ब्रा. ५.४.६) इति च ब्राह्मणम् ॥१०॥

---

1. My[1] चित्यग्नेर for चित्याग्नेर्

5. T. °वचनेन for वचने; P. समन्वयात for अन्वयात्

10. V[1] PC प्रति° for परि°

15. T. My[1,4] अथ, My[2] अत्र for तत्र

तत्र वैश्वदेवीमृचं दर्शयति—

**विश्वे देवा इति वसिष्ठस्य निहवमूहेत् ॥११॥**

इति। ननु च ऊहेदिति वचनमनर्थकम्। तस्याध्ययनसिद्धत्वात्। सत्यम्। एतद्वचनोत्तरकालमूहः कृत इत्याहुः। अन्ये तु विस्पष्टार्थं वचनमित्याहुरिति। **सत्रस्यार्ध्याग्नीध्रमुपतिष्ठन्ते** (ता. ब्रा. ५.४.७) इत्यादि ब्राह्मणम् ॥११॥

तत्रोपस्थानदेशमाह—

**चात्वालमुपस्थायोत्तरेणाग्नीध्रीयं गत्वा पश्चात् तिष्ठन्तः ॥१२॥**

इति। स्पष्टम् ॥१२॥

**तत एव प्रत्यङमुखा इति धानंजय्यः ॥१३॥**

तत एव चात्वालदेश एव स्थित्वेत्यर्थः। तत्रैवा **तमितोर्निधनमुपयन्ति** (तां. ब्रा. ५.४.९) ति ब्राह्मणम् ॥१३॥

किं पुनस्तन्निधनमत आह—

**तस्योत्तमं निधनमा तमितोरुपेयुः ॥१४॥**

इति। तत्र सत्रस्यर्धेरुत्तममेव निधनं सुवर्ज्योतिरित्येतद् यावत्प्राणस्य बलमो भवति तावन्तं कालमनुच्छ्वसन्त आवर्तयन्नित्यर्थः। **श्लोकानुश्लोकाभ्यां हविर्धाने** (ता. ब्रा. ५.४.१०) इति ब्राह्मणम् ॥१४॥

तत्र तयोर्देशभेदमाह—

**पूर्वेण हविर्धाने पुरस्तात् प्रत्यङमुखाः पश्चादितरेण ॥१५॥**

इति। **पूर्वेण** श्लोकेन हविर्धानयोः **पुरस्तात् प्रत्यङ्मुखाः** स्थित्वा इतरेणानुश्लोकेन हविर्धानयोः **पश्चात्** स्थित्वेत्यर्थः ॥१५॥

**यामेन मार्जालीयम्** (तां ब्रा. ५.४.११) इति ब्राह्मणम्। किं पुनर्याममम्। कथं वोपस्थानम्। तदुभयमाह—

---

23. P. CL. लोप⁰ for वोप⁰

**तत एवेक्षमाणा मार्जालीयं नाके सुपर्णमिति यद्द्वन्द्वेषु ॥१६॥**

इति । हविर्धानदेश एव स्थित्वा नाके सुपर्णम् (ऋ. वे. १०.१२३.६) इति द्वन्द्वेषु सामसु यत् पठितं यामं तेनोपस्थानम् ॥१६॥

**आयुर्नवस्तोभाभ्यां सद उपतिष्ठन्ते** (तां. ब्रा. ५.४.१२) इति ब्राह्मणम् । तत्र प्रकारमाह—

**यथा हविर्धाने तथा सदः ॥१७॥**

इति । **यथा हविर्धाने तथा** सदोऽप्युपतिष्ठेरन् । सदसः पुरस्तात् स्थित्वा पूर्वेण साम्नोपस्थानम् । पश्चादुत्तरेणेत्यर्थः ॥१७॥

**ऋश्यस्य साम्ना गार्हपत्यम्** (तां. ब्रा. ५.४.१३) इति ब्राह्मणम् । तत्र देशमाह—

**अन्तर्वेदि प्रत्यङ्मुखा गार्हपत्यमिति धानंजय्यः ॥१८॥**

इति । गतम् ॥१८॥

**तस्यैव पश्चात् तिष्ठन्त इति शाण्डिल्यः ॥१९॥**

**तस्यैव** गार्हपत्यस्य **पश्चात्** प्राङ्मुखास्तिष्ठन्त इत्यर्थः ॥१९॥

**यत् परोक्षं निधनमुपेयुर्ह्रीतमुखं प्रतिमुञ्चेरन् । यत् प्रत्यक्षमुपयन्ति ह्रीतमुखमेवापजयन्ति** (तां. ब्रा. ५.४.१५) इति ब्राह्मणम् । तस्यार्थमाह—

**इन्द्रप्रभृति प्रत्यक्षं निधनमुपेयुः ॥२०॥**

इति । किं पुनः प्रत्यक्षमिति चेत् । तदुक्तं निदानकारेण—**ह्रस्वं प्रत्यक्षं द्राघितं परोक्षम् । अपि वेन्द्रेति प्रत्यक्षम् । इति परोक्षम्** (नि. ६.७) इत्यादि । **ऋश्यास**

4. V[1-2] C. My[1,4] T. om. उपतिष्ठन्ते

7. V[2] My[1] LT My[4] after तथा ins. एव

8. V[2] °तिष्ठेरन् for °स्थानम्

16. P. V[1] CL. जपन्ति for जयन्ति

18. V[1-2] LC दीर्घं for द्राघितं;

19. C च for वा

**इन्द्र भुङ्** इतीन्द्रपदप्रभृत्युपरितनानि सर्वाणीन्द्रवाचकानि पदानि संबुध्यन्तानि प्रयोज्यानीति सूत्रकारस्याभिप्रायः। **इन्द्रप्रभृतीति** वचनात् । तेनेन्द्रस्तरसपूता इति प्रथमान्तमपोह्य इन्द्र तरस पूतेति संबुध्यन्तं प्रयोज्यम्। यथा ऋश्यास इन्द्र मघवन्निन्द्रेति त्रीणि संबुध्यन्तानि तद्वदिति। पुरस्थितस्यैव हि संबोधनमिति संबुध्यन्तं प्रत्यक्षमिति व्यपदिश्यते। **ह्लीतमुखमेवापजयन्ती** (तां. ब्रा. ५.४.१५) ति स्तुतिवाक्यस्यायमर्थः। प्रगल्भो हि महान्तं संबोधयितुं क्षमः। यथा शक्रस्त्वमसि राजेन्द्र जगतः परिपालनक्षम इति। अप्रगल्भस्तु स्वगृह एव परोक्षं कथयति समर्थोऽयं राजेति। तेन प्रत्यक्षनिधनवचने सति ह्लीतमुखं लज्जायुक्तमधृष्टं मुखं त्यक्तं भवति। सदसि प्रगल्भो भवतीति यावदिति ॥२०॥

इति द्राह्यायणश्रौतसूत्रे दशमे पटले प्रथमः खण्डः ॥१॥

---

1. V.My2 C मघवन्निन्द्र भुङ्ङिति भुङ्ङित प्रभृतीन्द्रतत्परपूता/ 2345 इति for इन्द्रपदप्रभृत्युपरितनानि।
2. P इन्द्रस्तत्पर for इन्द्रस्तरस
3. PV. इन्द्रस्तत्पर V2 My. इन्द्रस्तर My2 इन्द्रससर for इन्द्र तरस
5. T. आपादयन्ति, P अपजपन्ति for अपजयन्ति;
6. My$^2$ब्राह्मण° for स्तुति°
8. V$^1$ T. अदृष्टं, P L. अवृष्टं for अधृष्टं; T. V$^2$ My$^1$ after युक्तं ins. कातरम्
10. P तृतीयस्य नवमः खण्डः ॥9॥ for दशमे ··· खण्डः ॥1॥

## द्वितीयः खण्डः

**अथ राजानं संनाहयेत् ॥१॥**

अथोद्गाता राजानं तद्राष्ट्राधिपतिं क्षत्रियमाहूय तस्य कवचबन्धं कारयेत् ॥१॥

**तस्य द्व्यवराध्यौं रथावनुयायिनौ स्याताम् ॥२॥**

अपरपक्षौ द्वौ रथौ तस्य राज्ञोऽनुयायिनौ भवतः ॥२॥

**पूर्वेण देवयजनꣳसंनह्येरन्नन्ये तस्मात् ॥३॥**

तस्माद् राज्ञोऽन्ये सचिवाः पुरस्ताद् देवयजनस्य स्थित्वा संनहनं कुर्युः । राज्ञस्तु संनहनदेशं वक्ष्यामः ॥३॥

**दक्षिणेन परियायुः ॥४॥**

दक्षिणेन देवयजनं राजा राजपुरुषाश्च परिगच्छेयुः ॥४॥

**पूर्वेण पत्नीशालामुद्गाता गत्वा दक्षिणे वेद्यन्ते प्राचो दर्भान् सꣳस्तीर्य तेष्वेनं प्राङ्मुखमुपवेशयेत् ॥५॥**

एनं राजानं प्राङ्मुखमुपवेशयेत् ॥५॥

**अथास्मै वर्माभिहरेत् ॥६॥**

अथास्मै राज्ञे कवचमाहरेदुद्गाता संनहनार्थम् ॥६॥

**अन्यं वाभिहरन्तमनुमन्त्रयेतोत्तिष्ठ राजन् परिवर्मास्यश्वयुक्तो रथो विततो देव आखणो विशाꣳ राजा ब्राह्मण एधि गोप्तेति ॥७॥**

---

3. T. My[4] V[2] तस्य राष्ट्रस्य for तद्राष्ट्र°; V. C. om. क्षत्रियम् P. C. आदिकं धारयेत् for °बन्धं कारयेत्; T. °संबन्धं, My[1] °बलं for °बन्धं
5. T. रथानु° for रथावनु
6. My[4] T. V[1] My[1-2] °पक्षे for पक्षौ; T. CL. अवर° for अपर°; My[4] before अपर° add : अपराध्यौं
9. V[1]C. om. तु
10. My[4] सरीयुः for परियायुः

कृत्वेत्यध्याहार्यः । अथवा स्वयं कवचमनाहरन्नन्यं पुरुषमभिहरन्तं कृत्वा राजानमुद्गाताभिमन्त्रयेतोत्तिष्ठ राजन्निति मन्त्रलिङ्गाद् राजाभिमन्त्रणम् । एतद्वर्म पर्यास्यस्वेति मन्त्रपदान्वयः । यथा घृतवतीमध्वर्यो स्रुचमास्यस्वे (SB. १.५.२.१) ति ॥७॥

**पश्चिमेन परियाहीत्युक्त्वा तेनैव प्रत्याव्रज्योत्तर एनं वेद्यन्तेऽवस्थाप्य ब्रूयाद्धस्तत्रं बध्नीष्वोज्ज्यमायुधं कुरुष्व त्रीनिषूनुपकल्पयस्वायस्मयानन्यमेव कं चतुर्थमिति ॥८॥**

पत्नीशालायाः **पश्चिमेन परियाहीति** राजानमादिश्योत्तरवेद्यन्त **एनमवस्थाप्य ब्रूयात् हस्तत्रं बध्नीष्वे**त्यादिप्रैषम् । तस्यायमर्थः । हस्तो येन त्रायते ज्याभिघातात् स हस्तत्रस्तं हस्ते बध्नीष्व । **आयुधं** धनुरुज्ज्यं उद्गतज्यमाततज्यं कुरुष्वेत्यर्थः । **त्रीनिषूनयस्मयानुपकल्पयस्व** । **चतुर्थ**मिषुं स्वयमेव कं च ताम्रमयमयस्मयं वा कल्पयस्व ॥८॥

**प्रतिधत्स्वेति ब्रूयात् ॥९॥**

धनुषि शरं **प्रतिधत्स्वेति** प्रेष्येत् ॥९॥

**तं प्रतिदधानमनुमन्त्रयेत वैणावताय प्रतिधत्स्व शङ्कुं मापप्रोष्ठमोतेति पप्तद् ब्रह्मणो गुप्त्यै विधृत्यै धारयात्रेति ॥१०॥**

**वैणावताये**त्यादिमन्त्रस्यायमर्थः । वीणावान् प्रवीणः समर्थः । तस्य भावो **वैणावतं** कौशलम् । कौशलाय **शङ्कुं** शरं **प्रतिधत्स्व** । न कंचित् प्रतियोगिनमुद्दिश्य

---

1. $V^1$ P. C. ॰हारः for ॰हार्यः
2. T. इमे कुलं गोराजाभिमन्त्रणमेतद्वर्म पर्यस्वेतिमन्त्रैः पदान्वयपर्यासः परिधनं कवचं परिधेहीत्यर्थः for इति मन्त्र ··· पर्यास्यस्वेति (L. 3).
3. C L $V^1$ चर्म॰ for वर्म॰; $V^2$ $My^1$ after इति add :–पर्यासः परिधानम् कवचं परिधीहीत्यर्थः
8. $My^1$ T. $My^4$ पयाहि for परियाहि PCL. वेद्यन्तम् for वेद्यन्ते
9. $My^2$ ज्यानिपातात्, T. ज्याभिव्यघातात् for ज्याभिघातात्
18. T. om. न कंचित् ··· उद्दिश्य

किंतु प्रथमं केवलं हस्तकौशलसंपत्यर्थं प्रतिधत्स्वेत्यर्थः । **मापप्रोष्ठ मोतेति पप्तदिति** । सोऽयं प्रतिहतः शरः प्रमादान्मा पप्रोष्ठ मापगच्छेत् । मा गलितो भूयादित्यर्थः । किं च **मोतेति** । **पप्तत्** त्वामतिलङ्घ्य मानिपतेत् । किंतु ब्राह्मणानां **गुप्त्यै केवलमत्र धारयेति** ॥१०॥

**संभृत्यातिष्ठेति ब्रूयात् ॥११॥**

शरं **संभृत्य** रथयोरनुयायिनोरन्यतरमातिष्ठेति प्रेष्येत् ॥११॥

**उत्तरेणाग्नीध्रीयं पूर्वापरे चर्मणी विबध्नीयुर्दक्षिणेन रथपथं शिष्ट्वा ॥१२॥**

अग्नीध्रीयमण्डपस्योत्तरतश्**चर्मणी** द्वे **विबध्नीयु**राकाशे । यजमानपुरुषाः पूर्वमेकमपरं चैकं तयोर्दक्षिणतो रथस्य संचरमवशिष्यैवं कुर्युः ॥१२॥

**तं ब्रूयात् प्रदक्षिणं देवयजनं परीया पूर्वं चर्मगिमनेषु विध्येरेकैकेनोत्तरोत्तर्यनतिपातयन्नपरस्मा इतरे यथाभिप्रेतमस्येयुस्तृतीयेन विध्वोदङ् प्रयायास्तदा चतुर्थमिषुं यां दिशं मन्येथास्तामस्येरवब्रह्मद्विषो जहीति गा दृष्ट्वावतिष्ठेथास्तत्र त्वा विस्रंभयेयुः ॥१३॥**

**विस्रम्भयेयुरिति** मन्त्रान्तः । इति शब्दोऽध्याहर्तव्यो मन्त्रसमाप्तिसूचकः । मन्त्रस्य चायमर्थः । त्रिः**प्रदक्षिणं देवयजनं** परितो गच्छ । परिगत्य परिगत्यागमनं **पूर्वं चर्मणैकैकेन विध्येः** । **उत्तरोत्तरीति** । यथा पूर्वविद्धस्य शरस्योपरि उत्तरः शरो भवेत्तथा विध्येः । **अनतिपातयन्निति** । यथा चर्मातिलङ्घ्य शरो न गच्छेत्तथा कुर्वन्नित्यर्थः । **अपरस्मै** चर्मणे यथाकाममितरे राजपुरुषाः शरानस्येयुः । **तृतीयेन**

---

2. P. मावगतं चेत् $V^{1}$ C. मावग, L. माहग, for मापगच्छेत्; P. मागुरु-काष्ठं for मा गलितो
4. P. केवलमन्त्रं for केवलमत्र
6. $V^{2}$ $My^{1}$ संहृत्य for संभृत्य
11. PCL. परीयात् for परीया
20. P. इतरेण राजसु° for इतरे राज° PCL. अन्यस्मै for अपरस्मै

शरेण पूर्वं चर्म **विध्वोदङ्मुखो** गच्छेः । तदानीं **चतुर्थमिषुं** यस्यां दिशि निरसितुं **मन्येथास्तां** प्रतिनिरस्येद् अव **ब्रह्मद्विषो जहीति** मन्त्रेण । तदानीं **गा दृष्ट्वा** तूष्णीम**वतिष्ठेथाः** । तत्र त्वां **विस्रम्भयेयुः** । विश्वस्ताः सुखं चरेयुः । धनुष्पाणिं त्वां दृष्ट्वा तासामुद्वेगो माभूदित्यर्थः ॥१३॥

५ **ब्राह्मणमुक्त्वेमं हिंकारवेलायां कारयेयुः ॥१४॥**

इति ॥१४॥

७ **इति द्राह्यायणश्रौतसूत्रे दशमे पटले द्वितीयः खण्डः ॥२॥**

# तृतीयः खण्डः

**भूमिदुन्दुभिमाव्रजेत् ॥१॥**

उत्तरकाले स्तुत्युपक्रमे हिंकारवेलायामिमं राजानं प्रदक्षिणं देवयजनं परीया इत्यादिप्रैषार्थं कारयेदिति कंचिद् ब्राह्मणमादिश्य भूमिदुन्दुभिं प्रत्युद्गाता गच्छेत् ॥१॥

कः पुनर्भूमिदुन्दुभिः । तमाह—

**पश्चादाग्नीध्रीयस्यार्धमन्तर्वेदि श्वभ्रस्य खातं स्यादर्धं बहिर्वेदि ॥२॥**

इति । आग्नीध्रीयस्य पश्चात् श्वभ्रं निखनेत् । तस्यार्धमन्तर्वेदि स्यात् । अर्धं बहिर्वेदि ॥२॥

**आर्षभेणोत्तरलोम्ना चर्मणा पिहितः स्यात् ॥३॥**

आर्षभचर्मणोत्तरलोम्ना सोऽयं श्वभ्रः पिहितः स्यात् । स भूमिदुन्दुभिरित्युच्यते ॥३॥

**त्वं वागसि ॥**

**ये नः सत्रे अनिन्दिषुर्दीक्षायां श्रान्त आसिते ।**

**अराद्धिं तेभ्यो दुन्दुभे राद्धिमस्मभ्यमावद ॥ इति ।**

**परावद द्विषन्तं घोरां वाचं परावदाथास्मभ्यꣳ सुमित्र्यां वाचं दुन्दुभे कल्याणीं कीर्तिमावदेति । परावद द्विषतो वाद्यं दुर्हार्दो यो विबूकुहोऽथास्मभ्यं पुष्टिꣳ राद्धिं श्रियमावद दुन्दुभे इत्येनमेतैर्मन्त्रैः पृथगाहत्य बालधानेन ॥४॥**

---

3. P. स्तोत्र for उत्तर॰; V[1] C. ॰कालं for काले
   V[2] My[1] T. My[4] transp. प्रदक्षिणं · · · प्रैषार्थं after कारयेदिति (L. 4)

11. P V[1] अभिपिहितः for पिहितः

16. My[2] after राद्धिम् ins. तु

19. T. My[4] वाक्यं for वाद्यं

20. L. om. एनम्

**त्वं वागसी**त्येकं यजुः । **ये नः सत्र** इत्यानुष्टुभः श्लोक एकः । द्वयमप्येको मन्त्रः । तयोरन्त इतिकरणात्तस्य चायमर्थः । **येऽस्माकं सत्रे अनिन्दिषुर्दीक्षायां** दीक्षादिवसेषु न किंचिदेभिस्तपस्तप्तमिति हे **श्रान्ते** नित्यतपस्विनि हे **आसिते** नित्यमासीने इति संबुद्धिः । नित्यमासीना हि भूमिः । इतरास्तु दुन्दुभयो जङ्गमाः । अथवा श्रान्ता आसत इति पाठः । तस्य चायमर्थः । हे श्रान्ताः कर्म कर्तुमसमर्थाः कुर्वाणान् निन्दन्त आसत इति । हे **दुन्दुभे तेभ्यो** निन्दकेभ्योऽराद्धिमसिद्धिमावद । **अस्मभ्यं तु राद्धिं** सिद्धि**मावदेति** । अथ द्वितीयो मन्त्रः **परावदे**त्यादि । तस्यायमर्थः । यथास्माकं शत्रुः पराभवेत्तथा तं वद । तस्य च **घोरां** वाचं निर्णुद । **अथास्मभ्यं सुमित्र्यां** मैत्रगुणयुक्तां **वाचं कल्याणीं** च **कीर्तिमावदेति** । अथ तृतीयो मन्त्रः **परावद द्विषत** इति । तस्यायमर्थः । **द्विषतो वाक्यं परावद** । **यो दुर्हार्दो विषूकुहः** यो विषुर्व्याप्तो भूत्वा किं कुत्र फलिष्यतीति नास्तिकवादं वदति स विषूकुहः । स्पष्टः शेषः । एवमेतैस्त्रिभिर्मन्त्रैर्वालधानेन पुच्छकाण्डेन **पृथक् पृथक्** भूमिदुन्दुभिमाहन्यात् ॥४॥

**अन्यं वा घ्नन्तमनुमन्त्रयेत ॥५॥**

अन्यमिति सप्तम्यर्थे द्वितीया । अन्यस्मिन् **वा** पुरुषे बालधानेन घ्नति सति भूमिदुन्दुभिमुक्तैर्मन्त्रैरभिमन्त्रयेत । न स्वयं हन्यात् । अथवा कृत्वेत्यध्याहारः । **अन्यं** पुरुषं घ्नन्तं कृत्वेति ॥५॥

**अप उपस्पृश्य यथैतं प्रत्याव्रज्य पश्चात्तिष्ठन्तोऽग्निमुपतिष्ठेरन्नमस्ते गायत्राय यत्ते पुरो यत्ते शिरो नमस्ते रथन्तराय यत्ते दक्षिणतो यस्ते दक्षिणः पक्षो नमस्ते बृहते यत्त उत्तरतो यस्त उत्तरः पक्षो नमस्ते यज्ञायज्ञीयाय यत्ते पश्चाद्यत्ते पुच्छं नमस्ते वामदेव्याय यस्त आत्मा यत्ते मध्यमित्येतैः पृथगङ्गान्यन्वर्थम् ॥६॥**

---

1. My² om. अपि
2. V[1-2] L यस्मात् for येऽस्माकं; PCL. अनिर्दिष्ट⁰ for अनिन्दिषुर्दीक्षायां
10. P V[1] L दुर्हृदः for दुर्हार्दः
15. V[1] L C. कृत्वेत्यध्याहार; । अथवा अन्यं पुरुषं घ्नन्तं कृत्वा भूमिदुन्दुभिमुक्तैर्मन्त्रैरभिमन्त्रयेत । न स्वयं हन्यात् ।' for अन्यमिति ·· कृत्वेति
18. My[4] My[1] यथेतं for यथैतं, My[4] ⁰वृज्य for ⁰व्रज्य;

**अप उपस्पृश्य यथैतं प्रत्याव्रज्य पश्चात्तिष्ठन्तः** संचितं चित्यमग्निमुपतिष्ठेरन्। **नमस्त** इत्यादिभिर्मन्त्रैर्यथालिङ्गं तानि तानि शिरःपक्षादीन्यङ्गानि। अत्र राजनवामदेव्ययोरात्मत्वे ब्राह्मणे विकल्प उक्तः। तथा भद्रयज्ञायज्ञीययोः पुच्छत्वे। तत्र यदा भद्रराजनाभ्यां स्तुतिस्तदोपस्थानमन्त्रस्योहः कार्यः। तथैव बह्वृचा अप्यधीयते ॥६॥

**अथ सर्वं समस्तेन तस्मै ते सुभोः सुभुवो भूयास्म। नामासि नाम भूयासम्। आविरस्याविर्मा कुरु। सवितः प्र मा सुव। यां मनुष्याणां भूतौ संपश्यसि तेष्वभिभूयासम्। श्रियं मयि धेहीति ॥७॥**

**अथ सर्वं** चित्याग्निं **समस्तेन तस्मै त** इत्यादिना मन्त्रेणोपतिष्ठेरन्निति ॥७॥

**उपस्थाय सदः प्रविशेयुः ॥८॥**

एवं चित्याग्निमुपस्थाय **सदः प्रविशेयु**र्महाव्रतस्तुत्यर्थम्। अत्र पक्षद्वयमस्ति। **सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्** (तां. ब्रा. ५.६.१)। **उद्गातैव वा सर्वेणोद्गायेत्** इति। तत्र प्रथमपक्षे उपस्थानानन्तरमेव सदः प्रवेशः। द्वितीये तु पक्षे महाव्रतस्य शिरः पक्षपुच्छैः। यथा ब्राह्मणम् **हविर्धाने शिरसा स्तुत्वा** (तां. ब्रा. ५.६.७) इति। उक्तप्रकारेण पुच्छपर्यन्तं गीत्वा राजनस्तुत्यर्थं सदः प्रवेश इति मन्तव्यम्। कुतः। एतत्सदः प्रविष्टानां पुनर्निष्क्रमणविधानाच्छिरः प्रभृतीनां च तत्र तत्रैव देशे गेयत्वाच्च ॥८॥

**इति द्राह्यायणश्रौतसूत्रे दशमे पटले तृतीयः खण्डः ॥३॥**

---

1. My[4] My[1] यथेतं for यथैतं; My[4] ⁰वृज्य for ⁰व्रज्य; PV[1] संचित चिताग्निम्, My[2] संचितं चित्याग्निम्. V[2]C संचिताग्निम्, My[1] चित्याग्निम्, Lसंचितं चित्याग्निम् for संचितं चित्यमग्निम्
6. V[1] My[1] सुमवो for सुभुवो
17. V[2]T My[1],[4] प्रविशेयुः for ⁰प्रवेशः
20. P. इति तृतीयस्य एकादशः खण्ड; ॥11॥ for इति · · · तृतीयः खण्डः ॥3॥

# चतुर्थः खण्डः

**अपरया द्वारौदुम्बरीमासन्दीं मौञ्जविवानामतिहरेयुः ॥१॥**

मौञ्जीभिः रज्जुभिर्वेष्टनं यस्याः सा मौञ्जविवाना। तामासन्दीं सदः प्रवेशयेयुः यजमानपुरुषाः ॥१॥

**यज्ञीयस्य वृक्षस्योदुम्बराभावे ॥२॥**

उदुम्बराभावे यज्ञीयस्य वृक्षस्य विकारः स्यादासन्दी ॥२॥

**मुञ्जाभावे दार्भम् ॥३॥**

मुञ्जाभावे दार्भं दर्भमयैः शुल्वैरासन्द्यावेष्टनं स्यात् ॥३॥

**तस्याः प्रादेशमात्राः पादाः ॥४॥**

तस्याश्चत्वारः पादाः प्रादेशमात्राः स्युः ॥४॥

**अरत्निमात्राणीतराण्यङ्गानि ॥५॥**

इतराणि अङ्गानि प्राचीनोदीचीनफलकानि अरत्निमात्राणि स्युः ॥५॥

**दक्षिणेनौदुम्बरीं हृत्वा तस्या उत्तरतो निदध्युः ॥६॥**

सदसो मध्ये या औदुम्बरी स्थूणा तां दक्षिणेनासन्दीं हृत्वा तस्या उत्तरतो निदध्युः ॥६॥

---

3. My[2] after रज्जुभिः adds विवयतं V[1] मौञ्जी विवयनाम् for मौञ्जविवाना; V[2] My[1,4] त्रिभिरायतं, T. तिसृभिरायतं for रज्जुभिः
5. V[1]CL. यज्ञियस्य for यज्ञीयस्य
6. V[1,2] औदुम्वर° for; उदुम्वर° V[2]CL. यज्ञियस्य for यज्ञीयस्य
8. P शुम्बैः My[4] शिल्पैः, for शुल्वैः
12. V[1] उदीचीनि for उदीचीन°
14. V[1]My[1] औदुम्बरीं for आसन्दीं

**तामुत्तरेणोद्गाता गत्वा पश्चादुपविश्य भूमिस्पृशोऽस्याः पादान् कृत्वा कूर्चानधस्तादुपोह्याभिमृशेद् बृहद्रथन्तरे ते पूर्वौ पादौ श्यैतनौधसे अपरौ वैरूपवैराजे अनूची शाक्वर रैवते तिरश्ची इत्येतैः पृथगङ्गानि ॥७॥**

**अस्याः** आसन्द्याः **पादान्** भूमिस्पृशो भूमौ सुप्रतिष्ठितान् **कृत्वा** चतुरः **कुर्चाना**सन्द्या **अधस्तादुपोह्य** तदङ्गान्यभिमृशेन्मन्त्रेण यथालिङ्गं वैरूपवैराजे **अनूची** इत्यादि । अनूची प्राचीनफलके । तिरश्ची उदीचीनफलके ॥७॥

**विवयनमालभ्यर्चः प्राञ्च आताना यजूꣳषि तिर्यञ्चः सामान्यास्तरणꣳ श्रीरुपबर्हणं वाकोवाक्यमतिलोका वारवन्तीयꣳ संधयो राजनमात्मा प्रतिष्ठा यज्ञायज्ञीयमिति ॥८॥**

मुञ्जमयं **विवयनमालभ्य ऋचः प्राञ्च** इत्यादिमन्त्रं जपेत् । **प्राञ्च आताना** प्राचीना रज्जवः । उदीचीना रज्जवः **तिर्यञ्च** आतानाः । **आस्तरणमुपबर्हणं च** मुञ्जमयमेव । **अतिलोका** छिद्राणीति ॥८॥

**तां मुखेनोरसा बाहुभ्यामिति स्पृष्ट्वारोहेद् वसवस्त्वा गायत्रेण छन्दसारोहन्तु । तानन्वधिरोहामि । राज्याय रुद्रास्त्वा त्रैष्टुभेन छन्दसारोहन्तु । तानन्वधिरोहामि । वैराज्यायादित्यास्त्वा जागतेन छन्दसारोहन्तु । तानन्वधिरोहामि । स्वाराज्याय विश्वेत्वा देवा आनुष्टुभेन छन्दसारोहन्तु । तानन्वधिरोहामि साम्राज्यायेति ॥९॥**

---

9. My$^{2}$ अतीलोका, My$^{4}$ अतिरोहिणं, T. अतिरोगा, V$^{1}$ अतिरोका, C. अतीरेका for अतिलोका

14. V$^{2}$ My$^{1}$ ⁰रोहिणीति, P ⁰त्विन्द्राणीति, My$^{4}$ ⁰रोहिणीमिति, T. ⁰रोहणीति for छिद्राणीति; My$^{2}$ अतीराका; for अतिलोका

मुखेनोरसा बाहुभ्यामिति त्रिभिरङ्गैः स्पृष्ट्वा वसवस्त्वेत्यादिमन्त्रैरारोहेत् ॥९॥

अथ मन्त्रविकल्पमाह—

**अथैतैरेव देवता उदस्य राज्यशब्दं चामुना त्वा छन्दसारोहामीति वैराजपञ्चमैरिति गौतमः ॥१०॥**

**अथ एतैरेव** पूर्वोक्तैर्मन्त्रैः देवतापदानि त्यक्त्वा **राज्यशब्दं च** व्युदस्य **अमुना त्वा छन्दसारोहामी**त्येवं रूपै**र्वैराजपञ्चमै**रारोहेत्। तद्यथा गायत्रेण त्वा छन्दसारोहामि। त्रैष्टुभेन त्वा छन्दसारोहामि जागतेन त्वा छन्दसारोहामि आनुष्टुभेन त्वा छन्दसारोहामि वैराजेन त्वा छन्दसारोहामीति मन्त्रपञ्चकम् **इति गौतमः** ॥१०॥

**चतुर्भिरिति धानंजय्यः ॥११॥**

**त्रिभिरिति शाण्डिल्यः ॥१२॥**

स्पष्टे ॥११-१२॥

**आरुह्य जपेत् स्योनामासद ॐ सुखदामासदं नमस्तेऽस्तु मा मा हि ॐ सीरिति ॥१३॥**

स्पष्टम् ॥१३॥

**तस्मिन्नारोहति कूर्चानारोहयेयुः प्रष्ठो ब्रह्मा गृहपतिः ॥१४॥**

तस्मिन्नुद्गातर्यारोहति सति चतुरः कूर्चानेकैकमारोहयेयुः प्रष्ठी प्रस्तोतृप्रतिहर्तारौ ब्रह्मा गृहपतिश्च ॥१४॥

---

5. P. ins. आरोहेत् after इति

9. PCL. om. गौतमः, My[4] गौतममतम् for गौतमः

14. P. सुषदां for सुखदां

17. P C.L. आरोहेयुः for आरोहयेयुः

18. P. आहरेयुः My P[4] आरोहेयुः for आरोहयेयुः

**आसन्द्या व्याख्यातं द्रव्यं वाणस्य द्रव्यं वाणस्य ॥१५॥**

वाणो नाम वीणाविशेषो ब्राह्मणे विहितः। तस्य प्रकृतिद्रव्यमासन्द्या व्याख्यातम्। उदुम्बरो वा यज्ञीयो वा वृक्षः ॥१५॥

इति द्राह्यायणश्रौतसूत्रे दशमे पटले चतुर्थः खण्डः ॥४॥

**इति द्राह्यायणश्रौतसूत्रे तृतीयः प्रपाठकः समाप्तः ॥३॥** ५

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते।
दशमः पटलो वृत्तस्तस्मिञ्छिल्पमुदीरितम् ॥

**इति श्री द्राह्यायणश्रौतसूत्रदीपे धन्विविरचिते दशमः पटलः ॥१०॥**

इति प्रथमं दशकं समाप्तम् ६

---

4. P. इति तृतीयस्य द्वादशः खण्डः ॥12॥ for इति · · · खण्डः ॥4॥
6. P. द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते। नवमः पटलो वृत्तो वासुदेवः प्रसीदतु ॥ इति द्राह्यायणसूत्रस्य तृतीयः प्रपाठक ॥3॥ for इति छन्दोग · · · पटलः ॥10॥ My V[1] छन्दोगसूत्रदीपेऽस्मिन् धन्विना निर्मितेऽधुना for इति · · · विनिर्मिते।

**द्वितीयं दशकम्**

चतुर्थः प्रपाठकः

एकादशः पटलः

## प्रथमः खण्डः

**रोहितेनानुडुहेनोत्तरलोम्ना चर्मणा पिहितः स्यात् ॥१॥**

पूर्वोक्तो वाणश्चर्मणाच्छादितः स्यात्। वाणमुखस्य बिलं चर्मणाच्छादयेदित्यर्थः ॥१॥

**तस्य दशसु पश्चाच्छिद्रेषु दश दश तन्त्र्यो बद्धाः स्युर्मौञ्ज्यो दार्भ्यो वा ॥२॥**

**तस्य** वाणस्य **पश्चाद्** भागे मुखादितरस्मिन् प्रान्ते दश छिद्राणि कृत्वा **दश दश** तन्तवो **बद्धाः** स्युः। मौञ्जा वा दर्भमया वा ॥२॥

**त्रिष्विति शाण्डिल्यश्चतुस्त्रिंशन्मध्यमे त्रयस्त्रिंशताविभितः इति ॥३॥**

त्रिण्येव छिद्राणि कृत्वा **मध्यमे** चतुस्त्रिंशतमितरयोस्त्रयस्त्रिशताविति। एवं शततन्तुर्वाण इति ॥३॥

**पुरस्तादेकैकशस्तास्त्रैधं विभज्य भूर्भुवः स्वरित्येताभिः पृथगुत्तरोत्तर्युद्गूहेत् ॥४॥**

---

6. पूर्वोक्तेन वाणचर्मणा, My[1] पूर्वोक्तेन वा चर्मणा for पूर्वोक्तो वाणश्चर्मणा; My[2] ⁰मूलस्य for ⁰मुखस्य

11. LMy[2] प्रत्येकं दश तन्तवः ; V[2] प्रत्येकं तेषु दश तन्तवः for दशदश तन्तवः ; V[1] C मुञ्जाः, V[2] मौञ्ज्याः for मौञ्जाः

14. V[1]L. चतुस्त्रिशम् T My[1] चतुस्त्रिंशत् for चतुस्त्रिशतम्। V[1]L. त्रयस्त्रिंशौ for त्रयस्त्रिंशतौ

...एकैकश उद्वहेदित्यन्वयः । बन्धनात् प्रागेव तास्त्रैधं समं विभज्य मध्यमं भागमेकाधिकं कृत्वा प्रतिवर्गं पृथक् व्याहृतिभिः प्रत्येकं तन्तूनुद्वहेत् छिद्रेषु तन्तूनासज्योर्ध्वमुदूह्य विले बध्नीयादित्यर्थः । उत्तरोत्तरीति कोऽर्थः । बाह्यच्छिद्रे प्रथमं कुर्यान्मध्यमे द्वितीयं ततोऽभ्यन्तरे तृतीयं वर्गम् इति । तेन प्रथमां व्याहृतिमुक्त्वा बाह्ये च्छिद्रे त्रयस्त्रिंशत्तन्तून् बध्नीयात् । प्रतितन्तु मन्त्रमावर्तयेत् । एकैकश उद्वहेदिति वचनात् । एवं मध्यमे छिद्रे द्वितीयया व्याहृत्या तृतीये छिद्रे तृतीयया व्याहृत्येति । यदा पुनर्दशच्छिद्रेषु दश दश तन्तवस्तदापि त्रैधं विभज्य व्याहृतिभिरुद्वहनमिति ॥४॥

**तमभिमृशेद् वदोवद वदावदी वदो वदोरुः पृथुः सुगः सुगन्त्वः कर्मः करणः करः करस्युरभीषाट् चा भीषाहीचाभिमातिहश्चाभिमातिहा च सासहिश्च सहीयांश्च सहस्वांश्च सहमानश्चोद्वयाश्च बृहद्वयाश्च सवयाश्च वृद्धवयाश्चैन्द्रीं वाचं बृहतीं विश्वरूपा ॐ शतायुषीं प्रवद देववाणेति ॥५॥**

तं वाणमेवं कृत्वा मन्त्रेणाभिमृशेत् ॥५॥

**शिथिला ॐ स्तन्तूनायच्छेत् एभिर्नो वाणतन्तुभिः शतं राद्धीरिहावद । अरात्स्म सर्वेऽस्तत्र्म जीवा ज्योतिरशीमहि इति ॥६॥**

यदि तन्तवः शिथिलाः स्युश्छिन्नाः स्युस्तदा तान्सर्वान् समं संधाय पुनरायच्छेन्मन्त्रेण ॥६॥

---

2. V[2] प्रथम for पृथक्, T[2] My[1] नद for तन्तून्

3. My[2] उदूहेत् for उदूह्य; T. आसृज्य for आसज्य

4. V[1]C ह्यन्तरे for अभ्यन्तरे; V[1] अपवर्गः L. अपवग्यम् for वर्गम्

10. V[2] My[1-4] सुगन्धः for सुगन्त्वः

V My[4] करुण; for करण; P. कुर्मः T कर्म for कर्मः

16. V[1]C My[1] My[4] शतराद्धिः for शतं राद्धीः;

**वाक् सर्वं मनो ज्योतिर्मानो भद्र इति जपित्वा वादयेदिन्द्रणतयेषीकया वेतसशाखया च सपलाशया ॥७॥**

आनो भद्र इति मन्त्रपाठः । मान इत्यपपाठः । **सपलाशया वेतसशाखया इषीकया** च वाणं वादयेत् ॥७॥

**इन्द्रणतयेति** पदस्य स्वयमेवार्थमाह—

**मूलतो या स्वयं वक्रा सेन्द्रणता ॥८॥**

**या** मूलप्रदेशे **स्वयमे**व **वक्रा सेन्द्रणता** । इन्द्रेण नता इन्द्रणता । दैवान्नतेत्यर्थः ॥८॥

**प्राणाय त्वेत्यूर्ध्वमुल्लिखेदपानाय त्वेत्यवाञ्चम् ॥९॥**

छिद्रप्रदेशादारभ्य यावन्मुखं [**प्राणाय त्वा** (तां. ब्रा. ५.६.१४) इति] **ऊर्ध्वमुल्लिख्य** वादयेत् । तथा मुखप्रदेशादारभ्य **अपानाय त्वा** (तां. ब्रा.) **इत्यवाञ्चमवलिखेत्** ॥९॥

**व्यानाय त्वेति त्रिःसंल्लिख्योदञ्चं वाणं प्रोहेद्ब्राह्मणमुक्त्वा इममुल्लिखन्नास्वेति ॥१०॥**

**व्यानाय त्वेति त्रिः संल्लिख्य इममुल्लिखन्नास्वेति** कंचिद्**ब्राह्मणमुक्त्वा** तस्य हस्तयोरु**दञ्चं वाणं प्रोहे**त् ॥१०॥

**इति द्राह्यायणश्रौतसूत्रे एकादशे पटले प्रथमः खण्डः ॥१॥**

---

1. V[1]C. सर्वे for सर्वं

3. My[2] Om. मान · · · पाठः

10. My[2] अवामुङखं for यावन्मुखं ;

## द्वितीयः खण्डः

**आहत दुन्दुभीन् प्रवदन्तु वीणा इति ब्रूयात् ॥१॥**

आहत आघ्नत दुन्दुभीनिति प्रैषः ॥१॥

**अलाबुवीणां वक्रकपिशीर्ष्ण्यौं च पूर्वस्यां द्वारि बहिः सदसम् ॥२॥**

अलाबुवीणा प्रसिद्धा। वक्रा नाम वीणाविशेषः। तथा कपिशीर्ष्णी च। तास्तिस्रो वीणाः सदसः पूर्वस्यां द्वारि बहिः सदसं वीणावादिनो वादयेयुः ॥२॥

**वक्राकपिशीर्ष्ण्यौं दुन्दुभींश्च प्रतिमन्त्रयेतयो वक्रायां कपिशीर्ष्ण्यां दुन्दुभौ च यच्च वाद्यम्। घोषो यो महतो महाꣳस्तेन नो राद्धि मावद इति ॥३॥**

आवदेत्येकवचनं वाग्देवताभिप्रायम् ॥३॥

**महावीणापिशीलवीणे चापरस्यामन्तरिति गौतमशाण्डिल्यौ बहिरिति धानंजय्यः ॥४॥**

अपरस्यां सदसो द्वार्यन्तर्बहिर्वा वीणाद्वयं वादयेयुः ॥४॥
तयोश्च प्रतिमन्त्रणं कार्यमित्याह—

**अलाबुवीणापिशीलवीणे च प्रतिमन्त्रयेतालाबुवीणापिशीली च यं मन्त्रमधिजग्मतुस्तेनेदमुपगायतां ते साम महयिष्यत इति ॥५॥**

स्पष्टम् ॥५॥

---

7. $My^1V^2 My^4$ after तिस्रः ins. अपि

15. $V^{1\text{-}2}$TCL. Om. वा

17. $V^1$ अलाबवी for अलाबुवीणा

18. $My^2$ उप$^0$ for अधि$^0$ $V^2$ तासां, P त ꣳ साम for ते साम

**पश्चिमेनोपगातॄन् द्वे द्वे एकैका पत्नी काण्डवीणां पिच्छोरां च व्यत्यासं वादयेत् ॥६॥**

सत्रिणां यजमानानाम् **एकैका पत्नी पश्चिमेनोपगातॄन्** आसित्वा **द्वे द्वे** वीणे **व्यत्यासं वादयेत्** । प्रथमं **काण्डवीणां** ततः **पिच्छोराम्** । पुनरप्येवमेव सर्वाः ॥६॥

**उपमुखं पिच्छोरां वादनेन काण्डमयीम् ॥७॥**

**उपमुखं** स्थापयित्वा मुखमारुतेन **पिच्छोरां** वादयेयुः । वादनदण्डेन **काण्डमयीम्** ॥७॥

**ता अपघाटिला इत्याचक्षते ॥८॥**

**ताः** पत्नीभिर्वाद्यमाना **अपघाटिला इत्याचक्षते** । अनेन तं **पत्न्योऽपघाटिलाभिरुपगायन्त्यार्त्विज्यमेव** तत्पत्न्यः कुर्वन्ती (तां. ब्रा. ५.६.८) ति ब्राह्मणं व्याख्यातम् ॥८॥

**ताः प्रतिमन्त्रयेत यां पत्न्यपघाटिलां मृदुकं वादयिष्यति सारातिमपबाधतां द्विषन्तं तैजनित्वगिति ॥९॥**

ता अपघाटिलाः प्रतिमन्त्रयेत् ॥९॥

**सर्वमनुवीक्षमाणो जपेदाक्रन्दा उलूलयः प्रक्रोशा यच्च चेष्टति सर्वा सत्रस्य सा राद्धिस्तथेद ॐ साम गीयत इति ॥१०॥**

---

1. PL. पिच्छोलां for पिच्छोरां
3. T. उद्गातॄन् for उपगातॄन्
6. PL. मुखपिच्छोरां for पिच्छोरां $V^2My^{1\text{-}2}L$ पिच्छोलां for पिच्छोरां
7. $V^2$ वादनेन for वादनदण्डेन
14. $My^2$ तैजनी °, $My^4$ तेजनि° T.L तैजन for तैजनि
16. $My^4$ प्रक्रोशो for प्रक्रोशा
17. T चेष्टितं for चेष्टति

सर्वमपघाटिलास्ततोऽन्यांश्च वीणादुन्दुभींश्चानुवीक्षमाणो जपेत् ॥१०॥

**जपेदेव सुपर्णोऽसि गरुत्मान् प्रेमां वाचं वदिष्यामि बहु करिष्यन्तीं बहु करिष्यन्त्स्वर्गमयिष्यन्ती ॐ स्वर्गमयिष्यन् मामिमान् यजमानानिति ॥११॥**

पुनरपि सुपर्णोऽसि गरुत्मानिति मन्त्रं जपेत् ॥११॥

इति द्राह्यायणश्रौतसूत्रे एकादशे पटले द्वितीयः खण्डः ॥२॥

---

6. P. इति चतुर्थस्य द्वितीयः खण्डः ॥ for इति · · · पटले · · · खण्डः ॥

## तृतीयः खण्डः

**ब्राह्मणोऽभिगरः पूर्वस्या ॐ सदसो द्वारि प्रत्यङ्मुख उपविशेद् वृषलोऽपगरोऽपरस्यां प्राङ्मुखः ॥१॥**

यः सत्रिणो यजमानान् प्रशंसति सोऽभिगर इत्युच्यते । स **ब्राह्मणः सदसः पूर्वस्यां द्वारि प्रत्यङ्मुख उपविशेत्** सत्रिणः प्रशंसितुम् । **अपरस्यां द्वारि वृषलोऽपगरः प्राङ्मुख** उपविशेन्निन्दार्थम् । यो निन्दति सोऽपगर इत्युच्यते ॥१॥

**स ब्रूयान्नारात्सुरिमे सत्रिण इति ॥२॥**

स वृषलो निन्दन् **ब्रूयान्नारात्सुरिमे सत्रिण इति** । असिद्धा इत्यर्थः ॥२॥

**अरात्सुरित्यभिगरः ॥३॥**

**अभिगरो** ब्राह्मण **अरात्सुरिति** ब्रूयात् । संसिद्धा इत्यर्थः ॥३॥

**दक्षिणेन मार्जालीयमर्यो ऽन्तर्वेदि दक्षिणामुखस्तिष्ठेत् ॥४॥**

अर्यःस्वामिवैश्ययोः (३.१.१०३) इति पाणिनिस्मृतेरर्यो वैश्यः ॥४॥

**बहिर्वेदि शूद्र उदङमुखः ॥५॥**

स्पष्टम् ॥५॥

**अर्याभावे यः कश्चार्यो वर्णः ॥६॥**

अर्याभावे यः कश्चार्यः त्रैवर्णिकः स्यात् ॥६॥

---

2. C. गरु;, T गिर for °गरः
4. PCL $V^{1-2}$ $My^{1}$. Om. सदस;
5. PCL $V^{1}$ Om. सत्रिणः प्रशंसितुम्;
7. $V^{1}$C. मारात्सुर् for नारात्सुर्
8. $My^{1}$ असंसिद्धा;, $V^{2}$ सिद्धाः for असिद्धाः
17. $V^{1}$CL. कश्चित् for कश्चार्य :

**तौ श्वेतं परिमण्डलं चर्म व्यायच्छेताम् । शूद्रःपूर्वः ॥७॥**

तावर्यश्च शूद्रश्चान्योन्यं श्वेतं चर्म व्यायच्छेताम् । शूद्रः प्रथमं व्यायच्छेत् ॥७॥

**पूर्वेणाग्नीध्रीयं ब्रह्मचार्यन्तर्वेद्युदङमुखस्तिष्ठेद् बहिर्वेदि पुंश्चली दक्षिणामुखी ॥८॥**

स्पष्टम् ॥८॥

**सा ब्रूयाद् दुश्चरितिन्नवकीर्णिन्निति ॥९॥**

सा पुंश्चली वेश्या ब्रह्मचारिणं प्रति ब्रूयात् हे दुश्चरितिन् हे अवकीर्णिन्निति। दुश्चरितं ब्रह्मचर्यात् स्खलनम् ॥९॥

**धिक्त्वा जाल्मि पुंश्चलि गामस्य मार्जनि पुरुषस्य पुरुषस्य शिश्नप्रणेजनीति ब्रह्मचारी ॥१०॥**

ब्रह्मचारी पुंश्चलीं प्रति ब्रूयात् धिक् त्वा जाल्मीति ॥१०॥

**एवमातृतीयं व्यत्यासम् ॥११॥**

एवम् एव पुनः पुंश्चली ब्रूयात् पुनर्ब्रह्मचारी । पुनरप्येवं कुर्याताम् आतृतीयम् इति । यावत् तृतीयं पर्यायम् । त्रिरित्यर्थः ॥११॥

**सर्वेषां कर्मणि निष्ठिते तदेवाभिगरस्त्रिर्ब्रूयात् ॥१२॥**

सर्वेषाम् अभिगरप्रभृतीनां कर्मणि यथोक्ते कृते पुनरप्यभिगरस्तदेव त्रिर्ब्रूयात् अरात्सुरिमे सत्रिण इति ॥१२॥

**अवसृज्य शूद्रः प्रद्रवेत् ॥१३॥**

अथ शूद्रः परिमण्डलं चर्म विसृज्य धावेत् ॥१३॥

**तं तेनैवावक्षिणुयात् ॥१४॥**

---

9. T. °चर्य° for °चर्यात्

14. V¹C. पुंश्चली ब्रह्मचारी पुन इति for पुंश्चली ··· कुर्याताम्

17. V¹LC. Om. तदेव

21. My² क्षिणीयात् for °क्षिणुयात्

तं शूद्रं तेनैव परिमण्डलेन चर्मणार्यो वर्णोऽवक्षिणुयात् विध्येत् ताडयेत् ॥१४॥

**यथाभिप्रेतमितरां ब्रह्मचार्याक्रोशेत् ॥१५॥**

अथ ब्रह्मचारी पुंश्चलीं यथाभिप्रेतमाक्रोशेत् । न पूर्वोक्तमात्रेण । किन्त्वधिकमपि यथाभिप्रेतं तस्या दूषणं कथयेत् ॥१५॥

**पश्चिमेनाग्नीध्रीयं बहिर्वेदि परिश्रिते मिथुनौ संभवेतां यौ वर्णौ लभेरन् ॥१६॥**

यौ वर्णौ लभेरन् सत्रिणस्तौ मिथुनौ संभवतः । यदि कश्चिद् ब्राह्मणः ब्राह्मणी च कामवृत्तौ लभ्येते तदा संभवतः । अथ यदि क्षत्रियौ यदि वा वैश्यौ यदि वा शूद्रौ । नात्र वर्णनियमः ॥१६॥

**गृहपतेर्दास्योऽभीष्टा वा नवानुदहरणान् पूरयित्वा प्रदक्षिणं मार्जालीयं परीयुर्हैमहाऽ३इदं मध्विदं मध्विति वदन्त्यः ॥१७॥**

गृहपतेर्दास्यस्तस्याभीष्टा वा याः काश्चित् कुमार्यो नवानुदकुम्भान् अद्भिः पूरयित्वा मार्जालीयं परिगच्छेयुः । परिनृत्यन्तीति कल्पान्तरम् ॥१७॥

**पञ्चावराध्यार्ः पञ्चशतं पराध्यार्ः पञ्चविंशतिर्वा ॥१८॥**

स्पष्टम् ॥१८॥

---

1. $V^1$CL °क्षीयात्, $My^2$ °क्षिणीयात् for °क्षिणुयात्; P. भिद्येत् for विध्येत्

5. $My^2$ स्यात् यथा for तस्या; $V^1$ °प्रेषणं for °प्रेतं तस्या दूषणं

7. $My^4$ $CV^2My^1$ Om. यौ वर्णौ लभेरन्;

8. $PV^1$Om. ब्राह्मणः; $My^4$ ब्राह्मणो ब्रह्मचारी for ब्राह्मणो ब्राह्मणी, (L.9)

9. L. Om. ब्राह्मणी; $PV^1$L. कावृत्तौ for कामवृत्तौ

11. L. उदका° for उद°

12. C. हेमहाऽइ for हैमहाऽ3

15. T. after मार्जालीयं add परीयुः

**ताभ्योऽपि वीणा वादयेयुः ॥१९॥**

तासां दासीनामर्थेऽपि **वीणा वादयेयुः** । तदीयनृत्याङ्गत्वेनेत्यर्थः ॥१९॥

**सर्वासु स्रक्तिषु दुन्दुभीनाबध्नीयुः ॥२०॥**

महावेदेः **सर्वासु स्रक्तिषु** इत्यर्थः ॥२०॥

**उत्तरोत्तरि वाचो व्याहरेयुर्यावतीरधि गच्छेयुः ॥२१॥**

अस्मिन् स्तोत्रे पूर्वोक्ताः सर्वा **वाचः** उत्तरोत्तरमात्रायुक्ताः ब्रूयुः । यावत्योच्चैर्मात्रया युक्ता वक्तुं क्षमास्तावत्या मात्रया युक्ता ब्रूयुः । यथा है **महाऽ३इदं मध्विदं मध्विदं मध्विति** उत्तरोत्तरमुच्चैर्गानम् । तथोत्क्रोदं यजमानाः कुर्वत इति । शाखान्तरोक्तमुत्क्रोदादिकमुच्चैरुच्चैरिति ॥२१॥

**घोषांश्च ॥२२॥**

दुन्दुभिघोषान् वीणाघोषांश्च सर्वानपि यावतोऽधिगच्छेयुस्तावतोऽत्युच्चैस्तरां कुर्युः ॥२२॥

एवं शिल्पान्युक्त्वा तदनुष्ठानकालमाह—

**हिंकारमन्वभिगरप्रभृतयः कृत्वा यथार्थं स्युः ॥२२॥**

स्तोत्रोपक्रमे हिंकारवेलायां अभिगरप्रभृतयः स्वं स्वं कर्म कृत्वा यथार्थं गच्छेयुः । **ब्राह्मणोऽभिगरः पूर्वस्याम्** (द्रा. श्रौ. ११.३.१) इत्यारभ्य मैथुनान्तं यत् कर्म उक्तं तत् स्वं स्वं कर्म । तथा संनद्धो राजापि हिंकारवेलायाम् एव **प्रदक्षिणं देवयजनं परीया इति** प्रैपार्थं कृत्वा यथार्थं गच्छेत् ॥२३॥

---

2. T. तदीयानां नृत्ताङ्ग⁰ for तदीयनृत्याङ्ग⁰

8. PCL. My[1] उत्क्रोशं My[2]यथोक्त्वेदं for उत्क्रोदं;

9. PCL My[1]T. उत्क्रोदादिकम् for उत्क्रोदादिकम्

13. My[2] शिल्पान् for शिल्पानि

14. V[2]. ⁰गिर⁰ for ⁰गर⁰

17. My[1]V[2] सर्वं स्वं for स्वं स्वं L T. अपि V[1] अनु for एव

18. PCL. परीयात् for परीयाः

**आस्तोत्रान्तात् कुम्भिन्यः सर्वे च घोषाः ॥२४॥**

**कुम्भिन्यो** दास्यो वीणादुन्दुभि घोषाश्च हिंकारप्रभृति यावत्स्तोत्रसमाप्ति अनुवर्तन्ते। तेषामुपगानरूपत्वात्। केचित्तु हिंकारात् पूर्वमेव घोषाः। **आहत दुन्दुभीन् प्रवदन्तु वीणाः** (द्रा. श्रौ. ११.२.१) इति यथाप्रैषमुपक्रम्य प्रवर्तन्त इत्याहुः ॥२४॥

**इति द्राह्यायणश्रौतसूत्रे एकादशे पटले तृतीयः खण्डः ॥३॥**

---

**6. P. इति चन्तुर्थस्य तृतीयः खण्ड; ॥3॥ for इति · · . खण्डः ॥3॥**

## चतुर्थः खण्डः

अथेदानीं **सुपर्णोऽसि गरुत्मन्** (द्रा. श्रौ. ११.२.११) इति । जपानन्तरं राजनेन पञ्चविंशेन स्तोतव्यम् । अनाम्नातपर्यायश्च पञ्चविंशस्तोमः । तस्य पर्यायक्लृप्तौ सूत्रकारः जातिसंहारो युग्मायुक्संहार आवापश्चेति त्रीन् पक्षान् वर्धमानपटले वक्ष्यति । **दाशरात्रिकेभ्य एकया ज्यायःसु** (द्रा. श्रौ. १७.३.४) इत्यादिना तत्रावापपक्षे कुत्रावाप इत्यपेक्षायामाह—

**पञ्चविंशे चतुर्विंशस्योत्तमे पर्याये परिचरायामावपेदिति गौतमः ॥१॥**

इति । **उत्तमे पर्याये** परिचरायां मध्यमायामृचि आवपेत् । मध्यमां द्विर्गायेदित्यर्थः ॥१॥

**आवापस्थान इति धानंजय्यः ॥२॥**

उत्तमे पर्याये प्रथमायामावापस्थान एवावपेदिति ॥२॥

**प्रथमस्यावापस्थान इति शाण्डिल्यः ॥३॥**

प्रथमस्य पर्यायस्यावापस्थान इत्यर्थः ॥३॥

**चतुर्विंशेन वा स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् ॥४॥**

अथवा **चतुर्विंशेन** स्तोमेनाविकृतेनैव तृचं समाप्य पुनर्मध्यमामृचं हिंकाररहितां **प्रस्तुयात्** । प्रस्तुत्य सकृद् गायेदित्यर्थः ॥४॥

---

3. $V^1$CL. °विंशस्तोत्रीयं for °विंशेन; P पर्यायस्य for पर्यायः

4. PCL. Om. सूत्रकारः; PCL. युग्मायुग्म, $My^2$ युग्मायुक्त° for युग्मायुक् $My^1$ वर्धमानः for वर्धमान°

9. $My^2$ आवृत्या for ऋचि $V^2$ मध्यमया for मध्यमां

11. $V^1$ C °स्थानम् for °स्थाने

13. $My^1$L My $V^4$ आवापः for आवापस्थाने

14. $My^4$ आवपः मध्यमायामेवाधिकस्तोत्रीयावाप इति शाण्डिल्यमतम् for आवापस्थान इत्यर्थः

17. PCL. Om. प्रस्तुत्य T. Om. सकृत्

**स आस्कन्दो नाम ॥५॥**

तस्य बहिःपर्यायगानस्य आस्कन्द इति संज्ञा। बहिःपर्यायमास्कन्दनादिति प्लवनात्। संज्ञाकरणं च व्यवहारार्थम्। [यथा] **आस्कन्दं तु गौतमश्चत्वारिंशे** (द्रा. श्रौ. १७.३.७) इति ॥५॥

**तं न कुर्यादिति शाण्डिल्यायनः ॥६॥**

न सार्वत्रिकोऽयं निषेधः। आस्कन्दस्य श्रुत्युक्तत्वात्। तेन महाव्रते **तमास्कन्दं न कुर्यादित्यर्थः** ॥६॥

**उत्तमायाᳬ स्तोत्रीयायां प्रस्तुतायां पादावुपाहरेत् ॥७॥**

राजनस्य साम्न **उत्तमायां प्रस्तुतायामात्मनः पादावुपाहरेत्** ॥७॥

**सह निधनेन भूमौ प्रतिष्ठापयेत् ॥८॥**

निधनोच्चारणवेलायां पादौ भूमौ प्रतिष्ठापयेत्। ततः पूर्वमाकाश एव स्थापयेत् ॥८॥

**आह्रियमाणे भक्षे प्रतिलोमैरारोहगीयैरवरुह्य जपेन्मही द्यौः पृथिवी च न इमं यज्ञं मिमिक्षाताम् पिपृतां नो भरीमभिरिति ॥९॥**

अध्वर्युभिराह्रियमाणे नाराशंसादि भक्षणं **प्रतिलोमैरारोहणमन्त्रैरवरोहेत्।**

---

2. The Sentence बहिः पर्यायमास्कन्दनादिति प्लवनात् does not make Much sense. Could it be-बहिः पर्यायमास्कन्दनात्। आस्कन्दनं प्लवनमिति or बहिःपर्यायमास्कन्दनात् आस्कन्दनादिति प्लवनात् ?

3. My[2] वचनात् for प्लवनात्

11. V[2] My[1] My[4] आकाशमावे for आकाश एव

13. My[2-4] आऽह्रीय[0] for आह्रिय[0]

14. V[1-4] C मिमिक्षन्तां for मिमिक्षाताम् L पितृतां for पिपृतां

16. PCL. [0]रोहयेत् for रोहेत्

अवरोहन्त्ववरोहामीति च मन्त्रसंनामः कार्यः । अवरुह्येति विधानात् । अन्यथा मन्त्रलिङ्गविरोधाच्च । तद्यथा **विश्वे त्वा देवा आनुष्टुभेन छन्दसावरोहन्तु तानन्वारोहामीत्युपक्रम्य वसवस्त्वेत्येवमन्तै**रवरोहणमन्त्रैरतिग्राह्य भक्षणमप्युद्गातृभिः कार्यम् । **स्तुत्वा पृष्ठेन । विषुवद्व्रतयोश्चे** (द्रा. श्रौ. ६.२.११-१२) ति पूर्वमुक्तत्वात् ॥९॥

**अथ आसीनाः शेषेण स्तुवीरन् ॥१०॥**

अह्नः **शेषेण** वामदेव्यप्रभृतिना स्तोत्रेणाथ एव आसीनाः स्तुवीरन् । आसन्दीकूर्चान् वर्जयेयुः । एवं महाव्रतकथा समाप्ता ॥१०॥

अथोदयनीयमतिरात्रं प्रत्याह—

**उदयनीयेऽतिरात्रे संस्थितेऽवभृथमभ्यवेयुः ॥११॥**

इति । सिद्धमेवैतदुत्तरविवक्षार्थं वचनम् ॥११॥

**अनुपमज्जन्तः पाणिभिः संधावेरन् ॥१२॥**

अप्सु शिरस उपमज्जनमकुर्वन्तः पाणिभिः शरीरमन्योन्यं शोधयेयुः ॥१२॥

**यस्यात्र पत्नी स्यात् पृष्ठं तया व्युद्धावयेत् ॥१३॥**

---

1. $V^2$ $My^1$ सन्नामं कार्यम् for सन्नामः कार्यः
3. $V^2$ $My^{1\cdot 2}$ अन्वधि⁰, $My^4$ अन्वव⁰ for अन्वा⁰

   $V^1$ $My^2$ मन्त्राति T V. $My^4$ ⁰मत्राति⁰ C. ⁰मन्त्राप्ति P. मन्त्रा अति for ⁰मन्त्रैरति
5. $V^2$ $My^{1\cdot 4}$T वचनात् for पूर्वमुक्तत्वात्
7. $V^1$C. Om. एव
8. $V^1$ C. वर्जयेत् for वर्जयेयुः; T. आसन्दीं कुर्चैरवरुह्य वामदेव्यादिभिः स्तुवीरन् for आसन्दीकूर्चान् वर्जयेयुः
9. $V^2$ आसन्दीकुर्चे अवनह्य वामदेव्यादिना स्तुवीरन् for अथोदयनीयमतिरात्रं प्रत्याह
11. $My^2$ तद् for एतद्
14. L $My^1$ rfter तया ins अपि; L $My^1$ उद्धापयेत्, for व्युद्धावयेत्

यस्यात्र यजमानस्य पत्नी विद्यते स तया पत्न्या स्वपृष्ठवंशं शोधयेत् । कर्मव्यतिहारे विशब्दः । पत्न्याश्च देहं यजमानः शोधयेत् ॥१३॥

**तानुन्नेतोदानयेत् ॥१४॥**

तान् सत्रिण उन्नेता अवभृथादुदानयेत् । तीरप्रदेशं नयेत् ॥१४॥

**उदेत्य गृहपतिः सोमोपनहनं परिदधीत ॥१५॥**

**अहतानि वसनानीतरे ॥१६॥**

स्पष्टे ॥१५-१६॥

**अभ्युक्षणप्रभृति समापयेयुः ॥१७॥**

**अवभृथेष्टौ संस्थितायामवभृथनिचुम्पणे** (द्रा. श्रौ. ६. ४. ८.) त्यभ्युक्षणप्रभृतिकर्मशेषं तस्मिन्नहनि समापयेयुः ॥१७॥

**येनेतो गच्छेयुरन्येन प्रत्याव्रजेयुः पाप्मनोऽव्यतिषङ्गाय ॥१८॥**

**इतो** देवयजनाद्येन पथावभृथं **गच्छे**युस्ततोऽन्येन मार्गेणावभृथात् **प्रत्याव्रजेयु**स्त्यक्तेन पापेनासंबन्धार्थम् । पूर्वस्मिन् हि मार्गे पाप्मा तिष्ठतीति मन्यते ॥१८॥

**अनुबन्ध्यवपायां हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूणि वापयेत् ॥१९॥**

स्पष्टम् ॥१९॥

**तस्मिन् सꣳस्थिते प्राञ्च उदञ्चो वा गत्वा पृथगुदवसनीयाभिरिष्टिभिराहिताग्नयो यजेरन् ॥२०॥**

**तस्मिन्नु**दयनीये **संस्थिते** देवयजनात् **प्राञ्च उदञ्चो वा** गत्वा पृथक् **पृथगुदवसानीयाभिरिष्टिभिर्यजेरन्** ॥२०॥

---

1. PCLV[1] after पत्न्या add: स्वदेहे; PCLV[1] पृष्ठ⁰ for स्व पृष्ठ⁰

4. My[1-2,4]T प्रदेशे for ⁰प्रदेशं

10. TV[2] befor कर्म⁰ ins. यदुक्तं तत्

11. V[2] after गच्छेयुः ins. ततः

13. V[2]C मन्यन्ते for मन्यते

15. V[1]My[2] TC वापयेरन् for वापयेत्

**गृहपतिं यजमानमनाहिताग्नय उपासीरन् ॥२१॥**

ये पुनरनाहिताग्नयः सत्त्रिणस्तेषामग्न्यभावात् गृहपतिमुदयनीयेन **यजमानमुपासीरन्** । अत एव वचनादनाहिताग्नेरपि सत्त्रमस्तीति गम्यते । आश्वलायनोऽप्याह— **दीक्षणीयाद्यनग्नीनाम्** (आ. श्रौ. ४.१.१०) इति ॥२१॥

**तद्देवत्यैः स्थालीपाकैर्यजेरन्निति धानंजय्यः ॥२२॥**

श्रौताग्न्यभावेऽपि औपासनाग्नौ स्थालीपाकैरुदवसानीयेष्टिदेवत्यैरनाहिताग्नयो **यजेरन्** ॥२२॥

**संवत्सरं संवसेयुः ॥२३॥**

समाप्तेऽपि सत्रे सत्रिणः **संवत्सरं** सहैकत्र वसेयुः ॥२३॥

**द्वादशरात्रमहोरात्रौ वा ॥२४॥**

स्पष्टम् ॥२४॥

**यावद्वा सुनुयुर्यावद्वा सुनुयुः ॥२५॥**

यावन्तं कालं सत्रे **सुनुयुस्तावन्तं** कालम् । त्रयोदशरात्रे समाप्ते त्रयोदशरात्रं संवसेयुः । तथा चतुर्दशरात्रादावपि **तावन्तं** कालं सह वसेयुः ॥२५॥

**इति द्राह्यायणश्रौतसूत्रे एकादशे पटले चतुर्थः खण्डः ॥४॥**

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तः प्रथमः पटलोऽधुना ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे एकादशः पटलः समाप्तः ॥११॥**

---

2. My उदयनीये TMy[4] उदवसानीयायां, V[2] My उदवसानीया for उदयनीयेन
6. PCL उदयनीयेष्टि° for उदवसानीयेष्टि°
9. My[4] हि for अपि
10. V[1]My[24] अहोरात्रं for अहोरात्रौ
12. My[4] after सुनुयुः adds:—सुत्याः कुर्युः
13. My[2]. Om समाप्ते;
14. My[2]T. Om. तथा
15. P. इति चतुर्थस्य चतुर्थः खण्डः ॥4॥ for इति · · · खण्डः ॥4॥
16. P. छन्दोगसूत्रदीपेऽस्मिन् धन्विना निर्मितेऽधुना । दशमः पटलो वृत्तस्तस्मिञ्छिल्पमुदीरितम् ॥ for द्राह्यायण · · · पटलोऽधुना ॥

## द्वादशः पटलः

## प्रथमः खण्डः

अथ सर्वयज्ञेषु ब्रह्मत्वं विधातुमुपक्रमते

**सर्वत्र ब्रह्मा दक्षिणतः ॥१॥**

सर्वेष्वपि श्रौतस्मार्तेषु कर्मसु ब्रह्मा **दक्षिणतो** भवेत्। न पुनरुद्गात्रादिवच्छ्रौतेष्वेव ब्रह्मणः प्रवृत्तिरित्यर्थः। तथा तेषु कर्मसु क्रियमाणेषु नित्यं दक्षिणतो भवेदिति द्वयमप्यत्र विवक्षितम् ॥१॥

**उदङ्मुखः कुर्याद्धोमेभ्योऽन्यत् ॥२॥**

उपवेशनप्रभृति ब्रह्मणो यत्कृत्यं तत्सर्वं होमव्यतिरिक्तमुदङ्मुख एव कुर्यात्। होमांस्तु प्राङ्मुख एव कुर्यात्। **प्राङ्मुखकरणं चानादेश** इति सामान्यविधानात् ॥२॥

प्रथमं पाकयज्ञेषु ब्रह्मत्वं विधास्यन् पाकयज्ञपदं व्याचष्टे—

**पाकयज्ञा इत्याचक्षत एकाग्नौ यज्ञान् ॥३॥**

एकाग्निरौपासनः। तत्र क्रियमाणान् यज्ञान् पाकयज्ञा इत्याहुः ॥३॥

**तेषां होष्यन्त्सु तूष्णीमुपविशेत् ॥४॥**

तेषामर्थे ब्रह्मणैतत् कृत्यम्। किं तत्। होष्यत्सु कर्तृषु **तूष्णीमुपविशे**दिति। श्रौतेषु कर्मसु प्रायेण मन्त्रत उपवेशनात् तन्निवृत्त्यर्थमिह तूष्णीमिति वचनम्। यद्वा तूष्णीमिति वाग्यमनविधिः ॥४॥

**हुते यथार्थं स्यात् ॥५॥**

होमे कृते **यथार्थं स्यात्**। आसीत वा गच्छेद्वेत्यर्थः ॥५॥

**शूलगवे च बलीन् ह्रियमाणाननुगच्छेत् ॥६॥**

---

3. L. ends with दक्षिणत इति ॥

5. My[2] Om. दक्षिणतो

6. My[2] अथ for तथा My[2] Om. क्रियमाणेषु

13. My[2] °यज्ञः for °यज्ञाः; My[2] यज्ञम् for यज्ञान्

17. My[2] मन्त्रवत् for मन्त्रत P. °वेशनार्थं for °वेशनात्

शूलगवं नाम गवां पोषणार्थमध्वर्युवद्ब्रह्मचैरुक्तं कर्म ॥६॥

**निधीयमानानां दक्षिणतः स्थित्वा निहितेष्वप उपस्पृश्यानवेक्षं प्रत्याव्रजेत् ॥७॥**

**निधीयमानानां** बलीनां दक्षिणत इत्यर्थः। अनवेक्षमिति अवेक्षणमकृत्वेत्यर्थः ॥७॥

**तूष्णीं पाकयज्ञे दक्षिणामोमिति वा प्रतिगृह्णीयात् ॥८॥**

स्पष्टम् ॥८॥

**पशुरेव पशोर्दक्षिणा ॥९॥**

पशुहविषः पाकयज्ञस्याष्टकादेः **पशुरेव दक्षिणा** ॥९॥

**पूर्णपात्रं स्थालीपाकस्य ॥१०॥**

**उभयोर्यथोत्साहं वा ॥११॥**

स्पष्टे ॥१०-११॥

**न वितानं पृष्ठतः कुर्वीत ॥१२॥**

**न वितानं** श्रौताग्निविहारदेशं **पृष्ठतः** कुर्यात् ॥१२॥

**येन यज्ञाङ्गेन संयुज्येत तदभ्यावर्तेत ॥१३॥**

अध्वर्य्वादिभिः सह कर्मकरणे सति तदानीं **येन यज्ञाङ्गेन** ब्रह्मा संयुज्यते संयुक्तो भवति तद्यज्ञाङ्गमभ्या**वर्तेत**। आसीनः अग्नीन् पृष्ठतः कृत्वापि तदभिमुखः स्यादित्यर्थः ॥१३॥

**कर्मादिषु सर्वेष्वध्वर्युसंप्रैषमागमयेत ॥१४॥**

कर्मणामुपक्रमेष्वध्वर्युणा प्रार्थनं कारयेत्। अत्र भवता ब्रह्मत्वं कार्यमित्यध्वर्युप्रार्थित एव ब्रह्मत्वं कुर्यात्। नान्यथेत्यर्थः ॥१४॥

---

1. P. °गवो for °गवं; $PV^1C$. पोषर्थं for पोषणार्थं
9. $PCV^{1,2}$ °यज्ञ° for °यज्ञस्य
14. V-$My^1My^4$ श्रोतादि for श्रौताग्नि°; P. व्यवहारदेशे for विहारदेशं
17. $My^4$ तं for तद् $My^{2-4}$ Om. आसीन $PV^1C$ अग्नि for अग्नीन्
20. $V^2$ °क्रमे for °क्रमेषु; $My^4$ प्रार्थनां for प्रार्थनं
    $My^4$ कर्तव्यम् for कार्यम्

**पूर्वया द्वारानादेशे प्रविशेत् ॥१५॥**

स्पष्टम् ॥१५॥

**अग्न्याधेये दक्षिणया द्वारा प्रपद्य चातुष्प्राश्यं निर्वप्स्यत्सु तूष्णीमुपविशेत् ॥१६॥**

अग्न्याधेय इत्यधिकारः । **चातुष्प्राश्यं** ब्रह्मौदनम् । चत्वारो हि तद् ब्राह्मणाः प्राश्नन्ति । तन्निशायां निर्वपन्ति तदानीं वाग्यत उपविशेत् ॥१६॥

**निरुप्ते यथार्थं स्यात् ॥१७॥**

स्पष्टम् ॥१७॥

**तदुद्धरिष्यत्स्वेवमेव ॥१८॥**

तच्चातुष्प्राश्यं ब्रह्मौदनं पात्रेषूद्धरिष्यत्स्वध्वर्युषु **एवमेवेति** तूष्णीमुपविशेत् ॥१८॥

**तच्चेदनृत्विग्भिः प्राशयेयुस्तण्डुलानादायापविध्येयुर्नेष्टाविद्धं कृन्तानीति ॥१९॥**

यदि चातुष्प्राश्यमृत्विग्व्यतिरिक्तैः कैश्चित् **प्राशयेयुरध्वर्यवस्तदा** तस्मादोदनादृत्विजस्तण्डुलानादाय बहिर्निरस्येयुर्**नेष्टाविद्धमिति** मन्त्रेण । तस्य चायमर्थः । हे यज्ञ तवाविद्धं शल्यं निष्कृन्तानीति । **तस्याविद्धं निरकृन्तन् यवेन संमितम्** (तै. सं. २.६.८.३-४) इति तैत्तिरीयकैः प्राशित्रमधिकृत्योक्तम् । तद्वदेतत् ॥१९॥

---

5. My[4] ब्रह्मो⁰ for ब्रह्मौ

10. My[2-4] Om. इति

12. M. अनृत्विग्भ्यः for अनृत्विग्भिः; C. तन्दुलान् for तण्डुलान्

14. P. ऋत्विग्भ्यः for ऋत्विग्⁰

15. C. तन्दुलान् for तण्डुलान्

16. My[4] निकृन्तन् for निरकृन्तन्

17. My[1-4] य [द] वेदन⁰ for यवेन

**अथान्यान्निदधीरन् ॥२०॥**

यतः प्रदेशात्तन्दुलादानं तत्र तन्दुलानन्यान्निदधीरन् ॥२०॥

**आधास्यमानस्यारण्योः प्रत्तयोर्यथार्थं स्यात् ॥२१॥**

यदि तस्यामेव निशायामाधास्यते यजमानस्तदा तस्य हस्तेऽध्वर्युणारण्योः **प्रत्तयोर्यथार्थं स्यात्** । अथ यदि तत ऊर्ध्वं संवत्सरादिकालेषु अग्न्याधानं तदा प्राशनानन्तरमेव यथार्थम् ॥२१॥

**पूर्वाह्णे दक्षिणेनाग्न्यायतनानि गत्वा यत्राग्निं मन्थिष्यन्तः स्युस्तद्दक्षिणतो निरस्तः परावसुरिति दक्षिणा तृणं निरस्येदावसोः सदने सीदामीत्युपविशेत् ॥२२॥**

यस्मिन् दिवसे अग्न्याधानं तस्य दिवसस्य **पूर्वाह्णे** एव गार्हपत्यसंभाराहरणकाले मन्थनदेशस्य दक्षिणतो मन्त्रेण निरसनोपवेशने कुर्यात् । संभाराहरणानुसंधानार्थम् ॥२२॥

**भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमिति ॥२३॥**

उपविश्य जपेदिति शेषः । जपश्चोपवेशनाङ्गम् ॥२३॥

**एतेनोपविशेद्यजुषेति यत्र स्यात् ॥२४॥**

यत्र यत्र **यजुषोपविशेदिति** विधिः **स्यात्तत्र** सर्वत्रैतेनोपविशेन्निरस्तः परावसुरित्यादिना **मानुष ओमित्यन्तेन** ॥२४॥

---

1. My[2,4]V[2] उदधीरन् for निदधीरन्
2. V My[1,4] तण्डुला⁰ for तन्दुला⁰
3. N[2] M प्रदत्तयोः My[1] प्रवृत्तयोः for प्रत्तयोः
5. V[2] प्रदत्तयोः, My[1] प्रवृत्तयोः for प्रत्तयोः
   P तद⁰ for ततः P. अग्न्याधेयान्तमाधानं for अग्न्याधानं
10. My[4] ⁰पत्यस्य for पत्य PV[1]C transp गार्हपत्य⁰before मन्थन⁰; (L.11)
11. My[4] ⁰मथन⁰ for ⁰मन्थन⁰
14. V[1]PC उपविशेत् for उपविश्य

**अग्निं ह्रियमाणमनुगच्छेत् ॥२५॥**

गार्हपत्यमग्निं मथित्वा ह्रियमाणमनुगच्छेत् ॥२५॥

**निहिते यजुषोपविशेत् ॥२६॥**

**निहिते** आहिते गार्हपत्ये यजुषोपविशेत् ॥२६॥

**अत्र प्रथममिति शाण्डिल्यः ॥२७॥**

अत्रैव यजुषा प्रथममुपवेशनं पूर्वाह्णे संभाराहरणकाले मन्थनदेश इति ॥२७॥

**द्वितीयमिति धानंजय्यः ॥२८॥**

पूर्वाह्णे यजुषा प्रथममुपवेशनम् । आहिते गार्हपत्ये **द्वितीयं** यजुषोपवेशनं कार्यमिति ॥२८॥

**जाते राथन्तरं गायेत् ॥२९॥**

**वामदेव्यं ह्रियमाणे ॥३०॥**

**बृहन्निहिते ॥३१॥**

त्रीण्यपि सामानि गार्हपत्याधान एव ॥२९-३१॥

**सर्वाणि तृचेषु मनसा ॥३२॥**

**सर्वाण्यपि** सामान्यग्न्याधेयविषयाणि **मनसैव** गायेत् । अरण्येगेयानां तावद् ग्रामे वाचिकं गानमयुक्तमिति मानसमेवेति शास्त्रार्थः तथैव ग्रामेगेयानामपि गानम् शास्त्रार्थस्यैकरूप्यात् ॥३२॥

**वाचा गायेदिति ह्युक्ते किमन्यद् वाचा प्रतीयेत ॥३३॥**

अथवा उभयान्यपि वाचैव गायेत् । कुतः । **गायेदिति ह्युक्ते वाचा** विना **किमन्यत्** प्रतीयते । वाचेति विनार्थे तृतीया तेन वाचैव गानमिति ॥३३॥

---

6. My[1] adds. न before पूर्वाह्णे

8. PV[1]C. प्रथमोप° for प्रथममुप°

15. V[1] गेयमानानां for गेयानां

16. My[1,4] वाचनिकं for वाचिकं V[1] गेयमानानाम् for गेयानाम

17. V[2]My[1] °रूप्यार्थम्. for रूप्यात्

19. PCV[1] अथ for अथवा My[4] उक्तेः for उक्ते

**अथापि गानमेवाध्वर्यवे विधीयते न मनसेति ॥३४॥**

पक्षान्तरमाह—

**अपि वा रहस्यान्येव मनसा गायेत् । न ह्यारण्ये गेयानां गानं ग्रामे विद्यत इति ॥३५॥**

अथवा अरण्येगेयान्येव मनसा गायेत् । तेषां ग्रामे वाचिकगानस्यायुक्तत्वात् । ग्रामे गेयं तु वाचैव गायेत् । दोषाभावात् ॥३५॥

**प्रथमोत्तमयोः स्थाने वारवन्तीययज्ञायज्ञीये इति लामकायनः ॥३६॥**

प्रथमोत्तमयोः रथन्तरबृहतोः स्थान इत्यर्थः ॥३६॥

**पूर्वे कल्पे भूयाꣳसीति शाण्डिल्यः ॥३७॥**

पूर्वस्मिन्नेव पक्षे स्थित्वा पुनरप्यधिकानि सामानि शाण्डिल्यो ब्रूते ॥३७॥

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले प्रथमः खण्डः ॥१॥

---

3. V[1] ग्रामे गानं for गानं ग्रामे

12. P इति चतुर्थस्य नवमः खण्डः ॥9॥ for इति · · · खण्डः ॥1॥

## द्वितीयः खण्डः

तान्येव दर्शयति—

**मन्थिष्यत्स्वरणी आलभ्यारण्यो (सा. ७९) रिति गायेत् ॥१॥**

**मथ्यमानेऽग्निं नरः (सा. ७२-१३७३) इत्येतयोरन्यतरत् ॥२॥**

**धूम उदिते त्वेषस्ते धूम ऋण्वती (सा. ८३) ति ॥३॥**

**प्रज्वलितेऽदर्शि गातुवि (सा. ४७) ति ॥४॥**

स्पष्टम् ॥१-४॥

**निधीयमाने गवां व्रतं यदग्निमीडे (सा. ६०५) इति ॥५॥**

पञ्चस्वपि सूत्रेषु गायेदित्यनुषङ्गः । प्रज्वलित इति जननानन्तरमध्वर्युभिः प्रज्वलित इत्यर्थः ॥५॥

**तान्युद्गातृकर्मैके ॥६॥**

तानि गानानि उद्गातुरेव कर्म न ब्रह्मण इत्येके ॥६॥

कुत इत्याह—

**उद्गाता सामवेदेनेति श्रुतेः ॥७॥**

इति । वेदशब्दो मन्त्रब्राह्मणवचनः साममन्त्रैर्यत् कार्यं तत् कर्तृविशेषानादेश उद्गातैवेति वचनार्थः । तेन श्रुतिषु अग्न्याधेये सामगानविधौ ब्रह्मणः प्रकृतत्वेऽपि उद्गातुरेव गानम् ॥७॥

अत्र दृष्टान्तमाह—

**यथा विहव्यसजनीयकयाशुभीयानि होतुः ॥८॥**

**यथा** प्रकृतेऽप्यौद्गात्रे कर्मणि विहव्यꣳशस्यम् । सजनीयꣳशस्यम् ।

---

2. P. द्वादशानि V[1]C. द्वादश तानि for तानि

14. V[2] after इति ins अतः

16. PCV[1] मन्त्र वचनः for मन्त्रब्राह्मणवचनः

17. PV[1]C Om. श्रुतिषु

21. PV[1]C सृजनीयं for सजनीयं

अगस्त्यस्य कयाशुभीयं शस्यम् इति । विहव्यादीनि सूक्तानि होतुरेव शस्यानि । **ऋग्वेदे होतुरिति** श्रुतेः । तद्वदत्रापि ॥८॥

**प्रस्तोतुश्च वैराजशाक्वरी प्रस्तावाः ॥९॥**

चकारो यथेत्यनुकर्षणार्थः । वैराजसाम्नि ब्राह्मणम् प्रस्तावं प्रस्तुत्य विष्टम्भान् **विष्टभ्नोती** (तां. ब्रा. १२.१०.७) ति । तथा महानाम्नीषु क्षिप्रं प्रस्तुत्य क्षिप्रं गेयम् (तां. ब्रा. १३.४.११) इति । उभयत्रापि प्रस्तुत्येत्युद्गात्रा समानकर्तृकत्वश्रवणेऽपि तदनादृत्य प्रस्तोतुरेव **प्रस्तावाः** । सर्वत्र प्रस्तोता प्रस्तुयादिति सामान्यविधेरभङ्गार्थम् । तद्वदत्रापि ॥९॥

**सर्वैश्चाविधानाद् ब्रह्मत्वकारिभिः ॥१०॥**

न च ब्रह्मत्वविधायिभिः सूत्रकारैः सर्वैरपि ब्रह्मणो गानं विहितम् । किंतु कतिपयैरेव । तत्र ब्रह्मणो गानपक्षे सर्वैरपि वक्तव्यं स्यात् ॥१०॥

**कर्मयोगाच्चोद्गातुश्चत्वारो महर्त्विजः प्राश्नन्तीति हि चातुष्प्राश्यप्राशनम् ॥११॥**

**महर्त्विजः प्राश्नन्तीति** वचनादुद्गातुरपि ब्रह्मौदनप्राशनम् । तेन तस्याधानेऽप्यार्त्विज्येन योगोऽस्ति । न च गानं विना तस्यार्त्विज्यमस्तीति । तथा च जैमिनिरुद्गातुरेव गानमाहेति ॥११॥

अथ स्वमतमाह—

**अधिकारात्तु ब्रह्मणः ॥१२॥**

इति । **तुशब्दो** मतान्तरनिवृत्त्यर्थः । गानविधौ ब्रह्मणः प्रकृतत्वात् तस्यैव गानम् ॥१२॥

---

3. PV$^1$C शाक्वरे V$^2$My$^1$ शक्वरीः for °शाक्वरी°

4. My$^{1,4}$ वैराजे for वैराज°

12. PVC V$^1$ ह for हि

15. V$^1$ आर्त्विजे C आत्विज्ये for आर्त्विज्येन

16. V$^1$C Om. एव

19. My$^1$ V$^2$ My श्रुतौ ब्रह्मत्वविधि प्रकृत्य (V$^2$My$^1$ प्रक्रम्य) तन्मध्ये गानविधानात् ब्रह्मण एव गानम् । श्रुतिश्च सूत्रकारेण दृष्टा for गानविधौ · · · गानम् ॥ (L. 20).

**औद्गात्रे चाविधानात् ॥१३॥**

यद्युद्गातुरेव गानं स्यात् तदानीमौद्गात्रप्रकरणे विधातव्यम्। न च तदस्ति ॥१३॥

**दृष्टं चानेन सामगानं ब्रह्मा रथचक्रेऽभिगायती (तां. ब्रां. १८.७.१२) ति ॥१४॥**

वाजपेये ब्रह्मणः सामगानं दृष्टमिति न ब्रह्मणो गानविरोधः ॥१४॥

**उद्गातेति यथाभूयसवादः ॥१५॥**

यः पुनरुद्गाता **सामवेदेने** (द्रा. श्रौ. १२.२.७.) ति वादः स भूयस्त्वानुसारेण द्रष्टव्यः भूतस्य गानभूयस्त्वात् यथाभूयसमिति। भूयस्त्वानुसारेणेत्यर्थः ॥१५॥

**हौत्रे च विधेर्विहव्यादीनि ॥१६॥**

यत् पुनरुक्तं यथा विहव्यादीनि होतुरिति तद्युक्तमेव। हौत्रमधिकृत्य बह्वृचब्राह्मणे तेषां विधानात्। सामवेदेऽपि तद्विधेस्तेनैकवाक्यत्वात् ॥१६॥

**स्तोत्रवत् प्रस्तावा विराट्सु स्तुवन्ति (तां. ब्रा. १२.१०.१०) पुरीषेण स्तुवते (तां. ब्रा. १३.४.१२) इति च बहुश्रुतेः ॥१७॥**

अथ यदुक्तं तथा च **प्रस्तोतुश्च प्रस्तावा** (द्रा. श्रौ. १२.२.६) इति तत्र ब्रूमः। न हि सामान्यविधेस्तत्र प्रस्तोतुरन्वयः। समानकर्तृकत्वविरोधादेव। किंतु **विराट्सु स्तुवन्ति पुरीषेण स्तुवत** इति च बहुवचनात् प्रस्तोतुस्तत्रान्वयः। समानकर्तृकत्वमपेक्षितम्। **स्तोत्रवदिति** कोऽर्थः। गौरीवितेन षोडशिना **स्तुते** (तां. १२.१३.१२) **शाकलेन तुष्टुवानो** (तां. ब्रा. १३.३.१०) **मानवेन तुष्टुवानः** (तां. ब्रा. १३.३.१५)

---

6. $V^1$ $My^1$ $My^4$ after ब्रह्मणः ins च
7. $V^1$ ⁰भूयसो for भूयस⁰
12. PC$V^1$ उक्तम् for युक्तम्
17. PC$V^{1,2}$ ⁰कर्तृकत्वात् for ⁰ कर्तृकत्व
19. $My^{1,4}$ विवक्षितम् $My^2$ अविवक्षितम for अपेक्षितम्
20. $V^{1,2}$PC स्तुवीत for स्तुते

इत्यादावेकवचनादुद्गातुरेव स्तोत्रे प्राप्तेऽपि **हिरण्यꣳसंप्रदायꣳ षोडशिना स्तुवते** (तां. ब्रा. १२.१३.२५) इत्यादिबहुवचनात्तत्र तत्र प्रस्तोतुरन्वयः। तद्वदत्रापि ॥१७॥

**अविधानं विधेर्द्वैधात् ॥१८॥**

यत् पुनरुक्तं सर्वैर्ब्रह्मणो गानं न विहितमिति तद्युक्तम्। **विधेर्द्वैविध्याद्** विकल्पात् क्वचिच्छाखायां ब्रह्मणो गानं विहितम्। क्वचिन्निषिद्धम्। तत्र निषेधश्रुतिमाश्रित्य गानं न विहितम् ॥१८॥

**यावद्वचनं कर्मयोगः ॥१९॥**

यत एव न्यायतो ब्रह्मण एव गानं तेन **यावद्वचनं** ब्रह्मौदनप्राशनमात्रमेव उद्गातुरार्त्विज्यं न गानम् ॥१९॥

**हुतायां पूर्णाहुतौ यथार्थं स्यात् ॥२०॥**

गतम् ॥२०॥

**अक्षांश्चेदभिजुहुयुस्तत्र गत्वा तूष्णीमुपविशेत् ॥२१॥**

यदाध्वर्यवोऽक्षाभिर्होमं कुर्युस्तदोपविशेत् ॥२१॥

**तैर्द्यूते यथार्थं स्यात् ॥२२॥**

अक्षद्यूते कृत इत्यर्थः ॥२२॥

**इष्ट्यादिषु सर्वेषु यजुषोपविशेत् पूर्वो यजमानादाहवनीयं प्रति ॥२३॥**

अग्न्याधेयेष्टीनामादिष्वारम्भेषु **सर्वेषु** यजमानस्य पुरस्तादाहवनीयाभिमुखो **यजुषोपविशेत्**। कः पुनरिष्टीनामारम्भः। यदिदमध्वर्योः **कर्मणेवां देवेभ्यः शकेयम्** (आप. श्रौ. १.१५.४) इति हस्तप्रक्षालनम्। कुत एतत्। आपस्तम्बेन **उदिते आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयती** (आप. श्रौ. १.१५.२) त्युक्त्वा तदनन्तरं

---

1. P C V[1] प्रस्तोत्रे समाप्ते for स्तोत्रे प्राप्ते
6. My[1-2] निषेधः for निषिद्धम् V[1]om निषेध
9. PCV[1-2]om मात्र ।
14. PCV[1,2] यदि for यदा
21. PC आपस्तम्बेऽनुदिते for आपस्तम्बेन उदिते
22. V[1]C प्रक्रम for प्रक्रमयति; V[1] PC उक्तत्वात् for उक्त्वा

प्रक्षालनविधानात्। तथा यजमानस्यापि तदानीमारम्भाभिधानात्। तद्यथा—इदं शकेयम्। यदिदं करोम्यात्मा करोत्वात्मने (आप. श्रौ. ४.४.१) इति। तथा तदानीमेव ब्रह्मणो वरणं तदासनकल्पनं मन्त्रत उपवेशनं चापस्तम्बेन विहितम् ॥२३॥

**परिध्योर्वा संधिम् ॥२४॥**

प्रतीत्यनुवर्तते दक्षिणपश्चिमयोः परिध्योर्वा संधिमभिमुख उपविशेत् ॥२४॥

**स्रुचां वाग्राणि ॥२५॥**

**उत्करं वा ॥२६॥**

प्रतीत्यनुवर्तत एव ॥२५-२६॥

**तमन्तरेणाहवनीयं च यजमानस्य संचरो नान्येषाम् ॥२७॥**

न ब्रह्माणम् ॥२७॥

**तं यदाध्वर्युर्ब्रूयाद् ब्रह्मन्निदं करिष्यामीति सवितृप्रसूतोऽदः कुरु। भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतेनानुमन्त्रयेत ॥२८॥**

ब्रह्मन्नपः प्रेष्यामि ब्रह्मन् प्रोक्षिष्यामीत्यादेरुपलक्षणं ब्रह्मन्निदं करिष्यामीति। ओंप्रणय। ओं प्रोक्षेत्यादेरुपलक्षणमदः कुर्विति ॥२८॥

**एतत्सर्वानुमन्त्रणम् ॥२९॥**

सर्वानुमन्त्रणमिति संज्ञाकरणं व्यवहारार्थम् ॥२९॥

---

1. P °अविधानान् for अभिधानात्; V[1] after तथा add हि
2. PCV[1] आत्मना for आत्मा
6. V[2] Om. अभिमुख
10. V[1] My यजमान for यजमानस्य
12. V[2] इदं fer अदः

**उच्चैरदः कुर्वोमिति ॥३०॥**

तस्मिन्ननुमन्त्रणमन्त्रे अदः कुर्वोमित्यंशमुच्चैः ब्रूयादितरमुपांशु ॥३०॥

**प्रणीतासु प्रणीयमानासु वाचं यच्छेदा तासां विमोचनात् ॥३१॥**

स्पष्टम् ॥३१॥

पक्षान्तरमाह—

**तास्वेव प्रणीयमानास्वा हविष्कृतस्तम्बयजुषश्चाध्या समिधः प्रस्थानीयाया इति वा ॥३२॥**

प्रणीताप्रणीयमानप्रभृति हविष्कृदेहीति । संप्रैषात् पूर्वं वाग्यमनम् । तथा स्तम्बयजुरारभ्य प्राक् समिदाधानात् । प्रस्थानमनुयाजप्रचारः । तदर्था समित् प्रस्थानीया ॥३२॥

पक्षान्तरमाह—

**यत्र वाध्वर्युब्रह्माणौ चेष्टेताम् ॥३३॥**

अध्वर्युब्रह्मयोश्चेष्टायामवश्यं वाग्यमनम् ॥३३॥

किमन्यत्र कामाचारः । नेत्याह—

**यत्र वा न चेष्टेतां वाग्यतः प्रायस्त्वेव स्यात् ॥३४॥**

तयोश्चेष्टाभावेऽपि प्रायेण वाग्यत एव स्यात् ॥३४॥

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले द्वितीयः खण्डः ॥२॥

---

2. P. after उपांशु ends the khanda adding इति चतुर्थस्य दशमःखण्डः ॥१०॥

3. V[1] एतासा for आ तासां

8. My V. om. तथा

5. My[2]. om पक्षान्तरमाह

# तृतीयः खण्डः

**प्रायश्चित्तं चेत् कर्तव्यꣳस्याद् भूः स्वाहेतिगार्हपत्ये जुहुयात् । भुवः स्वाहेति दक्षिणाग्नौ आग्नीध्रीये सुत्या चेत् । स्वः स्वाहेत्याहवनीये । भूर्भुवः स्वाहेति तत्रैव ॥१॥**

मन्त्रस्य कर्मणो वा भ्रेषे सति तत्समाधानं प्रायश्चित्तम् । तत्राविशेषेण त्रिष्वप्यग्निषु होमः । सुत्या चेद्वर्तते आग्नीध्रीये भुवः स्वाहेति होमः ॥१॥

**हुत्वा ब्रूयाच्चेष्टताकार्ष्म प्रायश्चित्तमिति ॥२॥**

चेष्टत प्रवर्तध्वं यूयं अकार्ष्म वयं व्याहृतिहोमेन प्रायश्चित्तमित्यर्थः ॥२॥

**अवेलायां चेद्व्याहरेदयज्ञियं वापद्येतैता एव व्याहृतीरनुप्रेक्षेत ॥३॥**

अयज्ञियं द्विविधम् । दैवकृतमात्मकृतं चेति । विहारदेशे कृष्णशकुनिश्वापदादिसंचारो दैवम् । अमेध्यदर्शनं पतितादिसंभाषणादिकं चात्मकृतम् । अनुप्रेक्षणं मनसानुद्रवणम् । तथैव षड्विंशश्रुतेः (ष० ब्रा. १.६.७) ॥३॥

**इदं विष्णु (सा० २२२) रिति वर्चम् ॥४॥**

स्पष्टम् ॥४॥

**अमावास्यायां दोहनपवित्रे मार्जयेरन्नापोहिष्ठीयाभिः ॥५॥**

अमावास्यायां दर्शयागे अयज्ञियोपनिपाते अभ्युच्चयविधिरयम् । दोहनपवित्रं

---

3. My V सुवः for स्वः

5. My [4]. तदानी for तत्समाधानं, My[4] अत्र for तत्र

6. My[4]. तदा for वर्तते, V[2] My' add : तद् after वर्तते

9. V[1] C My[1] अयज्ञीयं foa अयज्ञियं

11. C. अयज्ञीयं for अयज्ञियं

12. V[1]C. om. संचारो; V[2] My[4] दैवकृतम् for दैवम्
V[2] पतितं for पतितादि;

13. V[2] My[1 2,4] निद्रवणम् for अनुद्रवणम्

16. My[1 2,4]मार्जयीरन् for मार्जयेरन्

17. My[2]. पाते for निपाते

दोहनार्थं शाखापवित्रम् । अकाले वाग्विसर्जने अयज्ञियापत्तौ च दोहनपवित्रं हस्ते गृहीत्वापोहिष्ठीयाभिस्तिसृभिर्मार्जनं कुर्युः । बहुवचनात् सर्वेऽपि कर्मान्विताः कुर्युः । एवमुत्तरत्रापि बहुवचनप्रयोगे वेद्यम् ॥५॥

**तदभावे दार्भे ॥६॥**

यदा शाखापवित्रं नास्ति अग्नौ प्रहरणात् तदानीं दर्भमयं पवित्रं कृत्वा तेनैव मार्जनं कार्यम् ॥६॥

**सर्वेष्टिष्विति शाण्डिल्यायनः ॥७॥**

न केवलममावास्यायां सर्वेष्टिष्वपि दर्भमये पवित्रे मार्जनमधिकं कार्यमिति । ननु अग्न्याधेयेष्टयः प्रकृताः । कथममावास्यायामिष्ट्यन्तरेषु च विशेषविधिः उच्यते । एतत् सर्वेष्टीनां ब्रह्मत्वमित्यतिदेशं वक्ष्यति । तद् हृदि कृत्वा विशेषविधिः ॥७॥

**प्राशित्रमाह्रियमाणं प्रतिमन्त्रयेत मित्रस्य त्वा चक्षुषा प्रतिपश्यामीति ॥८॥**

अध्वर्युणा प्राशित्रमाह्रियमाणम् ॥८॥

**अप आचम्य देवस्य त्वेति प्रतिगृह्णीयात् ॥९॥**

स्पष्टम् ॥९॥

**व्यूह्य तृणानि पुरस्ताद्दण्डꣳसादयेत् पृथिव्यास्त्वा नाभौ सादयामीति ॥१०॥**

अन्तर्वेदि दर्भतृणानि व्यूह्येत्यर्थः ॥१०॥

---

1. V[2] ०पवित्रे for ०पवित्रं
3. V[2] ०प्रयोगेन for ०प्रयोगे
5. V[1]C My[1-2-4]. om. कृत्वा
9. My[1-4]. om. च
10. V[1-2]. om. इति; My[2]. om. ब्रह्मत्वम् My[4]. कथनम् for ०विधिः
12. My[1-2,4] आह्लीयमाणं for आह्रियमाणं
14. My [1-2,4] आह्लीयमाणम् fyr आह्रियमाणम्
17. PCV[1-2]व्यूहेद् for व्यूह्य

**अङ्गुष्ठेनानामिकया चादायाग्नेष्ट्वास्येन प्राश्नामीति प्राश्नीयात् ॥११॥**

स्पष्टम् ॥११॥

**असंखादं निर्गिरेत् ॥१२॥**

दन्तैः खादनमकुर्वन्नित्यर्थः ॥१२॥

**अप आचम्योरसि पाणिं निदधीतेन्द्रस्य त्वा जठरे सादयामीति ॥१३॥**

स्पष्टम् ॥१३॥

**प्रक्षाल्य प्राशित्रहरणं तत्र निदध्यात् ॥१४॥**

तत्रेति पूर्वोक्तस्थान इति ॥१४॥

**यथाहृतं वा प्रतिहारयेत् ॥१५॥**

स्पष्टम् ॥१५॥

**ब्रह्मभागमाहृतमग्रत उपनिदधीत ॥१६॥**

**तमिष्टौ संस्थितायां प्राश्नीयात् ॥१७॥**

स्पष्टे ॥१६-१७॥

**अन्वाहार्यमन्तरेण ब्रह्माणं यजमानं च हरेत् ॥१८॥**

अन्वाहार्यमिष्टेर्दक्षिणाभूतमोदनम् । तं ब्रह्मयजमानावन्तरेणाध्वर्युर्हरेत् ॥१८॥

**स्वयं चेद् ब्रह्मा यजमानः स्यात् पूर्वेणैनम् ॥१९॥**

हरेदित्यनुषङ्गः । यदि यजमानः स्वयमेवापत्कल्पेन ब्रह्मा स्यात् तदानीमेनं पूर्वेणान्वाहार्यमाहरेत् ॥१९॥

**हृत्वा तमन्तर्वेदि सन्नं तूष्णीमालभेत ॥२०॥**

तथा हृत्वाध्वर्युणा वेद्यां सादितं ब्रह्मा स्पृशेत् ॥२०॥

---

16. My[1,4]. after हरेत् add : इति । अध्वर्युरिति शेषः ।
17. V[2]. पक्वान्नम् for ओदनम् ; PCV after ओदनम् add पक्त्वा; V[2]. om. तं.
19. V[2] My[1,4]. after एनं add : यजमानं

**प्रजापतेर्भागोऽसीति वा ॥२१॥**

प्रजापतेर्भागोऽसीत्येतावान् मन्त्रः ॥२१॥

**अथापरं प्रजापतेर्भागोऽस्यूर्जस्वान् पयस्वान् । अक्षितोऽस्य क्षित्यै त्वा । प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाहि । ऊर्गस्यूर्जं मयि धेहीति ॥२२॥**

अथापरं मतमनेन मन्त्रेणाभिमृशेदिति ॥२२॥

**तत्रैव यजमानं वाचयेत् प्रजापतिं त्वया समक्षमृध्यासमागम्यान्वाहार्यं ददानि ब्रह्मन् ब्रह्मासि ब्रह्मणे त्वा हुताद्य मा मा हिꣳसीरहुतो मह्यं शिवो भवेति ॥२३॥**

तत्रैवान्वाहार्यं यजमानमीक्षित्वा वाचयेत् ॥२३॥

इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले तृतीयः खण्डः ॥३॥

---

7. My[2] ऋध्यासममागम्य, M. ऋध्यासं मामा for ऋध्यासमागम्य;
8. M My [1-2,4] ददामि for ददानि

## चतुर्थः खण्डः

**समिधं प्रस्थानीयामनुमन्त्रयेत देव सवितरेतत्ते यज्ञं प्राहुर्बृहस्पतये ब्रह्मणे तेन यज्ञमवतेन यज्ञपतिं तेन मामव । मनो ज्योतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳसमिमं दधातु विश्वे देवास इह मादयन्तामित्युपाꣳशु प्रतिष्ठेत्युच्चैर्भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष इत्युपाꣳश्वोमित्युच्चैः ॥१॥**

प्रस्थानमनुयाजप्रचारः । तदर्थां **समिधमनुमन्त्रयेत्** । मानुष ओमित्यन्तेन मन्त्रेण । तत्र ओमिति च **प्रतिष्ठेति** च **उच्चैर्ब्रू**यादितरदुपाꣳश्विति ॥१॥

**सर्वानुमन्त्रणेन वा ॥२॥**

सर्वानुमन्त्रणमन्त्रः पूर्वमुक्तस्तेन वानुमन्त्रयेत ॥२॥

**विमुक्तासु प्रणीतासु समिध आदध्याद्यथावभृथादुदेत्य ॥३॥**

प्रणीताविमोचने कृते ब्रह्मा **समिध आदध्याद् यथावभृथादु**पेत्यैधोऽस्येधिषीमहीत्यादिमन्त्रैः समिदाधानं तद्वत् ॥३॥

**एतत् सर्वेष्टीनां ब्रह्मत्वम् ॥४॥**

एतदुपवेशनप्रभृति समिदाधानान्तं न केवलमाधानेष्टीनाम् । किंतु **सर्वेष्टीना**मित्यर्थः ॥४॥

**समानेऽहन्येकासने न पुनर्यजुषोपविशेदिति शाण्डिल्यः ॥५॥**

संस्काराणामिष्टिसमाप्तौ अपवृक्तत्वादिष्टिभेदे पुनरपि यजुषोपवेशनम् । अहरासनैक्येऽपि कार्यमेवेति स्वपक्षः । शाण्डिल्यस्य तन्नाभिमतम् ॥५॥

**अग्न्याधेयेष्टिषु प्रथमायां यजुषोपविशेदुत्तमायाꣳसमिध आदध्यादिति गौतमः ॥६॥**

इष्टिभेदे यद्यपि प्रयाजादिवत् पृथगुपवेशनं प्राप्तं तथाप्याधानेष्टीनामग्न्यर्थ-

---

4. V.C My[1] जूतिर् for ज्योतिर्

9. PC. befor ओम् add: इत्युपांशु

20. V[2] My[4]. न्याय्यम् for कार्यम्

त्वादेकेष्टितुल्यत्वात् सकृदेवादौ मन्त्रत उपवेशनम् । अन्ते समिदाधानं चेति **गौतमः** ॥६॥

**पृथगिष्टिष्विति धानंजय्यः ॥७॥**

स्पष्टम् ॥७॥

**चातुष्प्राश्यं च प्राश्नत्सु ॥८॥**

चकारो धानंजय्यानुकर्षणार्थः । ऋत्विक्षु **चातुष्प्राश्यं प्राश्नत्सु** यजुषोपविशेद्ब्रह्मा ॥८॥

अग्न्याधेयस्य दक्षिणामाह—

**धेनुं दद्याद्ब्रह्मणे ॥९॥**

स्पष्टम् ॥९॥

**अध्वर्यवे चाग्निपदम् ॥१०॥**

अग्नेराहवनीयस्याधाने यदपेक्षितमश्वादिपदं तत्सिध्यर्थो योऽश्वादिरानीयते स आग्निपदोऽश्वादिः ॥१०॥

**धेनुर्होत्रे वत्सतरीर्ब्रह्मणे अनडुहोऽध्वर्यवे । सर्वे त्रिवर्गाः ॥११॥**

त्रिवर्गास्त्रिगुणा इत्यर्थः । तिस्रो **धेनूर्होत्रे** तिस्रो **वत्सतरीर्ब्रह्मण** इति । त्रीननडुहोऽध्वर्यव इत्युक्तं भवति ॥११॥

**पष्ठौहीमाग्नीध्राय ॥१२॥**

तदेवं द्वादश दक्षिणाः ॥१२॥

अथ साधारणमाह—

**सर्वेभ्योऽश्वरथं कुण्डले च ॥१३॥**

एकाश्वरथः कुण्डलद्वयं **च** सर्वसाधारणम् ॥१३॥

**एवमेव धेनुमग्निपदं चेति शाण्डिल्यः ॥१४॥**

---

3. My[1,4] befor पृथग् add : इष्टिभेदेऽथ

6. ⁰मतानु⁰ for ⁰जय्यानु⁰

7. PC. om. ब्रह्मा

12. PC. अग्नि for आग्नि⁰

21. My[1] ⁰पादं for पदं; My[4] आग्नि for अग्नि⁰

पूर्वोक्तमग्निपदं धेनुं च साधारणमाहेत्यर्थः ॥१४॥

अथ अग्न्याधेयेष्टीनां दक्षिणामाह—

**धेनुमनड्वाहं वत्सतरीं वत्सतरमजं पूर्णपात्रमिति तत्प्रथमायामिष्टौ दद्यात् ॥१५॥**

तदिति तद्धेन्वादि षट्कमित्यर्थः ॥१५॥

**तथोत्तरयोरन्यत्राज्यपूर्णपात्राभ्याम् ॥१६॥**

उत्तरयोरिष्ट्योर्धेन्वादिचतुष्टयमिति ॥१६॥

पक्षान्तरमाह—

**वरः सप्तमो दक्षिणानां त्रयोदशो वा पञ्चविंशो वा । एतद्वाजसनेयकम् ॥१७॥**

अग्न्याधेयस्य सेष्टिकस्य षड् गावो दक्षिणाः । तासां **सप्तमो वरः** स्यात् । अथवा द्वादश गावः स्युः । त्रयोदशो वरः स्यात् । अथवा चतुर्विंशतिर्गावः । पञ्चविंशोवरः स्यात् । तदेतद्वाजसनेयकं मतम् । अत्रापस्तम्बः **षट् देया द्वादश देयाश्चतुर्विंशतिर्देयाः** (५.२०.१३) इति ता विकल्पन्ते इति ॥१७॥

**अग्न्याधेयान्तान् कुर्वते पूर्णाहुतिमक्षाभिर्होममिष्टीः ॥१८॥**

अग्न्याधेयस्य त्रीनन्तान् अध्वर्यवो विकल्पेन **कुर्वते** । तदानीमिष्ट्यभावे तद्दक्षिणालोपः ॥१८॥

**मिथुनौ दक्षिणान्वारम्भणीयायामिष्टौ ॥१९॥**

दर्शपूर्णमासयोरारम्भार्थेष्टिरन्वारम्भणीया । तस्यामन्वाहार्यस्थाने **मिथुनौ** गावौ **दक्षिणा** । तयोः प्रजापतेर्भागौ स्थः इत्यनुमन्त्रणमन्त्रस्योहः कार्यः ॥१९॥

**वाजिनाश्विनघर्माणामृत्विक्षूपहमिष्ट्वा प्राणभक्षं भक्षयेत् ॥२०॥**

---

1. PC. om. धेनुं च; V² My^1,4. om. आह
2. V¹ PT. om अग्न्याधेय
10. P. वागो॰ for गावो
14. My^1,4 विकल्पन्ते for ता विकल्पन्ते
15. V¹C² My ^2,4 अक्षाभिर्होमम् for अक्षाभिमर्होम् ; P. इष्टिः, V². इष्टिभिः for इष्टीः
16. P. अभावेन दक्षिणा for अभावे तद्दक्षिणा (L. 17)

वैश्वदेवे पर्वणि चातुर्मास्येपु वाजिनं नाम हविः। अश्विनो नाम सौत्रामण्यां कश्चिद्ग्रहः। घर्मः प्रवर्ग्यः। प्राणभक्षोऽवघ्राणम् ॥२०॥

**प्रत्यक्षभक्षꣳस्वे यज्ञे ॥२१॥**

स्पष्टम् ॥२१॥

वाजिनस्य भक्षणमन्त्रमाह—

**यन्मे रेतः प्रसिच्यते यद्वामेऽपि गच्छति यद्वा जायते पुनस्तेन माशिवमाविश ॥ तेन मा वाजिनं कुरु तस्य ते वाजिपीत-स्योपहूतः ॥ उपहूतस्य भक्षयामीति ॥ वाजिनस्येति ॥ ऋतूनां त्वा वाजिनां वाजिनं भक्षयामीति वोभाभ्यां वो-भाभ्यां वा ॥२२॥**

स्पष्टानि। आश्विनघर्मयोस्तु मन्त्रो वक्ष्यते ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे द्वादशे पटले चतुर्थः खण्डः ॥४॥**

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते।
द्वितीये दशके वृत्तो द्वितीयः पटलोऽधुना ॥
ब्रह्मत्वमित्थमाधाने सर्वेष्टिपु च दर्शितम्।
द्वितीये पटले तच्च व्याख्यातं धन्विना स्फुटम् ॥

**इति धन्विविरचिते श्रीद्राह्यायणश्रौतसूत्रदीपे द्वादशः पटलः समाप्तः ॥१२॥**

**चतुर्थः प्रपाठकः समाप्तः ॥४॥**

---

1 PC. om वैश्वदेवे पर्वणि

11. My[4]V[2]. स्पष्टम् for स्पष्टानि ; My[1] वक्ष्यति for वक्ष्यते

12. V[1] My[4]TC द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते।
द्वितीये दशके वृत्तो द्वितीयः पटलोऽधुना ॥
V[2]. ends with this पटलः after स्फुटम् ॥ it wriets:—श्रीदक्षिणामूर्तये नमः॥तमः पटललुण्टाकतेजः पुञ्जसमुज्वलम्। नारायणार्यरत्नं तच्छ्रेयसे भूयसेऽस्तु नः॥ नारायणार्यचरणारविन्दयोरयमञ्जलिः। करकृतमपराधं क्षन्तुमर्हन्ति सन्तः॥ हरिः ॐ। श्रीरस्तु॥

: पञ्चमः प्रपाठकः

त्रयोदशः पटलः

## प्रथमः खण्डः

**चातुर्मास्येषु वरुणप्रघासानाᳫंस्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत्** ॥१॥

**चातुर्मास्येष्वि**त्यधिकारः । चतुर्षु चतुर्षु मासेषु क्रियन्त इति चातुर्मास्यानि । वैश्वदेव वरुणप्रघाससाकमेधशुनासीर्याणि चत्वार्येव पर्वाण्यैष्टिकतन्त्राणि । आपो द्वारा इति वद् वरुणप्रघासा इति नित्यबहुवचनान्तम् । तेषां स्तम्बयजुर्हरणकाले ऐष्टिकात् प्रथमोपवेशनादधिकमेतदुपवेशनमपूर्वं कार्यम् । तथाध्वर्योर्हस्तप्रक्षालनकालेऽप्यैष्टिकमुपवेशनं द्वितीयं कार्यम् ॥१॥

**विलिखिते चात्वलेऽध्वर्युणा सह प्रत्याव्रज्याहवनीयमुपविशेत्** ॥२॥

उत्तरवेदिनिर्माणार्थं यस्मादवटान्मृदाहरन्ति तच्चात्वालम् । तस्मान्मृदाहरणकाले अध्वर्युणा सह गत्वा चात्वालेऽभ्रिणा परिलिखिते सति तेनेव सह **प्रत्याव्रज्याहवनीयं प्रत्युपविशेत्** । नन्विदानीमाहवनीयो नास्ति । उत्तरवेदिकरणोत्तरकालमध्वर्युभिः प्रणयनविधानात् । सत्यम् । अत्र पक्षद्वयमध्वर्युभिरुक्तम् । गार्हपत्यस्य पुरस्ताद् वेदिद्वयं कृत्वा गार्हपत्याद् द्वयोरग्न्योः प्रणयनमित्यापस्तम्बः । आहवनीयस्य पुरस्ताद् वेदिद्वयकरणं ततश्च प्रणयनमिति बौधायनकात्यायनौ । तत्र द्वितीयपक्षाश्रयणेनेदं सूत्रम् । तदानीं पूर्वमेवाहवनीयस्य सद्भावात् ॥२॥

**अग्नी प्रणीयमानौ यथैतमनुगच्छेत्** ॥३॥

---

7. PCV[1] एक[0] for ऐष्टिक[0]

9. My[1] My[4] om. प्रथम[0]; My[2] पूर्वं for अपूर्वं

14. My[2]. om. गत्वा My[1] My[4]. om सति.

18. PCV[1]. om ततश्च

19. My[4] [0]नीयसंभवान् for [0] नीयस्य सद्भावात्.

20. My[2] यथेदं m My[1] यथेतं V[1]C यथैनं for यथैतं

आहवनीयस्य पुरस्ताद् वेदिद्वयं कृत्वा तत एवाहवनीयाद् द्वावग्नी प्रणयावेति बौधायनकात्यायनौ। तावग्नी **यथैतमनुगच्छेद्** येन पथा अध्वर्युः प्रणयति तेन तमनुगच्छेत्। येन प्रतिप्रस्थाता तेन तमनुगच्छेदित्यर्थः ॥३॥

**अध्वर्युश्चेद्ब्रूयाद् ब्रह्मन्नेकस्फ्ययोपसंभिन्धीति स्फ्येनाहवनीयात्पांꣳसूनुपहृत्योत्तरस्या वेदेर्दक्षिणादन्तात् कर्षन्नियात् ॥४॥**

एकयत्नेन स्फ्यकृता कर्षणक्रिया एकस्फ्या। तया संभेदनमेकीकरणम्। सकृदेव पांसूनाहवनीयान्तात् संततमाकृष्य तस्याहवनीयस्य पूर्ववेदिद्वयेन मेलनं कुर्विति प्रैषार्थः। **उत्तरस्या वेदेर्दक्षिणमन्तं** यावत् **पांसून् कर्षन्** गच्छेदित्यर्थः। एवं मेलने कृते अग्निद्वयमप्येकायतनस्थं कृतं भवेदिति भावः ॥४॥

**आवेदिमध्यादेका चेत् ॥५॥**

यत्र साकमेधपशुबन्धादिषु पूर्वा वेदिरेकैव भवति तदा तन्मध्यं यावत् पांसूनाकर्षन् गच्छेदिति ॥५॥

**प्रोह्य स्फ्यं पश्चिमेन वेदिं गत्वा निधीयमानयोरग्न्योस्तूष्णीमुपविशेत् ॥६॥**

प्रोहणमुदसनम्। तत्कृत्वा तयोरग्न्योर्दक्षिणत **उपविशेत्** ॥६॥

**एतत्कर्माग्निप्रणयनेषु सर्वेषु ॥७॥**

**अग्नी प्रणीयमानौ यथैतमनुगच्छेत्** (द्रा. श्रौ. १३.१.३) इत्यारभ्य यदुक्तं तत् **सर्वेषु अग्निप्रणयनेषु** स्यात् ॥७॥

**अवभृथन्यङ्गं गच्छत्सु पूर्वेणाग्नी चात्वालं च गच्छेत् ॥८॥**

मुख्योऽवभृथः सेकः। तस्य क्रियास्पर्शो न्यङ्गः। स यत्रास्ति तदवभृथन्यङ्गं

---

1. V.C प्रणेथाम् P. प्रणेष्यामि for प्रणेयौ ;
2. P. om. तवाग्नी; P. अथ for यथा
6. My[1-4] befor कर्षण ins. सकृदा My[4] My[1] om. कृता
11. My[1,2] ⁰मेधे for ⁰मेध⁰
15. My[2]. om. प्रोहणम् · · · · गच्छेत् (L.19)
20. P मुख्या⁰ for मुख्यो V[1]PC सौमिकः for सेकः

तुषनिष्कासप्रतिपादनम् । तत् कर्तुमध्वर्युषु गच्छत्सु पूर्वेण गच्छेत् ॥८॥

**पश्चिमेन वेदी चात्वालं च स्वे यज्ञे ॥९॥**

**स्वे यज्ञे** सत्रे कुण्डपायिनामयनगतेषु चातुर्मास्येष्टिष्वित्यर्थः ॥९॥

**हविर्यज्ञेष्वेष संचर उत्तरेण विहारं कर्मभ्यः ॥१०॥**

**उत्तरेण विहारं** यानि कर्माणि क्रियन्ते तदर्थमेष एव संचरः न त्वपरेणाहवनीयं दक्षिणातिक्रम्ये (आप. श्रौ. ६.५.३) त्यापस्तम्बोक्तः संचरोऽभिप्रेतः ॥१०॥

**यथा चात्वाले तथा यूपे शामित्रे च पशौ ॥११॥**

निरूढपशौ यूपशामित्रयोः पुरस्तादेव संचरश्चात्वालवदिति ॥११॥

**अवभृथन्यङ्गं प्राप्याभ्युक्षणप्रभृति सौत्यं कर्म समापयेयुः ॥१२॥**

अवभृथदेशं गत्वा अभ्युक्षणप्रभृति समिदाधानान्तं सुत्यायां यदुक्तं तत् सर्वं कुर्युः । एतदन्तं वरुणप्रघासेषु ब्रह्मत्वम् । बहुवचनं सर्वार्थम् ॥१२॥

**साकमेधेषु क्षीरोदनस्य यथार्थं प्राश्नीयात् ॥१३॥**

द्व्यहेन साकमेधानुष्ठानम् । पूर्वस्मिन् दिवसे रात्रौ क्षीरोदनो गृहमेधीयः । साममेधे गृहमेधीयस्य शेषं यथेच्छं प्राश्नीयाद्वा न वा ॥१३॥

**यजमानं ब्रूयात् प्रभूतमन्नं कारय सुहिता अलंकृता भवतेत्य-मत्यान् ब्रूहि । वत्सांश्च मातृभिः सह वासयेति ॥१४॥**

**कारय ब्रूहि वासयेति** त्रयः प्रैषाः ॥१४॥

**पूर्वाह्णेऽध्वर्युः क्षीरौदनमृषभस्य रवथे जुहोति ब्रह्माणमुपवेश्य ॥१५॥**

---

3. PV कौण्ड for कुण्ड ; My [2,4] °र्मास्येषु for °र्मास्येष्टिषु
4. V[1]C. om एषः; V[1]C. असंचरः for संचरः
5. PMy[2] befor उत्तरेण add :—उत्तरेण विहरं कर्मभ्य इति
6. PC. निष्क्रम्य for अतिक्रम्य
8. My[4] एवासं for एष सं ; My[1] एव for एषः
10. PCV[1]. om. सुत्यायां यदुक्तं तत्
13. VI क्षीरोदनो for क्षीरोदनो ; My[4] om. क्षीरोदनः
12. VI क्षीरौदनः for क्षीरोदनः
18. My[1,4]. रवधे for रवथे

उत्तरेद्युः **पूर्वाह्णे** ऋषभमानीय तस्य रवथे शब्दे सति **अध्वर्युर्जुहोतीत्यनु**-वादोऽयमुत्तरार्थः ॥१५॥

**ऋषभेऽरुवति ब्रह्मैव ब्रूयाज्जुहुधीति ॥१६॥**

यदि ऋषभो न शब्दं कुर्यात् तदा ब्रह्मैव जुहुधीति ब्रूयात् । अरुवतीति नञ्समासात् सप्तमी । ऋषभे शब्दमकुर्वतीत्यर्थः ॥१६॥

**तूष्णीं पैतृकयज्ञिकायाꣳसर्वं कुर्यात् ॥१७॥**

अथ पैतृकयज्ञिकायामिष्टौ सर्वमुपवेशनादिकं तूष्णीमेव कुर्यात् ॥१७॥

**ओमित्येवानुमन्त्रयेत् ॥१८॥**

सर्वानुमन्त्रणमन्त्रे ओमित्येतावान्मन्त्रं ब्रूयात् ॥१८॥

**यज्ञोपवीतप्राचीनावीतयोरध्वर्युमनुविदधीत ॥१९॥**

यदाध्वर्युर्यज्ञोपवीती प्राचीनावीती स्यात्तदानीं तद्वदेव ब्रह्मापि स्यात् ॥१९॥

**तस्या हवीꣳषि निर्वप्स्यत्सु दक्षिणया द्वारा प्रपद्य पश्चात् प्राङ्मुख उपविशेत् ॥२०॥**

निर्वापदेशस्य पश्चात् ॥२०॥

**एवमेव वेदिं गत्वा स्तम्बयजुर्हरिष्यत्सु ॥२१॥**

स्तम्बयजुर्हरणदेशस्य पश्चात् प्राङ्मुखः ॥२१॥

**आज्यभागयोर्हुतयोर्दक्षिणेनाग्निं परिक्रम्य पुरस्तात् प्रत्यङ्मुख उपविशेद्यजमानश्च ॥२२॥**

स्पष्टम् ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले प्रथमः खण्डः ॥१॥**

---

1. P. तं स्वरवथे for तस्य रवथे; My$^{1-4}$CVI रवचे for रवथे
4. P. यदा for तदा
7. VTC पितृ$^{0}$ for पैतृ$^{0}$ Mo$^{1-4}$पित्र्यां for पैतृकयज्ञिकायां
8. P. $^{0}$मन्त्रयेत for मन्त्रयेत्
9. P. after ब्रूयात् adds: इति ॥ इति पञ्चमस्य प्रथमः खण्डः ॥१॥
13. C तस्याः, My $^{1-4}$ तस्य for तस्या

## द्वितीयः खण्डः

**हुते स्विष्टकृति यथेतं प्रत्याव्रज्योपविशेताम् ॥१॥**

स्पष्टम् ॥१॥

**प्राशित्रमाहृतमुपघ्रायापविध्येत् ॥२॥**

आघ्रायोदस्येत् ॥२॥

**आज्यं चेत् प्राशित्रभागान् विध्येयुस्तदुपघ्रायाप उपस्पृशेत् ॥३॥**

स्पष्टम् ॥३॥

**इडां च प्रतिगृह्य प्रतिप्रयच्छेत् ॥४॥**

इडा प्रतिग्रहः प्रकृतौ नास्ति । तस्या अपूर्वस्य विधिः । स च अदृष्टार्थे । भक्षणाभावात् ॥४॥

**अध्वर्युणा परिषिच्यमाने व्युत्क्रम्य परिषिक्त आहवनीयमुपतिष्ठेरन् ॥५॥**

**अध्वर्युणा** वेदिपरिषेचने प्रक्रान्ते परिश्रिताया वेदेर्निष्क्रम्य परिषिक्त उपस्थानम् ॥५॥

**दक्षिणेन दक्षिणाग्निमुत्तरेण दक्षिणाग्निꣳस्वे यज्ञे ॥६॥**

**दक्षिणेन** दक्षिणाग्निं स्थित्वाहवनीयमुपतिष्ठेरन् । सत्रेषूत्तरेण स्थित्वा ॥६॥

**अक्षन्नमीमदन्त ही (सा. ४१५) ति प्रथमा । सुसंदृशं त्वा वयं मघवन्मन्दिषीमहि । प्रनूनं पूर्णवन्धुरः स्तुतो यासि वशाꣳअनुयोजा न्विन्द्र ते हरी इति द्वितीया उपोषु शृणुही गिरः (सा. ४१६) इति तृतीया ॥७॥**

---

2. PC यथैतं for; यथेतं My [10] विशेयाताम् for विशेताम्

6. My[1] PC भागादवध्येयुः; for भागान् विध्येयुः

10. V[1]C पूर्वस्य for अपूर्वस्य; My[1,4] तस्य for तस्याः
My[2] स्ना ror सः, My[1] अदृष्टार्थः My[2] दृष्टार्थे for अदृष्टार्थे

21. M. तृतीयोपोषु for द्वितीया उपोषु.

एताभिस्तिसृभिरुपस्थानम् ॥७॥

**तत एवेक्षमाणा गार्हपत्यम् मनोन्वा हुवामहे नाराशꣳसेन स्तोमेन । पितॄणां च मन्मभिः । पुनर्नः पितरो मनो ददातु दैव्यो जनः । जीवं व्रतꣳसचेमहि । आ न ए तुमनः पुनः क्रत्वे दक्षाय जीवसे । ज्योक् च सूर्यं दृशेयम् इति ॥८॥**

तस्मिन्नेव स्थाने स्थित्वा मनोन्वा हुवामह इति तिसृभिर्गार्हपत्यमुपतिष्ठेरन् ॥८॥

**कया नश्चित्र आभुवत् (सा. १६९) इत्येकया दक्षिणाग्निम् ॥९॥**

स्पष्टम् । पित्र्या समाप्ता ॥९॥

**त्रैयम्बकानामापूपा भवन्त्येककपालाः । तेषां यमध्वर्युराखूत्कर उपवपेत्तस्मिन्नप उपस्पृशेयु :—शिवा नः शन्तमा भव सुमृडीका सरस्वति । मा ते व्योम संदृशि इति ॥१०॥**

त्र्यम्बकदेवत्यत्वात् त्रैयम्बका नाम केचन अपूपाः पुरोडाशाः तेषामेकमध्वर्युराखूत्करे निवपति । तस्योपरिष्टादप उपस्पृशेयुः शिवा न इति मन्त्रेण ॥१०॥

**आसीतेतरेषाꣳहूयमान इति धानंजय्यः ॥११॥**

इतरेषां पुरोडाशानां होमे क्रियमाण आसीतेत्येकं मतम् ॥११॥

---

3. My[2] सोमेन for स्तोमेन
10. My[2]. om. पित्र्या समाप्ता ; P. after समाप्ता ends the khanda with इति पञ्चमस्य द्वितीयः खण्डः ॥२॥
13. V[1]C. संदृश इति for संदृशि इति
14. My[2]. om. एकं ; My[4]. यमेकं for एकं
15. V[1]C. om. शिवा .... मन्त्रेण
17. My[2] हूयमानायां for हूयमाने

**तिष्ठेदिति शाण्डिल्यः ।।१२।।**

गतम् ।।१२।।

**हुते तिष्ठन्तो जपेयुः— अवाम्ब रुद्रमयक्ष्महाव देवं त्र्यम्बकम् । यथा नः श्रेयसस्करद्यथा नो वसीयसस्करद्यथा नः पशुमतस्करद्यथा नो व्यवसाययात् । भेषजमसि भेषजं गवेऽश्वाय पुरुषाय भेषजꣳसुगं मेषाय मेष्यै सुभेषजं यथासदिति ।।१३।।**

सर्वेषु हुतेषु तिष्ठन्तो जपेयुः ।।१३।।

इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले द्वितीयः खण्डः ।।२।।

## तृतीयः खण्डः

**यजमानस्यामात्या एकैकमपूपमादाय त्रिःप्रदक्षिणमग्निं परीयुः ॥१॥**

स्पष्टम् ॥१॥

**तत्र ब्रह्मा परीयञ्जपेदिति धानंजय्यः ॥२॥**

अमात्याश्चतुष्पथ्यमग्निं परीयन्ति । तदानीं ब्रह्मापि तमग्निं परिगच्छन् जपेद्वक्ष्यमाणं मन्त्रम् ॥२॥

**तिष्ठन्निति शाण्डिल्यः ॥३॥**

मन्त्रमाह—

**त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम् । उर्वारुकमिवबन्धनान्मृत्योर्मुक्षीय मामृतात् इति ॥ जामी कुमारी वा या स्यात् पतिकामा सापि परीयात् । त्र्यम्बकं यजामहे सुगन्धिं पतिवेदनम् । उर्वारुकमिव बन्धनादितोमुक्षीय इति ज्ञातीनभिसंकल्पयेत् ॥४॥**

इति । सा कुमारी त्र्यम्बकमिति मन्त्रं ब्रुवाणा मृत्योर्मुक्षीयेत्यस्य स्थाने इतो मुक्षीयेत्युक्त्वा इत इत्यनेन पदेन ज्ञातीनभिसंदध्यात् । इतः पितृकुलादित्यर्थः ॥४॥

**मामुत इतोष्टमभिनिर्दिशेदमुष्य गृहादिति ॥५॥**

मामृतादित्यस्य स्थाने मामुत इतोष्टं परिग्रहं निर्दिशेत् । तद्यथा । इतो मुक्षीय मा पत्युर्नारायणस्य गृहादिति ॥५॥

---

2. My[1-4,4] om. त्रिः
6. P. अपगच्छेत् for परिगच्छन्
11. VPC, om. जामी · · · परीयात् (L. 12)
12. V परीत्य, My[1] पर्यात for परीयात् My[2], after परीयात् adds :— यजमास्य स्वसा ऊहिता । तया पतिमग्निं परीयादिति । तदानीं तस्याः कृत्यमतिसंधानमाह
16. My[1] My[4] पादेन for पदेन
19. My[1]My[4]प्रतिगृह for परिग्रहं

**एवं त्रिः परीत्योदस्येयुः ॥६॥**

एवमग्निं त्रिःपरीत्य पुरोडाशानाकाशे हस्ताभ्यामुदस्येयुरमात्याः ॥६॥

**तेषां ब्रह्मैकं लिप्सित्वा यस्य स स्यात्तस्मै प्रयच्छेत् ॥७॥**

**तेषाम्** उत्क्षिप्तानां पुरोडाशानामेकमाकाश एवं ब्रह्मा स्वहस्तेन प्रतिलभ्य तस्मा एव च पुनः प्रयच्छेद्येनोत्क्षिप्तः ॥७॥

**तस्य वौवसन्तं पाणावालभेत ॥८॥**

अथवा **तस्यैव** पाणौ सन्तं ब्रह्मा स्पृशेत् । न स्वयमाकाशे गृह्णीयादिति ॥८॥

**तथैव त्रिः प्रतिपरीयुः ॥९॥**

तथैव त्रिः प्रसव्यं परीयुः ॥९॥

**यत्रैनानध्वर्युरासजेत्तत्रोपतिष्ठेरन्नेष ते रुद्र भागस्तेनावसेन परो मूजवतोऽतीहि कृत्तिवासाः पिनाकहस्तोऽवततधन्वोमिति ॥१०॥**

यत्र वृक्षेषु एनानध्वर्युरपूपानासजेत्तत्र देवमुपतिष्ठेरन् ॥१०॥

**आतमितो जपेयुः ॥११॥**

यावत्प्राणस्य क्लमस्तावदनुच्छ्वसन्त एष ते रुद्र भाग इति मन्त्रं पुनः पुनरावर्तयन्तो जपेयुः ॥११॥

**शं नो देवीर (सा. ३३) इत्यप उपस्पृश्यानपेक्षं प्रत्याव्रजेयुः ॥१२॥**

स्पष्टम् ॥१२॥

---

2. V[1] PC. om. एवमग्निं त्रिः ; My[1] My[4] हस्ताद् for हस्ताभ्यां
4. PCV[1] उदर्दिष्टानां for उत्क्षिप्तानां ; PCV[1] एव for एवं
My[2]. परि⁰ for प्रति⁰
13. My[4] ⁰सृजेत् for ⁰सजेत्
15. VIPC My[1] समः for क्लमः

एवं चातुर्मास्येषु ब्रह्मत्वमुक्तम् । शुनासीर्ये पर्वणि वैशेषिकाभावान्न किंचिदुक्तम् । अथ यदुक्तं वरुणप्रघासिकं ब्रह्मत्वं तच्चात्वालादिमत्सु हविर्यज्ञेष्वतिदिश्यते—

**वरुणप्रघासैर्व्याख्यातं ब्रह्मत्वं हविर्यज्ञेषु ॥१३॥**

इति सप्त हविर्यज्ञान् वक्ष्यति । तेषामादितश्चतुष्टये तावच्चात्वालाग्निप्रणयनावभृथानामभावात्तन्निमित्तं ब्रह्मत्वं नादेष्टव्यम् । पारिशेष्याच्चात्वालादिमत्सु हविर्यज्ञेष्वतिदिश्यते ॥१३॥

अथ पशुबन्धेषु वैशेषिकमाह—

**पशूनां यूपाहुतिꣳहोष्यत्सु तूष्णीमुपविशेत् ॥१४॥**

**हुतायां यथार्थं स्यात् ॥१५॥**

स्पष्टे ॥१४-१५॥

**वपायाꣳहुतायामिदमाप इति चात्वाले मार्जयित्वा पशूनां यथार्थꣳस्यात् ॥१६॥**

सर्वेषु पशुयागेषु **इदमाप** (ऋ. वे. १.२३.२२-२४) इति तृचेन मार्जनं कार्यम् । सर्वपशुग्रहणं पशुविशेषं प्रत्याचार्याणां मार्जने विप्रतिपत्तिर्नास्तीति दर्शयितुम् ॥१६॥

**पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् ॥१७॥**

स्पष्टम् ॥१७॥

**आहृतं पुरोडाशमालभ्य ब्रूयात् प्राश्नन्तु ये प्राशिष्यन्त इति ॥१८॥**

**पुरोडाशमिडामाहृतामालभ्य ब्रूयाद्ये** मदव्यतिरिक्ताः **प्राशिष्यन्ते** त एव **प्राश्नन्तु** । नाहम् इति प्रकृतौ ब्रह्मण इडाप्राशनाभावात् ॥१८॥

---

2. My$^{1,4}$ om. अथ यदुक्तं and P adds further :— वरुण प्रघासिकं ब्रह्मत्वं तच्चात्वालादिमत्सु हविर्यज्ञेष्वतिदिश्यते.

6. V$^{1}$CP. om. तन्निमित्तं

15. V$^{1}$ after दर्शयितुमिति adds: इति पञ्चमस्य तृतीयः खण्डः ॥

**अनुव्रजेत् सर्वपशूनां पत्नीसंयाजानिति गौतमः ॥१९॥**

सर्वेष्वपि पशुयागेषु पत्नीसंयाजान् क्रियमाणान् अनुव्रजेत् ब्रह्मेति **गौतमः** ॥१९॥

**सवनीयस्यैवेति धानंजय्यः ॥२०॥**

गतम् ॥२०॥

**न सवनीयस्य चनेति शाण्डिल्यः ॥२१॥**

चनेति निपातो व्यर्थे । सवनीयस्यापि पत्नीसंयाजान् क्रियमाणान्नानुव्रजेदित्यर्थः ॥२१॥

**हृदयशूलोऽत्रावभृथन्यङ्गस्थाने भवति ॥२२॥**

वरुणप्रघासेषु यदवभृथन्यङ्गमुक्तं तत्स्थाने हृदयशूलोद्वासनमत्र भवति ॥२२॥

**तस्मिन्नप उपस्पृशेयुः धाम्नो धाम्नो राजꣳस्ततो वरुण नो मुञ्च । यदापो अध्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च । सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यं च द्विष्मः इति ॥२३॥**

हृदयशूलस्योपरिष्टादुपस्पर्शनम् ॥२३॥

इति द्राह्यायणश्रौतसूत्रे त्रयोदशे पटले तृतीयः खण्डः ॥३॥

---

7. PCVI. om. क्रियमाणान्

15. P after उपरिष्टात् ins. अपः

# चतुर्थः खण्डः

**अभ्युक्षणप्रभृत्यत ऊर्ध्वम् ॥१॥**

अत उपस्पर्शनादूर्ध्वम् अभ्युक्षणप्रभृति सौत्यं कर्म सर्वे कुर्युः ॥१॥ तत्रादित्योपस्थानमप्युक्तम् । तदिह न कार्यमित्याह—

**आदित्यं नोपतिष्ठेरन् ॥२॥**

गतम् ॥२॥

**पूर्णाहुतौ हूयमानायामासित्वा हुतायां यथार्थꣳस्यात् ॥३॥**

बोधायनमते पूर्णाहुत्यन्तं पशुः ॥३॥

**सक्तुहोमाꣳश्चेज्जुहुयुरासीता तेषाꣳहोमात् ॥४॥**

सक्तुहोमाश्च पशौ बोधायनेनोक्ताः । तेषामा होमादासित्वा पश्चाद्गानम् ॥४॥

**सौत्रामण्याꣳसुराकर्मस्वाव्राजमासीत ॥५॥**

आव्राजमिति णमुल्प्रत्ययः । अध्वर्युणा सुरासंधानादिषु क्रियमाणेषु आव्रज्याव्रज्येत्यर्थः ॥५॥

**तत्र द्वावग्नी अतिप्रणयन्ति तयोर्दक्षिणत आसीत ॥६॥**

ननु च वरुणप्रघासधर्मातिदेशात् सिद्धमेव द्वयोर्दक्षिणत आसनम् । सत्यम् । पशुबन्धेषु चात्वाले मार्जनानन्तरं यथार्थं स्यात् (द्रा· श्रौ· १३.३.१५) इत्युक्तम् । तन्माभूदित्येवमर्थं सूत्रम् । मार्जनानन्तरं कुम्भ्यामासक्तायां पुनरप्यासीत । न पुनर्यथार्थं गच्छेत् ॥६॥

---

3. P. सर्व for सर्वे

10. PCVI गमनम् for गानम्

13. PCV[1] प्रत्यान्तः for प्रत्ययः

18. My[1] My[4] om. कुम्भ्यामासक्तायां ; My[2] आसिक्तायां for आसक्तायां

**दक्षिणमध्यधि कुम्भ्यामासक्तायां शतातृण्णायाꣳसुराशेषेष्वासिच्यमानेषूपतिष्ठेरन् यत्ते पवित्रमर्चिष्यग्ने विततमन्तरा । ब्रह्म तेन पुनीहि मे इति ॥७॥**

दक्षिणमग्निं मथितस्योपरिष्टाच्छतच्छिद्रायां कुम्भ्यां सुराशेषेष्वासिच्यमानेषु अग्नेरुपस्थानं कार्यम् । बहुवचनमध्वर्य्वादिरप्यावश्यकमुपस्थानमिति ॥७॥

**अश्विनोर्ग्रहस्य भक्षयेत्-यमश्विनानमुचेरासुरादधि सरस्वत्यसुनोदिन्द्रियेण । इमं तꣳशुक्रं मधुमन्तमिन्दुꣳसोमꣳराजानमिह भक्षयामि इति ॥८॥**

गतम् ॥८॥

**यजमानं चेद्रसातिशेषेणाभिषिञ्चेयुरुपोत्थायान्तरेणाग्नी गत्वाध्वर्युणोक्तः सꣳशानानि गायेत् ॥९॥**

यदि पशुरसेन यजमानमभिषिञ्चेयुस्तदा संशानसाम्नां गानमध्वर्युणोक्तवचनात् प्रैषाभावेन गायेत् ॥९॥

**पदाय पदाय स्तोभेत् ॥१०॥**

परिसामत्वात् स्वाध्यायवद्गाने प्राप्ते इदं वचनम् ॥१०॥

**निधनान्युपयन्तो यजमानस्य मूर्धानमालभेरन् ॥११॥**

बहुवचनं सर्वेषामृत्विजां ग्रहणार्थम् ॥११॥

के पुनः स्तोभाः कानि वा निधनान्यत आह—

**सं त्वा हिन्वन्तीत्येतेषां पूर्वः पूर्वः स्तोभ उत्तरमुत्तरं निधनम् ॥१२॥**

---

1. V[1]C. om शतातृण्णायां ;

3. My[2] पुनीमह इति for पुनीहि मे इति

8. PC after भक्षयामीति add :—भक्षयेदिति

9. PC. स्पष्टम् for गतम्

**बृहदिन्द्राय गायते** (सा. २५८) त्यस्या ऋचः पुरस्तात् **सं त्वा हिन्वन्ति धीतिभिः सं त्वा रिणन्ति धीतिभिः सं त्वा ततक्षु धीतिभिः संत्वा शिशन्ति धीतिभिरिति** चत्वारि वाक्यान्यधीतानि। चतुर्थं वाक्यमुपरिष्टादपि गीतम्। तदितरेषामपि प्रदर्शनार्थम्। तेन तस्यैव गीतिप्रकारेण इतराण्यपि पुरस्तादुपरिष्टाच्च विभज्य गेयानीति। तत्रौ हो्वा इत्युपायात् पूर्वः पूर्वोऽशस्तोभ **उत्तरमुत्तरं** संश्रवस इत्यादि निधनम्। स्तोभनिधनभेदात् सामभेदः। एकरूपमेवार्चिकं गानम् ॥१२॥

**श्रवस इति स्थाने जित्या इति क्षत्रियस्य पुष्ट्या इति वैश्यस्येत्येके ॥१३॥**

संश्रवसे विश्रवसे सत्यश्रवसे श्रवस इति चत्वारि निधनानि। तत्र श्रवस इति [अस्य] **स्थाने जित्या** इति क्षत्रियस्य यजमानस्य कुर्यात्। पुष्ट्या इति वैश्यस्य कुर्यात्। तद्यथा संजित्यै विजित्यै सत्यजित्यै जित्या इति। संपुष्ट्यै विपुष्ट्यै सत्यपुष्ट्यै पुष्ट्या इति ॥१३॥

**द्वे सौत्रामण्यौ कौकिलीचरकसौत्रमणी च ॥१४॥**

गतम् ॥१४॥

**कौकिल्यां सामगामं नेतरस्याᳬसंशानानि गायेदिति ह स्माह कौत्सः ॥१५॥**

**कौकिल्यामेव सामगानं नेतरस्यामिति कौत्सोऽभिमन्यते ॥१५॥**

---

2. PCV[1]. om. धीतिभिः

3. PCV[1]. om. धीतिभिः ; PC. वाक्यगीतानि V[1] वाक्यानि गीतानि for वाक्यान्यधीतानि

5. My[1] My[4] ततः for तत्र

10. PCV[1] स्थानानि for निधनानि

18. My[1-24] om अभि[0]

अथ के पुनर्हविर्यज्ञा येषु ब्रह्मत्वमुक्तम् । तानाह—

**सप्त हविर्यज्ञस्य संस्था अग्न्याधेयमग्निहोत्रं दर्शपूर्णमासावाग्रयणं चातुर्मास्यानि निरूढपशुबन्धः सौत्रमणी चेति ॥१६॥**

स्पष्टम् ॥१६॥

अग्निहोत्रेऽपि ब्रह्मा भवतीति सूत्रकारस्य पक्षः । इदानीं सुत्यायां ब्रह्मत्वविधास्यंस्तस्याः संस्थाया भेदानाह—

**सप्त सोमसंस्था अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडशी वाजपेयोऽतिरात्रोऽप्तोर्याम इत्यप्तोर्याम इति ॥१७॥**

ब्राह्मणेष्वग्निष्टोमादयः शब्दाः संस्थाविशेषवाचिनो न पुनर्विश्वजिदादिशब्दवदेकाहवाचिन इत्यर्थः । तेन वाजपेयादिसंस्थाशब्देन ब्रह्मत्वं विधीयमानं तत्संस्थाप्रयुक्तं न पुनः क्रतुविशेषप्रयुक्तमिति दर्शितं भवति । केचित्तु संस्थानुक्रमणं तासां नित्यताप्रतिपादनार्थमित्याहुः । तदयुक्तम् । न ह्यनुक्रमणमात्रान्नित्यतासिद्धिः ॥१७॥

**इति द्राह्यायणश्रौत्रसूत्रे त्रयोदशे पटले चतुर्थः खण्डः ॥४॥**

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीयः पटलो वृत्तो हविर्यज्ञा निरूपिताः ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे त्रयोदशः पटलः समाप्तः ॥३॥**

---

1. PV[1]C. केषु · · · यज्ञेषु for के · · · · यज्ञा येषु
3. My[1-2] om निरूढ[0]
5. My[4]. भवेत् for भवति ;
My1 विधास्यन् संस्थाया भेदात् ब्रह्मत्वविषयान्
V[1]. सुत्या ब्रह्मत्वम् । तस्याः संस्थाभेदम् ; My[4]. सोमसंस्थाया ब्रह्मत्वं विधास्यन् तस्याः संस्थाया भेदात् ब्रह्मत्वविषयान् for सुत्यायां · · · · [0]भेदान् (L. 6)
14. P. इति पञ्चमस्य चतुर्थः खण्डः for इति · · · · · · चतुर्थः खण्डः

## चतुर्दशः पटलः

## प्रथमः खण्डः

अथ सोमयागेषु ब्रह्मत्वं विधातुमारभते—

**सुत्यायां ब्रह्मणः प्राक् सुब्रह्मण्याया औद्गात्रेण समानं कर्म ॥१॥**

इति **सुत्यायामि**त्यधिकारः। क्रीते राजनि सुब्रह्मण्याप्रवृत्तेः पूर्वं यदुद्गातुः कर्म तद्ब्रह्मणेऽपि समानम्। किं पुनस्तन्**महन्मे वोच** इति प्रति मन्त्रणं सोमप्रवाकस्य परिवेषणमिति ॥१॥

**इक्षणाक्रमणे वेदेः ॥२॥**

समानमित्यनुवर्तते। यत् पूर्वमुद्गातुरुक्तमुत्तरंवेद्यन्तमाक्रम्य **दक्षिणमीक्षमाणः पितरो भूरि**ति (द्रा. श्रौ. १.१.२५) तदपि ब्रह्मणः समानमित्यर्थः। सुब्रह्मण्या प्रवृत्तेरुर्ध्वमुद्गातुर्वेदेराक्रमणमिति सूत्रारम्भः। **देवो देवमेत्वि**ति मन्त्रेण गमनमप्याक्रमणाङ्गत्वाद् ब्रह्मणः समानमेव ॥२॥

**संचरधिष्ण्योपस्थानदक्षिणाप्रतिग्रहभक्षाः ॥३॥**

समानमित्येव। **अन्तरेण चात्वालोत्करौ संचर** इति यदुक्तं यच्च धिष्ण्योपस्थानं यश्च दक्षिणाप्रतिग्रहः यश्च सोमभक्षस्तत्सर्वं समानम् ॥३॥

**स्तोमविमोचनाच्चोर्ध्वमन्यत् समानम् ॥४॥**

तृतीयसवने **स्तोमविमोचना**दूर्ध्वं यदुक्तं तदपि समानम् अवभृथवर्जम् ॥४॥

तत्रौद्गात्रवदौपवसथ्येऽह्नि गमने प्राप्ते आह—

**अनुध्यात्तु दीक्षणीयायाम् ॥५॥**

---

3. My[2] उपक्रमते for आरभते.

6. PCV[1]. om.यद्.

7, P, मन्त्रेण, V[1]. मन्त्रणं for प्रतिमन्त्रणं

10. PCV[1], om यत् ; PCV[1] om. उक्तं ; P. उत्तर[0] for उत्तरं

12. PCV[1]. om. ऊर्ध्वम्

My[2]. om. मन्त्रेण

दीक्षणीयामिष्टिमनु ब्रह्मा स्यात् । तत्काल एव मन्त्रेण देवयजनं गत्वा वेदेराक्रमणमीक्षणं च कार्यम् । दीक्षणीयायां ब्रह्मत्वकरणार्थमिति भावः । तदानीं ब्रह्मणोऽपि मधुपर्काहरणं कार्यम् । मधुपर्कभक्षणं तु शास्त्रान्तरोक्तप्रकारेण ब्रह्मणः कार्यम् । न पुनरुद्गातुः प्रकारेणातिदेशाभावात् ॥५॥

**तस्याꣳसꣳस्थितायामासीतादीक्षणाद्यजमानस्य ॥६॥**

इष्ट्यनन्तरमा दीक्षासमाप्तेः उभावपि न कुत्रचिद् गच्छेताम् । अदीक्षिष्टायं ब्राह्मण इत्यावेदनात् । पूर्वमिति यावत् ॥६॥

**तं यदाध्वर्युर्वाचं यमयेदथ यथार्थꣳस्यात् ॥७॥**

तं यजमानमित्यर्थः । दीक्षित वाचं यच्छेत्यध्वर्युप्रैषानन्तरं यथार्थं स्यात् ॥७॥

**महावीरानसंभरिष्यत्सु तूष्णीमुपविशेत् ॥८॥**

महावीरान्संभरिष्यन्तीति कात्यायनसूत्रम् । महावीराः प्रवर्ग्यपात्राणि । तेषां संभरणकाले वाग्यत उपविशेत् ॥८॥

**संभृतेषु यथार्थं स्यात् ॥९॥**

स्पष्टम् ॥९॥

**प्रायणीयायाꣳसꣳस्थितायां पूर्वेण पत्नीशालां तिष्ठेदाभिहोमात्पदस्य राजक्रयण्याः ॥१०॥**

सोमक्रयण्याः पदाभिहोमं यावत्तिष्ठेत् ॥१०॥

**अभिहुत उत्तरेण सोमवहनं गत्वा प्राग्वा पदाभिहोमाद् दक्षिणेन यत्र राजानं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् ॥११॥**

पदाभिहोमे कृते सोमहवनं शकटमुत्तरेण गत्वा यत्र सोमं क्रेष्यन्तः स्युस्तत्र गत्वा तूष्णीमुपविशेत् । अथवा पदाभिहोमात् पूर्वमेव सोमहवनं दक्षिणेन गत्वा क्रयदेश उपविशेत् ॥११॥

---

1. V[1]CT दीक्षणीयायाम् for दीक्षणीयाम्
3. PV[1]C. after हरण add : तु
4. V[1]C om. ब्रह्मणः
12. My[1-4] before महा⁰ add: दीक्षितासु ; My[1]. संभरति for संभरिष्यन्ति
16. PV[1]C. after सꣳस्थितायां add :–यथेतं निष्क्रम्य.

**क्रीते प्राङुत्क्रामेत् पश्चिमेनैनꣳहुत्वा राजानमादध्युराहितं पूर्वेण परीत्योह्यमानमनुगच्छेद्दक्षिणेन चेद्गतः स्यात् ॥१२॥**

यदि पूर्वं सोमहवनं दक्षिणेन ब्रह्मा गतः स्यात्तदा क्रयानन्तरं प्राक् प्रसर्पेत् । तं पश्चिमेन राजानं हृत्वा शकटे आदध्युरध्वर्यवः । अथ ब्रह्मा तमाहितं सोमं पूर्वेण प्रसव्यं परीत्य शकटेनोह्यमानमनुगच्छेत् ॥१२॥

**उत्तरेण चेत् क्रीते प्रत्यङुत्क्रामेत् पूर्वेणैनं हृत्वा राजानमादध्युराहितं पश्चिमेन परीत्योह्यमानमनुगच्छेत् ॥१३॥**

यदि सोमहवनमुत्तरेण ब्रह्मा गतः स्यात्तदा क्रयानन्तरं प्रत्यक् प्रसर्पेत् । गतमन्यत् ॥१३॥

**तामेवात्रेषामन्वावर्तेत ॥१४॥**

प्राङ्मुखे शकटे वर्तमाने यस्याः पार्श्वेन गतस्तत्पार्श्वेनैव प्रत्यङ्मुखेऽपि शकटे गच्छेदित्यर्थः ॥१४॥

का पुनरसौ तामाह—

**सा ह्यस्य प्राचि वर्तमानस्य दक्षिणेषा भवति ॥१५॥**

इति । प्राग्वर्तमानस्य शकटस्य या दक्षिणेषा सैवासाविति । दक्षिणेषापार्श्वेनैव प्राग्गमनं प्रत्यग्गमनमपीत्यर्थः ॥१५॥

**विमुक्ते चान्तरेण सोमहवनं पत्नीशालां च दक्षिणेनोत्क्रम्य तिष्ठेद्दीक्षितश्चेदा राज्ञोवहरणात् ॥१६॥**

---

1. $My^{1-4}$ after क्रीते add : सोमे
3. P पर्यावर्तयेत् for प्रसर्पेत्
8. $My^{2}$ प्रत्यङ for प्रत्यक्
14. $My^{1-2,4}$ प्राची for प्राचि; $My^{1-2,4}$ om. अस्य
16. $My^{1,4}$ before प्रत्यग् add :—तत्पार्श्वेनैव.
17. $My^{1,4}$दक्षिणोत्, $My^{2}$ प्रदक्षिणोत् for दक्षिणेन.
18. $My^{1,4}$ अदीक्षित for दीक्षितः;

अनडुहि विमुक्त इत्यर्थः ॥१६॥

**प्रवेश्यमानꣳराजानमनुप्रविशेदव्यवयन्नग्निना ॥१७॥**

अग्निना आहवनीयेन सह सोमस्य व्यवायमकुर्वन् प्राग्वंशं राजनमनुप्रविशेत् ॥१७॥

५ **संबाधश्चेत् स्याद्दक्षिणयापि द्वारा प्रविशेत् ॥१८॥**

स्पष्टम् ॥१८॥

**उत्तरेणाहवनीयं पश्चिमेन वेदिꣳसंचरेद्दीक्षितश्चेत् ॥१९॥**

स्पष्टम् ॥१९॥

६ इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले प्रथमः खण्डः ॥१॥

---

1. My[1,4] after इत्यर्थः । add :– अदीक्षित इति पर्युदासः । सत्रे दीक्षितस्यातिथ्यायां निर्वपानुसंधानार्थमन्तः प्रवेशस्यावश्यंभावात् । सत्रादन्यत्र राजरक्षणार्थं तिष्ठेत् ॥ P after इत्यर्थः add :– इति पञ्चमस्य पञ्चमः खण्डः ॥ 5 ॥

## द्वितीयः खण्डः

**आतिथ्यामिष्टिं निर्वपन्ते ।।१।।**

अध्वर्यव इति शेषः ।।१।।

**तां चेदनपहृते राजनि निर्वपेरन् ब्राह्मणꣳराजनि समादिश्य तत्र गत्वासीत ।।२।।**

यदि राज्ञोऽपहरणात् पूर्वमेव निर्वपेरन् तदा राजरक्षार्थं कंचिद् ब्राह्मण-मादिश्यान्तः प्रविशेत् ।।२।।

**तस्याꣳसꣳस्थितायां तानूनप्त्रमाज्यमवमृशन्तो जपेयुर्हविरसि वैश्वानरमनाधृष्टमनाधृष्यं देवानामोजोऽभिशस्त्यमभिशस्तिपा अनभिशस्त्यन्यमञ्जसा सत्यमुपगेषꣳसुविते माधा इति ।।३।।**

ऋत्विजामन्योऽन्यद्रोहपरिहाराय यद् घृतं स्पृश्यते तत्तानूनप्त्रम् । तत्सर्वेऽप्युद्गातारो ब्रह्मा चावमृश्य जपेयुः ।।३।।

**अप उपस्पृश्याध्वर्युणोक्तो राजानं विस्रम्भयेत् ।।४।।**

**तं हिरण्यमन्तर्धायाभिमृशेयुरꣳशुरꣳशुष्टे देव । सोमाप्यायतामिन्द्रायैकधनविदे । आ तुभ्यमिन्द्रः प्यायतामात्वमिन्द्राय प्यायस्व । आप्याययास्मान्त्सखीन् सन्या मेधया । स्वस्ति ते देव सोम सुत्यामुदृचमशीयेति ।।५।।**

स्पष्टे ।।४-५।।

**काशमये प्रस्तरे निह्नुवीरन् दक्षिणान् पाणीनुत्तानान् कृत्वा सव्यान्नीचः एष्टा राय एष्टा वामानि प्रेषे भगायार्तमृतवादिभ्यो नमो दिवे नमः पृथिव्या इति ।।६।।**

निह्नवो नमस्कारः । कृते हि नमस्कारे पुरुषस्य दोषश्छादितो भवतीति तदुपा-

---

9. P अनभि⁰ for first अभि⁰

10. PCV[1] अनभिशस्तेऽन्य for अनभिशस्त्यन्य⁰

12. PC. ⁰मृशन्तो for ⁰ मृश्य

22. My[2] after निह्नवो adds : नाम ; V[1]PC om हि

यत्वान्निह्नव इत्युच्यते। तथा च ब्राह्मणम्—**न वै देवा नमस्कारमति**। यज्ञो वै नमस्कारः (शां. आ. १.५) इति। आतिथ्यासंबन्धिनि **काशमये प्रस्तरे दक्षिणान् पाणीनुत्तानान्** विधाय तत उपरि **सव्यान्नीचान्** कुर्युः। सोऽयं नमस्काराञ्जलिः ॥६॥

**सुब्रह्मण्यास्वाहूयमानासु दक्षिणोत्क्रम्य तिष्ठेद्दीक्षितश्चेत् ॥७॥**

**आहूतासु यथार्थं स्यात् ॥८॥**

स्पष्टे ॥७-८॥

**उपसदिष्टिरत ऊर्ध्वं तस्यां तथैवाभिमर्शननिह्नवने ॥९॥**

तस्यामुपसदि सꣳस्थितायां **तथैव** हिरण्यमन्तर्धाय सोमाभिमर्शननिह्नवने कुर्युः ॥९॥

**सव्या अपराह्ण उत्ताना: स्युर्दक्षिणा न्यञ्चः ॥१०॥**

आपराह्णिक्यामुपसदि **सव्याः** पाणय **उत्तानाः स्युर्दक्षिणाः** पाणयो **न्यञ्चः** स्युः ॥१०॥

कः पुनरुपसदन्तो यत्र निह्नवः। तमाह—

**स्रुवेणोपसद्धोमे हुते विद्यात् सꣳस्थितेति ॥११॥**

**त्वेषं वचो अपावधीमित्यध्वर्युणा हुते सꣳस्थितेति** विद्यादिति ॥११॥

**तस्या घर्मः प्रवर्ग्यवति पूर्वः ॥१२॥**

**प्रवर्ग्यवति** क्रतौ **तस्याः** उपसदिष्टेः **पूर्वः** प्रवर्ग्यो भवति ॥१२॥

**इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले द्वितीयः खण्डः ॥२॥**

---

2. My$^{2}$ आतिथ्यायाः for आतिथ्या$^{0}$ ; My$^{1\text{-}4}$ $^{0}$संबधि$^{0}$ for संबन्धिनि
14. PVC. $^{0}$सदोऽन्तः for सदन्त; My$^{1,4}$ निह्नवनः for निह्नवः
18. My $^{1\text{-}2,4}$ V$^{1}$ Trans. प्रवर्ग्य ··· भवति after दक्षिणेन (p. 295 L. 2)
19. P. इति पञ्चमस्य षष्ठः खण्डः ॥ 6 ॥ for इति ······ द्वितीयः खण्डः ॥ 2 ॥

## तृतीयः खण्डः

**तमभीन्धिष्यत्सु गार्हपत्यं गत्वा यजुषोपविशेद्दक्षिणेन ॥१॥**

तमभीन्धिष्वत्सु अध्वर्युर्गार्हपत्यं गत्वा तस्य दक्षिणत उपविशेत् ॥१॥

**दक्षिणाग्निमुत्तरेण बहिश्चेत् ॥२॥**

यदि गार्हपत्यायतनाद् बहिः प्रवर्ग्यः स्यात्तदानीं दक्षिणाग्निमुत्तरेणोपविशेत् ॥२॥

**रुचितो घर्म इत्युक्तेऽनुवाकेन तिष्ठन्तोऽवेक्षेरन् यमध्वर्युर्ब्रूयात् ॥३॥**

रुचितो घर्म इत्यध्वर्युणोक्ते अपश्यं गोपामिति यमनुवाकमध्वर्युर्ब्रूयात् तेनानुवाकेन महावीरमवेक्षेरन्नुद्गातारो ब्रह्मा च ॥३॥

**तं ह्रियमाणं यथेतमनुव्रजन् जपेत् विश्वा आशा दक्षिणसत् सर्वान् देवानयाडिह । स्वाहा कृतस्य घर्मस्य मधोः पिबतमश्विना इति ॥४॥**

तं घर्मं ह्रियमाणं यथेतमनुव्रजन् जपेद्विश्वा आशा इति ॥४॥

**आश्रावित उपविश्य जपेत् अश्विना घर्मं पातं हार्दिवानमहर्दिवाभिरूतिभिः । तन्त्रायणेन नमो द्यावापृथिवीभ्याम् इति ॥५॥**

**हुते यजमानं वाचयेत्-आपातमश्विना घर्ममनु द्यावापृथिवी अमꣳसाताम् । इहैव रातयः सन्त्विति ॥६॥**

**घर्मशेषस्य भक्षयेन्मधु हुतमिन्द्रतमेऽग्नावश्याम ते देव घर्म नमस्तेऽस्तु मा मा हिꣳसीरिति ॥७॥**

स्पष्टानि ॥५-७॥

---

7. PCT after उक्ते add :—अवश्यं गोपामिति V[1] after इति ins. अध्वर्युणा.

15. My[1,4]हात्मानम् , V[1] अहव्यानम्, for हार्दिवानम्

19. V[1] स्याताम् for साताम

**सत्रं चेत् स्याद्यजमाना उपह्वयध्वमित्येवोपह्वानम् ॥८॥**

सत्रव्यतिरिक्तेषु **होतरुपह्वयस्व अध्वर्यवुपह्वयस्वेति** कर्मनामधेयेनोपह्वानं कार्यम् । वाजिनाश्विनघर्माणामृत्विक्षूपहवमिष्ट्वे (द्रा. श्रौ. १२.४.२०) ति वचनात् ॥८॥

**एवꣳसदा प्रवर्ग्योपसदः कुर्यात् ॥९॥**

**महावेदेस्तम्बयजुर्हरिष्यत्सु यजुषोपविशेत् ॥१०॥**

**विलिखिते चात्वाले यथार्थं स्यात् ॥११॥**

**उत्तरवेदिं निर्वप्स्यत्सु तूष्णीमुपविशेत् । न्युप्तायां यथार्थꣳ स्यात् ॥१२॥**

स्पष्टानि ॥९-१२॥

**अग्निचित्यायां प्राग्दीक्षणीयायाः सावित्रान् होमान् होष्यत्सु यजुषोपविशेत् ॥१३॥**

**अग्निचित्यायामित्यधिकारः** । यदि क्रतावग्निचित्या स्यात्तदेत्यर्थः । **अनुब्यात्तु दीक्षणीयायाम्** (द्रा. श्रौ. १४.१.५) इति वचनात् । साग्निचित्येऽपि सोमयागे दीक्षणीयाप्रभृत्येव ब्रह्मत्वमितिशङ्का स्यात् । तन्निवृत्यर्थं प्रागपि दीक्षणीयायाः सावित्रेषू**पविशे**दित्युक्तम् इति । सावित्रहोमस्त्वेक एवेत्यापस्तम्बः । **होमा**निति बहुवचनं कस्यांचित् शाखायां होमबहुत्वात् इति ॥१३॥

**तेषु हुतेषूख्यां मृत्तिकामाह्रियमाणामनुगच्छेत् ॥१४॥**

**तस्यां संभ्रियमाणायामासित्वा संभृतायां यथार्थं स्यात् ॥१५॥**

स्पष्टे ॥१४-१५॥

**इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले तृतीयः खण्डः ॥३॥**

---

16. PCV[1] सत्रेषु for सावित्रेषु ; V[1]CP. om. इत्युक्तमिति

21. P. इति पञ्चमस्य सप्तमः खण्डः ॥ 7 ॥ for इति ······ खण्डः ॥3॥

## चतुर्थः खण्डः

**आहवनीयं चेष्यत्सु यजुषोपविशेत् ॥१॥**

आहवनीयः शालामुखीयस्तस्यायतनमिष्टकाभिश्चेष्यत्स्वित्यर्थः ॥१॥

**तस्मिंस्तत्संचित उख्यामासन्दीं नैर्ऋतीश्चेष्टका अरण्यं ह्रियमाणा अनुगच्छेत् ॥२॥**

तस्मिन् शालामुखीये अध्वर्युणा चिते सति उख्याग्निर्यत्रासन्द्यां पूर्वं निहितस्तामुख्यानिधानभूतामासन्दीं नैर्ऋतीश्चेष्टका अरण्यं प्रति ह्रियमाणा अनुगच्छेत् ॥२॥

**निधीयमानानां दक्षिणतः स्थित्वा निहितास्वप उपस्पृश्यानपेक्षं प्रत्याव्रजेत् ॥३॥**

स्पष्टम् ॥३॥

**अग्निं विकक्ष्यत्सु सर्वौषधं च वप्स्यत्सु तत्र गत्वा तूष्णीमुपविशेत् ॥४॥**

महावेद्यां अग्निक्षेत्रस्य कर्षणं तत्र बीजावापं च करिष्यत्स्वित्यर्थः ॥४॥

**तैः सार्धं प्रत्याव्रज्य चितीः प्रणीयमाना अनुगच्छेत् ॥५॥**

चितीः चयनार्था इष्टकाः प्रणीयमाना इत्यर्थः ॥५॥

**निधीयमानानां दक्षिणतः स्थित्वा निहितासु दक्षिणस्य पक्षस्यासन्नो यजुषोपविशेत् ॥६॥**

उपधीयमानानामिष्टकानां तस्यास्तस्या दक्षिणतः स्थित्वा सर्वासु समाप्तासु दक्षिणस्य पक्षस्य दक्षिणतः संनिकृष्ट उपविशेत् ॥६॥

---

3. My[1]. after चेष्यत्सु add : सत्सु
9. V[1]C ह्रीयमाणानां for निधीयमानानां
   My[4] अनवेक्षं for अनपेक्षं
12. V[1]C. om. तत्र गत्वा
14. PV[1]C. ⁰वापनं for ⁰वापं
16. V[1]CP चयनार्थम् for चयनार्थाः

**लोकं पृणासूपधीयमानासु ब्राह्मणं तत्र समादिश्य यथार्थं स्यादिति शाण्डिल्यः ॥७॥**

**आसीतैवेति धानंजय्यः ॥८॥**

स्पष्टे ॥७-८॥

**एवं सदा चितिषु कुर्यात् ॥९॥**

एवं पञ्चस्वपि चितिषु कुर्यात् ॥९॥

**संचितकर्माणि करिष्यतस्त्वाव्राजमासीत ॥१०॥**

वसवस्त्वा रुद्रैः पुरस्तात् पान्त्वित्याद्यप्रोक्षणप्रभृति मण्डूकविकर्षणान्तानि संचितकर्माणि आध्वर्यवाणि । तेष्वाव्रज्यासीतेति । एतदन्तमग्निचित्यनिमित्तं ब्रह्मत्वम् ॥१०॥

**सम्राडासन्दीᳬं ह्रियमाणामनुगच्छेत् ॥११॥**

प्रवर्ग्योद्वासनकाल इति शेषः ॥११॥

**निधीयमानानां दक्षिणतः स्थित्वा परिषिच्यमानेऽप उपस्पृश्य तैः सार्धं प्रत्याव्रज्याग्निं प्रणीयमानमनुगच्छेदप्रतिरथं जपन् ॥१२॥**

घर्मे परिषिच्यमाने अप उपस्पृश्य तैः सार्धं प्रत्याव्रज्य सौमिकमग्निं प्रणीयमानमाशुः शिशानः (सा. १८४९) इति सूक्तमप्रतिरथसंज्ञकमध्वर्युप्रसिद्धं जपन्ननुगच्छेत् ॥१२॥

**तूष्णीमनग्निचित्या चेत् ॥१३॥**

अग्निचित्याभावे तूष्णीमनुगमनम् । न सूक्तजपः ॥१३॥

**निधीयमानस्य दक्षिणतः स्थित्वा निहिते दक्षिणा बहिर्वेदि यजुषोपविशेत् ॥१४॥**

अग्निनिधानानन्तरमग्निवत्युत्तरं परिग्राहं परिगृह्णामीत्यध्वर्युभिरुत्तरवेदि-

---

9. My[4] आवृज्यावृज्य for आव्रज्य

17. P जपन्तम् for जपन्

23. My[4] निधानान्तम् for निधानानन्तरम्; My[2] ब्रह्मन्नुत्तरं for अग्निवत्युत्तरं ;
My[2]. ⁰गृहीष्यामि for ⁰गृह्णामि
V[1]. उत्तरत्र for उत्तरवेदि ; PVC, om.⁰वेदि ;

परिग्राहो विहितः । तत्काले न केनचिदप्यन्तर्वेदि स्थातव्यमित्यभिप्रायेण **बहिर्वेद्युपविशेदित्युक्तम्** ॥१४॥

**हविर्धाने प्रवर्त्यमाने अनुगच्छेत् ॥१५॥**

हविर्धाने इति द्विवचनम् । अध्वर्युणा प्रवर्त्यमाने शकटे अनुगच्छेत् ॥१५॥

**परिवार्यमाणयोस्तत्रैव गत्वासीत ॥१६॥**

परिवारणं शकटादिभिः परिश्रयणम् ॥१६॥

**उच्छ्रितायामौदुम्बर्यां यथार्थं स्यात् ॥१७॥**

स्पष्टम् ॥१७॥

**वेदिकर्मप्रभृति वाग्नीषोमप्रणयनात् प्रणयनात् ॥१८॥**

अथाग्निप्रणयनानन्तरं यद् वेदिकर्मोत्तरं परिग्राहस्तत्प्रभृत्यग्नीषोमप्रणयनात् पूर्वं यथार्थं ब्रह्मा स्यात् । तथोक्तं ब्रह्मत्वं कुर्याद्वा नवेत्यर्थः ॥१८॥

**इति द्राह्यायणश्रौतसूत्रे चतुर्दशे पटले चतुर्थः खण्डः ॥४॥**

धन्विनारोपिते दीपे ब्रह्मत्वस्य विधिं प्रति ।
चतुर्थे पटले त्वर्धं सोमयागस्य कीर्तितम् ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे चतुर्दशः पटलः समाप्तः ॥१४॥**

---

1. PCV[1] om. अपि
4. PV[1]C स्पष्टम् for हविर्धाने .... अनुगच्छेत्
6. PCV[1]. om. परिवारणं ..... श्रयणम्
7. PCV[1]. repeat यथार्थं स्यात् twice
10. My[1,4]. °ग्रहः for °ग्राहः ; P. अथवा for अथ
11. My[1-4]हविर्द्धानप्रवर्तनप्रभृति कर्मानुसंधानम् for तथोक्तं ब्रह्मत्वं
12. इति पञ्चमस्याष्टमः खण्डः ॥ 8 ॥ for इति .... खण्डः ॥ 4 ॥
14. My[2]. चतुर्थः पटलोऽत्यर्थं ... कीर्तितः for चतुर्थे ....कीर्तितम्

## पञ्चदशः पटलः

## प्रथमः खण्डः

**अग्नीषोमौ प्रणेष्यत्सु वेदिमाक्रामेन्मन्त्रेण ॥१॥**

कः पुनर्मन्त्रः कथं वाक्रमणम् ? अत आह—

**पश्चिमेनोत्तरवेदिमुदङ्ङतिक्रम्याक्रमणयजुर्जपेत् ॥२॥**

**मृदा शिथिरा देवानामित्युद्गातॄणां यदाक्रमणयजुरुक्तं तज्जपेत् ॥२॥**

**चात्वालसमीपे दीक्षितश्चेत् ॥३॥**

स्पष्टम् ॥३॥

**तूष्णीमत ऊर्ध्वं वेदेराक्रमणम् ॥४॥**

**सवनमुखेषु च यजुषाहरहरिति गौतमः** (द्रा. श्रौ. ३.१.४-५) **यावद्वा क्रमेयुरित्येके** (द्रा. श्रौ. ३.१.७) इति सूत्रत्रयेण सर्वेषु वेद्याक्रमणेषूद्गातॄणां पुनः पुनर्मन्त्रो विहितः। ब्रह्मणस्तु तन्निवृत्तये तूष्णीमिति वचनम् ॥४॥

**क्रीत्वा राजा येनातिहृतः स्यात्तेन गत्वा तूष्णीमुपविशेत् ॥५॥**

**येन** मार्गेण सोमं क्रीतमतिहरन्ति तेन गत्वान्तः प्रविश्याध्वर्युप्रभृतीनासीनान् दक्षिणेनोत्तरेण वा गत्वापरेणाहवनीयं दक्षिणातिक्रम्योपविशेत् ॥५॥

**राजानꣳहरेत्युक्तः पूर्वेणाग्निमेकस्मा अति प्रदाय तान् प्रसव्यं परीत्यादायानुगच्छेद् दक्षिणेन चेद्गतः स्यात् ॥६॥**

यदि **राजानं हरे**त्यध्वर्युरेनं ब्रूयात्तदा प्रणीयमानमग्निं **पूर्वेण** सोमं कस्यचिद्धस्ते प्रदाय **तान**ध्वर्युप्रभृतीन् **प्रसव्यं परीत्य** सोममादाय तानागच्छतोऽनुगच्छेत्। यदि **दक्षिणेन** तान् प्रविष्टः स्यात् ॥६॥

**उत्तरेण चेद्यथेतं परीत्यादायानुगच्छेत् ॥७॥**

---

5. M My[1] ⁰अक्रमणे for आक्रमण⁰
11. PV[1]C ⁰द्वयेन My[4]द्वये for त्रयेण
12. My[1-4]. om. वचनम् ; PCV[1] तूष्णीवचनम् for तूष्णीमिति वचनम्
14. PCV[1]. प्रभृतीनां for प्रभृतीनासीनान्
21. PC after यथेतं ins. अग्निं

यद्यध्वर्युप्रभृतीनुत्तरेण गतः स्यात्तदा यथागतं प्रदक्षिणं परीत्यानुगच्छेत् ॥७॥

**अन्येन चेद् ब्रह्मा व्रजितः स्यादन्येन राजा तेनैनं प्रतिगृह्णीयात् ॥८॥**

उत्तरेण विहारं पश्चिमेन वेदिं संचरेत् दीक्षितश्चेदिति पूर्वमुक्तम् । यदि तेन पथा ब्रह्मागतः स्यात्ततोऽन्येन मार्गेण सोमस्तदापि राजानं हरेति चोदितः प्रत्याव्रज्य राज्ञो मार्गेणैव राजानमाददीत । अपरेणाहवनीयं दक्षिणातिक्रम्येत्यर्थः । स एव राज्ञः पन्थाध्वर्युभिरुक्तः ॥८॥

**एतौ त्वेव ब्रह्मणो गतिकल्पावहरतोऽपि ॥९॥**

राज्ञोऽवहरणमकुर्वतोऽपि ब्रह्मण **एतावेव गतिकल्पौ** भवतः । तान् प्रसव्यं **परीत्ये** (द्रा. श्रौ. १५.१.६) त्येकः कल्पः । **यथेतं परीत्ये** (द्रा. श्रौ. १५.१.७) त्यपरः ॥९॥

**आसीताग्नीध्रीय आहुत्योर्हूयमानयोरिति धानंजय्यः ॥१०॥**

**तिष्ठेदिति शाण्डिल्यः ॥११॥**

आग्नीध्रीयाहवनीययोर्द्वे वैसर्जनाहुती स्तः । तयोर्हूयमानयोराग्नीध्रीय एव आसीत तिष्ठेद्वेति ॥१०॥

**उत्तरेणाग्नीध्रीयं राजानमाज्यानि च ह्रियमाणान्यनुगच्छेत् ॥१२॥**

तयोर्हुतयोः पुनरपि राजानमग्नीषोमीयपश्वर्थानि **चाज्यानि अनुगच्छेत्** ॥१२॥

**प्रावेशितेषु हविर्धानं पश्चिमेन गत्वासीतेति गौतमः ॥१३॥**

**पूर्वेणेति धानंजय्यो दक्षिणस्य द्वारबाहोः पुरस्ताद्यजुषेति ॥१४॥**

स्पष्टे ॥१३-१४॥

---

6. PCV[1] trans ब्रह्मा after तेन My[2-4]तथापि for तदापि

10. My[1-4]गमन for गति⁰

15. My[2] वैसर्जनाय⁰ for वैसर्जन

22. PCV[1]. after यजुषा add: उपविशेत्

**अग्नीषोमीयवपायां हुतायां यथेतमुदङ्ङतिक्रम्य चात्वाले मार्जयेत ॥१५॥**

मार्जनं सिद्धमेव । **यथेत**मित्येतद् विधेयम् ॥१५॥

**एवमेवापरतात्र आज्येषु प्रविष्टेषूपवेशनम् ॥१६॥**

**अपररात्रे** सवनीयपशोराज्येषु प्रविष्टेष्वेवमेवोपवेशनं कार्यम् । हविर्धानं पश्चिमेन पूर्वेण वा गत्वेत्यर्थः ॥१६॥

**मार्जनं च ॥१७॥**

स्पष्टम् ॥१७॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले प्रथमः खण्डः ॥१॥**

---

9. P. इति पञ्चमस्य नवमः खण्डः ॥ 9 ॥ for इति · · · खण्डः ॥ 1 ॥

# द्वितीयः खण्डः

**सवनीयवपायाꣳहुतायाम् ॥१॥**

एवमेवेत्यनुवर्तते ॥१॥

**पुरोडाशेन चरिष्यत्सु तूष्णीमुपविशेत् ॥२॥**

अग्नीषोमीयस्य पशुपुरोडाशेनेत्यर्थः ॥२॥

**दीक्षितश्चेत् सर्वा इडा अन्वारभेत ॥३॥**

स्पष्टम् ॥३॥

**वसतीवरीषु परिह्रियमाणासु दक्षिणोत्क्रम्य तिष्ठेद्दीक्षितश्चेदा तासां परिहरणात् ॥४॥**

अदीक्षितो बहिर्वेदि दक्षिणोत्क्रम्य तिष्ठेत् ॥४॥

**आग्नीध्रीयꣳराजानꣳह्रियमाणमनुगच्छेत् ॥५॥**

वसतीवरीपरिहरणानन्तरम् आग्नीध्रीयं प्रति सोमं **ह्रियमाणम् अनुगच्छेत्** । ननु च आपस्तम्बादिभिः सोमस्य हरणं नोक्तम् । सत्यम् । अत एव विधानात् अन्यैः कैश्चिदुक्तमिति कल्प्यम् । सामर्थ्यसिद्धं चैतत् । कथम् । ऋत्विजो यजमानश्चाग्नीध्रीये हि वसन्ति । यजमानो राजानं गोपायतीति विहितम् । ततश्च सामर्थ्यसिद्धं हरणमिति ॥५॥

**दीक्षितश्चेत्तत्रैव संविशेत् ॥६॥**

स्पष्टम् ॥६॥

**अपररात्र आज्यानि ग्रहीष्यतः पूर्वेण गत्वाग्निं च पश्चिमेन वा यजुषोपविशेत् ॥७॥**

सवनीयपश्वर्थाज्यानि ग्रहीष्यतोऽध्वर्योराग्नीध्रीयमग्निं च पूर्वेण पश्चिमेन वा गत्वोपविशेत ॥७॥

---

12. PV[1]C. °हरण° for °परिहरण°

13. PV[1]C. एवं for अत एव

15. V[1] अति My[1]अभि for हि.

16. My[2]. सामर्थ्यात् for सामर्थ्य°

**आत्तेषु प्राङुत्क्रम्य प्रसव्यं परीत्यानुगच्छेत् पूर्वेण चेद् गतः स्यात् ॥८॥**

आत्तेष्वाज्येषु प्राङुत्क्रम्य तानध्वर्यून् प्रसव्यं परीत्यानुगच्छेत् ॥८॥

**पश्चिमेन चेद्यथेतमग्निं परीत्यानुगच्छेत् ॥९॥**

यदाज्यग्रहणकाले पश्चिमेनोपविष्टस्तदा प्रदक्षिणं परिगमनम् ॥९॥

**प्रवेशितेषूपविशेत् ॥१०॥**

हविर्धानमाज्येषु प्रवेशितेष्वित्यर्थः ॥१०॥

**आज्येष्वेव ग्रहीष्यमाणेष्वत्रोपविशेदिति शाण्डिल्यः ॥११॥**

आज्यग्रहणवेलायामेवाग्नीध्रीयान्निष्क्रम्य हविर्धानस्य पश्चिमेन पूर्वेण वोपविशेत् ॥११॥

**अध्वर्युणोक्तो वाचं यच्छेदा तृतीयं प्रातरनुवाकस्य ॥१२॥**

प्रातरनुवाकस्य प्रथमायास्तृतीयं यद् वचनं आ तस्माद् वाग्यतः स्यात् । अथवा आ तृतीयमित्या तृतीयाया ऋच इत्यर्थः ॥१२॥

**आ वा परिधानीयायाः ॥१३॥**

अथवा प्रातरनुवाकस्य परिधानीयान्तं वाग्यतः स्यात् ॥१३॥

**आ वोपांश्वन्तर्यामयोर्होमात् ॥१४॥**

स्पष्टम् ॥१४॥

**आ वा बहिष्पवमानात् ॥१५॥**

प्रातरनुवाकप्रभृति बहिष्पवमानपर्यन्तम् ॥१५॥

**हविर्धानं चेत् पूर्वेण गतः स्यादुपाꣳश्वन्तर्यामौ होष्यत्सूदङङ्तिक्रम्य तिष्ठेत् ॥१६॥**

यदि हविर्धानं पूर्वेण प्रविष्टस्तदोपाꣳश्वन्तर्यामयोर्होमकाले स्थानं कार्यम् ॥१६॥

---

5. My[2]. वेलायां for काले

22. P. यदा for यदि ; V[1]C. पश्चिमेनोप for पूर्वेण प्र°

**अदीक्षितश्चेदा तयोर्होमात् ॥१७॥**

दीक्षितस्य ब्रह्मणो होमसमाप्ति यावत् स्थानं न कार्यम् ॥१७॥

**निःसर्पत्स्वान्वारभेत ॥१८॥**

वहिष्पवमानार्थम् हविर्धानान्निःसर्पत्सु अध्वर्य्वादिपु प्रतिहर्तारमन्वारभेत ब्रह्मा । तत्पूर्वमेव सूत्रकृतोक्तम् ॥१८॥

**तस्य प्रस्तोत्रा समानं कर्म प्रागुपवेशनात् ॥१९॥**

प्रवृतहोमादिकर्म **तस्य प्रस्तोत्रा समानमुपवेशनवर्जम्** ॥१९॥

**आस्तावं प्राप्यानासन्नो यजुषोपविशेत् प्रस्तोतारं प्रति ॥२०॥**

वहिष्पवमानस्तुतिदेशं प्राप्य उद्गातृभ्यः किञ्चित् विप्रकृष्टः प्रस्तोनारमभिमुखो यजुषोपविशेत् ॥२०॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले द्वितीयः खण्डः ॥२॥** ११

1. PV[1]C दीक्षितः for अदीक्षितः
2. My[1-4] before दीक्षितस्य add : सत्रेषु and before ब्रह्मणः add : तु; My[2]. om. न
7. PV[1]C. प्रकृत⁰ for प्रवृत⁰
11. P. इति पञ्चमस्य दशमः खण्डः ॥ 10 ॥ for इति · · · खण्डः ॥ 2 ॥

## तृतीयः खण्डः

**रश्मिरसी (तां. ब्रा. १.९.१) त्येतावनुवाकौ स्तोमभागाः ॥१॥**

**तस्मा एतान् स्तोमभागान् अब्रवीत्** (तां. ब्रा. १५.५.२४) इति ब्राह्मणे स्तोमभागपदेन **रश्मिरसीत्यादयः** समाख्यायन्त इत्यर्थः । समाख्याप्रयोजनं च वक्ष्यामः ॥१॥

**तैः पृथगनुपूर्वंॅंस्तोत्राण्यनुमन्त्रयेत ब्रह्मन्त्स्तोष्यामः प्रशस्तरित्युक्ते ॥२॥**

बहिष्पवमानादीनि स्तोत्राण्यतिरिक्तस्तोत्रपर्यन्तानि त्रयस्त्रिंशत् तानि । तैः स्तोमभागैस्तावत्संख्यैः क्रमेण **पृथगनुमन्त्रयेत** । तत्र विशेषं वक्ष्यामः ॥२॥

**ऊर्ध्वं प्रथमाद्रात्रिपर्यायाद्यत्र स्यादमुष्मै त्वेति तं जिन्वेति तत्र ब्रूयात् ॥३॥**

**प्रथमाद्रात्रिपर्यायादूर्ध्वं** स्तोमभागेषु **यत्रामुष्मै त्वेति** पदद्वयमस्ति । अमुष्मा इति चतुर्थ्यन्तानां पदानामुपलक्षणम् । तत्र पदद्वयानन्तरमध्ययनाभावेऽपि **तं जिन्वेति ब्रूयात्** । तमिति द्वितीयान्ततया प्रयोज्यानां त्रिवृदादिपदानामुपलक्षणम् । तेनैवं प्रयोगः त्रिवृदसि त्रिवृते त्वा त्रिवृतं जिन्व । संवृदसि संवृते त्वा संवृतं जिन्व । प्रवृदसि प्रवृते त्वा प्रवृतं जिन्व । अनुवृदसि अनुवृते त्वा अनुवृतं जिन्वेति मध्यमपर्यायस्य चत्वारः स्तोमभागाः । उत्तमपर्यायस्य निरोहोऽसि निरोहाय त्वा निरोहं जिन्व । संरोहोऽसि संरोहाय त्वा संरोहं जिन्व । प्ररोहोऽसि प्ररोहाय त्वा प्ररोहं जिन्व । अनुरोहोऽसि अनुरोहाय त्वा अनुरोहं जिन्वेति चत्वारः स्तोमभागाः ॥३॥

**सवितृप्रसूता बृहस्पतये स्तुतेत्येकैकस्यान्तः ॥४॥**

तेषु **सवितृप्रसूता** बृहस्पतये स्तुतेति प्रत्येकमनुपञ्जनीयम् ॥४॥

---

4. My[1] °पदे for पदेन ; My[4] befor आदयः ins. एवम्

8. My[1] त्रिंशान्तानि, My[4] °त्रिंशत्तानि for त्रिंशत् तानि; My[2] om. त्रयस्त्रिंशत् तानि

14. My[1] after ब्रूयात् add:– पूर्वेषु तथाध्ययनात्

15. PV[1]C. om संवृदसि संवृते त्वा संवृतं जिन्व

16. PV[1]C. om. अनुवृदसि · · · चत्वारः स्तोमभागाः (L. 17)

22. P. तिसृषु for तेषु

**पूर्वेषां च ॥५॥**

**पूर्वेषां रश्मिरसी** (तां. ब्रा. १.६) त्यादीनां विंशतिमन्त्राणामपि सवितृप्रसूता इत्येवान्त इति। नन्वध्ययनसिद्धमेतत् न वक्तव्यम्। सत्यम्। वक्ष्यमाणविकल्पदर्शनार्थमनुवादः। मन्त्रपरिमाणज्ञापनार्थं वा ॥५॥

**भूर्भुवः स्वर्बृहस्पतिर्ब्रह्माहं मानुष ओमित्येतद्वाधिकं कुर्यादोंकारं वा ॥६॥**

सवितृप्रसूता बृहस्पतये स्तुतेत्यस्यानन्तरमधिकं निवेशयेद् विकल्पेन ॥६॥

**यथाम्नायꣳसंधेरनुमन्त्रयेत ॥७॥**

**वसुकोऽसी** (तां. ब्रा. १.१०.११) त्यादि संधिस्तोत्रानुमन्त्रणमविकृतमेवेति ॥७॥

मतान्तरमाह—

**त्रैधं विभजेदिति धानंजय्यो वसुकोऽसि वस्यष्टिरसि वेषश्रीरसि। वसुकाय त्वा वस्यष्टये त्वा वेषश्रिये त्वा। वसुकं जिन्व वस्यष्टिं जिन्व वेषश्रियं जिन्व। सवितृप्रसूता बृहस्पतये स्तुतेति ॥८॥**

इति। **वसुकोऽसि वसुकाय त्वा वसुकं जिन्वे**त्येवमर्थः संबन्धः। सोऽयमेको विभागः। एवमुत्तरावपि ॥८॥

**स्तुतदेवेन सवित्रा प्रसूता इत्यनुमन्त्रयेत मानसं वाजपेये च बृहत् ॥९॥**

अविवाक्ये दशमेऽहनि **मानसं स्तोत्रं वाजपेये च बृहदु**त्तमं स्तोत्रं **स्तुतदेवेने**त्येवानुमन्त्रयेत ॥९॥

---

3. P. न च for ननु P. om. सत्यम्

4. PV[1]C °ज्ञानार्थं for °ज्ञापनार्थं

7. My[1]. after विकल्पेन। adds :– उत्तमपर्यायस्य निरोहोऽसीति प्रथमः। संरोहोऽसीति द्वितीयः। प्ररोहोऽसीति तृतीयः। अनुरोहोऽसीति चतुर्थः

16. My[1-2] °अर्थः for अर्थः सम्बन्धः

17. My[4] उत्तरत्र for उत्तरौ

20. My[4] om. स्तोत्रं

**आनन्तर्येणेतराणि ॥१०॥**

**इतराणि** मानसवाजपेयान्त्यव्यतिरिक्तानि सर्वसंस्थासु संहत्य त्रयस्त्रिंशदेव स्तोत्राणि। तानि त्रयस्त्रिंशता स्तोमभागैः क्रमेणानुमन्त्रयेत। ननु च अत्यग्निष्टोमे स्तोत्रमेकमधिकमस्ति। तत् कथं त्रयस्त्रिंशत्स्तोत्राणीति। उच्यते। उक्थ्यानन्तरमुक्तस्य षोडशिनः स्तोत्रस्य तत्रापकृष्य प्रयोगमात्रम्। न पुनरपूर्वं स्तोत्रान्तरमस्तीति ॥१०॥

अथ नैमित्तिकेषु स्तोत्रेषु कथमनुमन्त्रणम्? अत आह—

**ईद्ध्रात् स्तोत्राणि पूर्वेण तद्विवृद्धेः ॥११॥**

ईद्ध्रशब्दो निमित्तवचनः। निमित्तं च सोमातिरेकः। **यदि प्रातःसवनात् सोमोऽतिरिच्येते** (तां. ब्रा. ९.७.१) ति ब्राह्मणेन निमित्तान्यन्यानि विहितानि। **पूर्वेण** पूर्वस्तोत्रस्य स्तोमभागेनानुमन्त्रयेत। नित्यस्तोत्रवृद्धिमात्रत्वात्। नैमित्तिकस्येति भावः ॥११॥

**परेण वा तन्निकामनात् ॥१२॥**

---

2. P. ⁰पेयोन्यानि व्यति⁰ for ⁰पेयान्त्यव्यति⁰

3. V[1]C ष्टोमम् for ⁰ष्टोमे ;

4. My[1,4]. om. अधिकम् P. उक्थास⁰ for उक्थ्या ;

5. My[1]उत्पन्नस्य, My[2-4] उत्सन्नस्य for उक्तस्य ; My[1-2,4], षोडशि for षोडशिनः ; My[2] प्रकृष्य for अपकृष्य

7. My[1,4] om. स्तोत्रेषु

8. My[2] ईन्द्रात्ने My PCV ईद्ध्रात्

9. yM[2] ईन्ध्रा⁰ for ईद्ध्र⁰

11. PCV[1]. ⁰स्तोत्रस्य विवृद्धमात्रत्वात् तस्य for ⁰स्तोत्रवृद्धिमात्रत्वात्। नैमित्तिकस्येति भावः, (L. 12)

13. P. कामयमानात् for कामनात्

पश्चाद्भाविना **वा** स्तोमभागेनानुमन्त्रणम् । कुतः । **माध्यंदिनं वा एष सवनं निकामयमानोऽभ्यतिरिच्यते** (तां. ब्रा. ९.७.२) इतीतरस्य माध्यंदिनादेर्निकामनश्रवणान्निकामनमिच्छेत् ॥१२॥

**मानसवद्वातिरिक्तसामान्यात् ॥१३॥**

अथवा मानसस्तोत्रवदनुमन्त्रणम् । अतिरिक्तत्वसामान्यात् । अग्निष्टोमादतिरिक्तं हि मानसं नैमित्तिकमपि नित्यादतिरिक्तम् ॥१३॥

**सर्वानुमन्त्रणेन वानुक्तत्वात् ॥१४॥**

अथवा यः पूर्वमिष्टिप्रकरणे सर्वानुमन्त्रणसंज्ञको मन्त्र उक्तः तेन वानुमन्त्रणम् । अन्यस्यानुक्तत्वात् ॥१४॥

**यद्यत्स्तोत्रं लुप्येत सहैव स्तोमभागेन ॥१५॥**

**यदि पर्यायानभिव्युच्छेत् सर्वेभ्य एकं संभरेयुः** (आ. श्रौ. ६.६.१) इत्याश्वलायनोक्तसंभारपक्षे यानि स्तोत्राणि लुप्तानि यश्च षोडशी वैकल्पिकत्वात् लुप्यते तानि स्वीयैः स्तोमभागैः सहैव लुप्यन्ते । न तैः शिष्टानुमन्त्रणं कार्यम् । क्रमसंख्याभ्यां नियतत्वात् स्तोमभागानाम् । स्तोत्रस्यासाधारणो भागः स्तोमभाग इति हि समाख्या । एतदेव हि समाख्याप्रयोजनम् । ननु च प्रधानलोपे गुणलोपो न्याय्य एवेति न वक्तव्यमेतत् । सत्यम् । आपस्तम्बस्तु **सप्तदश वाजपेये** (आ. श्रौ. ११.१०.१३) इति वदन् न नियमं मन्यते । तदनिष्टमिति दर्शयितुमेतदुक्तम् ॥१५॥

---

2. My[1-2,4] परस्य for इतरस्य ; My[1] om. अभि

PV[1] निकामयमान' निकामयमानम् for निकामन° · · · · · निकामनम् (L.3)

5. My[1-2,4] 'रिक्तस्य for रिक्तत्व

6. My[1,4] after मानसं add तद्वत्

12. V[1]CP संभरण My[2] °संतान for °संभार°

13. PVC. स्वकीयैः for स्वीयैः

14. My[1,4] साधारणः for असाधारणः

17. CPV[1] इतिवद् for इति वदन् न

**स्तुते बहिष्पवमाने वपायां हुतायां मार्जयित्वा धिष्ण्यानुपस्थायोक्तꣳसदस्युपवेशनम् ॥१६॥**

दक्षिणार्धे तु सदसः पूर्वमुपवेशनम् (द्रा. श्रौ. ४.४.६) इत्यादि पट्पटल्यामुक्तमनुसंधेयम् ॥१६॥

**स्तुतशस्त्रयोर्वाचं यच्छेत् ॥१७॥**

स्पष्टम् ॥१७॥

**अनूच्यमाने च सर्वत्र ॥१८॥**

सर्वेषु पुरोनुवाक्यामनोताद्यनुवचनेषु वाग्यमनम् ॥१८॥

**वषट्कृते विसृजेत् ॥१९॥**

स्पष्टम् ॥१६॥

**अवभृथादुदेत्यानुष्याद्यज्ञशेषम् ॥२०॥**

यज्ञशेषमन्वासीतेत्यर्थः ॥२०॥

**अहर्गणेष्वेनꣳसदातिप्रैषेण प्रशास्ता वाचं यमयति राजानꣳ रक्षेति चाह तदुभयं कुर्यादा वसतीवरीणां परिहरणात् ॥२१॥**

प्रशास्ता मैत्रावरुणः । स एनमतिप्रैषेणाश्वलायनोक्तेन हारियोजनप्रचारानन्तरं वाचं यमयति । ब्रह्मन् वाचं व यच्छे (आ. श्रौ. ६.११.१६) ति ॥२१॥

**तत्सत्रे पर्यायेण कुर्युरहीने तु ब्रह्मैव ॥२२॥**

सत्रे तु यजमानाः पर्यायेण तदुभयं कुर्युः । प्रथमे दिवसे कश्चित् । द्वितीयेऽपर इत्येवम् । अहीनेतु ब्रह्मैव प्रतिदिवसमुभयं कुर्यात् ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले तृतीयः खण्डः ॥३॥**

---

4. My[1,4] after ⁰संधेयम् add :– एतदुक्तम् ; P after संधेयम् adds : इति । इति पञ्चमस्य एकादशः खण्डः ॥ 11 ॥

8. PV[1]C. om : आदि ; PV[1]C. पवनेषु My[2] वाचनेषु for वचनेषु,

18. My[2-4] सत्रेषु for सत्रे तु

## चतुर्थः खण्डः

**वाजपेये पृष्ठस्य स्तोत्रमनुमन्त्र्य सदस्यं ब्रह्मासन उपवेश्य निष्क्रामेत् ॥१॥**

स्पष्टम् ॥१॥

**पूर्वेणाग्नीध्रीयꣳस्थूणा निखाता स्यात् ॥२॥**

अध्वर्युणेति शेषः ॥२॥

**दक्षिणेन मार्जालीयमन्तर्वेदीति शाण्डिल्यः ॥३॥**

**तस्यामौदुम्बरꣳसप्तदशारꣳरथचक्रं प्रतिमुक्तं स्यात् ॥४॥**

स्पष्टे ॥३-४॥

**तदभावे यत्किंच रथचक्रम् ॥५॥**

उदुम्बराभावे यदेव किंचिद्रथचक्रं सप्तदशारं स्थूणायां प्रतिमुक्तं स्यात् ॥५॥

**तस्मिन् बाहू आदध्याद्-देवस्याहꣳसवितुः प्रवसे सत्यश्रवसो बृहस्पतेर्वाजिनो वाजजितो वर्षिष्ठमधि नाकꣳरुहेयमिति ॥६॥**

तस्मिन् रथचक्रे ब्रह्मा बाहू निदध्यात् मन्त्रेण ॥६॥

**रथेष्वाजिं धावत्स्वाविर्मर्या इति गायेदाकारमुद्गीथादौ लुप्त्वा तस्य स्थाने प्रत्याहृत्य द्व्यक्षरमग्मन्निति ॥७॥**

लक्ष्यमुद्दिश्य रथेषु आजिं धावत्सु आविर्मर्या (सा. ४३५) वाजिनांसाम (ग्रा. गे. ४३५) इति गायेत् । आवाजं वाजिनो अग्मन्नित्युद्गीथादावाकारमुपसर्गं लोपयित्वा तस्य स्थाने अग्मन्निति द्व्यक्षरम् प्रत्याहृत्य गायेत् । अग्मन् वाजं वाजिन

---

10. My$^2$ किंचित् for किंच
15. PV$^1$C. om. ब्रह्मा
18. P. अक्षम् , My$^2$लक्षम् for लक्ष्यं ; PCV$^1$. om. आजिं and आविर्मर्या इति

इति । किमर्थः पुनरकारलोपः । गमनकाले मन्त्रेण गमनमेव प्रतिपादनीयम् । न पुनरागमनमिति लोप उक्त इति ॥७॥

**गतेषु वा ॥८॥**

अथवा रथेषु लक्ष्यं प्रति गतेष्वेव गायेत् । न धावत्सु । अग्मन्निति भूतनिर्देशविरोधात् ॥८॥

**यथाधीतमाधावत्सु ॥९॥**

प्रत्यागच्छत्सु रथेषु यथाधीतमाकारमलुप्त्वैव गायेत् । तस्यागमनाभिरूपत्वात् ॥९॥

**आसृतेषु वा ॥१०॥**

आगतेष्वेव गायेत् । भूतनिर्देशादेव ॥१०॥

**सर्वत्र वा यथाधीतम् ॥११॥**

गमने चागमने चेत्यर्थः । सर्वथापि द्विरेव गानम् ॥११॥

---

1. तमर्थः for किमर्थः ; V[1]C. concludes the khanda with वाजिन इति and read :—द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते । द्वितीये दशके वृत्तः पञ्चमः पटलोऽधुना । V[1] continues further अद्य श्रीवाराणसिमुक्तिक्षेत्रात् संवत् 1684 वर्षे आषाडशुदि 1 सोम शुभदिने लिखितं शुभमस्तु ॥ 6 ॥ C. after पटलोऽधुना begins the next khanda on the next leef with serial number one. It om. किमर्थः ··· इति ··· खण्डः ॥ 4 ॥ (P. 314 L. 15)

4. P. लक्षणं My[2] लक्षं for लक्ष्यं

5. P. विशेषत् for विरोधात्

7. My[2] अभिगमनात् for आगमन°

9. P आहृतेषु for आसृतेषु

10. P. आहृतेषु My[2] आसृतेषु for आगतेषु

12. P. सर्वथा द्विविरेव गातयेदिति for सर्वथा ····· गानम्

**परिवर्तयन् गायेत् ॥१२॥**

गानकाले रथचक्रं बाहुभ्यां प्रदक्षिणं परिवर्तयन् गायेत् ॥१२॥

**परिवर्त्य वा गायेत् गीत्वा वा परिवर्तयेत् ॥१३॥**

अथवा परिवर्तनात् पूर्वकालमुत्तरकालं गानम् । न समकालम् ॥१३॥

**गायतो वान्यः परिवर्तयेत् ॥१४॥**

ब्रह्मणि गायति सति रथचक्रमन्यः परिवर्तयेत् ॥१४॥

**उदङ्ङवरोहं मन्येत विष्णोः क्रमोऽसि विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसीति ॥१५॥**

उदङ्मुखो भूत्वा रथचक्रादवरूढमात्मानं मन्येत । अत एव गम्यते । न प्रत्यक्षेण आरोहणमवरोहणं वेति ॥१५॥

**अभिदक्षिणमावृत्य सदः प्रविशेत् ॥१६॥**

स्पष्टम् ॥१६॥

**तत्रासीनो हिरण्यं मधु च नाना प्रतिगृह्णीयात् ॥१७॥**

हिरण्यम् । हिरण्यस्थालं मधुना पूर्णं ब्रह्मणे दद्यात् (द्रा. श्रौ. २४.३.२७) इति वाजपेये वक्ष्यति । तत्र स्थालस्य प्राधान्यात्तस्यैव च मन्त्रेण परिग्रहो न मधुन इति शङ्कानिवृत्यर्थं नाना इति वचनम् ॥१७॥

**ऋतपेये च दक्षिणां चमसम् ॥१८॥**

ऋतपेये क्रतौ सोमचमसो दक्षिणे (तां.ब्रा.१८.२.१०) ति ब्राह्मणम् । तत्रापि सोमरसं तत्पात्रं च दक्षिणाभूतं पृथगेव गृह्णीयात् ॥१८॥

**ब्राह्मणाय मधु दद्यान्निदधीत हिरण्यम् ॥१९॥**

---

1. My[2] अथवा परिवर्तनात्पूर्वकालमुत्तरकालं वा गानं न समकालमिति गायतो वान्यस्तं परिवर्तयेदिति । यदिति गानकाले रथचक्रं बाहुभ्यां प्रदक्षिणं परिवर्तयन् गायेदिति परिवर्त्य गानं हीत्वा वा परिवर्त्य ब्रह्मणि गायति सति रथचक्रमन्यः परिवर्तयदिति for परिवर्तयन्···· परिवर्तयेत् ॥ 14 ॥ (L. 5)

3. M. om. गीत्वा वा परिवर्तयेत्

11. V[1]CP आकृष्य for आवृत्य

19. P. भागं for भूतं

20. PM दध्यात् for दद्यात्

आत्मार्थमेव हिरण्यस्थालम् निदधीत ॥१९॥

**त्रिष्टुप्छन्दसा सर्वभक्षं चमसं भक्षयेत् ॥२०॥**

सोमचमसस्य दक्षिणार्थत्वात् अप्राप्तमेव मन्त्रेण भक्षणं विधीयते ॥२०॥

**तं प्रतिगृह्णीयादिति स्थविरो गौतमः ॥२१॥**

तं सोमरसमेव प्रतिगृह्णीयान्न पुनः पात्रस्य पृथक् प्रतिग्रहणम् । कुतः । हुत देयः (द्रा. श्रौ. २४.१.२२) इति वचनात् सोमरसस्यैव दक्षिणात्वप्रतीतेरिति गौतमः ॥२१॥

गौतममतेनैव चमसभक्षणमन्त्रान्तरमाह—

**कस्त्वा ददाति स त्वा ददाति कस्मै त्वा ददाति तस्मै त्वा ददाति कस्त्वा कं भक्षयामीति भक्षयेत् ॥२२॥**

**वाग्देवी सोमस्य तृप्यत्विति वा ॥२३॥**

स्पष्टे ॥२२-२३॥

**उभाभ्यां वोभाभ्यां वा ॥२४॥**

गौतमस्य मतेन मन्त्रद्वयम् ॥२४॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चदशे पटले चतुर्थः खण्डः ॥४॥**

इति च्छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
पञ्चमः पटलो वृत्तः समाप्तो ब्रह्मणो विधिः ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे पञ्चदशः पटलः समाप्तः ॥१५॥**

---

1. P. स्थाली fso स्थालं
5. My[1] °ग्रहः for °ग्रहणम् , P. ग्रहणभक्षः for प्रतिग्रहणम्
8. P : भक्षणे for °भक्षण°
14. My[4]. om. गौतमस्य · · · · द्वयम् ।
15. P. इति पञ्चमस्य द्वादशः खण्डः ।। 12 ।। for इति · · · खण्डः ।। 4 ।'
16. PV[1]C द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
द्वितीये दशके वृत्तः पञ्चमः पटलोऽधुना ।। 5 ।।
for इति च्छन्दोग · · · · विधिः ।। and then P adds:—इति द्राह्यायण-सूत्रस्य धन्विभाष्ये पञ्चमः प्रपाठकः समाप्त; ।। 5 ।।
शके 1814 ' · · ।

षष्ठः प्रपाठकः

## षोडशः पटलः

## प्रथमः खण्डः

पूर्वस्मिन् पटले स्तोमभागेषु मन्त्रस्वरूपं परिमाणं च दर्शितम्। तद्वत् संप्रति साम्नः परिमाणं तदुत्तरपरिमाणं च दर्शयितुं प्रस्तौति **संतनि चोद्यमानमिति**। तत्र प्रथमं तावत् संतनिनः कथं गानं कर्तव्यमिति विचार्यते ॥

ननु चाध्ययनसिद्धमेव गानम्। कोऽयं विचारः । उच्यते। द्विविधं तावत् सामाध्ययनम्। छान्दसमूहश्चेति । तत्र छान्दसमपौरुषेयमिति निर्विवादम्। तद् वेदसामेत्याचक्षते। ऊहे पुनरस्ति विप्रतिपत्तिः। पौरुषेय इति मीमांसकाः। यथोक्तं भगवता जैमिनिना **सामानि मन्त्रमेके स्मृत्युपदेशाभ्याम्। तदुक्तदोषम्** (९.२. १-२) इति। अपौरुषेय इति निदानकारः। तत्रापौरुषेयत्वपक्षे यथाध्ययनमूहः शिरसा धारणीयो न किंचिद्विचार्यम्। पक्षान्तरे त्वस्ति विचारावकाशः। पुरुषाधीनत्वादूहस्येति मन्वानः सूत्रकारो विचारमारभते –

**संतनि चोद्यमानमेकैकस्यां सर्वम् ॥१॥**

इह तावच्छान्दसाध्ययने रथन्तरादीनि सामान्येकर्चेष्वधीतानि। क्रतुप्रकरणे

---

4. C My$^{3}$ before पूर्वस्मिन् add. –द्राह्यायणकल्पभाष्यं धन्विकृतम्। निर्विघ्नमस्तु, श्रीगुरुभ्यो नमः, हरिः ओं, श्रीहयग्रीवाय नमः ॥
My$^{2-3}$ स्वरूप for स्वरूपं C. My$^{1-2}$ Om तद्वत्;
5. My$^{1-2}$ C T. संतनि for संप्रति; My$^{1-2}$ °उत्तरा° for °उत्तर°; My$^{3}$ दर्शितमिति for दर्शयितुं प्रस्तौति; C om तदुत्तर° . . . च C. after चोद्यमानं ins एकैकस्यां सर्वम्;
6. My$^{1-2}$ तस्य for तत्र; My$^{1}$. Om तावत्
8. C. ऊहं for ऊहः
9. My$^{1}$ C My$^{4}$ T. पौरुषेयम् for पौरुषेयः
10. C. दोषः for दोषम्; T. तदुक्तं for तदुक्त
11. My$^{2-3}$ अपौरुषेयम् T. पौरुषयः for अपौरुषेयः
12. C. विचार्यते for विचार्यम्
15. T. after अधीतानि adds :- तानि

तृचान्युपादाय रथन्तरं भवति । **बृहद्** भवतीत्यादिभिर्वचनैस्तृचेषु विधानाद्योनिबद्धे प्रत्यृचं गीयते । संतनि पुनश्छान्दस [म्] एवाध्ययने तृचे गीयते । **एष स्य धारया सुत** (सा. ५८४) इति । तदेव पुनर्दशरात्रस्य पञ्चमसप्तमयोरह्नोः **असाव्यंशुर्मदाय** (सा. १००८-१०) **वृषा पवस्व धारये** (सा. ८०३-५) ति च तृचयोर्विहितम् । **संतनि भवति पञ्चमस्याह्नः संतत्यै** (तां. ब्रा. १३.५.६) इति । तत्र संदेहः । किमेतच्छान्दसपाठे तृचे व्यासक्तमेकं साम तृचान्ते समाप्यते । यथा रथन्तरं स्वयोन्यां सर्वेषु पादेषु व्यासक्तमृगन्ते समाप्यते । किं वा प्रत्यृचं समाप्यत इति । यदि व्यासक्तं ततस्तृचे गीतं सर्वमेकं सामेति कृत्वा तस्य सर्वस्य **वृषा पवस्व धारये** (सा. ८०३) त्येकैकस्यां गानं प्राप्नोति । अथ छान्दसपाठे प्रत्यृचं समाप्यते । तद्वदेव **वृषा पवस्व धारयेति** अत्रापि तृचे गानमिति किं प्राप्तम् । तत्र प्रतिपाद्यते । संतनि **चोद्यमानमेकैकस्यां** गेयमिति ॥१॥

कुतश्छान्दसपाठे तावत् तृचे व्यासक्तमेकं सामेति प्रतीमः । अन्यथा तृचे गानमनर्थकम् । रथन्तरादिवदेकस्यामेवाध्येतव्यमिति । भवत्वेवम् । तथापि किमित्येकैकस्यां गीयते । **वृषा पवस्व धारयेति** तृच एव सर्वं गीयताम् । यथेदानीमूहोऽधीयते । अत आह–

**स्तोमसंभवात् ॥२॥**

इति । एकैकस्यामेव सर्वगाने सति चतुर्विंशादिस्तोमसंपत्तिः । यदि तृचे

---

3. C. My$^{2-3}$ Om एव.

5. My[1] T My[4]. Om पञ्चमस्याह्नः; My[1] T. C संतन्या for संतत्यै

8. My[1] तत्तत् for ततः; My$^{2-3}$ सर्वगीतं fr सर्वमेकं

9. My[1] आप्नोति for प्राप्नोति;

10. my[1] T. before तद्वद् ins ततस्

12. T. तव for तावत् T. प्रतीतम् for प्रतीमः

13. My[4] एवंचि गातव्यम् for एवाध्येतव्यम्
My[1] भवति तु My[4] भवति for भवतु

15. My$^{2-3}$ ऊहे गीयते for ऊहोऽधीयते

**गानं** स्यात्तदा कृत्स्नेऽपि तृच एकैव स्तोत्रीया स्यात् । तृचान्ते सामसमाप्तेः । ततश्च द्वे स्तोत्रीये सिद्ध्यतः यस्मात् प्रत्यृचं सर्वं गेयम् ॥२॥

नन्वेवं छान्दसपाठे तृचे गीतस्य महतः साम्न एकस्यामृचि गाने सति साम्नः संबाधः स्यात् । ऋचश्च शैथिल्यमिति संशारविलेशौ स्याताम् । अत आह–

**तथा चान्यानि स्वविच्छन्दःसु ॥३॥**

इति । **अन्यान्यपि** सामानि स्वच्छन्दःसु स्वयोनिसदृशच्छन्दःसु विसदृशच्छन्दःसु च दृश्यन्ते । यथा कवतीषु रथन्तरम् । तत्तु तद्वचनबलात् । सत्यम् । इहापि हेतुवलात् संशरविलेशौ न स्याताम् । सोढव्याविति भावः । उक्तो हि हेतुः । अन्यथा स्तोमो न संभवति ॥३॥

यद्येवं संतनीति अन्वर्थसंज्ञा न स्यात् । प्रत्यृचं कृत्स्नगाने संतानाभावात् । तृचे पुनर्व्यासज्य गाने तत्सिद्धिरत आह–

**संतनीति यद्वाहिष्ठीयवत् ॥४॥**

इति । **वृषा पवस्व धारये** (सा. ८०३-५) ति अत्र संतानाभावेऽपि योनिभूते तृचे व्यासज्य गानतः संतानात्संतनीति व्यपदेशः । यथा योन्यां यद्वाहिष्ठपदसमन्वयादन्यत्र तदभावेऽपि यद्वाहिष्ठीयमिति साम्नो व्यपदेशः ॥४॥

तदेवं प्रत्यृचं गेयमित्येकः प्रकारः । प्रकारान्तरमाह–

**त्रिषु वा तृचेष्वेकर्च्चवत्तृचे दर्शनात् ॥५॥**

---

1. My[1-4] T C. कृत्स्नोऽपि (We have changed this as कृत्स्नेऽपि); My[3] एकैक॰ for एकैव; T. स्तोत्रीयस्य for स्तोत्रीया स्यात्
2. My[1-4] T. तस्मात् for यस्मात्
3. C. Om. एकस्यामृचि ... साम्नः
7. T. कवदिषु, My[3]. कव for कवतीषु
   T My[3]. Om. सत्यम्, इहापि हेतुबलात् (L. 8.)
8. My[3]. भवदुक्तोऽपि for भावः । उक्तो हि
10. C. संवाधा for संताना
11. C. व्यासक्त for व्यासज्य
14. C. व्यासक्त for व्यासज्य; C. ॰देशे fr ॰देशः

इति। यथैकस्यामृचि दृष्टं रथन्तरमुत्तरयोरप्यृचोरेव गीयते संपत्यर्थमेवं तृचे दृष्टं संतन्युत्तरयोरपि तृचयोरेव गेयम्। एवं सति संशरविलेशौ परिहृतौ भवतः। संतनिव्यपदेशश्च समञ्जस इति भावः। तत्र **वृषा पवस्व धारये** (सा. ८०३-५) त्येकस्तृचः। अपरौ द्वौ तृचावाहर्तव्यौ ॥५॥

नन्वेवं तृचद्वयाहरणे चतुर्विंशसंख्याविरोधः स्यात्। नेत्याह—

**साम्ना च स्तोमसंख्यानात् ॥६॥**

इति। न संख्याविरोधोऽस्ति। न हि क्वचिदप्यृक्संख्यायाः स्तोमसंख्यानम्। तथा सति अतिषङ्गस्य साम्नः एकस्यैव द्वयोर्व्यासिज्य समाप्तावपि स्तोत्रीयद्वयप्रसङ्गः। तथा क्वचिदर्द्धर्चे साम्नः समाप्तावपि ऋचोऽसमाप्तत्वात् एकापि स्तोत्रीया न स्यात्। यथा **प्रत्नं पीयूषं पूर्व्यमि** (सा. १४९४) त्यामहीयवस्य (ऊ. ए. ५२१)। तस्मात् साम्नां स्वरूपतोऽभ्यासतश्च यावती संख्या तयैव स्तोमसंख्यानम् ॥६॥

तृचद्वयाहरणेऽपि न स्तोमविरोधः। तृचे सामसमाप्तेरेकर्चतुल्यस्तृचः। एकैव स्तोत्रीयेति न कश्चिद्दोष इति सिद्धान्तमाह—

**तृचेष्वाचार्यस्मृतेर्यथान्यानि सामानि ॥७॥**

इति। नैकैकस्यां गेयं सर्वम्। नापि त्रिपु तृचेपु। किंतु छान्दसपाठवदेव तिसृषु गेयम्। यथा रथन्तरम्। कुतः। छान्दसपाठे प्रत्यृचं सामसमाप्तेः। सैव कुत इति चेद्। वसिष्ठादेरूहकारस्य स्मृतेरिति ब्रूमः। स्मृतेरेव किं मूलमिति

---

3. My[1],[4] T. C. लाभः for भावः
7. C. किंचिद् for क्वचिद् My[1] अपृक्थ, C अप्यृचं for अप्यृक्
   My[3] संस्थायाः for संख्यायाः
9. C. अव्यर्चे for अर्धर्चे
11. P. C. तथा for तस्मात्
16. C. न चैकस्या for नैकैकस्यां
17. My[1] त्रिपु for तिसृषु
   My[3] प्रतितृचं for प्रत्यृचं
18. My[1] एवममूलं for एव किं मूलम्. T. Om. स्मृतेरेव ...ब्रूमः (p. 319.L. 1.)

चेत् । प्रत्यभिज्ञेति ब्रूमः । छान्दसपाठे यथा प्रथमायामृचि संतनिनो गानं तथैवोत्तरयोरपि प्रत्यभिजानीमः। प्रस्तावस्तु केवलं न दृश्यते। तस्मात् संतनिनो न कश्चिद्विशेषः सामान्तैः ॥७॥

**संतानाच्च संतनीति ॥८॥**

किं च । **संतानात् संतनीत्युच्यते** । एकैकस्यां सर्वगानपक्षे तत् सर्वथानुपपन्नम् । ननु भवत्पक्ष एव संतानानुपपत्तिः । प्रत्यृचं सामसमाप्तेः । नैवम् । तत्रापीदमेवोत्तरम् । **संतानाच्च संतनीति** । सत्यं प्रत्यृचं सामसमाप्तिः । किंतु प्रथमप्रस्तावमेवाङ्गीकृत्योत्तरयोरपृथक् प्रस्तावात् ओंकारेण पृथगुद्गीथानुपादानाच्च संतनित्वमित्यर्थः ॥८॥

ननु चोक्तं पक्षान्तरेऽपि यद्वाहिष्ठीयव्यपदेश इति । तत्राह—

**संततं गायतीति चाह ॥९॥**

इति । **वृषा पवस्व धारये** (सा. ८०३-५) त्ययोनिभूतेऽपि तृचे **संततं गायतीति** श्रुतम् । तस्य भवत्पक्षेऽपि योन्यपेक्षो निर्वाहो न शक्यते। तस्मादयं तस्यार्थः । प्रथमप्रस्तावोपजीवनेनोत्तरयोः पृथक् प्रस्तावमकृत्वा पूर्वया संततं गायेदिति। यस्मादयमेवास्य विधेरर्थः। तन्निमित्तं च संतनित्वम् । अत एव कल्पकारेण संतनिना सह चोदितेषु सामान्तेषु स्तोमविरोधात् क्वचिदेकर्चेषु कल्प्यमानेषु संतनि न कदाचिदेकर्च्चे क्लृप्तम् । तदा संतनित्वासिद्धेः ॥९॥

किंतु स्वस्थानादुद्धृतं तदिदमाह—

**एकर्च्चेषु चोद्धृतं कल्पे ॥१०॥**

---

1. C. संतनि नूनं गेयं for संतनिनो गानं
2. T. My[1] after प्रस्तावः add तावत्, T. Om. तु C. संतनिगाने for संतनिनो न
3. My[3] विरोधः for विशेषः
8. C. T. My[3] पृथक्प्रस्तावाभावात् for अपृथक्प्रस्तावात्.
10. My[3] प्रस्तावान्तरे for पक्षान्तरे
12. C. Om. अपि. My[1 2] सततं fr संततं
13. C. योन्यपेक्षात् My[3] योन्यपेक्षा, My[1] योन्यपक्षो for योन्यपेक्षः
19. My[2.3] तृचोद्धृत for चोद्धृतं

आदित्यानामयने व्यूढाग्निष्टोमदशरात्रे पञ्चमसप्तमयोरह्नोः कल्पकारेणोक्तम् **बार्हद्गिरस्यर्क्षु संतनिः** (आ. क. १०.१.१८) **वयं घ त्वा सुतावन्त** (सा. ८६४-६) **इति काण्वस्यर्क्षु संतनी** (आ. क. १०.१.२०) ति । अत्र यद्यपि व्यूढाग्निष्टोम-दशरात्रस्य त्रिवृत्स्तोमत्वात्तदविरोधाय प्राकृतानां साम्नां प्रायेणोद्धारस्तथापि संतनिनोऽह्नां संतानार्थतया ब्राह्मणचोदितत्वेनापरित्याज्यत्वे सति स्वस्थाने **वृषा पवस्व धारये**त्यत्रैवैकर्चकरणं प्राप्तम् । तथापि स्वस्थानमुद्धृत्य तस्मिन्नेवाहनि ब्रह्मसामत्वेन तृचे क्लृप्तमिदं **संततं गायतीति** विहितम् । सांतत्यमेकर्चकरणे न सिध्यतीति मत्वा कल्पकारेण कृतमिति । तदेवं छान्दसपाठेऽपि संतनि प्रत्यृचं समाप्यते । तद्वदेव प्रयोगकालेऽपि गेयमिति स्थितम् ॥१०॥

अथ यदुक्तं छान्दसपाठे तृचे गानमनर्थकमिति तत्राह—

**प्रमाणार्थं तृचे दर्शनम् ॥११॥**

इति । **संततं गायतीति** विहितम् । सांतत्यं कथं कर्तव्यमिति न ज्ञायते । तत्तद्ब्राह्मणप्रमाणत्वेन **तृचे** प्रदर्शनं वेद एव करोतीत्यर्थः ॥११॥

अथ यदुक्तं **स्तोमसंभवादिति** तत्राह—

**स्तोत्रीयायां साससमाप्तिः ॥१२॥**

इति । प्रत्यृचं **साससमाप्तिः** । न तृचान्ते । तेन तिस्रः स्तोत्रीयाः संपन्नाः । न चतुर्विंशादिस्तोमानुपपत्तिरिति । अथवैकमेवेदं सूत्रम् । **प्रमाणार्थं तृचे दर्शनं स्तोत्रीयायां साससमाप्तिरिति** ॥१२॥

प्रस्तावलोपप्रदर्शनार्थं तृचे गानम् साम पुनः प्रत्यृचं समाप्तमेवेति पुनः चोदयति—

---

5. My³ परिमाद्यत्वे T. परि त्राज्यत्वे for अपरित्याज्यत्वे
7. My¹ T. एकर्च्चा' for एकर्च्चं
9. My³ सिद्धम् for स्थितम्
10. My¹ after पाठे ins. अपि
13. T. तत् for तत्तद्, C. My²,³ Om. तद्ब्राह्मण
19. My² C. Om. एव

**तासु सर्वासु प्रस्तावाः स्युर्न्यायप्रगाथधर्माभ्याम् ॥१३॥**

इति । यदि प्रत्यृचं सामसमाप्तिस्तर्हि प्रत्यृचं पाञ्चभक्तिकमेव गायेत् नोत्तरयोः प्रस्तावलोपः कार्यः । पूर्णं हि साम गेयमिति न्यायात् । किं च प्रगाथानामयं धर्मः सर्वत्र दृश्यते । यत् पूर्वस्या उत्तमं पादं पुनरभ्यस्यते । नोत्तरस्याः प्रस्तावः । प्रगाथे च संतनि चोदितमश्वमेधे अभि सोमास आयव इति संतनि तिसृष्वि (आ. क. ६.२०.२) ति ॥१३॥

तदेवं न्यायात् प्रगाथधर्मत्वाच्च सर्वास्वपि स्तोत्रीयासु प्रस्तावः कार्य इति परिहरति—

**नोत्तरयोराचार्याः । स्मृतेः ॥१४॥**

इति । ऊहकारस्मृतेर्नोत्तरयोः **प्रस्तावः** । छान्दसपाठे प्रस्तावादर्शनमेव स्मृतेर्मूलम् । प्रस्तावलोपार्थमेव तृचे प्रदर्शनमिति पूर्वमेवोक्तम् ॥१४॥

ननु तद्विप्रतिपन्नम् । तृचे दर्शनात् । तृचे व्यासक्तमेकं सामेत्यस्मन्मतम् । अत आह—

**संततं गायतीति च । भक्तिलोपदर्शनात् ॥१५॥**

इति । **संततं गायतीति** स्मृतेरुत्तरयोर्भक्तिलोप एवाभिप्रेत इति दृश्यते । न तस्य वचनस्य अर्थान्तरं किंचिदपि दृश्यते इत्यर्थः । ननु च तद्वचनं यण्वसामत्रिषयम् असंतनि विषयम् । उच्यते । संतनि यण्वमपत्यं शाक्वरवर्णमिति सामचतुष्टयं छान्दसपाठे तृचेषु दृश्यते । तेषु सर्वेष्वप्युत्तरयोः प्रस्तावो न दृश्यते ।

---

4. C. T. पूर्वस्याम् My[3] पूर्वस्मात् for पूर्वस्या. My[4] after प्रस्ताव. adds स्यात् and My[1] स्याः.

5. C. T. Om. च. befor संतनि ।

10. T. after इति adds संततं गायतीतिच भक्तिलोपदर्शनात् T. प्रस्ताव for प्रस्तावा.

12. My[1] T. Om. ननु तद्विप्रतिपन्नम्.... इत्यर्थः ( L. 16 ).

16. My[1] T. My[4] तन्न संतनिविषयत्वे for तद्वचनं ..असंतनिविषयम् (L, 17.) ।

18. T. Om. तेषु .. ... दृश्यते

तेष्वेकत्र दृष्टं वचनमितरेष्वपि भवति । तुल्यन्यायत्वादधिकविवक्षया **संतनि चोद्यमानमिति** सूत्रे संतनिनः प्रस्तावः ॥१५॥

तदिदानीमधिकं वक्तुमारभते--

**तस्य स्तोत्रादावावर्तिषु प्रस्तावः पर्यायादिषु वा ॥१६॥**

इति । गर्गत्रिरात्रस्य मध्यमेऽह्नि पृष्ठेषु ब्रह्मसामत्वेन संतनि विहितमार्षेयकल्पे **अस्तावि मन्म पूर्वमिति संतनी** (आ. क. ६.१७.४) ति । तच्चावृत्तिस्तोत्रं सप्तदशस्तोमम् । तत्रेदमुच्यते । तस्य संतनिन आवृत्तिस्तोत्रेषु स्तोत्रोपक्रमे प्रथमगाने सकृदेव **प्रस्तावः । पर्यायादिषु वा** । न पुनः पुनरिति । कुत एतत् । **संततं गायतीत्यत्र** पक्षद्वयम् । गानसांतत्यविधिरित्येकः पक्षः । प्रथमेन गानेन संततमुत्तराणि गानानि गायेदिति गानसांतत्यस्यैव श्रुतेः । ऋक्सांतत्यविधिरिति पक्षान्तरम् । प्रथमया संततमुत्तरे ऋचौ गायेन्न पृथक् पृथक् प्रस्तुयादिति । उभयथापि पवमाने न कश्चिद्विशेषः । आवृत्त्यभावात् । आवृत्तिस्तोत्रे त्वस्ति

---

1. T. विवक्षायां for विवक्षया
2. T. Om. सूत्रे
5. My [2],[3] Om. संतनि
6. C. Om. च, My[3] तत्र for तच्च;
7. My[5] ननु for तत्र
   My[3] आवर्ति for आवृत्ति
8. T. Om. न
9. My[4] द्वये for द्वयम्
   T. प्रथमे for प्रथमेन; My[2] गीतेन for गानेन; My[3]. Om. पक्षः
11. C. प्रथमाख्या, T. प्रथमा for प्रथमया
    C. Om. One पृथक्; C. स्तुयत् for प्रस्तुयात्
12. My[2-3] C. प्रथमायाः पुनर्गानाभावात् for आवृत्त्यभावात्,
    My[2-3] स्तोत्रेषु for स्तोत्रे तु

**विशेषः** । कथम् । पूर्वस्मिन् पक्षे प्रथमायां पुनर्गानेऽपि प्रस्तावलोपः । मतान्तरे तु तदानीमृगन्तरे संनिपाताभावात् प्रस्तावः कार्यो वेति । तत्र गानसांतत्यपक्ष इदं सूत्रद्वयम् । अत्र प्रतिपर्यायं हिंकारविधानात् पृथगुपक्रमं मत्वा **पर्यायादिषु वेत्युक्तम्** ॥१६॥

**सर्वत्र प्रथमायामिति धानंजय्यः ॥१७॥**

ऋक्सांतत्यविधिरिति धानंजय्यमतम् । कुतः । उत्तरयोरेव हि छान्दसपाठे प्रस्तावलोपो दृश्यते । न प्रथमायाम् । तेन यावत्कृत्वः प्रथमा गीयते तत्र सर्वत्र प्रस्तावः कार्यः ॥१७॥

अथ प्रस्तावरहितानां कथं गानम् । अत आह—

**निधनभूताः प्रतिहारवत्योऽप्रस्ताव्याः ॥१८॥**

आदित आरभ्य निधनस्वरेण प्रस्तावरहिताः सर्वे गायेयुः । प्रस्तावबत् प्रतिहारस्यापि लोपमाशंक्योक्तं **प्रतिहारवत्यो** भवेयुरिति ॥१८॥

**धानंजय्येन प्रथमायां शाण्डिल्य उत्तरे तु**
**स्तोत्रीये विष्टावमुखेष्वेवाप्रस्ताव्ये**
**विष्टावेषु चैकिषु ॥१९॥**

**धानंजय्येन** संप्रतिपन्नः **शाण्डिल्यः** । यथा धानंजय्येनोक्तं तथैव प्रथमायां

---

1. My[3] विरोधः for विशेषः, My[1],[4] om. कथं पूर्वस्मिन् पक्षे प्रथमायां पुनर्गानेऽपि प्रस्तावलोपः । मतान्तरे तु तदानीमृगन्तरे संनिपाताभावात् प्रस्तावः कार्यः वेति । (L. 2)
3. My[1],[4]T. सूत्रमिति for सूत्रद्वयम्, My[1] T My[1] om. अत्र..उक्तम् (L. 4)
6. T. om. कुतः
7. T. ह्यते for गीयते
8. T. कुर्यात् for कार्यः
9. C बहिर्भूतानां for रहितानां
11. C बहिर्भूताः for रहिताः
15. My[3] चैकेषु for चैकिषु
16. T. धानंजय्यो for धानंजय्येन, C. om. यथा

सर्वदा प्रस्तावः कार्यो न तत्र विवादः । उत्तरयोस्तु यदा त्रिस्त्रिर्वचनं तदा विष्टावमुखे प्रथम एव वचने प्रस्तावो न भवति । द्वितीयतृतीययोस्तु वचनयोर्भवत्येव प्रस्तावः । तथा **एकिषु** विष्टावेषूत्तरे स्तोत्रीये **अप्रास्ताव्ये** प्रस्ताव रहिते भवत इति शाण्डिल्यमतम् । तस्य किं प्रमाणम् । ऋगन्तरापेक्षया ऋगन्तरस्य संतानविधिः । न पुनरेकस्याः एवर्चः पुनः पुनरभ्यासे सांतत्यविधिरिति । तेन यदा प्रथमामृचं समाप्य द्वितीयामारभते तदा प्रस्तावलोपः । यदा द्वितीयां समाप्य तृतीयामारभते तदा च लोपः । अन्यत्र सर्वत्र न लोप इत्युक्त भवति ॥१९॥

## त्रिवृत्स्तोमे च परिवर्तिनीविधानम् ॥२०॥

आदित्यानामयने व्यूढाग्निष्टोमदशरात्रे पञ्चमसप्तमयोरह्नोः पृष्ठेषु ब्रह्मसामत्वेन **बार्हद्गिरस्यर्क्षु संतनि । काण्वस्यर्क्षु संतनी** (आ. क. १०.१.१८, २०) ति कल्पकारः । उभयत्रापि त्रिवृदेव स्तोमः । तत्र त्रिवृतः परिवर्तिनी विष्टुतिः कार्या । न पुनरुद्यती विष्टुतिः । तथा सत्युत्तरयोः पृथक् हिंकारेण प्रस्तावात् संतानकरणाशक्तेरित्यभिप्रायः ॥२०॥

## उत्तरयोः स्तोत्रीययोश्छन्दस्तो विप्रतिपत्तिः ॥२१॥

आवृत्तिस्तोत्रेष्वस्तावि **मन्म पूर्व्यमि** (सा. १६७७-८) त्यादिप्रगाथेषूत्तरयोः स्तोत्रीययोश्छन्दोविप्रतिपत्तिराचार्याणां भवति ॥२१॥

---

1. C. after सर्वदा ins एव My²-³ यथा for यदा
2. T. om. न
3. C. om. प्रस्तावरहिते भवतः
5. C. अभ्यास⁰ for अभ्यासे
6. My³ प्रथमायाम् for प्रथमाम् T. ⁰लोपे for ⁰लोपः
8. My¹ ⁰वर्तनीं T. ⁰वृत्तिनी for ⁰वर्तिनी⁰
10. C. om. संतनि । काण्वस्यर्क्षु; My³ om. ऋक्षु after काण्वस्य
11. My³ ततः for तत्र; My¹ ⁰वर्तनी for ⁰वर्तिनी
12. T. om. कार्या··विष्टुतिः, C. om. पृथक्··उत्तरयोः (L. 14)
15. T. My¹ ⁰स्तोत्रीयेऽपि for ⁰स्तोत्रेषु; C. om. आवृत्ति⁰··विप्रतिपत्तिः (L. 16)

तामेव दर्शयति—

**द्विपदे स्यातामप्रस्ताव्ये ककुभौ प्रस्ताव्ये ॥२२॥**

आवृत्तिस्तोत्रेषु संतनिन उत्तरयोर्मतभेदेन प्रस्तावलोपः तत्कारणं चोक्तम्। तत्र यदा **अप्रस्ताव्ये** प्रस्तावरहिते भवतस्तदा ते **द्विपदे** एव **स्याताम्**। **समिन्द्र-रायो बृहतीरधूनतेति** विष्टारपङ्क्तेः पूर्वेऽर्द्धर्च एका द्विपदा स्तोत्रीया। उत्तरोऽर्द्धर्च इतरा द्विपदेति। यदा ते प्रस्ताव्ये प्रस्तावयुक्तेः भवतस्तदा ते **ककुभौ स्याताम्**। **अस्तावि मन्म पूर्व्यं** (सा. १६७७-८) मिति बृहत्या उत्तमं पादं पुनरभ्यस्य रथन्तरवदुत्तरे ककुभौ कुर्यादिति प्रस्तावयुक्तः पूर्ववदभ्यास इति मन्यते ॥२२॥

**बृहत्यौ शाण्डिल्यः ॥२३॥**

नौधसप्रगाथवदुत्तरे **बृहत्यौ** प्रस्तावयुक्ते कुर्यादिति **शाण्डिल्यः** ॥२३॥

**ककुभावप्रस्ताव्ये तथा सति ॥२४॥**

**तथा सतीति** कोऽर्थः। यदि प्रस्तावपक्षे बृहतीकारं तथा सति प्रस्तावरहिते ककुभावेव स्यातामित्यर्थः ॥२४॥

**उभे ककुभौ स्थविरो गौतमः ॥२५॥**

प्रस्तावयुक्ता प्रस्तावरहिता **चोभे** अपि **ककुभावेव** स्यातामिति **स्थविरो गौतमः** ॥२५॥

**बृहत्यौ धानंजय्यः ॥२६॥**

उभे अपि प्रस्तावयुक्ता तद्रहिता च **बृहत्यावेव** कर्तव्ये इत्यर्थः। तदेव**मस्तावि मन्म पूर्व्यमि** (सा. १६७७-८) **ति** प्रगाथे उत्तरयोः पञ्चप्रकारं संतनिनो गानम्। बृहतीकारं कृत्वा प्रस्तावसदसद्भावेन द्वयम्। ककुभौ कृत्वा प्रस्तावसदसद्भावेन द्वयम्। द्विपदाकारं कृत्वा प्रस्तावलोपेन पञ्चमः प्रकारः। तदिदं पञ्चसंतनीति। तलवकारिणामूहाध्ययने महान् घोषः। अस्माकं त्वेक एव प्रकारः। प्रस्तावरहिते ककुभौ कृत्वा गीयत इति ॥२६॥

**इति द्राह्यायणश्रौतसूत्रे षोडशे पटले प्रथमः खण्डः ॥१॥**

---

3. C. संततम् for संतनिनः

15. My[2-3] trns. प्रस्तावयुक्ता after प्रस्तावरहिता
    My[1-4] T. om. स्थविरो

21. My[2-3] ⁰लोपे for ⁰लोपेनः T. च for द्वयम्

22. My[2-3] om. प्रस्तावरहिते

# द्वितीयः खण्डः

**पूर्वस्मिन् खण्डे त्रिवृत्स्तोमे च परिवर्तिनीविधानमि** (द्रा. श्रौ. १६.१.२०) **ति** विष्टुतिप्रसङ्गात् सर्वा एव विष्टुतीरनुसंधत्ते **आद्याभिर्विष्टुतिभिरिति** खण्डेन । **अत्र पञ्चविंशब्राह्मणे तिसृभ्यो हिंकरोतीत्युपक्रम्य** त्रिवृदादिस्तोमानां प्रत्येकं बह्व्यो विष्टुतयः समाम्नाताः । ताः सर्वा विकल्पन्ते । अविशेषात् । न च नित्यकाम्यतया विशेषः । सर्वासामपि फलश्रवणेन काम्यत्वात् फलरहितायाः कस्याश्चिदनाम्नानात् नित्यप्रयोगे तासामेव विकल्पः । अथ यदि फलश्रवणमर्थवादः स्यात् तदा सर्वा अपि नित्या एवेति विकल्प एव । किं च **तामेतां प्रावाहण्य उपासते** (तां. ब्रा. २.१६.५) **तामेतां भाल्लवय उपासते** (तां. ब्रा. २.२.४) इत्यादि विष्टुतिवाक्यशेषेषु तैस्तैराचार्यैस्तस्या विष्टुतेर्नित्यवदनुष्ठानकीर्तनं नित्यतामेव दर्शयति । एवं प्राप्ते ब्रूमः—

**आद्याभिर्विष्टुतिभिः स्तोमविधानमनादेशे ॥१॥**

यत्र विशेषादेशः क्रियते सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीतेत्यादिना ततोऽन्यत्र नित्यप्रयोगे **आद्याभिरेव विष्टुतिभिः** स्तोमसंपादनं कार्यम् । नेतराभिः ॥१॥

---

5. My[1] T. विकल्पेरन् for विकल्पन्ते; My[3] अविरोधात् for अविशेषात्

6. C. My[2] सर्वासु for सर्वासाम्; My[3] विरोधः for विशेषः, C. ⁰श्रवणस्य अर्थवादमात्रत्वेन नित्यत्वात् for ⁰श्रवणेन··विकल्प एव (L. 8)

8. C. om. प्रावाहणय उपासते तामेतां (L. 9)

9. My[1] ताल्ववयः, T. गाल्लवयः for भाल्लवयः; My[1] T. My[4] इति च । तैस्तैर्नित्योपासनं for इत्यादि⁰····⁰कीर्तनं (L. 10)

12. My[2] C. My[3] संपादनं नेतराभिः for विधानम्

13 C. My[2-3] विशेषानादेश इत्यर्थः, किमुक्तं भवति for यत्र विशेषादेशः क्रियते

C. My[2-3] इत्यादि विशेषचोदनाभावे आद्याभिरेवेति for इत्यादिना ··नेतराभिरिति (L. 14)

तत्र हेतुमाह—

**ताः पथ्याः ॥२॥**

इति । **ताः पथ्याः** आद्या विष्टुतयः । पथोऽनपेताः पथ्या न्याय्या इत्यर्थः । किं पुनर्न्याय्यत्वम् । पर्यायविष्टावसाम्यं दोषविरहश्चेति ब्रूमः ॥२॥

हेत्वन्तरमाह—

**सर्वाभिप्रायाश्च ॥३॥**

इति । सर्वत्राभिप्रयन्ति संचरन्तीति सर्वाभिप्रायाः नित्या इत्यर्थः । तथा च निदानकारो नित्ये सर्वाभिप्रायपदं प्रयुङ्क्ते । तेषां किं काम्यं किं सर्वाभिप्रायमिति श्रुतिश्च भवति । **एते वै प्रतिपदौ सर्वाभिप्राये यदुपवती चाग्र्यवती च कामेतराः प्रतिपद** इति ॥३॥

**यथाशिषं वा विदध्यात् ॥४॥**

आशीः फलम् । तदनुसारेण वा काम्या अपि कुर्यात् । एतदुक्तं भवति । द्वावेवात्र प्रकारौ । फलकामनया वा कुर्यात् तदभावे च प्रथमाभिरेव कुर्यात् । न पुनस्तृतीयप्रकारो विकल्पोऽस्तीति अथ यदुक्तं सर्वास्वपि फलश्रवणान्नित्य[त्व] काम्यताऽविशेष इति तदयुक्तम् । प्रथमास्वेव विष्टुतिषु कामशब्दाभावात् । फलश्रवणमर्थवादः । इतरास्तु प्रजाकाम इत्यादिकामपदोपबलात् काम्या एव । क्वचित् कामपदाभावेऽपि अर्थवादबलात् फलं कल्प्यम् । न पुनः प्रथमायां विकल्पः । अपथ्यात्वेन वैषम्यादिति **प्रावाहण्य उपासते** (तां. ब्रा. २.१६.५) इति च फलार्थयैवोपासनम् । न नित्यतयेति मन्तव्यम् । केचित्तु **अनादेश** इति प्रथम-

---

3. My [1,4] T. om. आद्याः; My[3] om. इति । ताः पथ्याः

12. C My[2] om. काम्या अपि; C अथवा यद्यागकामना स्यात्, My[2-3] अथवा यद्याशीः कामना स्यात् तदा for आशीः फलम् । C My[2-3] om. वा

14. My[2-3] C. °श्रवणस्यार्थवादत्वान्नित्या (C नित्यः) for °श्रवणा··विशेषः; (L. 15)

15. my[1] T my[4] om. कामशब्दाभावात्

17. my[2-3] C. °अश्रवणे for °अभावे; my[1-2] TC °बन्धात् for °बलात्
T my[3] प्रथमाया अपि for प्रथमायां

19 T my[1-4] om. केचित्तु··मतान्तरमेतदिति (p. 328 L. 7)

सूत्रगतं पदमिदं च सूत्रमन्यथा व्याचक्षते । कथम् । यत्र कल्पकारेण सत्यामपि-कामनायां विशेषेण नियमः क्रियते स आदेशः । यथा **गर्भिणी सप्तदशस्य विष्टुतिः । ऊर्ध्वं होतुः पृष्ठाद्** इत्यादौ तत्रैव विष्टुतयः । ततोऽन्यत्राद्याभिरेव स्तोमविधानम् । सत्यामपि कामनायां कल्पकारेण व्यवस्थापितत्वादिति । **यथाशिष** मित्यस्यायमर्थः । **प्रजाकामः** [· ·] **स्तुवीते** (तां. ब्रा. २.३.२) त्यादौ विशेष-श्रवणात् न कल्पकृता व्यवस्थादरणीया । किंतु यत्र यत्र कामस्तत्र तत्र प्रयोज्या इति मतान्तरमेतदिति ॥४॥

**द्वितीयां त्रिवृतः पथ्यामेके ॥५॥**

त्रिवृत्स्तोमस्य **द्वितीयां** परिवर्तिनीं **पथ्यामेके** वदन्ति ॥५॥

तत्र हेतुमाह—

**अविष्टावा ह्याद्या ॥६॥**

इति । **आद्या** विष्टुतिरुद्यती नाम । सा विष्टावशून्यत्वादपथ्येत्यर्थः । विष्टावो नाम पर्यायस्य तृचे विभागः ॥६॥

हेत्वन्तरमाह—

**संहारशिरः संधिसंतनिषु चानुपपन्ना ॥७॥**

संहाराद्यर्थचतुष्टये च त्रिवृतः प्रथमा विष्टुतिरनुपपन्ना न संगच्छत इत्यर्थः । कथं संहारे तावदनाम्नातपर्यायस्य स्तोमस्य आम्नातपर्यायात् स्तोमात् पर्याय-संहारं वक्ष्यति **यावभितोऽनन्तरौ समौ तयोः पर्यायान् संहरेदि** (द्रा. श्रौ. १७.१.२३) **ति** । तत्र त्रयोदशस्तोमे त्रिवृत्स्तोमादेकः पर्यायः । पञ्चदशाच्च द्वौ पर्यायावाहर्तव्यौ । तत्र यदि त्रिवृन उद्यत्याः पर्यायं संहरेत्तदानीं तत्स्थाने पर्याया-न्तरेण न प्रवेष्टव्यम् । कुतः स **प्रथमया स मध्यमया स उत्तमये** (तां. ब्रा. २.१.१) त्येवमुद्यतीपर्यायाणां पृथगेवासाधारणस्थानकल्पनात्तदनुरूपफलाश्रवणाच्च ।

---

20. C. उद्यता$^{0}$ for उद्यत्याः

21. C. वेष्टव्यं for प्रवेष्टव्यं

22. my$^{1-4}$ T. $^{0}$फलश्रवणात् for फलाश्रवणात्;

**अन्योन्यस्य प्रजा आददते यथाक्षेत्रं कल्पन्ते** (तां. ब्रा. २.३.७) इति । ततश्च पञ्चदशपर्यायस्योद्यतीपर्यायस्थाने प्रथमायां निवेशानुपपत्तिरिति । अथ महाव्रते शिरस्यतिरात्रे संधिस्तोत्रे च न संगच्छतः । उभयत्रापि नवर्च्चविधानात् । उद्यत्याश्चैकर्च्चविषयत्वात् । तथा संतनि साम्नि **चानुपपन्ना** । कथम् । प्रथमां त्रिरुक्त्वा तदनन्तरं मध्यमार्थे हिंकारे कृते पृथक् पर्यायोपक्रमात् पूर्वप्रस्ताव-भक्त्युपजीवनाभावात् पृथक् प्रस्तावः कार्यः । ततश्च संतानविच्छेद इति दोषः । तथा च तद्भयादेव पूर्वमुक्तं **त्रिवृत्स्तोमे च परिवर्तिनीविधानमि** (द्रा. श्रौ. १६.१.२०) **ति** ॥७॥

**अवर्षुकस्त्विति चास्याम् ॥८॥**

**अस्यामु**द्यत्यां विष्टुताव**वर्षुकस्तु** पर्जन्यो भवतीति दोषश्च निरप्यस्ति । तस्मा-दप्यपथ्या त्रिवृतः प्रथमा विष्टुतिः ॥८॥

**इषोर्व्यत्यासमिषुभ्याम् ॥९॥**

षड्विंशब्राह्मणे इषुसंज्ञके द्वे विष्टुती स्तः । अस्ति चेषुर्नामैकाहस्तस्य स्तोत्राणि ता**भ्यामिषुभ्यां व्यत्यासं** विदध्यादित्यर्थः ॥९॥

**तयोः पूर्वा श्येनस्याग्निष्टोमसाम्नि ॥१०॥**

**तयो**रिषुसंज्ञकयोः **पूर्वा** विष्टुतिः **श्येनस्यै**काह**स्याग्निष्टोमसाम्नि** भवेत् ॥१०॥

**सत्रेषु दशरात्रे सर्वाः प्रयुञ्जीताभिचरणीयां उद्धृत्येति शाण्डिल्यः ॥११॥**

अभिचारार्थां विष्टुतीर्वर्जयित्वा तद्व्यतिरिक्ताः **सर्वा** अपि विष्टुतीः **सत्रेषु**

---

2. C. ⁰पत्तेः for ⁰पत्तिः; my[2-3] तथा for अथ; C. after ⁰व्रते ins. अग्नि⁰

4. my[2-3] प्रथमायां for प्रथमां

5. T. मध्यम⁰, my[1] मध्यमां for मध्यमार्थे

11. C. om. त्रिवृतः

16. my[1,2] T श्येनैकाह⁰ for श्येनस्यैकाहस्य

20. my[2-3] ⁰चरार्थाः, T ⁰चरार्थ⁰ for ⁰चारार्थाः

**दशरात्रे** निष्कामोऽपि **प्रयुञ्जीते**त्यर्थः ॥११॥

**शाण्डिल्यायनः कुलायिनीम् ॥१२॥**

**उद्धृत्य प्रयुञ्जीते**त्यनुवर्तते । **अधरोत्तरमपावगतोऽपरुध्यते** (तां. ब्रा. २.३.७) इति कुलायिन्यां दोषश्रवणात्तामेकामुद्धृत्य तदन्याः सर्वा अभिचरणीयाश्च निष्कामेन प्रयोज्याः ॥१२॥

**भस्त्रां चोभौ ॥१३॥**

यं द्विष्यात्तस्य कुर्यात् । भस्त्राविष्टुतेर्द्वेष्यविषयत्वात् । तामप्युद्धरेदित्युभावप्याचार्यावाहतुः ॥१३॥

**धानंजय्यस्तामेव ॥१४॥**

**भस्त्रामेवोद्धरणीयां** मन्यते **धानंजय्यः** । तस्याः केवलं द्वेष्यैकविषयत्वात् । कुलायिनी तु प्रयोज्यैव यद्यपि तस्यां दोषः श्रूयते । तथापि गुणबाहुल्यमपि श्रूयते इत्यभिप्रायः ॥१५॥

इदानीं प्रयोगप्रकारमाह—

**पथ्याभिर्होतृषामाणि विदध्यादपथ्याभिरितराणि ॥१६॥**

इति । स्पष्टमेतत् ॥१६॥

**समाप्तासु ता एवादितः पुनः प्रयुञ्जीत ॥१७॥**

**समाप्तासु** पुनरप्यादितः पथ्यामुपक्रम्य पूर्ववत् प्रयुञ्ज्यात् ॥१७॥

**तथा कुर्वन् प्रागाथिकानि परिवर्तिन्या प्रथमस्येति शाण्डिल्यः ॥१८॥**

**तथा कुर्वन्** पुनः पुनः प्रयुञ्जान इत्यर्थः । तदानीं प्रथमस्याह्नः प्रागाथिकानि रथन्तरनौधसकालेययज्ञायज्ञीयस्तोत्राणि त्रिवृतः **परिवर्तिन्यैव** विष्टुत्या प्रयुञ्जीत ।

---

1. T. निष्कामे⁰ for निष्कामो⁰

3. $my^{2-3}$ रुध्यते for अपरुध्यते

4. $my^{1}$ ⁰चारणीयाः for ⁰चरणीयाः; $my^{2-3}$ C. अपि for च

11. T. तस्याः for तस्यां

21. $my^{2-3}$ C. प्रयुञ्ज्यात् for प्रयुञ्जीत

नोद्यतीकुलायिनीभ्यामित्यर्थः । तथा सति प्रगाथत्वविरोधः । तथा हि प्रगाथत्वं नाम पूर्वस्तोत्रीयां पूर्वमुक्त्वा तस्या उत्तमं पादं पुनरभ्यस्य तेन सहोत्तरस्तोत्रीयाकरणम् । तच्च कुलायिनीपक्षे सर्वथा न संगच्छते । कथम् । **तिसृभ्यो हिंकरोति । या मध्यमा सा प्रथमे** (तां. ब्रा. २.३.१) ति कुलायिनीस्वरूपम् । **तत्रेशानमिन्द्र तस्थुषो न त्वा वामन्यो दिव्यो न पार्थिव** (सा. ६८००-१ab; र. द. १b) इति मध्यमायाः प्रथमयोगे प्रगाथत्वविरोधः । एवमुद्यत्यामपि द्रष्टव्यम् । तत्पर्यायाणां संकीर्णस्थानत्वात् प्रगाथेषु च पूर्वोत्तरस्तोत्रीययोरेकदेशसंकराच्च ॥१८॥

**सकृत्सर्वाः समाप्य पथ्ययैव तत ऊर्ध्वमिति धानंजय्यः ॥१९॥**

स्पष्टम् ॥१९॥

**असमाप्तासु त्वपि होतृषामपथ्ययैव ॥२०॥**

**असमाप्तास्वपि** यदा मध्ये **होतृषामा**गच्छति तदा तत् **पथ्ययैव** कार्यम् ॥२०॥

**तथा कुर्वन् कुलायिनीं चेत् प्रयुञ्जीत**

**प्रथमस्याह्नो द्वितीयं पृष्ठं तया विदध्यात् ॥२१॥**

असमाप्तास्वपि होतृषाम पथ्यया **कुर्वन्** प्रथमेऽहनि कुलायिन्याः प्रयोगपक्षे तां वामदेव्यस्तोत्रे निवेशयेत् । त्रिवृतस्तावत् पञ्च विष्टुतयः । परिवर्त्तिनी उद्यती कुलायिनी इषुद्वयं चेति । तत्र कुलायिन्या उद्धारपक्षे न किंचिद् व्यसनम् । प्रयोगपक्षे तु स्वस्थानं तृतीयमाज्यस्तोत्रमतिलंघ्य वामदेव्ये निवेशः कार्यः । अन्यथा होतृषामणि रथन्तरे पथ्यावरुद्ध्ये निवेशमलभमाना द्वितीयेषु विष्टुतिर्वामदेव्ये निपतेत् । ततः को दोषः । अव्यवायेन प्रयोज्यमिषुद्वयं व्यपेतं स्यादिति दोषः ॥२१॥

**षष्ठस्याह्नः उक्थ्यमुत्तममुत्तमया त्रयस्त्रिंशस्य**

**विष्टुत्या विदध्यात् ॥२२॥**

---

6. my[1-4] C. °प्रयोगे for °योगे

17. C my[3] trans. उद्यती after कुलायिनी (L. 18)

19. T. C. my[3] आद्य° for आज्य°

**त्रयस्त्रिंशस्य** पञ्च विष्टुतयः । तत्रोत्तमा पञ्चमी विष्टुतिः वामदेव्ये निवेशिते पूर्ववदेव होतृषाम्णः पथ्यावरोधात् पुनरपि पथ्यामुपक्रम्य प्रयोगे सत्युत्तमोक्थ्ये तां पञ्चमीं निवेशयेदित्यर्थः । ननु च प्राप्तमेवेदं न वक्तव्यम् । सत्यम् । पुनः प्रयोगस्य निदर्शनार्थमुदाहरणमेतत् । एवमन्या अपि विष्टुतयो द्रष्टव्या इत्यभिप्रायः । केचित्त्वाहुः । सत्रादन्यत्रापि नियमार्थमेतत् सूत्रमुक्तम् । विष्टुतेः प्रतिष्ठाहेतुत्वात् । महावृक्षरूपस्य षडहस्यान्तमारूढानां प्रत्यवरोहानुरूपत्वाच्च ॥२२॥

**उक्तः प्रयोगो ब्राह्मणेन चतुश्चत्वारिंशे ॥२३॥**

**प्रयोग** इति जातावेकवचनम् । द्वौ प्रयोगावुक्तावित्यर्थः । प्रथमं तावच्चतुश्चत्वारिंशस्य तिस्रो विष्टुतीरधीत्यानन्तरमुक्तम् । आज्यानां प्रथमा पृष्ठानां द्वितीयोक्थानां तृतीयेति । अथ द्वितीयः प्रयोगो **याज्यानां सा होतुरि** (तां. ब्रा. ३.११.३) ति ब्राह्मणेनोक्तः तस्य चायमर्थः । होतुराज्यमुपक्रम्य त्रिष्वाज्येषु क्रमेण तिसृणां विष्टुतीनां प्रयोगः । पुनश्चतुर्थमाज्यमुपक्रम्य त्रिषु स्तोत्रेषु समाप्तिः । पुनश्चैवम् । इत्येवं चतुरावृत्तिभिस्तिसृभिर्विष्टुतिभिराज्यपृष्ठोक्थानि द्वादश स्तोत्राणि कार्याणीति सोऽयं द्वितीयः प्रयोगः ॥२३॥

तयोः समीषन्तीति संज्ञा ब्राह्मणे दर्शिता । तां पदान्तरोपश्लेषेण व्याचष्टे—

**सवनसमीषन्ती पूर्वः प्रयोगः स्तोत्रसमीषन्तीत्युत्तरः ॥२४॥**

---

1. T. नविशते, my[3] निवेशते for निवेशिते
3. my[2-3] om. न;
4. T. प्रवेशस्य for प्रयोगस्य
6. C. my[2-3] वृक्षाग्रमारूढानां प्रत्यवरोहणार्थत्वाच्चेत्याहुः for महा…⁰रूपत्वाच्च
8 my[1] प्रथम प्रस्तावः, T. my[4] प्रथमप्रयोगः for प्रथमं तावत्
9. my[1] T. उक्तः for उक्तम्
12. my[2-3] समाप्तेषु for समाप्तिः
14. my[2-3] om. सोऽयं
15. 16. my[2-3] ⁰समिच्छन्ती for ⁰समीषन्ती

इति । त्रीणि सवनानि समं गच्छन्तीति **सवनसमीषन्तीति** स्तुतिर्विशेष्या । त्रीणि स्तोत्राणि समं गच्छन्तीति स्तोत्रसमीषन्तीति ॥२४॥

**तथा कुर्यादहर्भाजि ॥२५॥**

यदा चतुश्चत्वारिंशस्तोमः कृत्स्नमहर्भजते व्याप्नोति तदानीमेतं प्रयोगं कुर्यादित्यर्थः । **अहर्भाजीति** सति सप्तमी ॥२५॥

**पथ्यामन्यत्र ॥२६॥**

यदा पुनरेकमेव स्तोत्रमेकं वा सवनं चतुश्चत्वारिंशो भजते न पुनः कृत्स्नमहस्तदानीं **पथ्यामेव** तत्र कुर्यादिति । तत्र प्रयोगद्वयमहीने सत्रे च भवति । ब्राह्मणे विशेषाश्रवणात् ॥२६॥

**अष्टाचत्वारिंशस्योत्तरया मैत्रावरुणस्याज्यं विदध्यात् ॥२७॥**

**अष्टाचत्वारिंशस्य** द्वे विष्टुती स्तः । तयो**रुत्तरया** मैत्रावरुणमाज्यं केवलं कार्यम् । नान्यत् किंचित् ॥२७॥

**सर्वाणि वा होतृकसामानि ॥२८॥**

यद्वा **सर्वाणि** होतृकाणां मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकानां सामानि कुर्यात् ॥२८॥

**मध्यमे मध्यमे वा सवनेषु ॥२९॥**

**मध्यमे** इति द्विवचनान्तम् । एतत् त्रिष्वपि सवनेष्वावृत्ति । स्तोत्राणां **मध्यमे मध्यमे** द्वे स्तोत्रे द्वितीयया कुर्यात् ॥२९॥

---

1. T. स्तोत्र° for सवन°
4. my[1] C. विभजते for भजते
   my[2-3] C. एव for एतं
7. C. चत्वारिंशेन for चत्वारिंशः
8. my[2-3] om. तत्र
11. my[2-3] °वरुणाज्यमेव for °वरुणमाज्यं;
12. C my[2-3] कुर्यात् for कार्यम्
17. my[1] T. C. इति for आवृत्तिः
18. T. C. द्वितीयां for द्वितीयया

**द्वितीयचतुर्थे वा ॥३०॥**

अथवा वृत्तिस्तोत्राणां चतुर्णां **द्वितीयचतुर्थे** स्तोत्रे तथा कुर्यात् ॥३०॥

**उत्तरे वा ॥३१॥**

यद्वोत्तरे तृतीयचतुर्थे इत्यर्थः ॥३१॥

एवं तावत् सत्रे विशेष उक्तः । तत्रैव दशरात्रव्यतिरिक्तेष्वहस्सु विशेषमाह—

**अदशरात्रेषु सत्रेषु पथ्या एवेति गौतमः ॥३१॥**

**सर्वा इति धानंजय्यः ॥३२॥**

स्पष्टे ॥३१-३२॥

इति द्राह्यायणश्रौतसूत्रे षोडशे पटले द्वितीयः खण्डः ॥२॥

---

3.4. my$^{2-3}$ T. उत्तमे for उत्तरे

5. my$^{3}$ विरोषम् for विशेषम्

6. my$^{2}$ आदश$^{0}$, my आद्वादश$^{0}$ for अदश

# तृतीयः खण्डः

अथ कल्पब्राह्मणविपया परिभापारभ्यते—

**तृचसूक्तानामादिग्रहणेन विधिरनादेशे ॥१॥**

इति । **उपास्मै गायता नर** (सा. ६५१) इत्यारभ्य तृचाः सूक्तानि एकर्चानि च क्रतुविषयतयाम्नातानि । तत्र सामविधानार्थं कल्पे वा ब्राह्मणे वा यत्र यत्र तृचसूक्तादिग्रहणं क्रियते तत्र सर्वत्र सूक्तानां तृचानां च विधिः । न केवलमृङ्मात्रस्येति मन्तव्यम् । कुतः । अन्यथा स्तोमविष्टुत्योरसंभवात् । तथा हि **पवस्व वाचो अग्रिय** (सा. ७७५) इति द्वितीयस्याह्नः **प्रतिपद् भवतीत्यादिपु** ब्राह्मणवाक्येषु यदि केवलमृङ्मात्रं गृह्यते तदा पञ्चदशादिस्तोमो न संभवेत् । तथावृत्तिस्तोत्रेषु केवलमृङ्मात्रग्रहणे सति स तिसृभिः स एकया स एकयेत्येवं तृचावलम्बिनी विष्टुतिर्न संभवेदिति । तत्र सूक्तपरिमाणं पञ्चर्चो भवतीत्यादिब्राह्मणवाक्यशेपादवगन्तव्यम् । किं च । बह्वृचानामार्षं सूक्तानुक्रमणमस्ति । तान्येवास्माकं सूक्तानीति न किंचिद् व्यसनमस्ति ॥१॥

**तृचोत्तमायां प्रतिलोमः ॥२॥**

तत्रैव कल्पे ब्राह्मणे वा यत्र तृचोत्तमा गृह्यते तत्र तृचस्य **प्रतिलोमः** प्रयोग उक्त इति मन्तव्यम् । यथा **यां समां महादेवः पशून् हन्यात् स नः पवस्व शंगव** इति प्रतिपदं कुर्यादि (तां. ब्रा. ६.९.६) त्यादि ॥२॥

**मध्यमायां सैव ॥३॥**

यत्र तृचस्य मध्यमा गृह्यते तत्र सैव केवलं मध्यमा ग्राह्या । यथादित्यानामयने व्यूढाग्निष्टोम दशरात्रे तृतीयाष्टमनवमेष्वहःसु कल्पकारः—**स न इन्द्राय यज्यवे** (सा. ६७३) इति गायत्रम् । **तव त्य इन्दो अन्धस** (सा. १२२६) **इति गायत्रम्** । **पवमानो रथीतमः** (सा. १३११) **इति गायत्रम्** (आ. क. १.१०.१६, २१-२२) इति । तत्र तृचेषु मध्यमाया एव ग्रहणम् ॥३॥

---

5. my[1-4] T. ⁰विशेषतया for ⁰विपयतया

10. my[1] T. ऋचा⁰ for तृचा⁰

11. C. ⁰वाक्यात् for वाक्यशेपात्

19. my[1-4] यथान्त्य आदित्या for यथादित्या⁰

23. my[2-3] सर्व⁰ for तत्र

**रेतस्यैकत्रिकस्य बहिष्पवमानम् ॥४॥**

एकत्रिकमेकाहमधिकृत्य कल्पकारः—**उपास्मै गायता नरः** (मा. ६५१) **इति बहिष्पवमानम्** (आ. क. ३.१६.१) इति तत्र तृचस्य ग्रहणे प्राप्त इदमुच्यते रेतस्याप्रथमैव केवलं बहिष्पवमानमिति ॥४॥

**उद्भिद्यनुरूपमेकर्चं शाण्डिल्यः ॥५॥**

**उद्भिद्ये**काहे सप्तिस्तोमं बहिष्पवमानम् । तत्र त्रयस्तृचा कल्पकारेण प्रतीकेनोपात्ताः । तत्र स्तोमविरोधाद् द्वयोर्ऋचोरुद्धारः कार्यः । तत्रेदमुच्यते—**अनुरूपं** तृच**मेकर्च्चं** कुर्यादिति ॥५॥

**स्तोत्रीयं गौतमधानंजय्यौ ॥६॥**

**स्तोत्रीयं** तृचमेकर्चं कुर्यादिति मतान्तरम् । स्तोत्रीयानुरूपाविति बहिष्पवमानस्य प्रथमद्वितीययोस्तृचयोः संज्ञे ब्राह्मणेन कृते ॥६॥

**उत्तमौ तृचौ बहिष्पवमाने साहस्रोत्तमो चातुर्मास्येषु ॥७॥**

साहस्रा नाम चत्वार एकाहाः । तेषामुत्तमे स्तोम (मे) चातुर्मास्येषु बहिष्पवमानविषये पञ्च तृचाः प्रतीकेन कल्पे विहिताः । तेषामुत्तमौ तृचौ कार्यौ । इतरे त्रय एकर्चाः कार्याः । सर्वत्र त्रिवृत्स्तोमसंपत्त्यर्थम् ॥७॥

**सर्वे सर्वस्वारे ॥८॥**

**सर्वस्वारे** क्रतौ बहिष्पवमाने त्रीणि सूक्तानि सप्तर्च्चनवर्च्चानि प्रतीकेनोपात्तानि । तानि सर्वाणि तृचाः कार्याः । अन्यथा त्रिवृत्स्तोमविरोधात् ॥८॥

**वामदेव्ययज्ञायज्ञीयारण्येगेयपृष्ठपूर्वाणां तृचकरणमुत्तरयोः पवमानयोरन्येषां चाविप्रतिषेधः ॥९॥**

---

6. $\text{my}^{1}$ सप्तमं, T. सप्तमी for सप्ति°

11. $\text{my}^{1}$ T. ब्राह्मणे for ब्राह्मणेन

13. $\text{my}^{1-4}$ T. सोम° for स्तोम°

15. $\text{my}^{1}$ संगत्यर्थम्, C संशयार्थम् for संपत्त्यर्थम्; $\text{my}^{3}$ स्तोत्र° for °स्तोम°

17. $\text{my}^{2-3}$ om. सप्तर्च्च

यत्र पवमानयोर्बहूनि सामानि विहितानि सर्वेषां तृचकरणे स्तोमविरोधश्च भवति । तत्रावश्यं कानिचित् सामानि तृचे कानिचिदेकर्चे इति व्यवस्थाश्रयणीया । तत्रेदमुच्यते । वामदेव्यादीनां तत्र तृचे करणम् । इतराण्येकर्चानि कार्याणीति । यदा त्वन्येषामपि तृचकरणे न स्तोमविरोधो भवेत्तदा तेषामपि तृचे करणम् । तदेतदुक्तम् **अन्येषां चाविप्रतिषेध** इति । यानि पूर्वं कदाचित् पृष्ठस्थाने भूत्वा पवमानयोर्भवन्ति तानि पृष्ठपूर्वाणि रथन्तरादीनि । उदाहरणं विश्वजिति ब्राह्मणे यद् **रथन्तरं प्रथमं बृहदुत्तमं मध्यम इतराणीति** । पवमाने रथन्तरं विहितम् । तथान्यथापि ब्राह्मणम् **अनुष्टुभि बृहद् भवति । यज्ञयज्ञीयमनुष्टुभि भवती** (तां. ब्रा. १८.५.२०) त्यादि ॥९॥

**एकमेकर्चं कुर्वन् प्रथमायामादितः कुर्यात् ॥१०॥**

एकं साम स्तोमविरोधादेकर्चं **कुर्वन् प्रथमायामेव** सामगणस्यादितः **कुर्यात्** । न द्वितीयायां न तृतीयायां वा न मध्ये नाप्यन्तत इति । यथा महाव्रते **पुरोजिती वो अधस इति गौरी वितं च मधु श्चुन्निधनं च श्यावाश्वाधीगवे** (आ. क. २.११.६) इति सामचतुष्टयं क्लृप्तं तत्रादितो गौरीवितमाद्यायामृचि भवति नान्यत् ॥१०॥

**द्वौ तस्यामेव ॥११॥**

द्वावेकर्चौ स्तोमविरोधात् कुर्वंश्च प्रथमायामेव कुर्यात् । यथा पृष्ठ्यस्य प्रथमेऽहनि आर्भवे गायत्रसंहिते सामनी ॥११॥

**त्रीनेकतृचे नानास्तोत्रीयासु ॥१२॥**

एकस्मिन्नेव तृचे त्रीन् एकर्चानव्यवधानेन कुर्वन् पृथगेव तिसृषु ऋक्षु क्रमेण कुर्यात् । यथा दशरात्रस्य नवमेऽहनि **परीतो षिञ्चता सुतम्** (सा. १३१३-१५) इत्यत्र कौल्मलबर्हिषार्कपुष्पदैर्घश्रवसानि त्रीणि सामानि तथा बृहतः पूर्वे त्रयः एकर्चा रथन्तरादुत्तर इति सूत्रोक्तानि च ॥१२॥

---

4. C $My^3$ om. तत्र befor तृचे; $My^3$ तृच⁰ for तृचे

6. C $My^{2\text{-}3}$ T. om. एतद्

12. TC. om. साम

18. $My^{2\text{-}3}$ om. कुर्वन् $My^{2\text{-}3}$ पृष्ठ्य for पृष्ठ्यस्य

**चतुर्णां प्रथमायां द्वावितरौ नानोत्तरयोः ॥१३॥**

एकस्मिन्नेव तृचे यदा चत्वारि सामानि एकर्च्चानि कर्तुमिष्यन्ते तदा तेषामादितो द्वे सामनी प्रथमायामुत्तरयोरितरे द्वे इति । उदाहरणं समूढपृष्ठ्यषडहे तृतीयेऽह्नि माध्यंदिने बृहत्यामभिसोमायां पौरुमद्गं प्रथमायां तस्यामेवाभीवर्तः कालेये (?यम्) (आ. क. १.१०.१) ॥१३॥

**माध्यंदिने चेदेको द्वौ वा बृहत्यामेव ॥१४॥**

यदा **माध्यंदिने** पवमाने **एको द्वौ** वा एकर्च्चौ कर्तुमिष्टौ नाधिकम् तदा **बृहत्यामेव** तौ कार्यौ । न गायत्र्याम् । उदाहरणम् वाजपेयाप्तोर्यामादीनि ॥१४॥

**त्रीन्यतरस्यां संभवेयुः ॥१५॥**

माध्यंदिने पवमाने **त्रीने**कर्च्चान् कर्तुमिच्छन् गायत्रीबृहत्योर्मध्ये **यतरस्यां** ते त्रयः **संभवे**युस्तस्यां कुर्यात् । न बृहत्यामेवेति नियमः । **त्रीनि**ति त्रिप्रभृतीनामुपलक्षणम् । उदाहरणम्–पुनः स्तोमस्य माध्यंदिनः पवमानस्तत्र षट्सामानि विहितानि । तेषां त्रीणि तृचेषु त्रीण्येकर्च्चेषु भवन्ति । तथा द्वितीयगौतमचतुष्टोमे पवमाने अष्टिस्तोमः । तत्र षट्सामानि । तेषां पञ्चैकर्च्चाः गायत्रीबृहत्योर्विभज्य भवन्ति ॥१५॥

**अनध्यासा चेद् द्वयोरन्यतरं गायत्र्यां धानंजय्यः ॥१६॥**

साध्यासा अनध्यासा चेति द्विविधा बृहती । **परीतो षिञ्चता सुतम् अभि सोमास आयवः** (सा. ८५६) इति द्वे **बृहत्यौ** साध्यासे । अन्याः सर्वा अनध्यासाः । अध्यास इति तयोर्बृहत्योरुपरिष्टादधीतं द्विपदाद्वयमुच्यते । **नृभिर्येमाणो हर्यतो विचक्षणो**

---

2. C My$^{2-3}$ befor एकस्मिन् add : एकतृच इत्यनुवर्तते ।

3. C My$^{2-3}$ om. समूढ$^{0}$ · · · · · कालेये (L. 5)

7. My$^{1,4}$ T. om. पवमाने My$^{1,4}$ T. तदानीं for तदा

8. My$^{2-3}$ $^{0}$र्यामाविति for र्यामादीनि

10. My$^{2-3}$ इच्छेत् for इच्छन्

14. My$^{1,4}$ T. अष्टौ स्तोमाः for अष्टिस्तोमः

19. My$^{2-3}$ अधीता, C अधिश्रितो for अधीतं; My$^{2-3}$ C om. द्वयम्

**राजा देवः समुद्रियः** इति तथा **परिस्वानश्चक्षसे देवमादनः क्रतुरिन्दुर्विचक्षण** इति । एवं स्थिते इदमुच्यते । यद्यनध्यासा बृहती स्यात् तदा द्वावेकर्च्चौ कुर्वन् तयोरन्यतरस्यां कुर्यात् । इतरं गायत्र्यामिति ॥१६॥

**उभौ बृहत्यां शाण्डिल्यः ॥१७॥**

**उभावपि बृहत्यामेव** कर्तव्याविति **शाण्डिल्यः** । यथा छन्दोमदशरात्रे चतुश्चत्वारिंशे द्वितीयेऽहनि माध्यंदिने पवमाने **पुनानः सोम धारये** (सा० ६७५) त्यनध्यासायां बृहत्यामेकर्च्चः । अपरौ गायत्र्याम् । उभौ वा बृहत्याम् इति ॥१७॥

**साध्यासायां चेदेकोऽध्यास्यायामेवान्ततः ॥१८॥**

यदि साध्यासायां बृहत्यामेकर्च्चः कर्तुमिष्यते तदाध्यास्यायामेवान्ततः सामगणस्यैकर्च्चः कार्यः । यथा महाव्रते माध्यंदिने पवमाने बृहत्यां सामचतुष्टयं क्लृप्तम् । तत्र चतुर्थं सामैकर्च्चम् ॥१८॥

**द्वौ तस्यां चैवादितश्च ॥१९॥**

यदि साध्यासायां द्वावेकर्च्चौ भवतस्तदाध्यास्यायामन्ततः एकः प्रथमायामादितः एकः कार्यः । यथा पृष्ठ्यस्य तृतीयेऽहनि बृहत्यां सामचतुष्टयम् । तत्र प्रथमं प्रथमायाम् । अन्त्यमध्यास्यायाम् ॥१९॥

**सा शशकर्णक्लृप्ता ॥२०॥**

एवं भूता बृहती शशकर्णक्लृप्तेत्युच्यते । यथा शशकर्णो मध्यतः स्थूलो मूलतोऽग्रतश्चाणीयानेवमेषा बृहत्यादितोऽन्ततश्चैकर्च्चकरणात् मध्ये तृचकरणाच्च ॥२०॥

---

2. My$^{1}$ T. om. तदा .... एकर्च्चः (L. 9); My$^{4}$ द्वयोरेकर्च्चयोरेकं गायत्र्याम् अन्यद्बृहत्यामिति धानंजय्यमतम् for द्वावेकर्च्चौ ... गयत्र्यामिति (L. 3)

4. My$^{4}$ om. उभौ ... कार्यः (L. 10)

10. My$^{1}$ T. My$^{4}$ after कार्यः । add :—यथास्य तृतीयेऽहनि साध्यासायां चेदेकोऽध्यासायामेवान्तत इति । यदि अध्यासा तदा अध्यासायामेवान्ततः सामगणस्य एकर्च्चः कार्यः ।

17. My$^{2-3}$ शशस्य for शश$^{0}$

**त्रिष्वध्यास्या लुप्येत ॥२१॥**

यदा साध्यासायां त्रय एकर्च्चाः कर्तुमिष्टाः तदानीमध्यास्या लुप्यते। न प्रयोक्तव्येत्यर्थः। तदानीमितरास्वेव स्तोत्रीयासु त्रयोऽप्येकर्च्चाः क्रमेण भवेयुः ॥२१॥

**तृचे च ॥२२॥**

लुप्यत इत्यनुवर्तते। तृचे चापेक्षितेऽध्यास्या लुप्यते। कोऽर्थः। यदाध्यास्याया-मेकर्च्चकरणं नापेक्षितं तृचे एव सर्वाणि सामानि कर्तुं शक्यन्ते। समस्तोमत्वात्। तदा च लुप्यतेऽध्यास्येति। उदाहरणम्—चतुर्वीरचतूरात्रे तृतीयचतुर्थयोरह्लोश्चतु-र्विंशे पवमाने बृहती ॥२२॥

**चतुरो नाना स्तोत्रीयासु ॥२३॥**

साध्यासायां बृहत्यां **चतुर** एकर्च्चान् कुर्वन्नानैव चतसृषु **स्तोत्रीयासु** तान् कुर्यात्। तत्राध्यास्या चतुर्थीस्तोत्रीया। उदाहरणम्-व्यूढाग्निष्टोमदशरात्रे तृतीयेऽहनि पौरुमद्गगौतमान्तरिक्षाष्कारणिधनानीति ॥२३॥

**आर्भवे चेदेकोऽनुष्टुभि ॥२४॥**

आर्भवे पवमाने यद्येकर्च्चः कर्तुमिष्टः तदानीमनुष्टुभ्येवासौ कार्यः। महाव्रते गौरीवितमुदाहरणम् ॥२४॥

**द्वि प्रभृतीन् ककुप्प्रभृत्यानन्तर्येण ॥२५॥**

यदा पुनः द्वौ त्रयश्चत्वारो वा एकर्च्चाः कर्तुमिष्यन्ते तदानीमार्भवे ककुप्प्रभृ-तिष्वानन्तर्येण तान् कुर्यात्। प्रकृतिभूते ज्योतिष्टोमे सफपौष्कल उदाहरणम् ॥२५॥

ननु च प्रकृतिभूते ज्योतिष्टोमे काकुभ औष्णिहे च द्वौ तृचावाम्नातौ। **पवस्व मधुमत्तम** (सा. ६९२-३) **इन्द्रमच्छे** (सा. ६९४-६) ति। तत्र सफपौष्कल-

---

8. My[2-3] om. च
11. My[2-3] om. कुर्वन्
21. T. तथा for तत्र

योरेकर्च्चकरणे सति तृचाम्नानमनर्थकं स्यादत आह—

**उष्णिक्ककुभोस्तृचैकर्च्चत्वमव्याघातेन ॥२६॥**

इति। स्तोमस्याव्याघातेनाविरोधेन तयोस्तृचयोस्तृचत्वमेकर्च्चत्वं च संपादनीयम्। यदा सफपौष्कलयोस्तृचे करणं विकृतिषु शक्यते स्तोमानुगुण्यात्तदानीमेव तृचकरणम्। तदर्थमेव च प्रकृतौ तृचाम्नानम्। न प्रकृत्यर्थमिति मन्तव्यम् ॥२६॥

**इति द्राह्यायणश्रौतसूत्रे षोडशे पटले तृतीयः खण्डः ॥३॥**

---

1. My[1] एकर्च्चा° for एकर्च्च°

4. T. शक्यं for शक्यते

## चतुर्थः खण्डः

**वामदेव्यं तु तृचे विश्वजिच्छिल्पे यज्ञायज्ञीयप्रभृतीनि च त्रीणि ॥१॥**

विश्वजिच्छिल्पो नामैकाहस्तस्यार्भवोऽष्टादशस्तोमस्तत्र सामदशकं विहितम्। तत्र चत्वारि तृचेषु कार्याणि षडेकर्च्चानि। अन्यथा स्तोमविरोधात्। तत्र **द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येणे** (द्रा. श्रौ. १६.३.२५) ति वचनात् ककुप्प्रभृति षण्णां साम्नामेकर्च्चकरणे प्राप्ते तदन्तर्गतानां वामदेव्ययज्ञायज्ञीयवारवन्तीयानामप्येकर्च्चकरणं प्राप्तम्। तन्निषेधति। **वामदेव्यं तृचे** कुर्यात्। **यज्ञायज्ञीयप्रभृतीनि च त्रीणि** तृचेषु कुर्यात्। इतराणि षडेकर्च्चानि यज्ञायज्ञीयप्रभृतिद्वयं चेति वक्तव्ये **त्रीणीति** वचनं पवमानान्त्यस्य कावस्य तृचकरणनियमार्थम्। ननु च सिद्धमेवैतत् वामदेव्ययज्ञायज्ञीयारण्येगेयानां तृचकरणम्। पूर्वमुक्तत्वात्। सत्यम्। **मध्येनिधनमैडमार्भव** (द्रा. श्रौ. १६.४.५) इत्युत्तरत्र विशेषविधेरान्धीगवमपि पक्षे तृचे स्यात्। तत्परिसंख्यानार्थं सूत्रम् ॥१॥

**संभवति स्तोमेऽन्त्यं सर्वत्र तृचे ॥२॥**

**सर्वत्र** तावदुत्तरयोः पवमानयोरन्त्यं साम **तृच** एव कार्यं **संभवति स्तोमे**। असंभवे तु तच्चान्यच्च सर्वमेकर्च्चेष्वेव कार्यम्। यथैकत्रिकस्तोमे ॥२॥

**द्वितीयं चेदरण्येगेयम् ॥३॥**

यदि पवमानान्त्येन सह यत्किंचिद् द्वितीयमपि सामतृचे कर्तुं शक्यते तदानीमरण्येगेयमेव तथा कुर्यात्। नान्यत् सामेत्यर्थः ॥३॥

**तदभावे यदन्त्यात् पूर्वम् ॥४॥**

यदा द्वितीयमरण्येगेयं न विद्यते तदानीं पवमानान्त्यात् पूर्वमनन्तरं यत् साम तत्तृचे कुर्यात् ॥४॥

---

4. C. आर्भवे° for आर्भवो°

7. My[1] C. एकर्च्चा for एकर्च्च°

10. My[2-3] om. पवमानान्त्यस्य

21. My[3] यदि for यदा

**एकर्च्चस्थानेष्वनापद्यमानानि तृचेषु कुर्यात् गायत्रं त्रिणिधनं मध्यंदिने मध्येनिधनमैडमार्भवे ॥५॥**

**संभवति स्तोम** इत्यनुवर्तते। माध्यंदिने पवमाने गायत्रं त्रिणिधनं च यौधाजयादिकं सामान्यतस्तावत् तृच एव कुर्यात्। तथार्भवे पवमाने मध्येनिधनमैडमान्धीगवादिकं तृच एव कुर्यात्। किमेवं सर्वत्र। नेत्याह-**एकर्च्चस्थानेष्वनापद्यमानानीति**। अयमर्थः। यत्र पवमानान्त्यं वर्जयित्वा सर्वाण्येव मामान्येकर्च्चानि भवन्ति यदेकर्च्चस्थानम्। यथा त्रिवृत्स्तोमेषु क्रतुष्वार्भवः पवमानो यथा वादित्यानामयने व्यूढाग्निष्टोमदशरात्रे प्रत्यहमुत्तरौ पवमानौ। तत्र गायत्र्यादीन्यप्येकर्च्चेष्वेव कुर्यात्। तान्येकत्र तृच एव ॥५॥

**अनादिष्टतृचैकर्च्चान्येतेनोद्देशेन कल्पयेत् ॥६॥**

कल्पकारेण यानि नादिश्यन्ते इदमेकर्च्चे स्यादिद तृच इति तानि सामानि यथोक्तेन प्रकारेण **कल्पयेदि**त्यर्थः ॥६॥

**ककुब्यत्र मध्यंदिन एकर्च्चस्तस्यामन्यत्रोत्तमाद् व्रात्यस्तोमात् ॥७॥**

**यत्र क्रतौ मध्यंदिन** ककुप्छब्दः क्रियते तत्र तस्यामेकर्च्चः कार्यः। यथा व्रात्यस्तोमे **पवस्व मधुमत्तमः** (सा. ६९२-३) इति कालेय (आ. क. १.१७.३) मिति कल्पकारः। तत्र षोडशो माध्यंदिनः पवमानः षट् सामानि विहितानि। तेषामेकमवश्यमेकर्च्चे कार्यम्। तत् ककुभि कर्तव्यमिति। उत्तमे व्रात्यस्तोमे चतुर्विंशो माध्यंदिनः पवमानोऽष्टौ च सामानीति सर्वाणि तृचे कार्याणि। **पवस्व मधुमत्तम** इति कालेयमपि तृचे कार्यम्। तदेतदाहा**न्यत्रोत्तमात् व्रात्यस्तोमा**दिति ॥७॥

---

11. My[1] T. om. कल्पकारेण ··· इत्यर्थः (L. 12)

13. My[1] om. अन्यत्र ··· षट् T. om. कुकुब् ··· षट् (L. 17);

18. My[1] T. एवम् for एकम्; C My[3] after तत् ins. तृचं; My[2] तत्त्वत्र for तत्; C. वक्तव्यम् for कर्तव्यम्

**द्विपदा ककुब्वत् तत्स्थाने ॥८॥**

व्रात्यस्तोमानामार्भवे पवमाने ककुभः स्थाने **परि प्रधन्वेति** द्विपदा विहिता। सा तद्वद् भवेदित्यतिदेशोऽयम्। किं प्रयोजनम्। **द्विप्रभृतीन् ककुप्प्रभृत्यानन्तर्येण** (द्रा. श्रौ. १६.३.२५) ति यत् पूर्वमुक्तं तस्य प्रवृत्तिः। तेन द्विपदाप्रभृत्यानन्तर्येण साम्नामेकर्च्चकरणमिति सिद्धं भवतीति ॥८॥

**पूर्वयोर्व्रात्यस्तोमयोरार्भवे गायत्रमेकर्च्चे धानंजय्यस्तृचे मरुतां संस्तोभम् ॥९॥**

**पूर्वयोर्व्रात्यस्तोमयोरार्भवः** पवमानः षोडशस्तोमः अष्टौ च सामानि। तत्र चत्वार्यवश्यमेकर्च्चे कार्याणि। अन्यथा स्तोमविरोधात्। तत्र **द्विप्रभृतीन् ककुप्प्रभृतीनिति** वचनाच्चतुर्णामेकर्च्चकरणे कर्तव्ये सति मरुतां संस्तोभस्य साम्नस्तत्रान्तर्भावादेकर्च्चकरणं प्राप्तं प्रतिषेधति। **गायत्रमेकर्च्चे धानंजय्यस्तृचे मरुतां संस्तोभमिति**। तत्र हेतुर्मरुतां संस्तोभस्य विधिः ॥९॥

**विपरीतं शाण्डिल्यः ॥१०॥**

तत्र हेतुर्गायत्रस्य क्वचिदप्यप्रच्युतेरभ्यर्हितत्वम् ॥१०॥

**चतुर्ऋचानामावृत्तिष्वन्त्यामुद्धरेत् ॥११॥**

**चतुर्ऋचानां** सूक्तानाम् **इन्द्रमिद्गाथिनो वृहत्** (सा. ७९६) इत्यादीनामावृत्तिस्तोत्रस्थानगतानामन्त्यामृचमुद्धरेत्। अन्यथा विष्टुतेरसंभवात् ॥११॥

**तृतीयां सर्वस्वारस्वरसाम्नोः ॥१२॥**

सर्वस्वारे क्रतौ स्वरसाम्नि चाज्यस्तोत्रे चतुर्ऋचे सूक्ते **तृतीयामृचमुद्धरेत्** ॥१२॥

---

4. My[4] om. यत्
   T. उक्तस्य for उक्तं तस्य; TC. वृत्तिः for प्रवृत्तिः
5. My[1] T एकर्च्चा° for एकर्च्चे°
10. My[1] एकर्च्चे C, एकर्च्चा for एकर्च°
11. My[1] °करणे प्राप्ते for °करणं प्राप्तं; My[2-3] C. after प्राप्तं add :—
    एकर्च्चस्थानेष्वनापद्यमानानीति वचनादेवं प्राप्ते।
16. My[4] आवर्ति° for आवृत्ति°;
17. C My[2-3] om, °स्थान°

**प्रवामर्च्चन्तीति द्वितीयाम् ॥१३॥**

**प्रवामर्चन्ती** (सा. १७०३) ति चतुर्ऋचे सूक्ते **द्वितीयाम्** उद्धरेत्। सर्वस्वारस्वरवर्जम्। पूर्वसूत्रेण विशेषविधानात् ॥१३॥

**सुषमिद्ध इत्यत्रिवसिष्ठशुनकण्वसंकृतिवादयश्वानां तानूनपातीम् ॥१४॥**

अत्रिवसिष्ठादिगोत्राणां यजमानानां **सुषमिद्धः** (सा. १३४७-९) इति चतुर्ऋचे तनूनपाद्वत्यां **मधुमन्तं तनूनपात्** (१३४८) इत्येतामृचमुद्धरेत् ॥१४॥

**नाराशंसीमन्येषाम् ॥१५॥**

अत्रिवसिष्ठादिव्यतिरिक्तगोत्राणां यजमानानां **नाराशंसमिह** प्रियम् (सा. १३४९) इत्येतां **नाराशंसी**मृचमुद्धरेत् ॥१५॥

**समवाये तु भूयसां कल्पः ॥१६॥**

अत्रिवसिष्ठादीनामन्येषां च गोत्राणां सत्रेषु **समवाये** सति भूयसां कल्प आदरणीयः। यदि बहवो वासिष्ठास्तदा तानूनपातीमुद्धरेत्। अन्येषां यद्यपि नाराशंसी प्रयोज्या तथापि भूयसा न्यायेन सैव प्रयोज्या ॥१६॥

**गृहपतेर्वा प्राधान्यात् प्राधान्यात् ॥१७॥**

यस्य **गृहपतेः** कल्प आदरणीयस्तस्य **प्राधान्या**दिति। ननु च भिन्नकल्पानां नैव सत्रासनं विद्यत इति मीमांसकाः। सत्यम्। कल्पसूत्रकारास्तु सर्वेषां विद्यत एवेत्याहुः ॥१७॥

**इति द्राह्यायणश्रौतसूत्रे षोडशे पटले चतुर्थः खण्डः ॥४॥**

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः।
द्वितीये दशके षष्ठे संतन्यादि निरूपितम् ॥

**इति श्री द्राह्यायणश्रौतसूत्रदीपे श्री धन्विविरचिते षोडशः पटलः समाप्तः ॥१६॥**

---

2. My[1] T. om. सर्वस्वारस्वरवर्जम् (L. 3.)
3. My[3] विरोध° for विशेष°;
7. C. om. ऋचम्
10. My[1] T. om. ऋचम्°
14. C. तदा for तथा; C. भूयसां for भूयसा
17. C. सर्वं My[1] सर्वे for सर्वेषां
21. My[2·3] C मध्यमे for द्वितीये

सप्तदश: पटल:

## प्रथम: खण्ड:

**वर्द्धमानेषु स्तोमेषु ॥१॥**

त्रिवृदादिस्तोमानां दाशरात्रिकाणामेव ब्राह्मणे पर्यायविष्टावक्लृप्तिराम्नाता । अन्येषामनाम्नातपर्यायाणां विष्टावानां पर्यायविष्टावक्लृप्तिं वक्ष्यति । प्रथमं तावत्तेषु पर्यायेषु विष्टावक्लृप्तिं दर्शयितुमारभते **वर्द्धमानेष्विति** । दशरात्रस्तोमानपेक्ष्य ये वर्द्धन्ते दशिद्वादशिप्रभृतयस्ते वर्द्धमानास्तेषु यद् वक्तव्यं तदुच्यत इति अर्थः । वर्द्धमानग्रहणमष्टिसप्तिप्रभृतीनां हीनानामप्युपलक्षणम् ॥१॥

तत्र तावत् समा विषमाश्चेति द्विविधाः स्तोमाः । तेषां पर्यायक्लृप्तिं वक्ष्यति । प्रथमं तावत् तेषु पर्यायेषु विष्टावक्लृप्तिं दर्शयति—

**प्रथमस्य पर्यायस्य प्रथमा तृचभागा । तस्यास्त्रिर्वचनम् ॥२॥**

इति । प्रथमपर्यायसंबन्धिनी **प्रथमा ऋक् तृच भागेति** संज्ञां भजते । **तस्यास्त्रिर्वचनं** कार्यम् । एकैव सती त्रिर्वचनात् तृचरूपं भजत इति तृचभागेत्यन्वर्थेयं संज्ञा ॥२॥

**मध्यमावापस्थानम् ॥३॥**

त्रिर्वचनं शिष्ट्वा प्रथमपर्यायसंबन्धिनो येऽभ्यासाः तेषा**मावापस्थानं मध्यमे**त्यर्थः । तत्राविशेषात् सर्वेषामभ्यासानां तत्रावापे प्राप्तेऽन्त्यमेकमभ्यासं परिशिष्येति बोद्धव्यम् । अन्यथोत्तमाया ऋचः पर्यायेण सम्बन्धो न स्यात् ॥३॥

---

5. C My$^{2-3}$ om. वक्ष्यति . . . विष्टावक्लृप्ति (L. 6.)

7. My$^{1}$ C T. दशद्वादश$^{0}$ for दशिद्वादशि$^{0}$; C यद्यत्कल्पं for यद्वक्तव्यं My$^{1,4}$ CT. शेषः for अर्थः;

8. My$^{2-3}$ ins. $^{0}$षष्टि$^{0}$ after सप्ति$^{0}$

9. My$^{1}$ विपर्यास$^{0}$ for पर्याय$^{0}$;

10. My$^{1-2}$ T. om. पर्यायेषु$^{0}$

12. My$^{2-3}$ om. ऋक्

13. My$^{3}$ तृचत्वम् उपलभ्यते, My$^{2}$ तृचत्वमुपलक्षते for तृचरूपं भजते

16. C My$^{2-3}$ त्रिर्वचनावशिष्टाः, My$^{1}$ त्रिषु वचनं for त्रिर्वचनं शिष्ट्वा

**उत्तमा परिचरा ॥४॥**

प्रथमे पर्याये **उत्तमा** ऋक् **परिचरेति** संज्ञां लभते। या सकृद् वचनेनैव प्रायेण चरति न पुनः पुनरभ्यस्यते सा परिचरेति ॥४॥

**परिचरा तृचभागावापस्थानमिति मध्यमे ॥५॥**

**मध्यमे** पर्याये ता एव तिस्रः स्तोत्रीयाः क्रमेण परिचरादिसंज्ञां लभन्ते ॥५॥

**आवापस्थानं परिचरा तृचभागेत्युत्तमे ॥६॥**

**उत्तमे** पर्याये ता एव तिस्रः ऋचः क्रमेणावापादिसंज्ञां लभन्ते। ता एताः संज्ञाः दाशरात्रिकेष्वपि बोद्धव्याः। ब्राह्मणे कथनात् ॥६॥

**एते विष्टावाः ॥७॥**

एवं ये प्रति पर्यायं त्रयो विभागा उक्तास्ते **विष्टावा** इत्यर्थः। एवं पर्यायविभागे सूत्रकारस्य किं प्रमाणमिति चेत् एकविंशादिस्तोमेषु तथैव ब्राह्मणे क्लृप्तिरिति ब्रूमः। क्लृप्तेन हि प्रकारेण कल्प्यं कल्पयितुं न्याय्यम्। किं च अत्र जैमिनिसूत्रे श्रुतिरप्युपन्यस्ता—**त्रिप्रायणा स्तोमास्त्रिमध्यास्त्र्युदयना भवन्तीति विज्ञायत** इति ॥७॥

अथ यत्र विष्टावा न सन्ति पर्यायास्तु विद्यन्ते। यथा त्रिकस्तोमे त्रिवृतश्चोद्यत्यां विष्टुतौ। तत्र कथं पर्यायधर्मः कुशाविधानं कार्यम्। अत्र आह—

**तदभावे तृचभागास्थानेषु पर्यायाणां पर्यायाः स्युः ॥८॥**

इति स्तोमान्तरे तावद् विष्टावाः पर्यायाश्चोभये वा पृथक् पृथक् स्थानेषु

---

5. My[1-2] पर्यायेण for पर्याये; My[1] om. ता एव; My[4] om. एव

9. T. ब्राह्मणेन for ब्राह्मणे

13. My[5] कल्पं for कल्प्यं; C. दर्शयितुं for कल्पयितुं

14. My[1] T. त्रिष्प्रायणा for त्रिप्रायणा; My[2-3] °मध्यमा for °मध्या

17. C. पर्यायाणां for पर्यायधर्मः; T. trans. तत्र after कथं
My[2-3] CT. अतः for अत्र

19. C. उभयं for उभये; My[2-3] ins. अपि after उभये T. om. one पृथक्

कुशाभिर्गणनीयाः । तत्र नव स्थानानि भवन्ति । यथोक्तमु**दगग्रं प्रथमं विष्टावम्** (द्रा. श्रौ. ५.२.१२) इत्यादि । तथा एवं विधाः पर्याया उत्तरोत्तरा इति । तत्र त्रिकस्तोमे विष्टावाभावात् पर्यायाणामेव स्थानत्रये गणनमपेक्षितम् । कानि तानि स्थानानीत्यपेक्षिते इदमुच्यते । स्तोमान्तरे पर्यायाणां यानि तृचभागास्थानानि—तृचभागागणनस्थानानीत्यर्थः—तेषु त्रिकस्तोमस्य पर्यायाः स्युः । पर्यायास्तत्र गणनीयाः स्युरित्यर्थः । एवं सति पर्यायाणामुत्तरोत्तरदेशत्वं पूर्वानुपयुक्तस्थानपरिग्रहश्च सिद्धो भवतीत्यभिप्रायः ॥८॥

**यथा वैकः पर्यायः ॥९॥**

अथवा स्तोमान्तरेष्वेकः **पर्यायो** यादृशो येषु स्थानेषु भवति तेषु स्थानेषु त्रिकस्तोमपर्यायाः स्युः । एतदुक्तं भवति । एकपर्यायसंबन्धिषु तृचभागावापपरिचरास्थानेष्विति । स्पष्टं चेदं निदानकारेणोक्तम् **त्रिवृत्त उद्यत्याः कुशाविधाने विप्रतिपद्यन्ते । यथैकः पर्याय इत्येके । तृच भागास्थानेषु पर्यायाणां पर्यायाः स्युरित्येके** (नि. १.११.) इति ॥९॥

**नैकिनि पर्याया विद्यन्ते । तथा त्रिके विष्टावाः ॥१०॥**

स्पष्टम् ॥१०॥

**त्रिवृतश्चोद्यत्याम् ॥११॥**

त्रिवृत्स्तोमस्योद्यत्यां विष्टुतौ च विष्टावा न सन्ति । पर्यायस्य तृचे विभागाभावात् ॥११॥

इदानीं समानां विषमाणां च भेदेन पर्यायक्लृप्तिं वक्ष्यन् समलक्षणं तावदाह—

**समेषु समः प्रयोगः स्तोत्रीयाणाम् ॥१२॥**

**समेषु** स्तोमेषु **स्तोत्रीयाणां** त्रिषु पर्यायेषु समशो विभज्य प्रयोगो भवति ।

---

4. C. °क्षितम् for °क्षिते; My[1] TC °भागानां for °भागा°

5. C एतेषु for तेषु

6. My[1,] TC. om. स्युः My[1-3] उत्तरोत्तरं for उत्तरोत्तर°

9. My[4,3,4] om. भवति तेषु स्थानेषु; T. om. भवति and स्थानेषु

20. My[1] M. संप्रयोगः for समः प्रयोगः

एतदुक्तं भवति। यत्र समशस्त्रेधा विभागः शक्यते ते समा इति। समलक्षणमिदं स्पष्टमाह निदानकारः—**यस्त्रैधं व्यूह्यमानाः समाः पर्याया भवन्ति। स समस्ततोऽन्यो विषमः** (नि. १.८) इति। समलक्षणकथनादेवार्थात् विषमा लक्षिताः ॥१२॥

तानेव द्विविधान् विभजति—

**एकैकाधिशयेऽवधिका द्वे द्व्यधिशयेषु ॥१३॥**

इति। **एकाधिशयेष्वेका** स्तोत्रीयातिरिच्यते। किमुक्तं भवति। येषु समविभागस्याशक्तेरेकातिरिच्यते (ते) एकाधिशया नाम विषमाः। यत्र द्वे अतिरिच्येते ते द्व्यधिशया नाम विषमा इति। इदमपि लक्षणकथनम्। अत्र निदानकारः—**य एकया समतामतिक्रामति स एकाधिशयः** द्वाभ्यां द्व्यधिशयः (नि. १.८) इति ॥१३॥

**ते विषमाः ॥१४॥**

इति। **ते** एकाधिशया द्व्यधिशयाश्च **विषमा** इति कण्ठेनैवोक्तं विस्पष्टार्थम् इति। एवं तावत् समविषमलक्षणमुक्तम् ॥१४॥

अथ विषमेषु तत्सजातीयात् समस्तोमात् पर्यायसंहारं वक्ष्यन् सजातीयत्वं नाम युग्मत्वमयुग्मत्वं चेति मन्वानस्तल्लक्षणमाह—

---

2. My$^{1-3}$ T $^0$मानः for $^0$मानाः; My$^{2-3}$ त्रेधा for त्रैधं

5. My$^{2-4}$ द्वेधा for द्विविधान्; C. एवं for एव

9. C. तत्र for अत्र

10. My$^{1,3}$ एकया for एका$^0$; My$^{1-3}$ T. om. द्वाभ्यां द्व्यधिशयः

12. T. om. ते विषमा इति

13. My$^{2-3}$ तेन for कण्ठेन T. विस्पष्टम् for विस्पष्टार्थम्

15. My$^4$ $^0$सजातीय$^0$ for $^0$सजातीयात्

16. My$^1$ T. My$^4$ वेति for चेति

**युग्मायुक्ता द्व्युत्तरीभावेण ॥१५॥**

इति युग्मत्वमयुग्मत्वं च **द्व्युत्तरीभावेण प्रवर्तते** ॥१५॥
तदेव दर्शयति—

**अयुज एकिप्रभृतयः ॥१६॥**

इति। **एकिप्रभृतयो** द्व्युत्तरा **अयुज** इत्यर्थः। यथैकी त्रिकः पञ्चकः सप्तक इत्यादयः स्तोमाः ॥१६॥

**द्विकप्रभृतयो युजः ॥१७॥**

**द्विकप्रभृतयो** द्व्युत्तरा युग्मा इत्यर्थः। यथा द्विकश्चतुष्कष्षट्कः इत्यादयः ॥१७॥

ननु चानर्थकमेव युग्मायुग्मलक्षणकथनम्। यदि समो विषमश्च प्रत्येकं युग्मायुग्मरूपेण द्विविधः स्यात् तदानीं युग्मात् समादयुग्मे विषमे पर्यायं संहरेदित्येवं विशेषणार्थं लक्षणकथनं सार्थकं स्यात्। नान्यथा इत्याशङ्कामपनुदन्नाह—

**त्र्युत्तरीभावेनोभयेषां समवैषम्यम् ॥१८॥**

इति। **उभयेषां** युजामयुजां च साम्यमस्ति। तथैव वैषम्यं चास्ति। **समो** विषमश्च प्रत्येकं युग्मायुग्मरूपेण द्विविध इत्यर्थः ॥१८॥

---

1. My$^{4}$ °युक्तत्वं for °युक्ताः, My$^{1,4}$ T. after भावेण add वर्तते, My$^{2-3}$ C वर्तन्ते
2. T. इति युग्मत्वं for अयुग्मत्वं; My$^{1}$ न, My$^{2-4}$ चेत् for च; My$^{1}$ T. My$^{4}$ C. वर्तते for प्रवर्तते
5. My$^{1}$ एकिः; My$^{2-3}$ एका° T. एक° for एकी
8. My$^{2}$ द्विकस्तोमः for द्विकः
11. C युग्मरूपेण for युग्मायुग्मरूपेण; My$^{1}$ विविधः, C. द्विधा for द्विविधः My$^{2-3}$ तदा तं for तदानीं
    My$^{2-3}$ अयुग्मविषम° for अयुग्मे विषमे; My$^{1}$ विपर्यायं for पर्यायं
12. My$^{2-3}$ T. अर्थवत्, My$^{1}$ C अनर्थकं for सार्थकं
14. My$^{4}$ om. तथैव My$^{1}$ न for च
15. C. द्विधा for द्विविधः

तदेव दर्शयति—

**एकिप्रभृतय एकाधिशयाः ॥१९॥**

इति। **एकिप्रभृतय**स्त्र्युत्तरा ये व्यत्यासं युजोऽयुजश्च ते सर्वे **एकाधिशय**-विषमा इत्यर्थः ॥१९॥

**द्विकप्रभृतयो द्व्यधिशयाः ॥२०॥**

**द्विकप्रभृत**स्त्र्युत्तरा ये व्यत्यासं युजोऽयुजश्च ते सर्वे **द्व्यधिशय**विषमाः। अनेन सूत्रद्वयेन विषमानां स्तोमानां युग्मायुग्मरूपेण द्वैविध्यं दर्शितम् ॥२०॥

**समास्त्रिकप्रभृतयः ॥२१॥**

त्र्युत्तरीभावेणेत्येव। **त्रिकप्रभृतय**स्त्र्युत्तरा ये व्यत्यासं युजोऽयुजश्च ते सर्वे **समा** इत्यर्थः। यथा त्रिकः षट्को नवक इत्यादयः। एवं तावद् युग्मायुग्मत्वं सम-वैषम्यम् एकाधिशय द्व्यधिशयत्वं चेति त्रीणि रूपाणि दर्शितानि ॥२१॥

अथ तन्निमित्तकान् पर्यायान् कल्पयति—

**विषमाः समपर्यायैर्वर्तन्ते ॥२२॥**

इति। **विषमाः** स्तोमाः पञ्चविंशादयः समानामेकविंशादिस्तोमानां **पर्यायैः वर्तन्ते** ॥२२॥

कथमित्याह—

**यावभितोऽनन्तरौ समौ तयोः पर्यायान् संहरेत् ॥२३॥**

इति। विषमस्तोमस्याधस्तात् उपरिष्टाच्चानन्तरौ यौ **समौ** स्तोमौ **तयोः पर्यायान्** विषमे **संहरेत्** ॥२३॥

---

1. T. एतद् for तद्; C एवं for एव

7. My[3] °क्रमेण for रूपेण

13. My[1,4] T. बर्द्धन्ते for वर्तन्ते

15. My[4] वर्द्धन्ते for वर्तन्ते

16. T. My[1] om. कथमित्याह

18. My[1-3] C. T. om. यौ; My[3] om. स्तोमौ

तत्र व्यवस्थामाह—

**पूर्वस्यैकमेकाधिशयेषु ।।२४।।**

इति । **एकाधिशयेषु पूर्वस्यैकम्** एकं पर्यायमाहरेत् । इतरौ पर्यायौ उत्तरस्याहरेदित्यर्थसिद्धम् ।।२४।।

**द्वौ द्व्यधिशयेषु ।।२५।।**

**पूर्वस्ये**त्यनुवर्तते । **द्व्यधिशयेषु** विषमेषु पूर्वस्य **द्वौ** पर्यायावाहरेत् । उत्तरस्यैकमित्यर्थसिद्धम् ।।२५।।

**उभयान् यथाजाति ।।२६।।**

**उभयान्** पूर्वापरसंबन्धिनः पर्यायान् **यथाजाति** संहरेत् । एतदुक्तं भवति । यज्जातीयो विषमस्तज्जातीययोरेव समयोः पर्यायानाहरेदिति । यथा पञ्चविंशस्तोमस्यायुग्मत्वात् तत्सजातीयादयुग्मादेकविंशात् त्रिणवाच्च पर्यायग्रहणम् । तत्रैकविंशादेकः पर्यायः । त्रिणवाद् द्वौ पर्यायौ । पञ्चविंशस्यैकाधिशयत्वात् । तथा षड्विंशस्य युग्मत्वात् तत्सजातीययोर्युग्मयोरेव पर्यायग्रहणम् । तत्र चतुर्विंशात् पर्यायद्वयम् । त्रिंशादेकः पर्यायः । षड्विंशस्य द्व्यधिशयत्वादिति । ननु चानन्तरात् समादाहर्तव्यम् । न चैकविंशः पञ्चविंशस्यानन्तरः चतुर्विंशेन व्यवधानात् । मैवम् । **यथाजाती**ति वचनात् । एकमतिक्रम्य सजातीयोऽनन्तरो ग्राह्यः ।।२६।।

एवं जातिसंहारे उक्तः । अथ युग्मायुक्तं संहारमाह—

**युग्मायुग्भ्यो वा ।।२७।।**

इति । अभितः स्थितेभ्यो **युग्मायुग्भ्यो** युग्मेभ्यः समेभ्यः पर्यायानाहरेत् । तेन यथाजातीति विकल्पः ।।२७।।

---

3. My$^{2\cdot3}$ om. आहरेत्;

4. My$^{2\cdot3}$ इत्यर्थः for इत्यर्थसिद्धम्

15. My$^{1,4}$ $^0$विंश$^0$, T. $^0$विंशे for $^0$विंशेन

18. My$^{1}$ युक्त्य$^0$, My$^{3}$ T. $^0$युक्$^0$, My$^{2\cdot3}$ एवं for अथ

20. My$^{2\cdot4}$ C युग्मायुग्मेभ्यः for युग्मायुग्भ्यो युग्मेभ्यः 3. My$^{2\cdot3}$ न for तेन

तत्र व्यवस्थामाह—

**तत्र युजामेकाधिशयानामयुजः पूर्वौ पर्यायौ ॥२८॥**

इति । **युग्मानामेकाधिशयानामयुजः** समस्य **पूर्वौ पर्यायौ** भवतः । युग्मस्य समस्योत्तमः पर्याय इत्यर्थः सिद्धः । तद्यथा अष्टाविंशस्तोमस्य त्रिणवात् पर्यायद्वयम् । त्रिंशादेक इति ॥२८॥

**उत्तरौ द्व्यधिशयानाम् ॥२९॥**

**युजामयुजः पर्यायावि**त्यनुवर्तते । **द्व्यधिशयानां** युग्मानामुत्तरस्मादयुजो द्वौ पर्यायौ । पूर्वस्माद्युग्मादेक इत्यर्थसिद्धम् । तद्यथा षड्विंशस्तोमस्य त्रिणवादुत्तरस्मात् पर्यायद्वयम् । चतुर्विंशस्तोमादेक इति ॥२९॥

एवं युग्मेषु विषमेषु युग्मायुक्संहारः सूत्रद्वयेनोक्तः । इदानीमयुग्मेषु विषमेष्वाह—

**विपर्ययो युग्मायुजामयुक्षु ॥३०॥**

इति । अयुग्मेषु विषमेषु पूर्वोक्तानामभितः स्थितानां **युग्मायुजां विपर्ययः** कार्य इत्यर्थः । अयुजामेकाधिशयानां युग्मात् पर्यायद्वयम् । यथा पञ्चविंशस्य

---

2. T. अयुजाम् for युजाम्

3. My$^{2\text{-}3}$ अयुग्मानां for युग्मानां; My$^{2\text{-}3}$ एवैका$^{0}$ for एका$^{0}$

4. My$^{2\text{-}4}$ अर्थसिद्धम् for अर्थः सिद्धः
   My$^{2\text{-}3}$ om. यथा .... $^{0}$स्तोमस्य; My$^{3}$ तत्र for तत्.

7. My$^{2\text{-}3}$ अयुजाम् for युग्मानां C T. अयुजौ for अयुजो

10. T. My$^{1}$ C युग्मायुग्म$^{0}$ My$^{2}$ युग्मायुक्त$^{0}$ for युग्मायुक्

13. My$^{1}$ विपर्यायः for विपर्ययः; T. अयुग्मायुजां for युग्मायुजां

14. My$^{3}$ before अयुजाम् adds :—तद्यथा,

चतुर्विंशात् पर्यायद्वयम् । त्रिणवादेक इति । एवमयुजां द्व्यधिशयानां युग्मादुत्तरौ पर्यायौ । यथा त्रयोविंशस्य चतुर्विंशात् पर्यायद्वयमेकविंशादेक इति । एवं जातिसंहारयुग्मायुक्संहारयोः किं प्रमाणमिति चेत् । ब्राह्मणे सप्तदशचत्वारिंशयोस्तथैव क्लृप्तिर्निदर्शनमिति ब्रूमः ॥३०॥

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले प्रथमः खण्डः ॥१॥

---

1. C. T. My$^{2\cdot3}$ पूर्वपर्यय$^{0}$ for पर्यय$^{0}$; C. after $^{0}$द्वयम् adds :—अयुग्मादुत्तरा [त्] पर्याया [त्]
   C. before युग्मात् adds :—अयुग्मात् पूर्वः पर्यायो;
2. C. om. पर्यायौ । यथा C. om. एवं;
3. C. युग्मायुग्म$^{0}$ for युग्मायुक्$^{0}$
4. My$^{4}$ after ब्रूमः adds :—इति । जातिसंहारस्य सप्तदशो निदर्शनम् । युग्मायुक्संहारस्य चतुश्चत्वारिंश इति ।

## द्वितीयः खण्डः

एवं विषमाणां पर्यायक्लृप्तिरुक्ता । अथ समानामाह—

**त्रिणवाद्यावत्समाः ॥१॥**

इति । त्रिणवस्तोमस्य ब्राह्मणे विष्टुतिद्वयं समाम्नातम् । तयोराद्या विष्टुतिस्त्रिणवाद्येत्युच्यते । तत्सदृशाः समाः स्तोमास्त्रिंशादयः कार्या इत्यर्थः । अन्यूनानतिरिक्ताः पर्यायाः कार्या विष्टावाश्च त्रिर्वचनमावापश्च सकृद्वचनमित्येवं त्रिणवस्तोमवदेव सर्वे कार्या इत्युक्तं भवति ॥१॥

पक्षान्तरमाह—

**एकया द्वाभ्यां वा परौ ज्यायांसौ ॥२॥**

इति । अथवा समस्तोमेषु **परौ** पर्यायौ यथाक्रममे**कया द्वाभ्यां** च स्तोत्रीयाभ्यां **ज्यायांसौ** । प्रथमात् पर्यायादित्यर्थः । तद्यथा त्रिंशस्तोमे नवको दशक एकादशक इति । पर्यायत्रयमिति ॥२॥

तत्रैव पक्षान्तरमाह—

**अन्त्यो वा ॥३॥**

इति । **अन्त्यो वा** पर्याय एकया द्वाभ्यां ज्यायान् । तिसृभिः स्तोत्रीयाभिरित्यर्थः । यथा तस्मिन्नेव त्रिंशस्तोमे नवकौ द्वौ पर्यायौ द्वादशकस्तृतीयः ॥३॥

---

5. C. T. त्रिंशाः for त्रिंशादयः
 $My^{2-3}$ अन्यूनानतिरिक्ताः for अन्यूनातिरिक्ताः (L. 6.)

6. $My^{2}$ TC. om. च; $My^{2-3}$ after एवं add :—त्रिणव

12. $My^{1}$ T. before पर्याय° add :—सतृतीय इति ।

14. $My^{1}$ MT. $My^{3-4}$ अन्यो for अन्त्यो

15. $My^{1}$ T $My^{3-4}$ अन्यो for अन्त्यो

16. C. तथा for यथा; $My^{4}$ त्रिंशति, $My^{1}$ त्रिंशतः $My^{2}$ त्रिंशत् for त्रिंश°

**अन्यत्र त्वेव ।।४।।**

तु-शब्दः पक्षं व्यावर्तयति । यदेतदनन्तरोक्तं पक्षद्वयं पर्यायवैषम्यवैरूपं तदन्यत्र विषमस्तोमेष्वेव न्याय्यम् । न समेष्वसमभ्यं रोचत इत्येवकारस्यार्थः ।।४।।

**संहरन्त्येके ।।५।।**

एके पुनराचार्याः समेष्वपि विषमवत् संहारमिच्छन्तीत्यर्थः । तद्यथा त्रिंशस्तोमे चतुर्विंशादेकः पर्यायः । त्रयस्त्रिंशात् पर्यायद्वयमित्यादि यथासंभवमूहनीयम् । तत्र समाम्नातपर्यायात् समस्तोमात् संहारः कार्योऽसमाम्नातपर्यायस्य । समस्तोमस्य पर्यायक्लृप्तेरनिरूपणादन्योन्याश्रयप्रसङ्गश्च ।।५।।

**यथास्थानं पर्यायान् कुर्यात् ।।६।।**

**पूर्वस्यैकमेकाधिशयेषु** (द्रा. श्रौ. १७.१.२४) इत्यादिना संहार उक्तः । तत्र पूर्वस्मादाहृतः पूर्वमेव प्रयोक्तव्यः । उत्तरस्मादाहृतः पश्चादेवेति सिद्धमेव न वक्तव्यम् । उत्तरत्र **पर्यायरोहं कुर्यादि** (द्रा. श्रौ. १७.२.११) ति वक्ष्यमाणत्वात् । किमर्थं तर्हीदं सूत्रम् । उच्यते । अनियमेन पर्यायाहरणे प्राप्ते नियमार्थमेतत् कथनम् । पूर्वस्मात् प्रथममेव पर्यायमाहरेत् । न द्वितीयं तृतीयं वाहृत्य प्रथमं प्रयुञ्ज्यादिति । तथेतरस्माद् द्वितीयतृतीयावेव पर्यायावाहरेत् । न प्रथममाहृत्य द्वितीयं प्रयुञ्ज्यात् ।।६।।

---

2. My[4] पक्षान्तरं for पक्षं
3. My[2-4] °कारार्थः for °कारस्यार्थः
6. C. समे for समेषु
7. My[1] T C My[4] om. आदि
9. My[1] TC. असमस्तोयस्य for समस्तोमस्य
11. My[1-3] T.C. om. आदिना
14. My[1] TC. हरणे for (आ) हरणे
15. C द्वितीयं for तृतीयं
16. My[2-3] om. °तृतीय°
17. My[1,4] T. प्रथमं for द्वितीयं

**सोऽविदोषः ॥७॥**

यथास्थानकरण**मविदोष** इत्याचक्षते ॥७॥

**यदवसानः पूर्वः पर्यायस्तत्प्रभृतिरुत्तरस्तत् सामात्साम्यम् ॥८॥**

पूर्वस्य पर्यायस्य यदवसानमुत्तमायां सकृद्वचनं त्रिर्वचनं चतुर्वचनं वा तदेवोत्तरस्य पर्यायस्य प्रथमायां कार्यम् । **तत् सामात्साम्य**मित्याचक्षते ॥८॥

**तदुभयं कुर्यात् ॥९॥**

**तद**नन्तरोक्त**मुभयम**विदोषं सामात्साम्यं च सर्वत्रावश्यं संपादयेत् । कुतः । ब्राह्मणे सर्वास्वपि विष्टुतिषु तथैव दर्शनात् ॥९॥

**ब्रह्मायतनीयां च ॥१०॥**

कुर्यादित्यनुषङ्गः ॥१०॥

स्वयमेव तां व्याख्यास्यति—

**तथा पर्यायरोहम् ॥११॥**

इति । अत्रापि **कुर्यादित्यनुषङ्गः** । पर्यायरोहो नाम उत्तरोत्तरं पर्यायाणां ज्यायस्त्वम् । यथा पञ्चकः सप्तको नवक इति ॥११॥

**असंभवत्सु सर्वेषु समात्सममेव चिकीर्षेत् ॥१२॥**

यथोक्तगुणचतुष्टयस्य क्वचित् परस्परविरोधेनासंभवे तेषु **समात् सममेव** विष्टुतिं **चिकीर्षेत्** । इतरदुपेक्षेत । यत्र यत्र तृतीयः पर्यायो ज्यायान् तत् सर्वमुदाहरणम् । तत्र सामात्साम्यब्रह्मायतनीययोर्विरोधः । तृतीयपर्यायोपक्रमे ब्रह्मायतनीयसिद्ध्यर्थमधिकस्तोत्रीयावापे सति पूर्वावसानेन साम्यं न सिध्यति ।

---

4. C. पूर्व° for पूर्वस्य
5. My[4] तदैव for तदेव; C. उत्तार° for उत्तरस्य; My[2-4] om. तत्
7. My[1] साम्यात् for सामात्
13. My[3] उत्तारोत्तर° for उत्तरोत्तरं;
16. T. समावेव for सममेव T. om. क्वचित्;
    My[1] अपि संभावितेषु, My[3] असंभवात् for असंभवे
18. My[3] before विरोध; adds: विशेष:
19. My[3] (आ) वापविष्टुतिषु for (आ) वापे सति

अथ यदि तत्र नावपेत् तदा ब्रह्मायतनीया न सिध्यति। सोऽयं विरोधः ॥१२॥

ननु च तृतीयपर्यायस्य ज्यायस्त्वादयं विरोध इति पर्यायरोहस्त्यज्यताम्। नेत्याह—

**पर्यायप्रत्यवरोहं तु वर्जयेत् ॥१३॥**

इति। प्रत्यवरोहो नाम प्रथमं ज्यायांसं पर्यायं कृत्वा कनीयसः पश्चात् करणम् ॥१३॥

**विडायतनीयां च ॥१४॥**

**वर्जयेदि**त्यनुषङ्गः ॥१४॥

**प्रथमायाः प्रयोगे भूयिष्ठे ब्रह्मायतनीया ॥१५॥**

**प्रथमायाः** ऋचः **प्रयोगे** ऋगन्तरात् **भूयिष्ठे ब्रह्मायतनीये**ति विष्टुतिरुच्यते ब्रह्मणः ॥१५॥

**मध्यमायाः क्षत्रायतनीया ॥१६॥**

**प्रयोगे भूयिष्ठे** इत्यनुवर्तते ॥१६॥

**उत्तमाया विडायतनीया ॥१७॥**

**उत्तमायाः** प्रयोगे भूयिष्ठे **विडायतनीया** ॥१७॥

**दाशरात्रिकेभ्यः पर्यायकृतौ पथ्यापर्यायानेव संहरेत् ॥१८॥**

**दाशरात्रिकेभ्य**स्त्रिवृदादिभ्यः पर्यायेषु कल्प्यमानेषु दाशरात्रिकार्थं पथ्या-विष्टुतेरेव पर्यायानाहरेत्। यथाऽष्टादशे सप्तदशात् पर्यायाहरणे सप्तदशस्य विष्टुतीनां प्रथमाया एवाहरणम् ॥१८॥

**परिवर्तिन्यास्तु त्रिवृतोऽनादेशे ॥१९॥**

यत्र क्वचित् त्रिवृत्स्तोमाद् यदा पर्यायाहरणं तदा **त्रिवृतः परिवर्तिन्या** एव विष्टुतेराहरेत्। नोद्यत्याः। पथ्यात्वेपीत्यर्थः। **अनादेश** इति। दशिस्तोम उद्यतीपर्यायस्यापि विकल्पेनाहरणमादेक्ष्यति। तद्वर्ज्यमित्यर्थः ॥१९॥

---

17. C. My[3] °रात्रिकाणां for °रात्रिकेभ्यः
18. My[1] TC. °दशेषु for °दशे; T. हरणे for (आ) हरणे
19. C. विष्टुत्यां for विष्टुतीनां
22. C. दश° My[1-2] दर्शि° for दशि°
23. My[2] T वर्जम् for वर्ज्यम्

**एष न्यायोऽनादिष्टानाम् ॥२०॥**

ब्राह्मण अनादिष्टपर्यायाणां स्तोमानामेष उक्तो न्यायो वेदितव्यः ॥२०॥

इदानीं तेष्वेव केषुचिद्विशेषं दर्शयति—

**एकिन्यावर्तिस्थानगते त्रिः पुरस्ताद्धिंकारं शाण्डिल्यः ॥२१॥**

इति । आवर्तिस्तोत्रगत एकिस्तोमे त्रिः पुरस्ताद्धिंकारः कर्तव्यः । त्रयाणां पर्यायाणां स्थाने निवेशात् ॥२१॥

**त्रिके च प्रथमया स्तोमपूरगम् ॥२२॥**

त्रिकस्तोमे प्रथमयैवर्चा त्रिरावृत्तया त्रिः स्तोमसंपादनं च स एव शाण्डिल्यो मन्यते ॥२२॥

**तृचेन धानंजय्यः ॥२३॥**

स्पष्टम् ॥२३॥

**सकृच्चैकिनि हिंकारम् ॥२४॥**

एकिस्तोमे च सकृदेव हिंकारं धानंजय्यो मन्यते ॥२४॥

**जातिसंहारः पञ्चिनि ॥२५॥**

पञ्चिस्तोमे जातिसंहार एव कार्यो न युग्मायुक्संहारः । तत्र त्रिकस्तोमात् पर्यायद्वयं त्रिवृत्स्तोमादेक इति । युग्मायुक्संहारपक्षे त्रिकस्तोमादेकः षट्कात् पर्यायद्वयमिति स्यात्ततः को दोष इति । उत्तमायाः सकृद्वचनमपि न स्यात् ॥२५॥

**पञ्चदशपर्यायैः पृथगनुपूर्वं रात्रिपर्यायान्निदध्यात् ॥२६॥**

इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले द्वितीयः खण्डः ॥२॥

---

2. My[3] before वेदितव्यः adds :—मवेदिति

5. My[1-4] TC. आवृत्ति° for आवर्ति

6. C. निर्देशात् for निवेशात्

7. T. प्रथमायां, My[1] प्रथमायाः for प्रथमया; T. स्तोत्र° for स्तोम°

8. My[3] एकः for सः

15. C. युग्मायुग्म° for युग्मायुक्°

## तृतीयः खण्डः

**संलङ्घितायामिति भाडितायनः ॥१॥**

यदि **पर्यायैरस्तुतमभिव्युच्छेत् पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्यः** (तां. ब्रा. ९.३.३) इति ब्राह्मणम् । तत्र होतृषामवर्जं त्रयोऽपि रात्रिपर्यायाः पञ्चिस्तोमाः । तत्रापि जातिसंहारे प्राप्त इदमुच्यते । ऋत्विग्भिः प्रमादाद्रात्र्यां **संलङ्घितायां** सामस्त्येन लङ्घितायां सर्वैरपि रात्रिपर्यायैरस्तुते व्युष्टायामित्यर्थः । तदानीं पञ्चदशस्तोमस्य ये पर्यायाः ब्राह्मणे समाम्नातास्तैस्त्रींस्त्रीन् रात्रिपर्यायान् क्रमेण पृथक्-पृथक् निदध्यादित्यर्थः। **पञ्चभ्यो हिंकरोती** (तां. ब्रा. २. ४.१) ति ब्राह्मणोक्तः प्रथमः पर्यायः प्रथमे रात्रिपर्याये स्यात् । द्वितीये द्वितीयः तृतीये तृतीयः ॥१॥

कथं तत्र क्रियाप्रकार इत्याह—

**तत्र विष्टावाः पर्यायस्थानेषु स्युः ॥२॥**

इति । **तत्र** पर्यायाणां ये **विष्टावास्**तेऽत्र **पर्यायस्थानेषु स्युः** । तदीयान् विष्टावानत्र पर्यायत्वेन कल्पयेदिति यावत् ॥२॥

**पृथक् च स्तोत्रीयासु पर्यायाः ॥३॥**

ते **च** विष्टावरूपाः **पर्यायाः पृथगेव स्तोत्रीयासु** भवेयुः । तद्यथा तिसृभ्यो हिंकरोति । स प्रथमया । एकस्यै हिंकरोति । स मध्यमया । पुनरेकस्यै हिंकरोति । स उत्तमयेति । एवं प्रथमस्य पञ्चदशपर्यायस्य त्रीन् विष्टावानत्र पर्यायत्वेन कल्पयेत् । एवमितरयोरपीति भाडितायनस्य पक्षः ॥३॥

**दाशरात्रिकेभ्य एकया ज्यायस्सु तस्मात् पूर्वस्योत्तमे पर्याय आवपेत् ॥४॥**

---

5. C. पृथक्° for पञ्चि°

6. My$^{2-4}$ समस्तेन for सामस्त्येन

9. My$^{2-3}$ after द्वितीये add : यः

13. My$^{1-4}$ C. तत्र for अत्र

14. C. तत्र विष्टावत्वेन for अत्र पर्यायत्वेन; My$^{1}$ TC. om. इति यावत्

19. C. विकल्पयेत् for कल्पयेत्

दाशरात्रिकेभ्यस्त्रिवृदादिभ्य एकया स्तोत्रीयया अधिकेषु **षोडशपञ्चविंशप्रभृतिषु तेभ्यः पूर्वस्य स्तोमस्योत्तमे पर्याय** एकया आवपेत् ॥४॥

**ब्रह्मायतनीया तु तेषु ॥५॥**

तु-शब्दोऽवधारणे । यद्यपि विरोधे **समात् समामेव चिकीर्षेत्** (द्रा. श्रौ. १७.२.१२) इति पूर्वमुक्तं तथापि **तेषु ब्रह्मायतनीयैव** विष्टुतिः कार्येत्यर्थः ॥५॥

**क्षत्रायतनीया वा ॥६॥**

अथवा तेषु **क्षत्रायतनीया** विष्टुतिः स्यात् । उत्तमे पर्याये मध्यमायामधिकामेकां स्तोत्रीयामावपेदित्यर्थः । तदानीं समात् साम्यसिद्धिः ॥६॥

**आस्कन्दं तु गौतमश्चत्वारिंशे ॥७॥**

आस्कन्दस्य लक्षणं महाव्रते पूर्वमुक्तम् । चतुर्विंशेन स्तुत्वा मध्यमामहिंकृतां तृचस्य प्रस्तुयात् । स आस्कन्दो नामेति । एवं सति एकान्नचत्वारिंशस्तोमं समशो विभज्य त्रिभिः पर्यायैः स्तुत्वा पुनस्तृचस्य मध्यमामृचं हिंकाररहितां प्रस्तुत्य सकृद् गायेत् ॥७॥

**धानंजय्य इतरेषु ॥८॥**

**इतरेषु** पूर्वोक्तेषु दाशरात्रिकेभ्य एकयाधिकेष्वित्यर्थः । तेष्वास्कन्दं कर्तव्यं मन्यते **धानंजय्यः** ॥८॥

**दशिनि चतुष्को मध्ये परिवर्तिनी पर्यायावभितः ॥९॥**

दशिस्तोमे मध्यमः पर्यायः **चतुष्को** भवेत् । प्रथमोत्तमौ **परिवर्तिनी पर्यायौ** ॥९॥

---

2. My[1] om. स्तोमस्य; C. पूर्व⁰ for पूर्वस्य; T. एकविंशस्तोमस्य for स्तोमस्य; My[2] T. एकाम् for एकया

4. C. om. समात्; My[1] अस्मात् for समात्

7. My[2] om. तेषु T. मध्यमया for मध्यमायां; My[2-3] अधिकम् for अधिकाम्;

8. C. om. तदानीं समात् C. समा⁰, My[1] साम⁰ for साम्य⁰

11. C. एकोन⁰ for एकान्न⁰

15. My[2-3] om. पूर्वोक्तेषु; C. ततः for तेषु

**उद्यत्या वा ॥१०॥**

अथवोद्यत्या विष्टुतेः प्रथमोत्तमौ पर्यायौ। तदानीमपि मध्यमायामेव चतुष्कः पर्यायः। अन्यथोद्यतीत्वविरोधात्। तदा क्षत्रायतनीयापि सोढव्या ॥१०॥

**उद्यतीपर्याययोर्ब्रह्मायतनीयां कुर्वन् प्रथमायां चतुष्कं कुर्यात् ॥११॥**

उद्यतीपक्षे यदि **ब्रह्मायतनीयां** कर्तुमिच्छेत् तदानीं **प्रथमायामृचि चतुष्कं** पर्यायं **कुर्यात्**। न मध्यमायाम् ॥११॥

**द्वादशे तृचभागास्थानेषु द्विका विष्टावा आवापस्थानेषु वा ॥१२॥**

**द्वादशे** स्तोमे चतुष्काः पर्याया इति तावत् सिद्धम्। विष्टावप्रकारे तावद् विकल्पः। **तृचभागास्थानेषु द्विका विष्टावा** स्युः। **आवापस्थानेषु वा** ॥१२॥

**त्रयोदशत्रयोविंशयोः पञ्चविंशे च मध्यमः पर्यायो ज्यायानेकज्यायःसु कनीयानेककनीयःसु ॥१३॥**

त्रिषु पर्यायेषु एकः पर्यायो ज्यायान् यस्य स एकज्यायानिति बहुव्रीहिः। तथैककनीयानित्यपि। त्रयोदशपञ्चविंशौ जातिसंहारपक्षे एककनीयांसौ युग्मायुक्संहारे त्वेकज्यायांसौ। त्रयोविंशस्तु विपरीतः। एतेषु त्रिषु योऽयं ज्यायान् पर्यायः स मध्यमः कार्यः। कनीयानपि पर्यायो मध्ये निवेशनीयः ॥१३॥

**तथैकान्नत्रिंशैकत्रिंशयोः ॥१४॥**

स्पष्टम् ॥१४॥

---

2. My[1-4] C. om. अपि

7. My[3] after मध्यमायाम् ins. ऋचि

10. My[2-3] स्थाने for स्तोमे

13. T. om. त्रिषु पर्यायेषु एकः

14. My[2-3] before अपि ins. अत्र

15. T. एषु for एतेषु; My[2] om. अयं

17. T. एकोन° for एकान्न°

**रूढपर्याया वा ॥१५॥**

अथवा पञ्चाप्येते **रूढपर्यायाः** स्युः। ज्यायान् पर्याय उत्तम एव कार्यः। कनीयानपि प्रथम एव कार्य इति यावत्। एवं सामात्साम्यं ब्रह्मायतनीया वेति लाभः ॥१५॥

**तेषां प्रथमे युग्मायुक्संहारं शाण्डिल्यायनः ॥१६॥**

**तेषा**मनन्तरोपात्तानां पञ्चानां **प्रथमे** त्रयोदश इत्यर्थः ॥१६॥

**द्वितीये शाण्डिल्यः ॥१७॥**

पूर्वोपात्तानां **द्वितीये** त्रयोविंशे युग्मायुक्संहार एवेति **शाण्डिल्यः** ॥१७॥

**उभयोर्जातिसंहारं धानंजय्यः ॥१८॥**

उभयोरपि जातिसंहार एव न संहारानन्तरमिति **धानंजय्यः** ॥१८॥

**शाण्डिल्यस्तु पञ्चविंशे ॥१९॥**

**पञ्चविंशे** जातिसंहार एव। नेतर इति शाण्डिल्यमतम्। सामात्साम्यादीनां गुणानामन्यतमस्मिन् स्यात् श्रद्धा (?) वान्यतमस्मिन् कस्मिंश्चिदिति मतभेद-प्रदर्शनम्। तदत्र पञ्चविंशे संहारद्वयमावापश्चेति त्रयः पक्षाः ॥१९॥

**अष्टादशः सप्तदश एवावपेदिति गौतमः ॥२०॥**

यद्यपि समस्तोमोऽष्टादशस्तथापि **सप्तदश** एकाधिक **एवमेवावपेत्**। दाशरात्रिकेभ्य एकया ज्यायःस्विति पूर्वोक्तन्यायात् **इति गौतमः** ॥२०॥

**न्यायविहितः स्यादिति धानंजय्यः ॥२१॥**

**त्रिणवाद्यावत् समाः** (द्रा. श्रौ. १७.२.१) इत्युक्तेन **न्यायेन** कर्तव्योऽष्टादश इत्यर्थः ॥२१॥

---

4. C. वोभय इति for लाभः

13. My[1-2] C गणानां for गुणानां; My[2-3] अन्यतरस्मिन, My[4] एकतमस्मिन् for अन्यतमस्मिन्; My[1] T कस्यचिद् for स्यात् श्रद्धा; My[1] TC कस्यचित् for कस्मिंश्चित्

16. My[2-3] before सप्त° ins. पूर्व°; My[1-4] T. एव for एक°; My[1] T. अधिकाम्, My[2] अधिकम् for अधिक: My[1-2] T. om. एवमेव

19. My[1] समानः for समाः; C उक्तं for उक्तेन

**एकान्नविंशे च परिवर्तिनीपर्यायावभितस्त्रयोदशी मध्ये ॥२२॥**

चकारो धानंजय्यानुकर्षणार्थः ॥२२॥

**तस्मिन् प्रथमायास्त्रिर्वचनं तथोत्तमायाः ॥२३॥**

तस्मिंस्त्रयोदशिनि पर्याये प्रथमोत्तमयोस्त्रिर्वचनम् । सप्तकृत्वो मध्यमाया इत्यर्थसिद्धम् ॥२३॥

**पञ्चदशपर्यायावभितो नवी मध्ये त्रिकविष्टाव इति शाण्डिल्यः ॥२४॥**

तस्मिन्नेवैकान्नविंशे पञ्चकावभितः पर्यायौ नवको मध्यमः । ततः त्रिकाः । त्रिको विष्टाव इति **शाण्डिल्यः** । उभयोरपि निदानं मृग्यम् ॥२४॥

**शाण्डिल्यायनस्तु जातिसंहारम् ॥२५॥**

स्पष्टम् ॥२५॥

**द्वात्रिंशे तिस्रो विष्टुतीः कुर्यादिति धानंजय्यः ॥२६॥**

कथमित्याह—

**तासां पर्यायकृतिप्रयोगौ चतुश्चत्वारिंशेनैव व्याख्यातौ ॥२७॥**

इति । एकादशयोः पर्याययोर्मध्ये दशकः पर्यायः स्यात् । सा प्रथमा विष्टुतिः । तयोरेव पुरस्ताद्दशकः पर्याय इति द्वितीया विष्टुतिः । तयोरेवोपरिष्टाद्दशक इति तृतीया विष्टुतिः । एवं पर्यायकृतिः । अथ तासां संप्रयोगप्रकारः । **आज्यानां प्रथमा पृष्ठानां द्वितीयोक्थानां तृतीये** (तां. ब्रा. ३.११.२) ति चतुश्चत्वारिंशो ब्राह्मणोक्तो यः प्रकारः स इहापि स्यात् । तत्र सवन समीषन्ती **पूर्वः प्रयोगः स्तोत्रसमीषन्तीत्युत्तरः** (द्रा. श्रौ. १६.२.२४) इत्युक्तम् । तत्प्रयोगद्वयमपि

---

4. My[2-3] सप्तदश⁰ for सप्त⁰

8. My[1-4] C. तत्र for ततः; My[1-4] T त्रिकः for त्रिकाः

15. My[2-3] ⁰दशकयोः for ⁰दशयोः

16. C. एकपूरको for एव पुरस्ताद्

17. C, ⁰प्रकृतिः for ⁰कृतिः

19. My[1-4] T. ⁰चत्वारिंशे for चत्वारिंशो

20. My[1-3] स्तोत्रसमीढन्ती for स्तोत्रसमीषन्ती

द्वात्रिंशे तथैव कुर्यादिति धानंजय्यमतम् । तत्र यत् पूर्वमुक्तं **तथा कुर्यादहर्भाजि पथ्यामन्यत्रे** (द्रा. श्रौ. १६.२.२५-२६) ति तदप्यत्र द्रष्टव्यम् ॥२७॥

**अप्यहर्भाजि प्रथमयैवेति शाण्डिल्यः ॥२८॥**

न तिस्रो विष्टुतयः कार्याः । तासां प्रथमैव केवलं कल्प्या । तयैव द्वात्रिंशस्तोमविधानं कार्यम् । यदापि द्वात्रिंशस्तोमः कृत्स्नमहर्भजते छन्दोमदशरात्रे तदापि तथैव प्रथमया कार्यम् । न चतुश्चत्वारिंशस्तोम आदरणीयः ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले तृतीयः खण्डः ॥३॥**

---

4. My[1] TC. om. न; C My[2] प्रथमयैव for प्रथमैव; T. केवला for केवलं
My[1-3] तथैव for तयैव

6. My[2] तयैव for तथैव
My[2] °चत्वारिंशेन. My[1] चत्वारिंशन्यायः for चत्वारिंशस्तोमः

## चतुर्थः खण्डः

**चतुष्टोमयोश्चतुष्पर्यायाः ॥१॥**

पञ्चविंशब्राह्मणे **अथैष चतुष्टोम** (तां. ब्रा. १९.५.१) इत्यनुवाकद्वयेन द्वावेकाहौ चतुष्टोमसंज्ञकौ विहितौ। स्तोमाश्च तयोः क्लृप्तः। **चतसृभिर्बहिष्पवमानमष्टाभिराज्यानि द्वादशो माध्यंदिनः पवमानः षोडशा ने पृष्ठानि विंश आर्भवः चतुर्विंशोऽग्निष्टोम** (तां. ब्रा. १९.५.३-८) इति प्रथमस्य क्लृप्तिः। द्वितीयस्य चत्वारि **चतसृभिश्चत्वारि अष्टाभिश्चत्वारि द्वादशभिश्चत्वारि षोडशभिरि** (तां. ब्रा. १९.६.१) ति स्तोमक्लृप्तिः। चत्वारि चत्वारि स्तोत्राणि क्रमेणोक्तस्तोमानीत्यर्थः। प्रथमोऽग्निष्टोमो द्वितीयः षोडशिसंस्थः। तत्र सूत्रकारः प्रतिपद्यते चतुष्टोमयोरिति। चतुष्टोमयोरेकाहर्गतयोर्ये स्तोमा आवृत्तिस्तोत्रगतास्ते सर्वे चतुष्पर्यायाः कार्या इत्यर्थः। तत्र प्रमाणं **चतुश्चतुर्हिंकरोती** (नि. ७. ८) ति शाखान्तरमस्तीति निदानकारः ॥१॥

**तत्र चतुष्के द्वौ प्रथमायां पर्यायौ स्यातां यदि ब्रह्मायतनीयां कुर्यात् ॥२॥**

**तत्र चतुष्के** तावदेकिनश्चत्वारः पर्यायाः। तेषां त्रिभिः पर्यायैस्तृचेऽवरुद्धे चतुर्थस्य कुत्र निवेश इत्यपेक्षायामिदमुच्यते। **द्वौ पर्यायौ प्रथमायामा**नन्तर्येण **कुर्यात्। यदि ब्रह्मायतनीया**मिच्छेत् ॥२॥

**मध्यमायां क्षत्रायतनीयां चेत् ॥३॥**

यदि **ब्रह्मायतनीया**मिच्छेत् **मध्यमायां द्वौ** स्याताम् ॥३॥

**तथाष्टिनि ॥४॥**

**अष्टिनि** स्तोमेऽपि **तथैव** कामानुसारेण कर्तव्यम् ॥४॥

---

11. My[2-3] om. सर्वे
My[1] after प्रमाणं adds :—तत्र; My[2-3] T. om. first चतुश्
15. My[1] विरुद्धे for °वरुद्धे; My[3] तृचरुद्धे for तृचेऽवरुद्धे
21. My[1] TC. क्रमा° for कामा°

**द्विकास्तु तस्य पर्यायाः ॥५॥**

अग्निष्टोमस्य पर्याया द्विपरिमाणाः स्युः। तत्र द्वाभ्यां हिंकरोति । स प्रथमयेति प्रथमः पर्यायः। एवमेव द्वितीयः । स मध्यमयेति तृतीयः । स उत्तमयेति चतुर्थः ॥५॥

तत्रैव मतान्तरमाह—

**पूर्वयोः पूर्व उत्तरयोरुत्तर एवं विहितावपराविति शाण्डिल्यः ॥६॥**

इति । प्रथमाद्वितीययोर्ऋचोः **पूर्वः** पर्यायः। मध्यमोत्तमयोर्ऋचोर्द्वितीयः पर्यायः। पुनरप्येवं **विहितौ** तृतीयचतुर्थौ पर्यायाविति शाण्डिल्यमतम् ॥६॥

तत्रैव मतान्तरमाह—

**पूर्वयोर्द्वितीयः पृथक्स्तोत्रीयास्वितर इति धानंजय्यः ॥७॥**

इति। प्रथमाद्वितीययोर्ऋचोर्**द्वितीयः** पर्यायः। **इतरे** त्रयः पर्यायास्तिसृष्वृक्षु क्रमेण **पृथक्** स्युरित्यर्थः। तद्यथा द्वाभ्यां हिंकरोति स प्रथमयेति प्रथमः पर्यायः। प्रथमाद्वितीययोर्ऋचोर्द्वितीयः। स मध्यमयेति तृतीयः। स उत्तमयेति चतुर्थः इति ॥७॥

**द्वादशे व्याख्यातौ प्रथमोत्तमौ ॥८॥**

**चतुष्टोमादेकाहादन्यत्र द्वादशे स्तोमे त्रिणवाद्यावत् समा** (द्रा. श्रौ. १७.२.१)

---

5. My[4] om. तत्रैव मतान्तरमाह

8. My[1] CT. om. प्रथमा · · · · मतान्तरमाह (L. 10)

11. My[1] T om. पूर्वयोर् · · · · धानंजय्यः

13. My[1] om. इति प्रथमः पर्यायः

14. TC. द्वयोर My[4] स मध्यमयेति for प्रथमाद्वितीययोर्; My[4] द्विरावृत्तया तृतीयः। स उत्तमया द्विरभ्यस्तया for इति तृतीयः। स उत्तमयेति

16. M. द्वादशेन for द्वादशे

17. C. My[2-3] द्वादश⁰ for द्वादशे

इति वचनाच्चतुष्काः पर्यायाः । तद्वदेवात्रापि **प्रथमोत्तमौ** पर्यायौ भवतः । तयोश्च **द्वादशे तृचभागास्थानेषु द्विका विष्टावाः** (द्रा. श्रौ. १७.३.१२) इति सूत्रेणैव विष्टावक्लृप्तिरुक्ता । तदिदमुक्तं **व्याख्यातौ प्रथमोत्तमा**विति ॥८॥

**मध्यमौ द्विकौ ॥९॥**

द्वादशस्तोमस्य **मध्यमौ द्विकौ** पर्यायौ द्विपरिमाणौ स्याताम् ॥९॥

**पूर्वयोः पूर्व उत्तरयोरुत्तरः ॥१०॥**

तयोर्द्विकयोः **पूर्वः** पर्यायः प्रथमाद्वितीययोर्मध्ये चोर्भवेत् । मध्यमोत्तमयो**रुत्तरः** ॥१०॥

**षोडशे चत्वारो द्वादशपर्यायाः ११॥**

चतुष्टोमादन्यत्र द्वादशस्तोमस्य ये पर्यायाश्चतुष्कास्ते **चत्वारः षोडशे** स्युरित्यर्थः । **द्वादशपर्याया** इति वचनं तद्वदेव विष्टावसिध्यर्थम् । यथोक्तं **द्वादशे तृचभागास्थानेषु द्विका विष्टावा** (द्रा. श्रौ. १७.३.१२) इति ॥११॥

**तेषां मध्यमौ सदृशौ ॥१२॥**

**तेषां** पर्यायाणां चतुर्णां **मध्यमौ** विष्टावतः सदृशौ स्याताम् । स एकया स द्वाभ्यां स एकयेति द्वयोरपि तुल्यो विष्टाव इत्यर्थः ॥१२॥

**चतुर्विंशे चत्वारः षट्काः पर्याया द्विका विष्टावाः ॥१३॥**

**षट्काः पर्याया** इति न्यायसिद्धम् । **द्विका विष्टावा** इत्येतद् विधित्सितम् । अन्यथा तृचभागायास्त्रिर्वचनं स्यादिति ॥१३॥

तत्रैकस्मिन्नेव तृचे पर्यायचतुष्टयमपि प्राप्तं निवारयति—

**पृथक्तृचेषु तु चतुस्तृचे ॥१४॥**

---

1. C. om. अत्र
3. C. इदानीम् for इदम्
7. My[2] after द्विकयोः adds :–पर्याययोः
17. C. विवक्षितम् for विधित्सितम्
20. C. om. तृचेषु · · · अष्टादशस्तोमा⁰ (p. 371, L. 2)

इति। चतुर्णां तृचानां समाहारश्चतुस्तृचम्। पृथगेव चतुर्षु तृचेषु चतुर्विंशस्य चत्वारः पर्यायाः कार्या इत्यर्थः। के पुनस्ते तृचा इति चेत्तत्राह कल्पकारः **यज्ञायज्ञीयस्य तृचे वारवन्तीयेन स्तुवन् षड्भ्यो हिंकरोति स द्वाभ्यां स द्वाभ्यामिति समान् विष्टावान्। एभिः साकमश्वस्य तृचे षड्भिर्हारिवर्णस्य तृचे षड्भिस्तैरश्च्यस्य तृचे षड्भिरि** (आ. क. ५.५.१) ति। श्रुतिश्च भवति। एकं साम बहूनि **छन्दांसि। तस्मादेको बहून् पोषान् पुष्यती** (तां. ब्रा. १९.५.१०) ति। तत्र यज्ञायज्ञीयस्य तृचे वारवन्तीयेन स्तुवन् षड्भ्यो हिंकरोति स द्वाभ्यां स द्वाभ्यामिति समान् विष्टावान् कुर्यात्। एवमुत्तरेष्वपि तृचेषु द्रष्टव्यम् ॥१४॥

**द्वयोर्द्वयोर्वा द्वैधम्** ॥१५॥

**यद्वा द्वयोर्द्वयो**स्तृचयोरेकैकं पर्यायं कुर्यात्। ननु च चत्वार एव तृचा विद्यन्ते। तेषु पर्यायद्वये कृते इतरस्य पर्यायद्वयस्य तृचेषु कथं प्रवृत्तिरित्यपेक्षायां **द्वैधम्** इति। द्वैधं पर्यायान् प्रवर्तयेत्। पूर्वस्मिन् पर्यायद्वये सकृत् समाप्ते पुनरपि तेष्वेवापरं पर्यायद्वयं कुर्यादित्यर्थः। तद्यथा-यज्ञायज्ञीयसाकमश्वतृचयोः प्रथमः पर्यायः। हारिवर्णतैरश्चतृचयोर्द्वितीयः। पुनरप्येवमितरौ पर्यायाविति ॥१५॥

---

3. My[2-3] om. स्तुवन् · · · साकमश्वस्य तृचे (L. 4)

4. My[2-3] om. षड्भिस्तैरश्चस्य तृचे

T. My[3] om. एभि · · · विष्टावान् (L. 8)

5. My[1] after एकम् ins. एव; My[2] एवम् for एकम्

6. T. My[1] पुष्येत् for पुष्यति

10. My[1] T. om. तृचयोः; My[4] एकैकः पर्यायः स्यात् for एकैकं पर्यायं कुर्यात्

11. My[1] My[2-3] T. om. कथं

प्रकारान्तरं सूत्रचतुष्टयेन दर्शयति—

**यज्ञायज्ञीयस्यर्क्षु वा प्रथमः प्रथमासु च ॥१६॥**

इति। यज्ञायज्ञीयतृचे साकमश्वादीनां च प्रथमास्वृक्षु प्रथमः पर्यायः कार्यः ॥१६॥

**यज्ञायज्ञीयप्रथमायां द्वितीयः साकमश्वर्क्षु परमध्यमयोश्च ॥१७॥**

यज्ञायज्ञीयस्य प्रथमायां साकमश्वस्य च कृत्स्ने तृचे परयोः साम्नोर्हारिवर्णतैरश्चयोर्मध्यमयोर्ऋचोश्चैतासु द्वितीयः पर्यायः ॥१७॥

**पूर्वमध्यमयोस्तृतीयो हारिवर्णर्क्षु तैरश्च्योत्तमायां च ॥१८॥**

पूर्वयोर्यज्ञायज्ञीयसाकमश्वयोर्ये मध्यमे ऋचौ तयोश्च हारिवर्णस्य च कृत्स्ने तृचे तैरश्च्यसाम्न उत्तमायां च तृतीयः पर्यायः ॥१८॥

**पूर्वोत्तमासु चतुर्थस्तैरश्च्यर्क्षु च ॥१९॥**

पूर्वेषां यज्ञायज्ञीयादीनां त्रयाणां साम्नामुत्तमास्वृक्षु तैरश्च्यस्य कृत्स्ने तृचे चतुर्थः पर्यायः ॥१९॥

**उपोत्तमो वा द्विकविष्टावोऽश्वमेधेऽष्टादशादितरे ॥२०॥**

एवं चतुष्टोमयोः पर्यायक्लृप्तिरुक्ता। तयोश्चतुष्टोमोऽश्वमेधस्य प्रथममहर्भवति। तथा च ब्राह्मणम्—**यच्चतुष्टोमस्तोमो भवत्यश्वस्य सर्वत्वायेति**। तत्रैकस्मिन्नेव तृचे यज्ञायज्ञीयमग्निष्टोमसाम विहितं कल्पकारेण। तत्र यदुक्तं **चतुर्विंशे चत्वारः षट्काः पर्याया द्विकविष्टावाः** (द्रा. श्रौ. १७.४.१३) इति तत् तृचान्तराभावादेकस्मिन्नेव तृचे प्रवर्तते। तत्रैवेदं पक्षान्तरमुच्यते अश्वमेधगते चतुष्टोम

1. My$^{2\text{-}3}$ सूचयति for दर्शयति

17. My$^{1}$ C चतुष्टोमो for चतुष्टोमस्तोमो

20. My$^{1}$ T My$^{4}$ om. अश्वमेधगते

**उपोत्तम**स्तृतीय एव पर्यायः केवलं द्विकविष्टावः स्यात् । अष्टादशस्तोमादितरे त्रयः पर्याया आहर्तव्या इत्यर्थः ॥२०॥

पक्षान्तरमाह—

**पञ्चदशस्य पर्यायौ पूर्वावेकविंशस्योत्तराविति वोत्तराविति ॥२१॥**

इति । पञ्चदशस्तोमस्य **पर्यायौ पूर्वावेकविंशस्योत्तराविति** । पञ्चदशस्तोमस्य द्वौ पर्यायौ स्याताम् । एकविंशस्योत्तरं पर्यायद्वयमिति । इदमश्वमेध एवोक्तमिति द्रष्टव्यम् । समाप्तिसूचनार्थोऽभ्यासः ॥२१॥

**इति द्राह्यायणश्रौतसूत्रे सप्तदशे पटले चतुर्थः खण्डः ॥४॥**

स्तोमानां प्रविभागज्ञः स्तोमसालोक्यमश्नुते ।
अनन्तां श्रियमायुश्च कीर्तिं च लभते ध्रुवम् ॥

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः ।
छन्दोगसूत्रदीपेऽस्मिन् कृतः स्तोमविनिर्णयः ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे सप्तदशः पटलः समाप्तः ॥१७॥**

---

12. $My^{2\cdot3}$ छन्दोगसूत्रस्य for काश्यपगोत्रेण

13. $My^{2\cdot3}$ मध्यमे दशके वृत्तः सप्तमः पटलोऽधुना for छन्दोग · · · विनिर्णयः

## अष्टादशः पटलः

### प्रथमः खण्डः

इदानीं विकृतिष्वार्षेयकल्पस्य मूलमतिदेशं प्रस्तौति —

**छन्दोदैवतसामान्तयोगान्न्याय्यान् ब्रुवते**
**यथा षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य ॥१॥**

इति। योगशब्दः प्रत्येकमभिसंबध्यते। छन्दोयोगो दैवतयोगः सामान्तयोगश्च **यथा** येन प्रकारेण **षोडशिमतोऽतिरात्रस्य ज्योतिष्टोमस्य** भवन्ति तानुत्तरेष्वपि क्रतुषु तथैव **न्याय्यान्** युक्तान् **ब्रुवते** न्यायविदः। कुतः? ज्योतिष्टोमे सर्वधर्माम्नानात्। उत्तरेषु धर्मानाम्नानात्। तेषां धर्मानपेक्षत्वाच्चेति। छन्दोयोगो नाम गायत्रीषु कृत्स्नमाज्यं बहिष्पवमानम्, त्रिच्छन्दा माध्यंदिनपवमानः, पञ्चच्छन्दा आर्भवः, बार्हतानि पृष्ठानीत्येवं प्रकारः। दैवतयोगो नाम सर्वे पवमानाः सोमदेवत्याः। नानादेवत्यान्याज्यानि। सर्वाणि पृष्ठान्यैन्द्राणीत्येवमादिः। सामान्तयोगः नाम गायत्रंस्वारं बहिष्पवमानम्। आज्यानि चेत्येवमादि कथा। विकृतिषु सामान्तरागमेऽपि प्राकृता एव सामन्ताः स्युः। तद्यथा पवमानान्त्ययोरौशनकावयोः स्थाने यानि सामानि तानि स्वाराण्येव स्युः। तथा **ऐडेन बृहतीमारभन्ते** (तां. ब्रा. ७.३.१४) इत्येवमादि द्रष्टव्यम्। तत्र ज्योतिष्टोमवत् सर्वविकृतिष्विति वक्तव्ये छन्दोदैवतेति वचनं विकृतिष्वृक्सामान्यत्वेऽपि छन्दोदैवतानि तान्येव प्रवर्तन्ते। न क्वचिदपि निवर्तन्ते इति वक्तुमिति ॥१॥

---

5. T. om. यथा · · · ब्रुवते (L. 8).
6. My[1] after इति adds :—छन्दोयोगा दैवतयोगाः सामान्तयोगाश्च ज्योतिष्टोमस्य ज्योतिष्टोमस्येति
8. My[1] उक्तान्, My[3] प्रयुक्तान् for युक्तान्
   T. om. सर्व० · · · · त्रिच्छन्दा (L. 10)
12. My[3] C. ०दैवत्याः for ०देवत्याः
13. My[1-3] कथं for कथा
16. My[1] My[4] सर्वं for सर्व०
17. C. T. ०दैवतादीनि for ०दैवतानि; C. पृथक् for ऋक्
18. My[2-3] वक्तव्यम् for वक्तुम्; T. after वक्तुम् ins. शक्यम्

**उक्थोत्तमेऽनुष्टुभो न्याय्याः ॥२॥**

उक्थानि त्रीणि स्तोत्राणि भवन्ति। तेषामुत्तमे स्तोत्रे विकृतिषु सर्वा अनुष्टुभ एव न्याय्याः ॥२॥

ननु च प्रकृतौ विच्छन्दस ऋचो भवन्ति। **ककुप् प्रथमा । अथोष्णिगथ पुरुष्णिगि** (तां. ब्रा. ८.८.२६) ति ब्राह्मणम्। तत् कथमनुष्टुभो न्याय्याः। अत आह—

**विच्छन्दसस्तु वचनात् ॥३॥**

इति। सत्यम्। अस्ति ब्राह्मणम्। अतिरात्रमध्यगते उक्थोत्तमे तद् वचनम्। न पुनरुक्थ्यसंस्थे ज्योतिष्टोम इत्यभिप्रायः। तथा च वक्ष्यति आनुष्टुभः **स्तोत्रीयः स्यादुक्थ्यान्तेषु वैच्छन्दसोऽतिरात्रेषु** इति ॥३॥

ननु च प्रकृतौ मन्त्रव्यतिरेकेण स्तोत्राणां न काचन देवता विद्यते। येन विकृतौ देवतातिदिश्येत। अत आह—

**यद्देवत्यासु स्तुवते सा स्तोत्रदेवता ॥४॥**

इति। सत्यम्। एवं **यद्देवत्यास्वृक्षु स्तुवते सैव स्तोत्रदेवता**। न पृथगस्ति। तेन विकृतौ ऋगन्तरागमे प्रकृतिवत्तत्तद्देवत्या एव ऋचः आहर्तव्याः ॥४॥

**अन्वध्यायमपवादनिशामनम् ॥५॥**

---

1. MMy[1] उक्थ्य° for उक्थ°

2. My[1-4] उक्थ्यानि for उक्थानि

9. My[1-4] T. उक्थ° for उक्थ्य°

T. अनुष्टुभि for आनुष्टुभः

12. T. My[1-4] C. प्रकृतौ for विकृतौ

14. C. om. एवम्

16. T. अनध्यायम् for अन्वध्यायम्; T. M. अपवादि for अपवाद°

पूर्वोक्तस्य सामान्यातिदेशस्य प्रत्यक्षाध्ययनानुसारेणापवादो द्रष्टव्य इत्यर्थः। अध्ययनमध्यायः। प्रत्यक्षवचनमुत्तरपाठ इत्यादिकम्। यथाग्निष्टुत्सु आग्नेयीः स्तुवत इति प्रत्यक्षवचनम्। तथा व्यूढदशरात्रे त्रिष्टुब्जगतीनां प्रतिपदां प्रत्यक्षवचनम्। तथा विश्वजिति बहिष्पवमाने नानादेवत्यानामृचां विधानम्। तथाग्निष्टुत्स्वाग्नेयीः स्तुवत इति प्रत्यक्षवचनात् सर्वस्तोत्राणामाग्नेयत्वम्। तथा छन्दोमेषु निधनान्ताः पवमानाः भवन्तीति वचनं प्रकृतसामान्तयोगापवादः। एवमन्यदपि तत्र तत्र द्रष्टव्यम् ॥५॥

अथ सामान्तयोगे विशेषं वक्ष्यन् सामानि तावच्चतुर्धा विभजति—

**स्वाराणि हाइकारस्वाराणि पदानुस्वाराणि च ॥६॥**

इति। ओहाइ इत्यनेन स्वरेण यानि सामानि समाप्यन्ते तानि **हाइकारस्वराणि**। ऋगन्त्यमक्षरं स्वरयित्वा यानि समाप्यन्ते तानि **पदानुस्वाराणि**। यथौशनकावे सामनी ॥६॥

**तेभ्योऽन्यान्यैडवाङ्निधनेभ्यश्च निधनवन्ति ॥७॥**

इडेति निधनं येषां तान्यैडानि। स्वारवाङ्निधनेभ्यस्त्रिभ्यः सामजातेभ्यो यदन्यत् सामजातं तन्निधनवदित्युच्यत इत्यर्थः। तदेवं चत्वारि सामजातानि ॥७॥

---

1. T. अप्रत्यक्ष° for प्रत्यक्ष°
3. C. यथा for तथा; C. °पदः for °पदां; T. om. तथा ··· °वचनात् (L. 5)
4. °वचनात् for °वचनम्;
6. My² प्राकृत° for प्रकृत°; My² अन्यत्रापि for अन्यदपि
8. My² वदन् for वक्ष्यन्
10. C एहाइ for ओहाइ
11. My¹·¹ T. ऋचामन्त्यम् for ऋगन्त्यम्

ततः किमित्याह्—

**सर्वेषां तुल्यान्तसंनिपाते जामि ॥८॥**

इति । सर्वेषां साम्नां तुल्यान्तेन तुल्यनिधनेन साम्ना संनिपाते जामिदोषो भवति । ऐडस्यैडेन संनिपाते जामि । स्वारस्य स्वारेण संनिपाते निधनवतो निधनवता संनिपाते । तथा च ब्राह्मणम्—**जामि वा एतद्यज्ञे क्रियते इत्याहुर्यत् सर्वाणि निधनवन्ति सह क्रियन्ते** (तां. ब्रा. १६.५.२५) इति ॥८॥

**वाचोऽन्यत्र ॥९॥**

वाङ्निधनादन्यत्र जामिदोषो न वाङ्निधनयोः संनिपात इत्यर्थः ॥९॥

**तन्न कुर्यादनादेशे ॥१०॥**

तत् जामि क्वचिदपि न **कुर्याद्** वचनादृते । यथा सर्वस्वारे सर्वे स्वारा कार्या (द्रा. श्रौ. १६.३.८) इति वचनम् । ततोऽन्यत्र प्रकृतिवज्जामिदोषः परिहरणीयः ॥१०॥

**दशरात्रात् पाडहिकान्यष्टमनवमयोश्चैतान्यहीनतन्त्राणि ॥११॥**

दशरात्रे यानि पृष्ठ्यः षडहस्य तन्त्राणि **अष्टमनवमयोरह्नोश्च** ये तन्त्रे तानि **दशरात्रात्** उद्धृतानि द्विरात्रप्रभृतिष्वहीनेषु प्रवर्तन्त इत्यर्थः । सप्तमदशमयोरह्नोर्न प्रकृतित्वमभिमतम् । तयोः सवनमुखीयगायत्र्योरहरन्तवत् पृथग् विधानाभावात् ॥११॥

**ज्योतिषश्च गोश्चैकाहिके तन्त्रे ॥१२॥**

---

8. My[1] om. न

13. M: षडहिकानि for पाडहिकानि; My[2] दाशरात्रात् for दशरात्रात्

16. C. दशरात्राणि for दशरात्रादुद्धृतानि; My[1] TC. प्रभृति⁰ for प्रभृतिषु; My[1-4] वर्तन्ते for प्रवर्तन्ते

18. My[2] ⁰भावात् for (अ) भावात्

19. C. ज्योतिष्टोमयोश्च for ज्योतिषश्च गोश्च

ज्योतिष्टोमस्य च ये तन्त्रे ते एकाहेषु प्रवर्तेते इत्यर्थः । तत्र रथन्तरपृष्ठेषु ज्योतिस्तन्त्रम् । बृहत्पृष्ठेषु गोतन्त्रमिति स्वरसतो व्यवस्था । ननु च न वयं ब्राह्मणे गोस्तन्त्रमधीमहे । सत्यम् । शाखान्तरे अधीतमिति प्रकृतित्वम् ॥१२॥

**तयोः समास उभयफलकम् ॥१३॥**

**तयोर्ज्योतिष्टोमगोष्टोमयोः समास उभयफलकं** नाम तन्त्रम् । तदपि क्वचिदेकाहेषु प्रवर्तत इत्यर्थः ॥१३॥

**कल्पसप्रायाणि ऋक्सामानि यत्र समवयन्ति तदाशीस्तन्त्रं यदाभिचरणीयेषु ॥१४॥**

**यत्कामः क्रतुस्तदभिवादि** द्रव्यं **कल्पसप्रायमित्याचक्षते** (नि. ६-२) इति निदानकारः । कल्पः क्रतुः तत्फलाभिरूपाणि **ऋक्सामानि** प्रायेण यत्र भवन्ति **तदाशीस्तन्त्रम्** । यथा वज्रादिष्वेकाहेषु **अपघ्नन् पवसे मृध** (सा. ५१०) इत्यादि। तदेवं द्वादशतन्त्राणि । एतान्येव विकृतिषु प्रवर्तन्ते । नान्यत् किञ्चित् ॥१४॥

ननु च नैषामेकमपि तन्त्रं विकृतिषु दृश्यते । सर्वत्र कल्पकारेणान्यथा कल्पनात् । तस्मान्न निश्चयः शक्यते कर्तुम् । अत आह—

**भूयिष्ठं तन्त्रलक्षणम् ॥१५॥**

इति । सत्यम् अन्यथा कल्पनम् । तथापि यदीयमङ्गजातं यत्र **भूयिष्ठं** दृश्यते तत्तत्तन्त्रस्य ज्ञापकमित्यर्थः ॥१५॥

---

1. My[2] om. ते ; C. एकाहिकेषु for एकाहेषु
2. C. स्वरगतो My[2] स्वरे सतो for स्वरसतो
3. My[2] अधीयतम् for अधीतम्
7. T. भवन्ति for समवयन्ति
10. My[2] तत्र for यत्र
11. My[2] T. वस्त्रादि My[2] भस्त्रादि for वज्रादि
13. My[2] तत्र for तन्त्रं
15. My[1'3-4] T. C. तत्र for तन्त्र
17. TC. My[2] om. one तत्

**उत्तरयोः सवनमुखीये गायत्र्याविति शौचि वृक्षिः ॥१६॥**

यद्वा विकृतीनाम**मुत्तरयोः** सवनयोर्मुखे ये **गायत्र्यौ** ते तन्त्रस्य लक्षणमिति मतान्तरम् । कुतः । प्रकृतिभूतेषु दशस्वहःसु तयोरेव हि प्रत्यहं भेदो भवति । अन्यत्तु यज्ञायज्ञीयादिकं भूयिष्ठं साधारणं तेन विकृतिष्वसाधारणगायत्रीदर्शनात्तन्त्रनिश्चयः कार्य इति । तथा च कल्पकारक्लृप्तांस्त्रिरात्रानधिकृत्य निदानकारः **आहीनिकतन्त्राणीति गौतमस्तद्गायत्रीभिर्विजानीमः** (नि. ८.५) इति ॥१६॥

**माध्यंदिनीया त्वाचार्याणाम् ॥१७॥**

माध्यंदिनसवनीयैव गायत्री विकृतिषु दृष्टं तन्त्रस्य लक्षणम् । तस्याः क्वचिदप्यव्यभिचारादिति बह्वाचार्यमतम् । ननु च यदि द्वादशैव तन्त्राणि तर्हि द्वादशभिरेव तन्त्रैर्विकृतयः कल्पनीयाः । न पुनर्विकृतिष्वन्यथा कर्तव्यम् । उच्यते । क्वचित् प्रत्यक्षविहितस्तोमसंभवार्थं तन्त्रस्यान्यथाकरणम् । क्वचिदाहत्यैव सामान्तरविधानात् । क्वचित् शाखान्तरविधानात् । एवं तत्र तत्र निदानं द्रष्टव्यम् ॥१७॥

**द्विरात्रप्रभृतिष्वहीनेषु प्राक् षडहेभ्योऽन्त्यमन्त्यमैकाहिकमिति राणायनीपुत्रः ॥१८॥**

---

4. C. अन्यस्तु for अन्यत्तु C. भूयिष्ठ॰ for भूयिष्ठं

8. My[1-4] TC. ॰सवनमुखीये च for ॰सवनीयैव गायत्री; C. om. विकृतिषु; CT. दृष्ट्वा My[2] दृष्टान्तं for दृष्टं

9. My[1] व्यभिचाराभावात् My[1] अव्यभिचाराभावात् for अव्यभिचारात् T. om. यदि and एव

10. My[2] T. अन्यथान्यथा for अन्यथा My[1] C My[4] कर्तव्यः for कर्तव्यम्

12. My[1-4] T. शाखान्तरात् for शाखान्तरविधानात्

14. My[2-4] ॰प्रभृति॰ for ॰प्रभृतिषु C. उत्तमम् for अन्त्यमन्त्यम्

15. T. राणायनि॰ for राणायनी॰;

द्विरात्रादिष्वहीनेषु पञ्चरात्रपर्यन्तेषु **अन्त्यमन्त्यम्** अहरैकाहिकं तन्त्रमेव। कुतः। तस्यातिरात्रत्वेन चोदनात् प्रकृतिभूते चाहीनदशरात्रे कस्यचिदतिरात्रस्याभावात् ॥१८॥

**सर्वाण्याहीनिकानीति वैयाघ्रपद्यः ॥१९॥**

अन्त्यान्यनन्त्यानि च सर्वाण्यप्यहान्यहीनतन्त्राण्येव। अहर्गणत्वसामान्यादहीनधर्मत्वप्राप्तेः। एवं सति प्रकृतावहीने रात्रिरविद्यमानापि वचनात् भविष्यति। अहरंशस्तूक्थपर्यन्त आहीनिक एव न्याय्यः इति मतान्तरम् ॥१९॥

**अहीनैकाहसमासं तु लामकायनः ॥२०॥**

उक्थपर्यन्तोऽहरंशोऽहीनैकाहसमासः स्यात्। कुतः। रात्रिदर्शनादेकाहधर्मः स्यात्। अहर्गणत्वसामान्यादहीनधर्मश्चेति। एवं समास एव न्याय्य इति। तथा च कल्पकारोऽन्त्येऽहन्यहीनस्य प्रतिपदमैकाहिकीं च माध्यंदिनीयां गायत्रीं रागस्य करोति ॥२०॥

**इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले प्रथमः खण्डः ॥१॥**

---

1. My[1] TC. °रात्रि° for °रात्र°

5. My[1,4] T. C. अन्त्यानि for अनन्त्यानि

11. T. अहीनकस्य for अहीनस्य

## द्वितीयः खण्डः

**अथ साम्नां पञ्चधाकारः ॥**

वक्ष्यत इति शेषः ॥१॥

**प्रस्तावोद्गीथौ प्रतिहारोपद्रवौ निधनमन्तः ॥२॥**

अन्तिमो भागो **निधनम्** । ततः पूर्वे चत्वारो भागाः । असमासनिर्देशोऽवान्तरसंबन्धसूचनार्थः । तथाहि **प्रस्तावनिमित्तमवसादमोङ्कारेणोद्गीथः शमयतीति** । तयोरवान्तरसंबन्धः । तथैव प्रतिहारोपद्रवयोरिति । शाह्यायनिनस्तथैवार्थीयते च ॥२॥

**तत्सर्वे श्रुतिसामर्थ्यात् ॥३॥**

तच्छब्देन निधनपरामर्शः । तन्निधनं सर्वे ब्रूयुः । न केवलमुद्गाता । कुतः । **श्रुतिसामर्थ्यात् एकाक्षरं निधनमुपयन्ति रथन्तरस्यानतिवादाय** (तां. ब्रा. ११.३.६) **आतमितोर्निधनमुपयन्ति** (तां. ब्रा. ५.४.६) इत्यादिवाक्येषु निधनस्तुतौ तद्गुणविधौ च कर्तृबहुत्वश्रवणात् । प्रस्तावोद्गीथप्रतिहारास्तु प्रस्तोतेत्यादिसमाख्यानुरोधात् पृथक् पृथक् ब्रूयुः । तथोषस्तिब्राह्मणे प्रस्तोतर्या देवतेत्यारभ्य प्रस्तावादिषु पृथगेव कर्तॄन् दर्शयति । उपद्रवस्तूद्गातुरेव । **उद्गातैव कुर्यादनादेशे** (द्रा. श्रौ. २६.४.८) इति वचनात् । केचित्तु **निधनमन्तः सर्व** इति लुप्ततच्छब्दमेकसूत्रं पठन्ति ॥३॥

---

2. C. पञ्चप्रकारः for पञ्चधाकारः

5. C. नान्तरसंबन्धः for °वान्तरसंबन्धसूचनार्थः;

6. T. om. °सूचनार्थः . . . . अवान्तर° (L. 7)

11. T. °पादाय° for वादाय

12. My[2] °वाक्यादिषु for °वाक्येषु

14. C. उपनिषद्° for उपस्ति°

16. My[2] निधनवन्तं for निधनमन्तः

My[2] after पठन्ति adds :—इति । अन्ये तु निधनमन्त इति । मत्प्रत्ययान्तमिति

**गायत्रे तु विकल्पः सर्वे वोद्गाता वा ॥४॥**

**गायत्रे तु** साम्नि **सर्वे** निधनं ब्रूयुः । उद्गाता वेति **विकल्पः** ॥४॥

**सप्तधाकारमप्येके वचनात् ॥५॥**

उपनिषदि **पञ्चविधं सामोपासीत** । **सप्तविधं सामोपासीते** (छां. उ. २.८.१) ति पक्षद्वयस्यापि श्रवणात् ॥५॥

**हिंकारः प्रस्तावात् पूर्वः ॥६॥**

**उद्गीथादोंकारः ॥७॥**

यः **प्रस्तावात् पूर्वो हिंकारो** यश्चोद्गीथात् पूर्व ओंकारः तौ सप्तविधपक्षे भक्तिद्वयम् ॥६-७॥

**चतुष्टयानि सामानि विषमभक्तीनि पदसस्तोभस्तोभविभाग्यानि यथा प्रवद्भार्गवं महावैश्वामित्रं सौमित्रम् ॥८॥**

विभाग्यशब्दः प्रत्येकमभिसंबध्यते । पदविभाग्यानि सस्तोभपदविभाग्यानि केवलस्तोभविभाग्यानि चेति त्रिविधानि विभाग्यसामानि । तदन्यानि **विषमभक्तीनि** । इत्येवं **चतुष्टयानि सामानि** । तत्र यस्मिन् साम्नि प्रस्तोतुरेकः पादः उद्गातुरेकः प्रतिहर्तुरेकः पुनश्चोद्गातुरेक इत्येवं विभज्यते तत् पदविभाग्यम् । यत्र स्तोभसहितानां पदानां विभागः तत् सस्तोभपदविभाग्यम् । यत्र केवलं स्तोभैरेव विभागः पादास्तु सर्वे निधनान्तर्भूताः साधारणास्त्रिभिरपि प्रयोज्यास्तत्

---

4. My[2] उपनिषत्सु for उपनिषदि

10. My[2] before चतुष्टयानि adds :—अथ भक्तीनां प्रमाणं दर्शयिष्यन् सामानि तावच्चतुर्धा विभजति

13. My[1-4] T. om. च
My[2] om. तदन्यानि

15. My[1] om. एकः; My[1] एकं for एवं

16. My[2] before पदानां adds :—चतुर्णां
T. om. यत्र ··· °विभाग्यम्

17. My[2] निधनभूताः My[4] निधनान्तभूताः for निधनान्तर्भूताः

स्तोभविभाग्यम् । स्वयमेवैतत् सूत्रकारः स्पष्टं वक्ष्यति । त्रयाणामपि विभाग्यानां क्रमेणोदाहरणानि प्रवद्भार्गवादीनि ॥८॥

तत्र प्रथमं विषमभक्तिषु भक्तिपरिमाणं दर्शयितुमारभते –

**अवसानं प्रस्तावान्तलक्षणमविभाग्यानाम् ॥९॥**

इति । यावति प्रदेशे साम्नः प्रथममवसानम् अध्ययनपारंपर्यसिद्धं तावान् प्रस्तावोऽ**विभाग्यानाम्** इति । अत्र चतुर्थमन्द्रावसितमित्यादि शास्त्रान्तरादवसानविशेषोऽवगन्तव्यः । न केवलमवसानमात्रम् ॥९॥

**द्व्यवसानः पूर्वे वारवन्तीये ॥१०॥**

पूर्वस्मिन् **वारवन्तीये** साम्नि द्वाभ्यामवसानाभ्यां परिमितः प्रस्तावः ॥१०॥

**पूर्वेण वा ॥११॥**

यद्वा प्रथमेनैवावसानेन परिमितः स्यात् ॥११॥

**चतुरक्षरो वाजभृत्कार्णश्रवसाजिगानाम् ॥१२॥**

वाजभृदादीनां त्रयाणां च चतुरक्षरपरिमितः प्रस्तावः ॥१२॥

**सुरूपयोश्च ॥१३॥**

**चतुरक्षर** इत्यनुवर्तते ॥१३॥

**पदं वाजिगप्रभृतीनाम् ॥१४॥**

आजिगस्य सुरूपयोश्च त्रयाणां पादो वा प्रस्तावश्चतुरक्षरो वेति विकल्पः ॥१४॥

**ऐडेऽर्द्धं साकमश्वे ॥१५॥**

ऐडं स्वारमिति च साकमश्वद्वयम् । तयोरैडेऽर्द्धं पदं पदस्यार्द्धं प्रस्तावः ॥१५॥

**शौक्ते च ॥१६॥**

अर्द्धं पदमित्यनुवर्तते ॥१६॥

---

3. My[2] om. भक्ति°

6. My[2] om. अत्र

7. My[2] before न adds :—स च शाट्यायनिनामुद्गीथादौ प्रणवाध्ययनेनैव सुज्ञातः; My[2] °मात्रात् for मात्रम्

9. T. after प्रस्तावः adds :—सुरूपयोश्चेति

12. T. आन्धीगवानां for आजिगानां

20. My[1] TC. साम° for साकमश्व°

**स्तोभान्त आभीशवयोः ॥१७॥**

स्पष्टम् । अत्र स्तोभान्तपदं पूर्वेष्वपि सूत्रेष्वनुसंजनीयम् । स्तोभान्तमर्द्धं पदं स्तोभान्तश्चतुरक्षर इति ॥१७॥

**अभ्यस्तेनोत्तरस्य ॥१८॥**

उत्तरस्याभीशवस्य पुनरभ्यस्तेन स्तोभेन परिमितः प्रस्ताव इत्यर्थः ॥१८॥

**हाउकारान्तश्च्यावने ॥१९॥**

स्पष्टम् ॥१९॥

**वाग्वाम्रे ॥२०॥**

वाम्रे साम्नि वाक् प्रस्तावान्तलक्षणमित्यर्थः । वागन्तः प्रस्ताव इति यावत् ॥२०॥

**षोडशाक्षरो नानदस्य ॥२१॥**

**तथा गोश्रृङ्गसंजययोः ॥२२॥**

द्वयमपि स्पष्टम् ॥२१-२२॥

**यच्च रात्र्यां दैवोदासम् ॥२३॥**

रात्रिपर्याये **यद्दैवोदासं** होतृषाम तस्यापि षोडशाक्षरः ॥२३॥

**षट्त्रिंशदक्षर ऋषभस्य रैवतस्य ॥२४॥**

रुद्रस्य त्रय ऋषभाः । रैवतो वैराजः शाक्वर इति । तेषां **रैवतस्य षट्त्रिंशदक्षरः** प्रस्तावः इति । **अवसानं प्रस्तावान्तलक्षणम्** (द्रा. श्रौ.) इत्यस्यैते अपवादा उक्ताः ॥२४॥

---

2. My[4] स्तोभान्तं for स्तोभान्त॰

17. My[1] TC. My[4] om. रैवतो वैराजः शाक्वर इति

एवमविभाग्यानां साम्नां प्रस्तावो लक्षितः । विभाग्यानां तु वक्ष्यति । अथोद्गीथे गुणविधिमाह—

**सर्वेषामोङ्कारेणोद्गीथादानम् ॥२५॥**

इति । **सर्वेषां** विभाग्यानामविभाग्यानां च साम्नामोङ्कारेणोद्गीथस्यारम्भः कार्यः ॥२५॥

तत्र मतद्वयमाह—

**प्रथमाक्षरलोपं तु धानंजय्योऽलोपं शाण्डिल्यः ॥२६॥**

उद्गीथस्य प्रथमाक्षरं लोपयित्वा तत्स्थान ओङ्कारो निवेशनीय इत्येकं मतम् । अधिको निवेशनीय इति मतान्तरम् ॥२६॥

**इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले द्वितीयः खण्डः ॥२॥**

1. My[1] TC. My[4] एवं विभाग्यानां for एवमविभाग्यानां;
   My[1] TC. My[4] अविभाग्यानां तु for विभाग्यानां ।
4. My[2] om. अविभाग्यानां

## तृतीयः खण्डः

उभयोरपि मतयोः साधारणं ब्राह्मणमित्याह—

**प्रस्तुतं वै सामावसीदति तदुद्गातोङ्कारेणोत्तभ्नातीति ब्राह्मणम् ॥१॥**

इति। यथा भारं वहन् गन्तव्यदेशमगत्वा मध्येमार्गमस्ववशः परित्यजेत्। एवमेतत्। यत्साम प्रस्तुत्य कृत्स्नमगीत्वा मध्ये विरामः। तत्र यथा त्यक्तं भारं पतन्तमन्यः क्षिप्रं शिरसोद्गृह्णीयात् तादृशमोङ्कारेणादानमिति ब्राह्मणार्थः। तत्रोङ्कारेणेत्येतावत् श्रूयते। न पुनः स्थानापन्नेन नाप्यधिकेन। न तेन मतद्वयम् ॥१॥

मतान्तरमाह—

**स्वरादिषु वा तमेव स्वरमोङ्कारीकुर्यादागन्तुमोङ्कारं व्यञ्जनादिषु ॥२॥**

इति। **स्वरादिषू**द्गीथभक्तिषु **तमेव स्वरमोङ्कारीकुर्यात्**। व्यञ्जनादिषु अधिकमोङ्कारमिति व्यवस्था ग्राह्या ॥२॥

**प्रत्यवेतस्वरेषु ॥३॥**

पूर्वोक्ता च व्यवस्था **प्रत्यवेतस्वरे**ष्वेवोद्गीथेषु। नान्यत्रेत्यर्थः। प्रत्यवायो नाम नीचस्वरेणोद्गीथारम्भः। प्रत्यवेतस्वरादन्यत्र नैव प्रणवेनादानम्। नीचारम्भे ह्युत्तम्भनापेक्षा। नान्यत्रेति भावः ॥३॥

इदानीं लोपपक्षे लुप्तवर्णस्य धर्मानोङ्कारेऽतिदिशति—

**प्रत्यक्षपरोक्षिप्रचिरन्यस्तोदात्तकृष्टाकृष्टानां येन संस्वरेत्तत्कुर्यात् ॥४॥**

---

5. My² °स्ववशः,-My² अवसः for अस्ववशः

8. My⁴ om. न My² om. तेन C. om. न तेन मतद्वयमिति
C. स्थानम् for स्थान°

11. M. ओङ्कारं for ओङ्कारी°

19. My² लुप्तस्य for लुप्तवर्णस्य; T. दर्शयति for अतिदिशति.

लुप्तस्याक्षरस्य प्रत्यक्षादीनां रूपाणां मध्ये येन रूपेण प्रणवं सदृशमुच्चरेत्तद्रूपं **कुर्यात्** । यदि लुप्तो वर्णः प्रत्यक्षो विकाररहितः स्यात् तदा प्रणवेऽपि तथा कुर्यात् । यद्याउहावादिविकारेण लुप्तः परोक्षः स्यात् तदा प्रणवोऽपि परोक्ष एव स्यात् । दीर्घलुप्तादेरधिका मात्रा चिरमित्युच्यते । न्यस्तो नामानुदात्तः । प्रसिद्धमन्यत् । अथवा सर्वेषामेव साम्नामूहप्रकारोऽयं विधीयते । योनिगतानां प्रत्यक्षादिवर्णानां सदृशमेवोत्तरास्वपि गेयमिति । यथा वक्ष्यति **अक्षरपरिमाणं यथायोनि चिकीर्षे** (द्रा. श्रौ. २०.४.७) दिति । तादृशमेतत् ॥४॥

**सर्वं लघीयसाऽमात्राविलोपेन ॥५॥**

लघीयो गरीयश्चेति द्विविधं पुरुषस्योच्चारणवृत्तम् । व्यासक्तं गरीयः । तद्विपरीतं लघीयः । तेन वृत्तेन सर्वं साम गायेत् । न केवलमुद्गीथमेवेति । लघीयसेत्युक्ते दीर्घप्लुतादिमात्राविलोपशङ्का स्यात् । तेनोक्तममात्राविलोपेनेति ॥५॥

अथ प्रतिहारं लक्षयन् परिभाषां करोति—

**पदादिः प्रतिहारस्थानं सर्वत्र ॥६॥**

इति । प्रतिहारे निरूपिते पारिशेष्यसिद्धमुद्गीथपरिमाणम् । न पृथक् वक्तव्यम् । तेषां द्वे अक्षरे प्रतिहारः ( द्रा. श्रौ. १८.४.१ ) इत्यादि यदूर्ध्वं वक्ष्याम-

---

2. C. प्रत्ययो for प्रत्यक्षो
   My[2] प्रणवोऽपि तथा स्यात् for प्रणवेऽपि तथा कुर्यात्
5. C. प्रत्ययादि[0] for प्रत्यक्षादि[0]
9. My[2] उच्चारणे for उच्चारण[0]
10. My[2] वृत्ते for वृत्तेन
11. C. [0]लोप[0] for [0]विलोप[0]
    My[1-4] C. मात्रा[0] for अमात्रा[0]
13. My[1] C. पादादिः for पदादिः
14. C. [0]शेष[0], for [0]शेष्य[0]
15. C. before तेषां adds :—तत्र; My[1] My[3-4] इत्यादिना for इत्यादि

स्तत्र पादस्यादौ प्रतिहारः। न मध्ये नाप्यन्त इति सामान्यतो विद्यात् ॥६॥

**पदानिर्देशे चोत्तमे पदे ॥७॥**

ऋचः पादविशेषानिर्देशे सत्युत्तमे पादे इति प्रतीयात् ॥७॥

**संख्याविषये चाक्षराधिकारः ॥८॥**

द्वे त्रीणीत्येवमुत्तरत्र संख्यानिर्देशेषु कस्य संख्येयमिति संदेहे अक्षराणामधिकारः। अक्षराणि संख्येयानि विद्यादित्यर्थः ॥८॥

**अन्तःप्रतिहारं स्तोभान् प्रतिहर्ता ब्रूयात् ॥९॥**

त्र्यक्षरश्चतुरक्षरो वा प्रतिहार इत्युक्ते तदन्तर्गतान् ऋगक्षराधिकानपि स्तोभान् प्रतिहर्तैव ब्रूयात् ॥९॥

**ऊर्ध्वं चार्चिकाव्यपेतान् ॥१०॥**

प्रतिहाराद्दूर्ध्वमपि ये स्तोभास्तानृगक्षरैरव्यपेतान् स एव ब्रूयात् ॥१०॥

**अष्टाक्षरपदोत्तमानां चत्वार्यन्यत्र पङ्क्तिभ्यः ॥११॥**

येषां साम्नामुत्तमः पादोऽष्टाक्षरस्तेषां चत्वार्यक्षराण्युत्तमे पादे प्रतिहारः पङ्क्तिषु गीयमानं साम वर्जयित्वा ॥११॥

**तस्मिन्न्याय्यसंज्ञा ॥१२॥**

---

1. C. om. सामान्यतो विद्यात्
3. C. om. ऋचः; My$^{1}$ My$^{4}$ पद° for पाद°; C. प्रतिपादितम् for प्रतीयात्
5. C. संख्यायतेति, My$^{1,3}$ संख्येयत्वेति, My$^{2}$ संख्येयत्वमिति for संख्येयमिति;
   T. कस्य कस्य for कस्य
   My$^{1}$ My$^{4}$ अक्षराणामक्षराधिकारः for अक्षराणामधिकारः
8. C. om. त्र्यक्षर° · · · ब्रूयात् (L. 9)
11. C. स्पष्टे for प्रतिहाराद् · · · ब्रूयात्; My$^{4}$ om. अपि;
   My$^{1}$ My$^{4}$ om. एव
12. T. (उ) त्तमपदानां for पदोत्तमानां
15. My$^{1}$ My$^{3-4}$ न्याय° for न्याय्य°

तस्य चतुरक्षरगतस्योत्तमपादस्य प्रतिहारस्य न्याय्य इति संज्ञा ॥१२॥

**पदान्तमविशेषे चोपोत्तमात् पदात् प्रतीयात् ॥१३॥**

पदान्त इत्युक्ते विशेषानिर्देशे उपोत्तमस्य पदस्यान्तं प्रतीयात्। विशेषनिर्देशे तु यथानिर्देशम्। यथा **वैदन्वते** चाभ्यासवत्युत्तमे तु पदान्तस्तस्य (द्रा. श्रौ. १९.१.१४-१५) इति। अत्रोत्तमग्रहणादुत्तमस्य पादस्यान्त इति निश्चयः ॥१३॥

**एष न्यायोऽनादेशे ॥१४॥**

स्पष्टम् ॥१४॥

**सौमेधस्यौर्णायिवयोर्ऋषभस्य पावमनस्य निधनस्य मार्गीयवस्यै-तेषामुपरिष्टात् प्रतिहारस्योद्गाता स्तोभं भजते ॥१५॥**

**ऊर्ध्वं चार्चिकाव्यपेतान्** (द्रा. श्रौ. १८.३.१०) इति पूर्वोक्तस्यापवादोऽयम्। सौमेधादिसामपञ्चके प्रतिहारस्योपरिष्टात् स्तोभानुद्गाता ब्रूयात्। **पावमनस्ये**त्यृषभविशेषणम्। **ईनिधनस्ये**ति मार्गीयवविशेषणम् ॥१५॥

**न्याय्यप्रतिहाराणामिडानां संक्षराश्वसूक्तैडस्वरवार्षाहरस्वार-कौत्सानां गोराङ्गिरसस्य साम्नोऽभ्यासवतश्च क्रौञ्चस्याग्नि-मीयामस्यैतेषां पुरस्तात् प्रतिहर्ता ॥१६॥**

---

1. My[1-4] C. न्याय° for न्याय्य:

2. My[1] My[4] CT. अविशेषेण for अविशेषे च; My[1] पादात् for पदात्; M उत्तमात् for उपोत्तमात्

4. My[1] वैतन्वते for वैदन्वते
T. °पदान्तस्य for पदान्तस्तस्य

6. T. य एषां for एष;

13. My[1-2] My[4] न्याय° for न्याय्य°

इडानां संक्षारादिसामाष्टकं न्याय्यप्रतिहारम् । **अष्टाक्षरपदोत्तमानां चत्वारी** (द्रा. श्रौ. १८.३.११) ति वचनात् । पक्षान्तरमप्यस्ति । **उत्तरेण व्यावर्गेण प्रतिहरेत्** (द्रा. श्रौ. २०.३.२४) इति वचनात् । तत्र यदा न्याय्यप्रतिहाराः तदा तेषां पुरस्तात्प्रतिहारस्य स्तोभान् प्रतिहर्ता ब्रूयादित्यर्थः । उद्गातुः प्राप्ते वचनमेतत् । **यज्जायथा अपूर्व्य** (सा. ६०१) त्यस्यामिडानिधनं स्वरमैडस्वरमित्युच्यते । **अग्निमीडे पुरोहितम्** (सा. ६०५) इत्येषा योनिर्यस्य साम्नः साग्निमीया इत्युच्यते ॥१६॥

**संहितमार्षभं शाकलं वाजदावर्यः स्वारं सौमित्रं पदनिधने काण्वरोहितकूलीये ॥१७॥**

**इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले तृतीयः खण्डः ॥३॥**

---

3. T. न्याय° for न्याय्य°

# चतुर्थः खण्डः

**यौक्ताश्वे सौपर्णानामुत्तरे यौधाजयं नौधसमाष्कारणिधनं काण्वं यौक्तस्रुचं वाम्रं तीरश्चीनिधनमायास्यमिन्द्रस्ययशो वैष्णवमुत्तरं सफं प्रमंहिष्ठीयं दीर्घं पौष्कलमान्धीगवं बृहदाग्नेयं श्यावाश्वत्रैशोके तेषां द्वे ॥१॥**

संहितादिगणस्य द्वे द्वे अक्षरे प्रतिहाराः। ते चोत्तमपदोपक्रम इत्यर्थसिद्धम्। **स्वारमिति** सौमित्रविशेषणम्। पदमार्च्चिकमेवाक्षरं निधनं यस्य तत् पदनिधनम्। बर्हिर्निधनव्यावृत्त्यर्थमेतद् विशेषणम् । **तिरश्चीनिधनमित्यायास्यविशेषणम्** । **उत्तरमिति** वैष्णवविशेषणम् ॥१॥

तत्रैव सूत्रपञ्चकेन विशेषमाह—

**पुरस्तात्स्तोभो यौक्ताश्वयोः पूर्वस्य ॥२॥**

इति। **पुरस्तात्स्तोभ** इति बहुव्रीहिः। पुरस्तात्स्तोभसहितः प्रतिहारो भवेदित्यर्थः ॥२॥

**श्यावाश्वत्रैशोकयोः पदान्तः ॥३॥**

स्पष्टम् ॥३॥

**अस्तोभस्तु श्यावाश्वस्य ॥४॥**

**ऊर्ध्वं चार्च्चिकाव्यपेतान्** (द्रा. श्रौ. १८.३.१०) इति प्राप्तस्य स्तोभवचनस्य निषेधोऽयम्। **अस्तोभः** स्यात् प्रतिहारः ॥४॥

**पदान्तो वाम्रे न्याय्यो वा ॥५॥**

वाम्रस्य **न्याय्यो वा** प्रतिहारः। पूर्वोक्तो वा ॥५॥

**ओंकारादिस्तृतीयचतुर्थाभ्यां विशोविशीये ॥६॥**

**विशोविशीये** साम्नि उत्तमे पादे **तृतीयचतुर्थाभ्याम्** अक्षराभ्यां प्रतिहार **ओंकारादिरिति** पुरस्तात्स्तोभैकदेशस्याप्राप्तस्य विधानम् ॥६॥

---

6. T. पादोप° for पदोप°
   My[1] C °क्रमाः for °क्रमे;
8. My[1-4] C. निवृत्ति° for व्यावृत्ति°
21. C. before विशो° adds :—प्राग्विकारात्

**हिंकारादिर्वा पञ्चमषष्ठाभ्याम् ॥७॥**

स्पष्टम् ॥७॥

**शौक्तनार्मेधे द्विप्रतिहारे ॥८॥**

द्वौ प्रतिहारौ यस्येति द्विप्रतिहारम् ॥८॥

तावेव प्रतिहारौ दर्शयति—

**प्रथमनवमाभ्यां शौक्तस्य ॥९॥**

उत्तमे पादे प्रथमेनाक्षरेण प्रथमः प्रतिहारः। नवमेनाक्षरेण द्वितीयः प्रतिहारः ॥९॥

**पदान्तश्चतुर्भिः पूर्वो नार्मेधस्य चतुर्भिरेव मध्यमैरुत्तरः ॥१०॥**

**नार्मेधस्योपोत्तमपदान्तैश्चतुर्भिरक्षरैः** प्रथमः प्रतिहारः। अन्त्यपादस्य **मध्यमै**श्चतुर्भिरक्षरैर्द्वितीयः प्रतिहारः ॥१०॥

**एकप्रतिहारं वोत्तरेण ॥११॥**

अथवा नार्मेधमुत्तरेणैकप्रतिहारमेव भवेत् ॥११॥

**भासवैरूपयोर्गायत्रीसाम्नोः पदान्तः ॥१२॥**

गायत्र्यां गीयमानयोरित्यर्थः ॥१२॥

कथमित्याह—

**द्वाभ्यां भासे ॥१३॥**

**चतुर्भिरुत्तरस्य ॥१४॥**

द्वयमपि स्पष्टम् ॥१३-१४॥

**तृतीयेन पदेन यज्ञायज्ञीयनिधने सौहविषे ॥१५॥**

यज्ञायज्ञीयसदृशनिधने **सौहविषे** साम्नि **तृतीयेन पदेन** प्रतिहारः ॥१५॥

---

7. My[2] om. प्रथमः ··· नवमेनाक्षरेण; C. om. नवमेन ··· हारः (L. 8)

10. My[2] °पादान्तैः for °पदान्तैः

21. My[2] T. °यज्ञीयेन for °यज्ञीय°

**श्रायन्तीयवरुणसामद्वैगताञ्जसा दश ॥१६॥**

श्रायन्तीयादिसामचतुष्टयस्य दशाक्षराणि प्रतिहारः ॥१६॥

कथमित्याह —

**तेषां पूर्वयोः सर्वं पदं द्वे च पुनरुक्तस्य ॥१७॥**

**तेषां पूर्वयोः** श्रायन्तीयवरुणसाम्नोः सर्वमष्टाक्षरं **पदम्** । तस्यैव पादस्य पुनरभ्यस्तस्यादितो द्वे अक्षरे । इत्येवं दशाक्षरः प्रतिहारः ॥१७॥

**द्वैगते तु पदान्तः ॥१८॥**

द्वैगते तु साम्नि पदान्तो दशाक्षरः प्रतिहारः ॥१८॥

**उपोत्तमस्य पदस्य पदादिरञ्जसः ॥१९॥**

उपोत्तमस्य पदस्यादितो दशाक्षर इत्यर्थः ॥१९॥

**विशोविशीयप्रभृतीनां वा नवानामुत्तमस्य पदस्यादौ द्वे ॥२०॥**

पूर्वोक्तानां विशोविशीयप्रभृतीनां द्वैगतपर्यन्तानामुत्तमस्य पदस्योपक्रमे द्व्यक्षराः प्रतिहाराः पूर्वोक्ता वेति विकल्पः ॥२०॥

तत्रैव विशेषमाह—

**हाइकारान्तो विशोविशीये ॥२१॥**

इति । हाइकारादूर्ध्वस्य स्तोभस्यांशस्य निषेधोऽयम् ॥२१॥

**श्रायन्तीयवरुणसाम्नोरभ्यासादिः ॥२२॥**

उत्तमस्य पादस्य पुनरभ्यासे आदितो द्व्यक्षर इत्यर्थः ॥२२॥

---

1. My[2] T. repeats दश twice
2. T. om. प्रतिहारः
10. My[2-4] पादस्य for पदस्य
13. C. My[2] T. एव for वा
16. C. अभ्यासस्य for अंशस्य; My[2] स्तोभ° for स्तोभस्य
18. C. आदिः for आदितः

**चत्वारि वा प्राग्घिकारात् प्राग्घिकारात् ॥२३॥**

अथवोत्तमे पादे **हिंकारात् प्राक्** चत्वार्यक्षराणि श्रायन्तीये प्रतिहारः इति । द्विरुक्तिः पटलसमाप्त्यर्था ॥२३॥

**इति द्राह्यायणश्रौतसूत्रे अष्टादशे पटले चतुर्थः खण्डः ॥४॥**

५ इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
अष्टमः पटलो वृत्तो द्वितीये दशकेऽधुना ॥१८॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे अष्टादशः पटलः समाप्तः ॥१८॥**

८ **इति द्राह्यायणश्रौतसूत्रे षष्ठः प्रपाठकः समाप्तः ॥६॥**

---

1. C. om. चत्वारि · · · समाप्त्यर्था (L. 3)
2. Transp. My[1-2] T. om. श्रायन्तीये · · · समाप्त्यर्था after विकल्पः । (p. 393. L. 8)
6. My[2] द्वितीयः पटलः for द्वितीये दशके

सप्तमः प्रपाठकः

## एकोनविंशः पटलः

### प्रथमः खण्डः

**वामदेव्यं स्वारं साकमश्वं पाष्ठौहं निधनकामं सत्रासाहीयं काक्षीवतं च्यावनं गायत्रीसामौशनं निधनवदैध्मवाहम् । तेषां पञ्चमषष्ठे विकल्प्येते न्याय्येन ॥१॥**

स्वारमिति साकमश्वविशेषणम् । गायत्रीसामेत्यौशनविशेषणम् । वामदेव्यादीनां नवानां साम्नामुत्तमे पादे पञ्चमषष्ठे अक्षरे प्रतिहारो न्याय्यो वेति विकल्पः ॥१॥

**गूर्दः सौमेधं माधुच्छन्दसमौदलं सौश्रवसमुत्तारं वार्त्रतुरमृषभो रैवतः कौत्समौष्णिहमातीषादीयं क्रोशमोकोनिधनं स्वारं सामराजं मारुतमौष्णिहमाक्षारं सुज्ञानं हारिवर्णं सांवर्तं जागतं वरुणसाम मरुतांधेनु स्रौग्मतम् । तेषां चत्वारि ॥२॥**

गूर्दादिरेकविंशस्य सामगणस्यान्ते पादे चतुरक्षराः प्रतिहाराः । उत्तरमिति सौश्रवसविशेषणम् । रैवत इति ऋषभविशेषणम् । स्वारमिति सामराजविशेषणम् । मरुतामौष्णिहमित्येकं साम जागतमिति च विशेषणम् ॥२॥

तत्र विशेषमाह—

**अभ्यासो गूर्दस्य ॥३॥**

इति । गूर्दस्योत्तमे पादे मध्यमस्य चतुरक्षरस्य योऽभ्यासः स प्रतिहारः ॥३॥

**अभ्यासादिरुत्तरेषां त्रयाणाम् ॥४॥**

गूर्दादुत्तरेषां त्रयाणामभ्यासादिश्चतुरक्षरः प्रतिहारः ॥४॥

**उत्तमानि सौश्रवसे ॥५॥**

अन्त्यपादस्योत्तमानि चतुरक्षराणि प्रतिहारः ॥५॥

---

8. My. om. अक्षरे

14. My² °अक्षरः प्रतिहारः for °अक्षराः प्रतिहाराः

**अष्टौ वा वार्त्रतुरे ।।६।।**

अन्त्ये पादे वार्त्रतुरस्य चत्वार्यष्टौ वेति विकल्पः ।।६।।

**पूर्वयोश्च न्याय्यौ ।।७।।**

वार्त्रतुरात् **पूर्वयो**रौदलसौश्रवसयो**र्न्याय्यौ** प्रतिहारौ । यद्वा पूर्वोक्तोऽभ्यासादिर् (द्रा. श्रौ. १६.१.४) **उत्तमानि सौश्रवस** (द्रा. श्रौ. १६.१.५) इत्युक्तश्चेति विकल्पः ।।७।।

**मध्यमं वचनमृषभे ।।८।।**

**ऋषभे** साम्नि उत्तमे पादे उत्तमं चतुरक्षरं त्रिरभ्यस्यते । **जुहूमसि द्यवि द्यवी** (सा. १०८७) ति । अत्र मध्यमोऽभ्यासः प्रतिहारः ।।८।।

**मध्यमान्युत्तरेषां पञ्चानाम् ।।९।।**

ऋषभात् **उत्तरेषां** कौत्सादीनां सामराजपर्यन्तानामुत्तमे पादे **मध्यमानि** चतुरक्षराणि प्रतिहारः ।।९।।

**प्राग्वाभ्यासादुत्तमानि कौत्से ।।१०।।**

यद्वा **कौत्से** साम्नि उत्तमे पादे प्रागभ्यासात् उत्तमं चतुरक्षरं पूर्वोक्तं वा मध्यममिति विकल्पः ।।१०।।

**प्रथमानि वा सामराजस्य पुरस्तात्स्तोभः ।।११।।**

सामराजे **प्रथमा**नि मध्यमानि **वा** चतुरक्षराणीति विकल्पः । प्रथमपक्षे पूर्वस्तोभयुक्तः प्रतिहारः ।।११।।

**षड्वा पञ्चमप्रभृतीनि मारुते ।।१२।।**

अन्त्ये पादे पञ्चमाक्षरप्रभृतीनि षडक्षराणि पूर्वोक्तानि **वा**दितश्चतुरक्षराणीति विकल्पः ।।१२।।

**आश्वरथन्तरयोः पञ्च ।।१३।।**

स्पष्टम् ।।१३।।

**वैदन्वते चाभ्यासवति ।।१४।।**

**अभ्यासवति वैदन्वते** च साम्नि पञ्चाक्षर एव प्रतिहारः ।।१४।।

**उत्तमे तु पदान्तस्तस्य ॥१५॥**

तस्य वैदन्वतस्योत्तमे पादे पदान्तः प्रतिहारः । पदान्तमविशेषेणोपोत्तमात् पदाद् (द्रा. श्रौ. १८.३.१३) इति पूर्वं परिभाषितम् । तत्र विशेषेणेत्युक्तम् । विशेषनिर्देशोऽयं उत्तमे तु पदान्त इति ॥१५॥

**आदौ वा द्वे उभयतःस्तोभे ॥१६॥**

यद्वा उपोत्तमपदस्यादौ द्वे अक्षरे उभयतः स्तोभसहिते प्रतिहारः ॥१६॥

**तृतीयं वा ॥१७॥**

यद्वा तृतीयमक्षरं वैदन्वते प्रतिहारः ॥१७॥

**उभौ वैकः ॥१८॥**

अथवा वैदन्वतस्यादितो द्व्यक्षरं तृतीयं चोभौ सह एक एव प्रतिहारो भवेत् ॥१८॥

**इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले प्रथमः खण्डः ॥१॥**

---

1. My[1] पादान्तस्य for पदान्तस्तस्य;

6. My[2] पादस्य for पदस्य

10. My[2] द्व्यक्षरश्च for द्व्यक्षरम्

# द्वितीयः खण्डः

आकूपारक्रौञ्चे गायत्रीसामनी दैवातिथं गोषूक्तं रौरवं द्विर्हिंकारं वामदेव्यमेकारान्तःप्रस्तावं वैयश्वमरण्येगेयं शाक्वरवर्णं सौभरं बार्हद्गिररायोवाजीये स्वारमैध्मवाहं गौशृङ्गं हारायणकौल्मलबर्हिषे जनित्रमुत्तरं वैतहव्यमिहवद्वामदेव्यं प्रतीचीनेडं काशीतं वैष्णवं पूर्वं श्यैतं संजयम् । तेषां षट् ॥१॥

आकूपारादेर्द्वाविंशस्य सामगणस्य षडक्षराः प्रतिहाराः ॥१॥

**अस्तोभावुत्तमयोः ॥२॥**

उत्तमयोः श्यैतसंजययोः स्तोभरहितौ प्रतिहारावित्यर्थः ॥२॥

**प्रथमतृतीययोरुभयतः स्तोभौ ॥३॥**

प्रथमतृतीययोराकूपारदैवातिथयोरुभयतः स्तोभसहितौ प्रतिहारौ ॥३॥

तत्रैव विशेषमाह—

**प्रागौकारात् प्रथमे ॥४॥**

इति । आकूपारप्रतिहारादुत्तरस्य स्तोभस्य औकारात् प्राक् यावानंशः तावानेव प्रयोज्यो न कृत्स्नस्तोभ इत्यर्थः ॥४॥

**हिंकारात्तृतीये ॥५॥**

प्रागित्यनुवर्तते । तृतीये दैवातिथे हिंकारात् प्राग्भूतस्तोभांशो ग्राह्यः । न ततः परम् ॥५॥

**अप्रतिहारे पूर्वे स्तोत्रीये शाक्वरवर्णस्य ॥६॥**

शाक्वरवर्णस्य प्रथमद्वितीययोः स्तोत्रीययोः प्रतिहारो नैवास्तीत्यर्थः ॥६॥

**इहकारान्त ऐध्मवाहे स्तोभः ॥७॥**

ऐध्मवाहे प्रतिहारस्योपरिष्टाद् यः स्तोभः तस्येहकारान्त एव ग्राह्यः । न ततः परम् ॥७॥

---

2. My[1] साम्नी for सामनी

7. TC. °क्षरः प्रतिहारः for °क्षराः प्रतिहाराः

14. My[2] आकूपारात् for आकूपारप्रतिहारात्

**सर्वो वा ॥८॥**

यद्वा सर्व एव स्तोभः प्रयोज्यः ॥८॥

**प्रागोवायास्त्रिषूत्तरेषु ॥९॥**

ऐध्मवाहादुत्तरेषु गौशृङ्गहारायणकौल्मलबर्हिषेषु ओवायाः प्राक्स्तोभो ग्राह्यो न ततः परमित्यर्थः । ओवेत्योकारवाचोलुप्तान्त्यवर्णयोराकारान्तत्वात् स्त्रीलिङ्गनिर्देशः ॥९॥

**पौरुमद्गे च ॥१०॥**

**पौरुमद्गे च** प्रागोवायाः स्तोभो ग्राह्यो न ततः परम् । अगणान्तःपात्यपि पौरुमद्गं न्याय्यप्रतिहारमेव । प्रसङ्गात् सूत्रलाघवोपजीवनायोपात्तमिति मन्तव्यम् ॥१०॥

**ओकाराज्जनित्रे ॥११॥**

प्रागित्येव । **ओकारात्** प्राग्भूतस्तोभो जनित्रे ग्राह्यः । न ततः परम् ॥११॥

**सह वौवया पौरुमद्गे ॥१२॥**

पौरुमद्गमुपसंक्रम्याह । ओवायाः प्रागिति पूर्वमुक्तम् । इदानी**मोवया सहे**त्युच्यते । तेन विकल्पः ॥१२॥

**गौशृङ्गहारायणकौल्मलबार्हिषवैतहव्यानां वा पदान्तः ॥१३॥**

उत्तमे पादे गौशृङ्गादीनां षडक्षर इति पूर्वमुक्तम् । इदानीं **पदान्त** इत्युच्यते ॥१३॥

तत्र विशेषमाह—

**द्वाभ्यां पूर्वयोश्चतुरुत्तरयोः ॥१४॥**

इति । गौशृङ्गादीनां चतुर्णां **पूर्वयो**र्द्व्यक्षरश्चतुरक्षर **उत्तरयोः** ॥१४॥

**पुरस्तात्स्तोभः कौल्मलबर्हिषस्य ॥१५॥**

स्पष्टम् ॥१५॥

**इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले द्वितीयः खण्डः ॥२॥**

---

5. C. My[2] ओंकार° for ओकार°
8. T. अतः for ततः My[1-4] C. गणान्तः for अगणान्तः;
9. T. न्याय° for न्याय्य°
11. My[2] ओंकारात् for ओकारात्
13. My[2] ओंवाया for ओवायाः
15. My[4] om. तेन
17. My[4] उपोत्तमे for उत्तमे ; My[1] T. पदे for पादे
21. CT. after द्व्यक्षरः adds :—पदान्तः प्रतिहारः

## तृतीयः खण्डः

**सप्त वारवन्तीये पूर्वस्मिन् । तेषां त्रीणि पदान्ते ॥१॥**

**पूर्वस्मिन् वारवन्तीये** सप्ताक्षराणि प्रतिहारः । **तेषां त्रीणि** अक्षराणि **पदान्ते** स्युः । इतराणि चत्वार्युत्तमपादोपक्रम इत्यर्थसिद्धमेव ॥१॥

**कार्षश्रवसं त्रैतं पज्रं तौरश्रवसमुत्तरं श्रुध्यमुद्वंशपुत्रः शाक्वरम् । तेषामष्टौ ॥२॥**

कार्षश्रवसादिसामसप्तकस्य **अष्टा**वक्षराणि प्रतिहारः ॥२॥

तत्र विशेषमाह—

**पज्रतौरश्रवसयोरर्द्धानि पदान्ते ॥३॥**

अष्टानामक्षराणाम**र्धानि** चत्वार्यक्षराणि **पदान्ते** स्युः । इतराणि चत्वारि अन्त्यपादोपक्रम इति सिद्धमेव ॥३॥

**श्रुध्यस्य च ककुप्सु ॥४॥**

यदा श्रुध्यं साम **ककुप्सु** गीयते तदाप्यर्द्धानि पदान्ते स्युः ॥४॥

**तस्य गायत्रीषु चत्वारि ॥५॥**

श्रुद्धयस्य गायत्रीषु गीयमानस्य चत्वार्युत्तमे पादे प्रतिहारः ॥५॥

**षोडश बृहतीषु ॥६॥**

**बृहतीषु** गीयमानस्य श्रुद्धयस्य **षोडशा**क्षराणि प्रतिहारः । कृत्स्नस्तृतीयः पादः उत्तमे च पादे चतुरक्षरम् (? चत्वार्यक्षराणि) एवं षोडशाक्षराणि ॥६॥

**नदं व ओदतीनामिति दश ॥७॥**

**नदं व ओदतीनाम्** (सा. १५१२) इत्यस्यामृचि गीयमानस्य श्रुद्धयस्य दशाक्षरः प्रतिहारः । तृतीयः पादः उत्तमे च त्रीण्यक्षराणीत्येवं दशाक्षरत्वम् ॥७॥

**मध्यमस्य पदस्याभ्यासः शाक्वरे ॥८॥**

**न्याय्यो वा ॥९॥**

द्वयमपि स्पष्टम् ॥८-९॥

---

7. My[1] T. °षट्कस्य for °सप्तकस्य

11. My[2] अन्ते for अन्त्य°

**वायोरभिक्रन्दः स्वारं कावमौरुक्षयमौशनश्यावाश्वे त्रैष्टुभे श्नौष्टं जागतं सोमसाम कार्तयशं स्वारं पयोनिधनमृषभः शाक्वरो यण्वापत्ये । तेषामुत्तमं पदम् ॥१०॥**

वायोरभिक्रन्दादेः द्वादशकस्य सामगणस्योपोत्तमं पदं प्रतिहारः ॥१०॥

**पुरस्तात्स्तोभ उत्तमानां त्रयाणाम् ॥११॥**

उत्तमानां त्रयाणाम् ऋषभयण्वापत्यानां पुरस्तात्स्तोभसहितः प्रतिहारः ॥११॥

**अप्रतिहारा प्रथमा स्तोत्रीया यण्वापत्ययोः ॥१२॥**

यण्वापत्ययोः प्रथमायां स्तोत्रीयायां प्रतिहारो नैवास्ति ॥१२॥

**पञ्चानां वादित उत्तमे पदे चत्वारि ॥१३॥**

अनन्तरोक्तसामगणस्यादितः पञ्चानां वायोरभिक्रन्दादीनामुत्तमे पदे चत्वार्यक्षराणि प्रतिहारः । उपोत्तमं पदं वेति विकल्पः ॥१३॥

**वैखानसं पौरुहन्मनमुद्वंशीयमाष्कारणिधनं त्वाष्ट्रीसाम । तेषामुत्तमं पदं प्रागभ्यासात् ॥१४॥**

वैखानसादिसामचतुष्टयस्य उत्तमं पदमभ्यासात् प्राक् प्रतिहारः ॥१४॥

**अभ्यासे वा चत्वार्युत्तरयोः ॥१५॥**

उत्तरयोः उद्वंशीयत्वाष्ट्रीसाम्नोरभ्यासे वा । चतुरक्षरः पूर्वो वेति विकल्पः ॥१५॥

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले तृतीयः खण्डः ॥३॥

---

4. My[2] पादम् for पदम्
5. M. $^{0}$स्तोभाः for $^{0}$स्तोभः
9. My[2] TC. om. यण्वापत्ययोः
10. My[2] पादे for पदे
11. My[2] पदे for पदे
12. My[2] पादं for पदं
15. My[2] पादं for पदं
17. T. अभ्यासो for अभ्यासे

## चतुर्थः खण्डः

**शाक्त्यसाम मैधातिथं वारवन्तीयमुत्तरमाभीशवे सिमानां निषेधस्त्रिणिधने त्वाष्ट्रीसामायास्ये दार्ढच्युतमाथर्वणं रेवत्य ऐटतमग्नेस्त्रिणिधनमुत्सेधनिषेधावैडं साकमश्वं दैर्घश्रवसं दाशस्पत्यं ग्रामेगेयश्येनः । तानि द्विप्रतिहाराणि ॥१॥**

शाक्त्यसामप्रभृतीनि एकविंशतिसामानि द्विप्रतिहाराणि स्युः ॥१॥

तत्र विशेषमाह—

**मध्यमयोः पदयोः शाक्त्यसाममैधातिथयोः पदान्तो द्वाभ्याम् ॥२॥**

मध्यमयोः पदयोरन्ते द्व्यक्षरं प्रतिहारद्वयं स्यात् ॥२॥

**चतुर्भिर्वा ॥३॥**

चतुरक्षरं चतुरक्षरं वा स्यात् ॥३॥

**इहाहे वारवन्तीये ॥४॥**

इहाहे इति द्विवचनान्तमेतत् । वारवन्तीये इहाहा इत्येवं द्वौ स्तोभौ प्रतिहारावित्यर्थः । तयोरेको मध्यमे पादे इतर उत्तमे पादे ॥४॥

**सप्तभिर्वैकप्रतिहारं प्रागिहाहायाः ॥५॥**

अथवोत्तमे पादे प्रागिहाहेति स्तोभात् सप्तभिरक्षरैरेकप्रतिहारमेव वारवन्तीयं स्यात् ॥५॥

**उकारादिर्वैकेन पदान्तः ॥६॥**

---

3. T. दार्म° for दार्ढ°

8. My² पादान्तो for पदान्तो

My² पादयोः for पदयोः

12. T. My² before चतुर° adds : यद्वा; T. My¹·² C. om. वा

19. My² पादान्तः for पदान्तः

यद्वा **एकेनाक्षरेण** पदान्तिमप्रतिहारो वारवन्तीये स्यात् । ततः पूर्वस्य स्तोभस्यैकदेशग्रहणमुकारात् ॥६॥

**न्याय्यो वा ॥७॥**

स्पष्टम् । तदेवं वारवन्तीये चत्वारः पक्षाः ॥७॥

**पूर्वयोश्च ॥८॥**

वारवन्तीयात् पूर्वयोः शाक्त्यसाममैधातिथयोश्च न्याय्यो वा प्रतिहारः । पूर्वोक्तो वेति विकल्पः ॥८॥

**वारवन्तीयस्य द्विपदासु सप्तानां स्थाने चत्वारि ॥९॥**

यदा **परिप्रधन्वे** (सा. १३६७) ति द्विपदास्वृक्षु वारवन्तीयं भवति तदा सप्ताक्षरप्रतिहारपक्षे तत्स्थाने चतुरक्षरः कार्यः ॥९॥

**द्वे चतुर्णाम् ॥१०॥**

तत्रैव न्याय्यप्रतिहारपक्षे चतुर्णां स्थाने द्व्यक्षरः प्रतिहारः कार्यः ॥१०॥

**द्वे एकमित्येकपदायाम् ॥११॥**

सप्तानां स्थाने चतुर्णामिति चानुवर्तते । यदा एकपदायां वारवन्तीयं भवति तदा सप्तकस्थाने द्व्यक्षरः प्रतिहारः । चतुरक्षरस्थाने एकाक्षरः ॥११॥

**उत्तरयोः पदयोरुत्तरेषाम् ॥१२॥**

वारवन्तीयादुत्तरेषां षोडशानां साम्नामुत्तरयोः पदयोः प्रतिहारद्वयमित्यर्थः ॥१२॥

तत्राक्षरपरिमाणमाह—

**द्वे द्वे तु षण्णामाभीशव प्रभृतीनाम् ॥१३॥**

---

1. My[4] पदान्तः for पदान्तिम॰

2. My[1] एकदैवश्रवगमकारात् for एकदेशग्रहणमुकारात

12. My[1] न्याय॰ for न्याय्य॰

16. My[2] पादयोः for पदयोः

17. My[1] पादयोः for पदयोः

20. My[2] om. आभीशवप्रभृतीनाम्;

इति । आभीशवप्रभृतीनां दार्ढच्युतपर्यन्तानां पदादिः प्रतिहारस्थानम् (द्रा. श्रौ. १८.३.६) इति परिभाषितत्वात् पदयोरुपक्रमे द्वे द्वे अक्षरे इति मन्तव्यम् ॥१३॥

**चत्वारि वा सिमानां निषेधस्य त्वाष्ट्रीसाम्नश्च ॥१४॥**

सिमानां निषेधस्य त्वाष्ट्रीसाम्नश्च चतुरक्षरो वा द्व्यक्षरो वेति विकल्पः ॥१४॥

**पुरस्तात्स्तोभा वाथर्वणस्य ॥१५॥**

आथर्वणस्य प्रतिहारद्वयमपि पुरस्तात्स्तोभसहितं स्यात् ॥१५॥

**तत्प्रभृतीनां चत्वारि ॥१६॥**

आथर्वणप्रभृतीनां साम्नामन्त्यवर्जं चत्वारि चत्वार्यक्षराण्युत्तमयोः पादयोरुपक्रमे प्रतिहारः ॥१६॥

**अष्टौ वा दाशस्पत्ये ॥१७॥**

दाशस्पत्ये अष्टौ चत्वारि वेति विकल्पः ॥१७॥

**पूर्वे वोत्तारेणैकप्रतिहारे ॥१८॥**

दाशस्पत्यात् पूर्वे सामनी साकमश्वदैर्वश्रवसे वोत्तारेण एकप्रतिहारे स्याताम्। द्विप्रतिहारे वेति विकल्पः ॥१८॥

**तृतीयपञ्चमाभ्यां पदाभ्यां श्येने ॥१९॥**

श्येने साम्नि तृतीयपञ्चमाभ्यां कृत्स्नाभ्यां पादाभ्यां प्रतिहारः ॥१९॥

**चतुर्थषष्ठयोर्वा पदयोर्द्वे पदयोर्द्वे ॥२०॥**

चतुर्थषष्ठयोः पदयोर्द्वे द्वे अक्षरे वा श्येनस्य प्रतिहारः ॥२०॥

इति द्राह्यायणश्रौतसूत्रे एकोनविंशे पटले चतुर्थः खण्डः ॥४॥

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः ।
एकान्नविंशे पटले व्याख्या युक्तिमता कृता ॥१९॥

इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे एकान्नविंशः पटलः समाप्तः ॥१९॥

---

13. My[2] °क्रमयोः for °क्रमे

विंशः पटलः

# प्रथमः खण्डः

**पृथक् स्तोत्रीयासु प्रतिहाराः संतनिनः ॥१॥**

उत्तरयोः स्तोत्रीययोः **संतनिनः** प्रस्तावो नास्तीति पूर्वमुक्तम् । **नोत्तरयोरा-चार्या** (द्रा. श्रौ. १६.१.१४) इति । तद्वदेव प्रतिहारस्यापि लोपशङ्कायामिदमुच्यते । **पृथगेव** तिसृष्वपि **स्तोत्रीयासु प्रतिहाराः** स्युः । न केवलं प्रथमायामेव ॥१॥

**त्रयस्त्रय ऊधःसु महानाम्नीनाम् ॥२॥**

**महानाम्नीना**मित्येकस्यैव साम्नोऽभिधानम् । आपो दारा इतिवत् बहुवचनम् । लक्षणया ऋक्ष्वपि प्रवर्तते । महानाम्नीनामृचां प्रत्येकमूधःसंज्ञक एकैकः पादोऽस्ति । तान् दर्शयिष्यति । एतेषु प्रत्येकं **त्रयस्त्रयः** प्रतिहाराः स्युः । ऊधःसंज्ञकः पादस्त्रि-रभ्यस्यते । प्रत्यभ्यासमुपक्रमे प्रतिहाराः । तद्यथा—**इन्द्रद्युम्नायना इष** इत्यस्मिन् ऊधस्युपक्रमे इन्द्रे तिपदं त्रिरभ्यस्तम् । एवमुत्तरयोरप्यूधसोर्द्रष्टव्यम् ॥२॥

**तान् प्रतितोदा इत्याचक्षते ॥३॥**

**तान्** ऊधसि स्थितान् प्रतिहारान् **प्रतितोदा** इति शाखान्तरे व्यवहरन्ति ॥३॥

**तथा स्वराश्च नित्यवत्सातीषङ्ग्योः ॥४॥**

यथा स्वरा ऊधसि प्रतिहारास्**तथा स्वराः** शब्दा **नित्यवत् सातीषङ्ग्योश्च** प्रतिहारा इत्यर्थः । यथा **अयारुचा हरिण्या** (सा. १५६०) इत्यस्यामृचि **धारा-पृष्ठस्य रोचत** इति पादे धारेति पदं त्रिरभ्यस्तम् तथातीषङ्गे **उच्चा ते जात-मन्धस** (सा. ६७२) इति त्रिष्वपि पादेषूपक्रमे द्व्यक्षरं द्व्यक्षरमिन्द्रेत्यनेन सदृश-स्वरम् ॥४॥

**द्वे द्वे तु सर्वेषाम् ॥५॥**

**सर्वेषा**मनन्तरोक्तानां संतनिप्रभृतीनां चतुर्णां साम्नां द्व्यक्षरा एव प्रतिहारा इति परिमाणविधानमेतत् ॥५॥

---

8. My[2] निधनम् for अभिधानम्

10. My[2] तं for तान् My[2] T. तेषु for एतेषु

14. My[1] C. before व्यव° add : ते

18. My[1] °पृथस्य for °पृष्ठस्य; My[2] पादं for पदं

**षड्वा संतनिवर्जम् ॥६॥**

यद्वा संतनिवर्ज्जं त्रयाणां साम्नामुत्तमेषु षडक्षराः प्रतिहाराः। समुच्चयार्थो वा शब्द इत्येके व्याचक्षते। **ऊर्ध्वं पुरुषात् षडक्षरं चैके** (प्र. हा. सू. १४.१३) इति कात्यायनवचनानुरोधात् ॥६॥

**शाक्वरोत्तमेषु महानाम्नीनाम् ॥७॥**

महानाम्नीषु शाक्वराणां पादानां उत्तमे पादे षडक्षरः प्रतिहारः। न पुनरशाक्वरान्त्ये पादे। महानाम्न्यस्तावत् सप्तपदाः शक्वर्यः। तासां पादाः शक्वरीबहिर्भूतैः कैश्चित् पादैर्व्यतिषक्ताः। तेषां विभागमनन्तरमेव वक्ष्यति ॥७॥

**षष्ठमध्यायेषु ॥८॥**

महानाम्नीनां प्रत्येकं प्रत्येकमध्यासो नामोत्तमः पादः शक्वरीबहिर्भूतः। तेषु षष्ठं षष्ठमक्षरं प्रतिहारः ॥८॥

**आन्धास्वरं मध्यमं वचनं स्तौत्रिकं पुरीषेषु ॥९॥**

महानाम्नीनां **पुरीषेषु** आन्धास्वरेण सदृशं स्वरं स्तोभगतं **यन्मध्यमं वचनं** होइकारादुत्तरं होता इति सः प्रतिहारः। **असावि देवं गोऋजीकमन्ध** (सा. ३१३) इत्यस्यामृचि अन्धः शब्दो येन स्वरेण गीयते तत्सदृशस्वरमान्धास्वरमित्युक्तम् ॥९॥

**अप्रतिहाराण्यध्यासपुरीषपदान्याचार्याः ॥१०॥**

अध्यासे पुरीषपदेषु च नास्त्येव प्रतिहार इति केषांचिन्मतम् ॥१०॥

इदानीं महानाम्नीषु शाक्वरमशाक्वरं च पदं विभजति—

**तासां प्रथमद्वितीये पदे द्विपदा ॥११॥**

---

6. My[1] पदानां for पादानाम्
10. My[2] T. C. om. one प्रत्येकं
13. My[2] पुरीषपदेषु for पुरीषेषु; T. My[4] My[1] om. यत
14. My[1] T. My[4] om. सः
17. My[2] अभ्यास° for अध्यास°
18. My[2] अभ्यासे for अध्यासे
20. My[1-4] द्विपदे for द्विपदा; C. om. द्विपदा

इति । **तासां** महानाम्नीनां प्रत्येकमादितः पदद्वयमेका **द्विपदा** ऋक् स्तोभाक्षरवत्तच्छेषभूता ॥११॥

**त्रीणि शाक्वराणि ॥१२॥**

सप्तपदा शक्वरी साक्षान्महानाम्नीनामधेया । तदङ्गमितरे पादास्तद्बहिर्भूताः स्तोभवद्व्यतिषक्ताः । तत्र द्विपदानन्तरं **शिक्षाशचीनामि**त्यारभ्य सप्ताक्षरास्त्रयः पादाः शाक्वराः । शक्वर्याः साक्षाद् इन्द्रियाणीत्यर्थः ॥१२॥

**धातुर्वत्स ऊधः ॥१३॥**

**स्वर्णांशुरि**त्यारभ्यानन्तरं त्रयः पादाः क्रमेण **धातुर्वत्स ऊध** इत्येवं संज्ञकाः ॥१३॥

**तच्छाक्वरम् ॥१४॥**

**तदि**त्यूधसः परामर्शः । नपुंसकलिङ्गनिर्देशात् । तदूधःपदं शक्वर्याः शरीरम् । इतरौ धातुवत्सौ स्तोभवदशाक्वरौ । अत्र निदानकारः—**धातुरशाक्वरः पञ्चाक्षर एष कृताकृतः** (नि. सू. ३.१३) इति । **कृताकृतः** कैश्चिदधीतः कैश्चिद्ब्राह्मणैर्नाधीत इत्यर्थः ॥१४॥

**पुरुषस्त्रीणि शाक्वराण्यध्यास्या ॥१५॥**

ऊधसोऽनन्तरम् **एवा हि शक्र** इति पुरुषसंज्ञकः कश्चित् पादः शक्वरीबहिर्भूतः । तदनन्तरं त्रयः पादाः शक्वर्याः शरीराणि । तदनन्तर**मायाहीत्यध्यास्या** नामैकपदा स्तोभवत् शक्वरी शेषभूतेत्यर्थः ॥१५॥

**इति पदानि ॥१६॥**

एवमेतानि त्रयोदश **पदानि** । प्रत्येकं महानाम्नीनामित्यर्थः ॥१६॥

**उत्तमा तु द्व्यध्यासा ॥१७॥**

**उत्तमा** महानाम्नी ऋक् अध्यासद्वयवतीत्यर्थः । तदेवं सप्तपदा शक्वरी पादान्तरैरशाक्वरैर्व्यतिषक्ता । न पुनर्नैरन्तर्येण शाक्वरवदध्ययनम् । तथा च ब्राह्मणम्

---

2. My[2] om. तत्[0]

6. My[2] रूपाणि My[1] इन्द्राणि for इन्द्रियाणि; T. शाक्वर्याक्षाद्रूपाणि for शक्वर्याः साक्षादिन्द्रियाणि

23. My[1] TC. शाक्वरैः for अशाक्वरैः; T. My[1] C. [0]पदाध्ययनम् for [0]वदध्ययनम्

**असंश्लिष्टा गायती** (तां. ब्रा. १३.४.६) ति । शाक्वराशाक्वरविवेकस्य प्रयोजनमृगन्तरेषु महानाम्नीनामतिदेशे स्तोभवदशाक्वराणां यथास्थानं प्रवृत्तिसिद्धिः । तथा च वक्ष्यति—**यथास्थानं शाक्वराणी** (द्रा. श्रौ. २०.४.२४) ति ॥१७॥

**द्विपदासु प्रस्तावः शाक्वरप्रथमेष्वध्यासपुरीषपदेषु च ॥१८॥**

तत्र **द्विपदासु** पृथगेव **प्रस्तावः** कार्यः । तथा च शाक्वराणां प्रथमेषु पादेष्वध्यासेषु पुरीषपदेषु च पृथक् पृथक् प्रस्तावः कार्यः ॥१८॥

**भासेनोक्तः पदान्तो यज्ञायज्ञीये देवस्थाने वैरूपेण ॥१९॥**

भासवैरूपयोर्गायत्रीसाम्नोः **पदान्तो द्वाभ्यां भासे । चतुर्भिरुत्तरस्ये** (द्रा. श्रौ. १८.४.१३-१४) इति पूर्वमुक्तम् । तदेव यज्ञायज्ञीयदेवस्थानयोः प्रतिहारः ॥१९॥

**अरण्येगेयः श्येनः पार्थुरश्माच्छिद्ररयिष्ठे । तेषामुत्तरेषु पदेषु ॥२०॥**

श्येनादीनां चतुर्णां साम्नां प्रथमात् पादादुत्तरेषु सर्वेषु **पदेषु** प्रतिपादं प्रतिहाराः स्युः ॥२०॥

अक्षरपरिमाणमाह—

**द्वे द्वे पूर्वयोः ॥२१॥**

इति । **पूर्वयोः** श्येनपार्थुरश्मयोः द्व्यक्षराः प्रतिहाराः । यथा **उभे यदिन्द्र रोदसी** (सा. ३७९) त्यस्यामृचि षट्पदायाम् प्रथमात् पादात् उत्तरेषु पञ्चसु पादेषु द्व्यक्षराः पञ्च प्रतिहाराः ॥२१॥

**चत्वारि चत्वार्युत्तरयोः ॥२२॥**

**उत्तरयो**रच्छिद्ररयिष्ठयोश्चतुरक्षराः प्रतिपादं प्रतिहाराः स्युः ॥२२॥

**उभयतः स्तोभाः पार्थुरश्मस्य ॥२३॥**

**पार्थुरश्मस्य** प्रतिहारास्त उभयतः स्तोभसहिताः स्युः ॥२३॥

अथ वैरूपमधिकृत्य **पञ्चनिधनं वैरूपं पृष्ठं भवती** (तां. ब्रा. १२.४.५) ति

---

11. My[1] T. पादेषु for पदेषु;

13. C. पदात् for पादात्

21. C. om. प्रतिपादं प्रतिहाराः

ब्राह्मणम् । तत्र पञ्चानामेकं निधनमन्त्यं प्रसिद्धमेव । इतराणि चत्वारि न ज्ञायन्ते । अत आह—

**देवतापदं देवतापदमिति वैरूपे निधनानि ॥२४॥**

अयमर्थः । स्वाध्यायपाठे वैरूपस्य योनेरुपरिष्टाद् देवतापदद्वयमाम्नातम् । **दिशं दिशं हसित्येका । अश्वा शिशुमतीत्यपरा** । तयोरधस्तादपकर्षः कार्यः । कथम् । उत्तरार्द्धर्चस्य प्रथमपादात् पूर्वं प्रथमदेवतायाः द्वितीयपादात् पूर्वं द्वितीयदेवतायाः । एवं व्यत्यस्तानि चत्वारि निधनानीति । देवतापदमिति समासः । पदशब्देन च ऋचः पाद उच्यते । अत्र निदानकारः **वैरूपे पददैवतं व्यत्यस्यती** (नि. ३.११) त्युक्त्वा तत्र प्रमाणमुक्तवान् । तथैव शाखान्तरे छान्दसमध्ययनमस्तीति । अस्माकमप्यूहस्तथैवाधीयते ॥२४॥

एवं गानं व्यवस्थाप्य प्रतिहारमाह—

**प्राक्शिशुमत्या स्तोभैः प्रतिहारः ॥२५॥**

अश्वाशिशुमतीत्यस्याः पुरस्ताद् ये स्तोभाः तैः प्रतिहारः । निधनानां सर्वसाधारणत्वात् ॥२५॥

**एकादशमैडे दैवोदासे ॥२६॥**

**सप्तमाष्टमाभ्यां त्रैककुभस्य ॥२७॥**

**नवमदशमाभ्यां वैश्वमनसस्य ॥२८॥**

सूत्रत्रयमपि स्पष्टम् ॥२६-२८॥

**तथा वृष्णः ॥२९॥**

वृष्णो वृषाख्यस्य साम्नोऽपि नवमदशमाभ्यामक्षराभ्यां प्रतिहारः ॥२९॥

तत्र विशेषमाह—

**त्रिरुक्ताभ्यां तु तस्याभ्यासाद्यैः ॥३०॥**

इति । **इमं वृषणं कृणुतैकमिन्माम्** (सा. ५९१) इत्येकपदायामृचि वृषाख्यं

---

2. C. om. अत आह
3. T. वैरूप॰ for वरूपे
8. My1-4 C. before समासः add : न;
   T. My2 after पादः add : इति
10. T. छन्दसाम् for छान्दसम्

साम गीयते । तत्र नवमदशमाभ्याम् इत्यक्षराभ्यां **त्रिरुक्ताभ्यां तु तस्याभ्यासाद्यैः** प्रतिहारः । तत्रैकशब्दस्य येऽभ्यासास्तेषां प्रथमास्त्रयोऽवगन्तव्याः । तैरेव प्रतिहारो नोत्तरैस्त्रिभिरित्यर्थः ।।३०।।

एवं तावत् चतुष्टयानि सामानीति प्रक्रम्य विषमभक्तीनां भक्त्यो दर्शिताः। इदानीं पदविभाग्यानि दर्शयितुमारभते—

**सदृशगीतिषु सर्वेषु पृथक्पृथक्पदानि विभजेरन्। प्रत्यन्ताद-नादेशे । शेषमुद्गाता तानि विभाग्यानि ।।३१।।**

इति । येषु सामसु सर्वे पादाः सदृशगीतयस्तेषु पृथगेव पादं पादं **क्रमेण विभजेरन्** ।**प्रत्यन्तात्** कार्त्स्न्येनेत्यर्थः । अशेषमिति यावत् । अथवा **प्रत्यन्तादिति** सर्वत्रेत्यर्थः । तृतीयपादादूर्ध्वं यश्शेषस्त**मुद्गातैव** ब्रूयात् । यथा ऋषभे शाक्वरे **स्वादोरित्था विषूवत** इत्यत्र चतुर्थपञ्चमे पादे । अयमेव न्यायः आसन्नपदाभ्यो द्रष्टव्यः । **तानि विभाग्यानि** नामेति ।।३१।।

तान्येवोदाहरति—

**त्रैष्टुभजागतान्यनादिष्टानि ।।३२।।**

इति । यानि पूर्वमनादिष्टानि त्रिष्टुब्जगतीषु गीतानि तानि विभाग्यानि ।।३२।।

**बह्वक्षरस्तोभादीनि च रहस्येषु ।।३३।।**

यानि **च रहस्येषु** बह्वक्षरैः स्तोभैरारभ्यन्ते तानि चोदाहरामि ।।३३।।

तान्येव दर्शयति—

**यथा वसिष्ठस्य वैराजं वषट्कारणिधनमाष्टादंष्ट्रे महावैश्वमित्रं सौमित्रं स्वर्णिधनं दैवोदासमैडं वैदन्वतं प्लवः परीतोयोनीनि क्रौञ्चं त्वाष्ट्रीसामानि स्वारंवाङ्निधनान्यभ्यासवदाकूपारम् ।।३४।।**

---

1. $My^{1}$ om. नमव⁰ .... तत्र (L. 2)
   $My^{1-3}$ T. C. om. तु तस्य
8. C. om. क्रमेण
18. $My^{2}$ T. उदाहरणम् for उदाहरामि

इति । **परीतो षिञ्चता सुतम्** (सा. १३१३) इति येषां योनिस्तानि **परीतो-योनीनीति** बहुव्रीहिः ॥३४॥

एतानि पदविभाग्यानि द्विविधानि । सस्तोभानि स्तोभरहितानि चेति । तत्र समस्तोभविभाग्यानां विभागप्रकारमाह—

**आद्यन्तस्तुब्धेषु पदाय पदाय स्तोभेत् । यो यः पदं ब्रूयात्तथानु-** ५
**पदं स्तुब्धेषु ॥३५॥**

यानि सामान्यन्तः स्तोभसहितानि तेषु प्रतिपादं स्तोभमनुषङ्गन्यायेनाहरेत् । **यो यः** तं तं **पदं** सदृशगीतिं **ब्रूयात्तथा** प्रतिपादं स्तोभयुक्तेष्वपि ॥३५॥

**इति द्राह्यायणश्रौतसूत्रे विंशे पटले प्रथमः खण्डः ॥१॥** ६

# द्वितीयः खण्डः

तत्र संकृतिनो द्वितीयपदोपक्रमे ऋगन्ते च स्तोभाम्नानम् । तत्कथम् । अत आह—

**ऊर्ध्वं तु प्रथमात् पदात् संकृतिनः ॥१॥**

इति । संकृतिसाम्नः **प्रथमात् पदादूर्ध्व**मेव प्रतिपादं स्तोभानुसंहारो न प्रथमे पादे । कुतः । स्वाध्यायकाले प्रथमवर्ज्जं स्तोभाम्नानात् ॥१॥

**प्राक् चतुर्थात् पदात् स्तोभैः प्रतिहारः ॥२॥**

संकृतिनः **प्राक् चतुर्थात् पदात् स्तोभै**रेव **प्रतिहारः** । पदानां निधनत्वादित्यभिप्रायः ॥२॥

अथ स्तोभविभाग्यानां लक्षणमाह—

**निधनानि पदान्युपायसदृशाः स्तोभान्ता येषां तानि स्तोभविभाग्यानि ॥३॥**

इति । उपायो नाम **वाक् चेत् स्तोभान्तोऽनन्तर** (द्रा. श्री. २०.३.३३) इति वक्ष्यते । येषां साम्नां प्रतिपादमनुषक्तस्तोभानामन्ता निधनोपायसदृशा भवन्ति तेषां साम्नां स्तोभानन्तराः पादा निधनानि भवेयुः । निधनधर्मकाः स्युः । सर्वप्रयोज्या इत्यर्थः । स्तोभा एव केवलमवशिष्यन्ते । तानेव विभजेयुः । तानि स्तोभविभाग्यानि । संकृतिनोऽसंकृतिनोऽपि प्रथमादूर्ध्वं पदानि निधनानि भवेयुः । स्तोभान्तस्योपायसदृशत्वात् । तथापि न विभाग्यम् । प्रथमस्यानिधनत्वात् ॥३॥

विभागप्रकारमाह—

**तत्र तृतीयायैव पदाय प्रतिहर्ता स्तोभेत् ॥४॥**

इति । प्रथमाय पदाय प्रस्तोता **स्तोभेत्** । द्वितीयायोद्गाता । **तृतीयाय प्रतिहर्ते**त्यर्थः । ननु न्यायसिद्धमेवैतत् । सत्यम् । विस्पष्टार्थं वचनम् इति । अत्र सर्वेषु विभाग्येषु प्रस्तोतुः स्तोभानन्तरं सर्वे निधनं ब्रूयुः । तदनन्तरमुद्गातुरोंकारेण स्तोभारम्भः । कुत एतत् । उद्गीथाङ्गत्वात् ओंकारस्य । अन्ये तु प्रस्तावशान्त्यर्थं

---

2. My[1-4] T. तत्र for तत्; C. om. अतः

6. C. पञ्चमे for प्रथमे

8. My[2] पादानाम् for पदानाम्

17. My[1-4] C. om. भवेयुः

ओंकारस्तोभानन्तरमेव निधनात् पूर्वं वक्तव्य इत्याहुः ॥४॥

**उपायवन्तः स्तोभा एकवृषस्य ॥५॥**

**एकवृषस्यो**पक्रमे निरुपायाः स्तोभा अधीयन्ते । त एव पुनरन्ते सोपायास्तत्रोपायसहिता एव प्रतिपादमनुषक्तव्याः । तद्रहितास्तु ब्रह्मयज्ञाद्यर्थाः उपाया इति वाचोऽभिधानम् ॥५॥

**देवतासु चर्षभस्य शाक्वरस्य ॥६॥**

**शाक्वरस्य ऋषभस्य देवता**सूपायवन्त एव स्तोभा आहर्तव्याः । उपायरहितास्तु पदेष्वाहर्तव्याः ॥६॥

**तासां नानास्तोभेयुः ॥७॥**

तासां देवतानामपि पादेभ्यः पृथक् पृथक् **स्तोभेयुः** । प्रतिपादं प्रतिदैवतं च स्तोभेयुः । न केवलं प्रतिपादमेवेत्यर्थः ॥७॥

**सदेवते पदे प्रस्तावप्रतिहारौ विभाग्यश्चेत् ॥८॥**

यदृषभः शाक्वरो विभाग्य इति मतम् तदानीं देवतासहितः प्रथमः पादः प्रस्तावः । तथैव तृतीयः पादः प्रतिहारः । विभाग्यपक्षे न देवताया अन्तर्निधनत्वमुक्तं भवति । अन्यथा विभाग्यो वेत्यवक्ष्यत् । अविभाग्यपक्षे तु पूर्वमेव प्रतिहार उक्तः ॥८॥

**गायत्रीसामसु विभाग्येषूत्तमे व्यावर्गं शिष्ट्वा प्रतिहरेदिति धानंजय्यः ॥९॥**

**गायत्रीसामसु विभाग्येषु** प्रतिपादं भागद्वयं भवति । तत्रोत्तमे पादे द्वितीयं भागं **शिष्ट्वा** पूर्वेण भागेन **प्रतिहरेदित्यर्थः** । व्यावर्गो विभाग इति पर्यायः (र्गौ ?) । **यस्ते मदे वरेण्यम्** (सा. ८१५) इति स्वाशिरामर्क उदाहरणम् ॥९॥

---

3. My[1] ते for अन्ते C. My[1] om. अन्ते

4. My[1] प्रहिताः C. प्रतिहताः for रहिताः

5. C. विधानम् My[2] विधानम् for अभिधानम्

8. T. after तु adds :—ब्रह्मयज्ञाद्यर्थाः

10. My[2] T. पृथगेव for पृथक् पृथक्

13. My[2] यद्वा for यद्

**सर्वेणैव पदेनेति शाण्डिल्यायनः ॥१०॥**

स्पष्टम् ॥१०॥

**त्रिरुक्तान् स्तोभाञ्छुक्रियेषु चतुर्ब्रूयुरन्यत्र निधनेभ्यः ॥११॥**

**शुक्रियेषु** महादिवाकीर्त्यादिषु **निधनेभ्योऽन्यत्र** प्रतिपादमाह्रियमाणान् **त्रिरुक्तान् स्तोभान् चतुर्ब्रूयुः**। निधनेष्वाहृतांस्त्रिरेव ब्रूयुः ॥११॥

**महादिवाकीर्त्यस्य प्रास्ताविके देवते विपरिहरेत् ॥१२॥**

**महादिवाकीर्त्यस्य** साम्नः प्रस्तावगतमायुर्ज्योतिरिति देवताद्वयं विपर्यस्येत्। हाउकारानन्तरं ज्योतिर्ज्योतिरित्यारम्भः कार्यः। ततः पश्चादायुरायुरिति वक्तव्यमित्यर्थः ॥१२॥

ननु च अध्ययनसिद्धक्रममपोह्य किं प्रयोजनम्। अत आह—

**एवं ज्योतिष्प्रायणं ज्योतिरुदयनं भविष्यतीति ॥१३॥**

**एवं** कृते महादिवाकीर्त्यं साम ज्योतिरुपक्रमं **ज्योतिरेव** साम **भविष्यतीति** साम्यलाभः। पूर्वमेव हि ज्योतिरवसानं महादिवाकीर्त्यमिति। अत्र शाखान्तरे विपर्यासविधिरस्तीति मन्तव्यम् ॥१३॥

**तत्रात्मा स्तोभविभाग्यः ॥१४॥**

दशानुगानं महादिवाकीर्त्यम्। तत्रानुगानानि क्रमेण शिरोग्रीवास्कन्धकीकसपुरीषपक्षनामधेयानि स्तोभतुल्यानि ऋगक्षररहितानि। सप्तममनुगानमात्मेत्युच्यते। तदार्चिकं **विभ्राड् बृहत् पिबत्वि** (सा. ६२८) त्यस्यां गीयते। तत ऊर्ध्वं पुनरपि त्रीण्यनुगानानि ऊरुपुच्छसंज्ञकानि ऋगक्षरवर्जितानि। स्तोभवत् तद् एतत् साम सुपर्णम् (आ. ब्रा. ६.४.१.६) इत्यार्षेयब्राह्मणम्। एवं स्थिते इदं सूत्रम्।

---

4. C. °कीर्त्येषु for °कीर्त्यादिषु

8. My[1] हाइ° for हाउ°

12. My[1] after उपक्रमं upto महा° (L. 13) blank

13. om. अत्र ... मन्तव्यम् (L. 14)

15. My[1-2] T: तस्य for तत्र

17. My[4] °नामकानि for °नामधेयानि

19. My[2] om. पुनरपि; My[4] °रहितानि for °वर्जितानि
My[1] एव for स्तोभवत्; My[2] C. om. एतत्

तस्य महादिवाकीर्त्यस्यात्मा सप्तममनुगानं स्तोभविभाग्यमिति ॥१४॥

**प्रथमायैवानुगानाय प्रस्तोता प्रस्तुयादात्मने च ॥१५॥**

तत्र **प्रथमाय** शिरसे सप्तमायात्मने **च** प्रस्तावः । नेतरेष्वनुगानेषु ॥१५॥

**इतराण्यनुगानान्युद्गातैव सर्वाणि ब्रूयात् ॥१६॥**

**इतराण्यनुगानानि उद्गातैव ब्रूयात्** नेतरेषु प्रतिहार इत्यर्थः ॥१६॥

**तेषां निधनेष्वेनमनूपेयाताम् ॥१७॥**

**तेषा**मष्टानां **निधनेष्वेन**मुद्गातार**मनूपेयाताम्** । प्रस्तोता प्रतिहर्ता चेति । एवमेकः पक्षः ॥१७॥

अथ पक्षान्तरमाह—

**उत्तमानि वा त्रीण्यनुगानानि प्रत्याहृत्येतरैः सहात्मपदेभ्यः स्तोभधर्मेणानुसंहरेयुः ॥१८॥**

इति । आत्मनः सप्तमादूर्ध्वानि **त्रीण्यनुगानानि** ततः पूर्वं **प्रत्याहृत्य** । अवकृष्येत्यर्थः । **इतरैः** षड्भिरनुगानैः **सह** नवान्यनुगानानि आत्मपदेभ्यो **विभ्राड् बृहत्पिबत्वि**त्याद्यृक्पदेभ्यः स्तोभन्यायेन प्रतिपादमावर्तयेयुः । तदानीमात्मनः स्तोभविभाग्यत्वेन यो [यः] स्तोभं ब्रूयात् स स आवर्तयेत् । तदुक्तम् **स्तोभधर्मेणे**ति ॥१८॥

---

2. My[1] My[4] after च add : सप्तमाय

3. My[1] om. तत्र; My[2] प्रस्तावाः for प्रस्तावः

4. My[1] C. My[4] om. सर्वाणि

5. My[1] om. इतराणि ···ब्रूयात्

8. C. om. एवमेकः पक्षः

10. My[1] उद्गानानि for अनुगानानि

12. My[1] उद्गातानि for अनुगानानि C. अप° for अव°

14. My[1-2] om. आदि°; My[2] °पादेभ्यः for °पदेभ्यः

पक्षान्तरमाह—

**यानि प्रागात्मन आदौ तानि सकृद् यान्यूर्ध्वमन्ततस्तानि सकृदात्मनैव स्तोमं पूरयेदित्यपरम् ॥१९॥**

इति । **आत्मनः** पूर्वाणि **यान्यनुगानानि तान्यादौ** स्तोत्रोपक्रमे **सकृदेव** प्रयोज्यानि । **यान्यूर्ध्वम**नुगानानि तान्यपि स्तोत्रसमाप्तौ सकृदेव प्रयोज्यानि । केवल**मात्मनैव**ानुगानेन पुनःपुनरभ्यस्तेनैकविंशस्तोमं **पूरयेत्** ॥१९॥

पक्षान्तरमाह—

**पर्यायाद्यन्तेषु ॥२०॥**

इति । न केवलं सकृदेव प्रयोज्यानि । नाप्येकविंशतिकृत्वः । किंतु प्रतिपर्यायमुपक्रमावसानयोः प्रयोज्यानि ॥२०॥

पक्षान्तरमाह—

**विष्टावानां वा ॥२१॥**

इति । समस्तमप्याद्यन्तेष्विति पदमनुवर्तते । विष्टावानामित्याकाङ्क्षाबलात् । तेनायमर्थः । **विष्टावानामाद्यन्तेषु** नवानुगानानि प्रयोज्यानि । न ततो न्यूनम् । नाप्यधिकम् । तदेवं पक्षाः ॥२१॥

**भासनिधने दशमस्य पदस्योपायमुद्गातैव ब्रूयात् ॥२२॥**

एवं **मूर्धानं दिवो अरतिं पृथिव्या** (सा. ११४०) इति भासमग्निष्टोम साम विहितं तत् सस्तोभपदविभागयम् । चतुर्थः पाद उपद्रवः । तदनन्तरमिहौहो भद्रमित्याद्युपक्रम्य भद्रादीनि दश देवतापदान्यधीतानि । तानि सर्वाणि निधनानि । **देवताश्चारण्येगेयेष्वि** (द्रा. श्रौ. २०.३.२२) ति वचनात् । भास इति दशमं पदं निधनमेव । तस्यो**पायमे**काक्षरप्रभृतिवागन्त**मुद्गातैव ब्रूयात्** । ततः पूर्वाणि नव देवतापदानि उपायसहितानि सर्वे ब्रूयुरित्युक्तं भवति । **भासनिधन** इति । भासनिधनवैरूपे इहौहोभद्रमित्यादिके पदसंघ इत्यर्थः ॥२२॥

---

5. My[1] आत्मनः पराणि यानि तान्यन्ततः स्तोत्रावसाने for यान्यूर्ध्वम्····°समाप्तौ; My[1] om. यान्यूर्ध्वम्····प्रयोज्यानि

9. T. om. न केवलं····पक्षान्तरमाह (L. 11)

17. My[2] विषुवान् for एवं

19. My[2] T. om. तानि

21. My[1] T. C. My[4] एकार° for एकाक्षर°

**सर्वाणि राजने त्रिरुक्तानि पञ्चकृत्वो ब्रूयुः ॥२३॥**

महाव्रते राजने साम्नि यानि त्रिरुक्तानि तानि **सर्वाणि पञ्चकृत्वो ब्रूयुः**। बहुवचनात् स्तोत्रसामविषयमेतत्। पञ्चभक्तिप्रकरणाच्च। न हि परिसामसु भक्तिविभागोऽस्ति। केवलं प्रस्तोतृवाच्यत्वात् ॥२३॥

**तस्यानुपदं स्तोभाः ॥२४॥**

**तस्य** राजनस्य प्रतिपादं स्तोभावृत्तिः कार्या। अविभाग्यत्वपक्ष एतद्वचनम्। प्राप्त्यभावात्। विभाग्यत्वपक्षे तु पदाय पदाय स्तोभेदित्येव सिद्धम् ॥२४॥

**पदेन प्रस्तावः ॥२५॥**

स्तोभयुक्तेनैव। सामर्थ्यात् ॥२५॥

**तृतीयेन पदेन पुरस्तात्स्तोभेन प्रतिहारः ॥२६॥**

स्पष्टम् ॥२६॥

**विभाग्यं वा ॥२७॥**

इदमपि स्पष्टम् ॥२७॥

**तत्र देवताभ्यो यद्यनन्तरं पूर्वं पदं तेन सहैता ब्रूयुः ॥२८॥**

विभाग्यपक्षे पदेन पदेन सह देवता अपि ब्रूयुः। नानानिधनानि देवता इत्यर्थः ॥२८॥

**व्यवस्तोभेत् पददैवतमित्येके ॥२९**

पदानि दैवतानि च **पददैवतमिति** द्वन्द्वैकवद्भावः। पदानां दैवतानां च पृथक् पृथक् स्तोभवृत्तिः कार्येत्येके मन्यन्ते। स्वमतं तु पूर्वमुक्तम्। **तस्यानुपदं स्तोभाः** (द्रा. श्रौ. २०.२.२४) इति ॥२९॥

---

3. My$^{2}$ $^{0}$विभक्ति$^{0}$ for $^{0}$भक्ति$^{0}$; T. प्रकारात् for प्रकरणात्
My$^{1\cdot 4}$ T. विभक्ति$^{0}$ for भक्ति$^{0}$; My$^{1\cdot 4}$ TC. नेह for न हि
6. My$^{1}$ My$^{4}$ C. $^{0}$पदं for पादं; My$^{2}$ आग्य$^{0}$ for $^{0}$भाग्यत्व$^{0}$
7. My$^{2}$ प्रस्ताव$^{0}$ for प्राप्ति$^{0}$; T. विभाग्य$^{0}$ for विभाग्यत्व$^{0}$
19. My$^{2}$ इतः for तु

**निधनानि पदानि पदस्तोभेषु तथैवेडाः ॥३०॥**

पदस्तोभा नाम चत्वारि सामानि **धर्ता दिवः पवते** (सा. ५५८) इति योनौ ये गीयन्ते तेषामाद्यस्याष्टाविडाः सन्ति। द्वितीयस्य षडिडाः। तृतीयस्य चतस्र इडाः। चतुर्थस्य द्वे इडे। तेषामाद्यमधिकृत्य ब्राह्मणम् **द्वादशनिधनो भवति** (तां. ब्रा. १३.५.२५) इति। तच्चतुर्णामपि साधारणमिति मत्वा सर्वेष्वपि द्वादशनिधनानि दर्शयति। **इडाश्च** पादाश्च **पदस्तोभेषु** चतुर्ष्वपि निधनानि स्युरिति। आद्ये तावत् पदस्तोभे पादचतुष्टयमिडाष्टकं चास्तीति द्वादशनिधनत्वम्। इतरेष्वपि वक्ष्यामः ॥३०॥

**तेभ्यो नाना स्तोभेयुः ॥३१॥**

**तेभ्यो** द्वादशभ्योऽपि निधनेभ्यः पृथक् पृथक् **स्तोभेयुः** ॥३१॥

कथमित्याह—

**त्रिभ्यः प्रथमेभ्यः प्रस्तोता त्रिभ्य एव सप्तमप्रभृतिभ्यः प्रति-हर्ता ॥३२॥**

आदितस्त्रिभ्यो निधनेभ्यः प्रस्तोता स्तोभेत्। **सप्तमप्रभृतिभ्यः त्रिभ्यः** प्रति-हर्ता। इतरेभ्यः षड्भ्य उद्गातेत्यर्थसिद्धम्। स्तोभविभाग्याश्चैते। अन्त्यस्य सर्वस्य निधनत्वात् ॥३२॥

**अर्द्धं पदं निधनमिडाव्यपेतेषु ॥३३॥**

यस्य पादस्य मध्य इडेति निधनं तदिडाव्यपेतम्। तेषु पादेषु इडायाः पूर्वोऽर्द्ध एकं निधनम्। उत्तरोऽर्द्ध एकं निधनमिति। तत्र तृतीये पदस्तोभे पादचतुष्टय-मिडाव्यपेतम्। द्वितीये पादद्वयम् ॥३३॥

---

1. My[4] C. om. एव

2. My[1-2] CT. ॰स्तोमानां for ॰स्तोभा नाम

9. T. स्तोभयेयुः for स्तोभेयुः

14. My[2] आत्रिभ्यः for आदितस्त्रिभ्यः; My[1,4] C. om. त्रिभ्यः; My[2] after प्रस्तोता adds : तु

15. My[2] om. षड्भ्यः

18. My[2] T. पदस्य for पादस्य

**सर्वमव्यपेतेषु ॥३४॥**

इडाया व्यवधानाभावे सर्वोऽपि पाद एकं निधनम् ॥३४॥

**चतुर्थस्य प्रथमः पादस्त्र्यक्षराणि चत्वारि निधनानि ॥३५॥**

**चतुर्थस्य** पदस्तोभस्य प्रथमं पादं चतुर्द्धा विभज्य त्र्यक्षराणि चत्वारि निधनानि कार्याणि ॥३५॥

**तथा तृतीयः ॥३६॥**

**तथैव तृतीयोऽपि** पादश्चतुर्धा विभज्य चत्वारि निधनानि कार्याणि । शिष्टं पादद्वयमिडाद्वयं च चत्वारि निधनानीत्येवं द्वादशनिधनत्वम् ॥३६॥

तत्रैव पक्षान्तरमाह—

**द्वितीयोत्तमौ वा द्वैधं चतुरक्षरश इतरौ ॥३७॥**

इति । **द्वितीयोत्तमौ** पादौ **द्वैधं** विभजेत् । तानि चत्वारि । **इतरौ** पादौ **चतुरशो** विभज्य षण्निधनानि । तानीडाद्वयेन सह द्वादशनिधनानि ॥३७॥

**अविभाग्याश्चेदष्टमेन स्तोभेन प्रथमस्य ॥३८॥**

अविभाग्याः पदस्तोभा इति पक्षे **अष्टमेन स्तोभेन** प्रथमस्याष्टमनिधनार्थमावृत्तेन प्रतिहारः ॥३८॥

**नवमेन परेषाम् ॥३९॥**

**परेषाम्** द्वितीयप्रभृतीनां पदस्तोभानां **नवमेन** स्तोभेन प्रतिहारः ॥३९॥

**दशमेन वान्त्यस्य ॥४०॥**

अथवा चतुर्थस्य पदस्तोभस्य **दशमेन** प्रतिहारः ॥४०॥

**सर्वेषां प्रथमेन प्रस्तावः ॥४१॥**

अविभाग्य [त्व] पक्षे चतुर्णामपि पदस्तोभानां **प्रथमेन** स्तोभेन **प्रस्तावः** ॥४१॥

**इति द्राह्यायणश्रौतसूत्रे विंशे पटले द्वितीयः खण्डः ॥२॥**

---

2. My[1] पदः for पादः

7. My[1] TC. om. एव

14. T. अष्ट° for अष्टम°

# तृतीयः खण्डः

**इलान्दस्योत्तमेऽनुगाने षट् ॥१॥**

पञ्चानुगानमिलान्दं नाम साम । तेषामाद्यमनुगानं केवलं स्तौभिकमृक्शून्यम् । इतराणि चत्वार्यग्निरस्मि जन्मना (सा. ६१३) इत्यादि चतुर्ऋचे क्रमेण गीतानि । तेषामुत्तमानुगाने उत्तमे पादोपक्रमे षडक्षरः प्रतिहारः ॥१॥

**विभाग्यानीतराणि ॥२॥**

अन्त्यवर्जमितराणि चत्वारि विभाग्यानि ॥२॥

**प्रथमं वा विभाग्यम् ॥३॥**

अविभाग्यं वा प्रथममनुगानम् ॥३॥

**तत्रोत्तमस्य स्तोभस्य मध्यमेन वचनेन ॥४॥**

तत्राविभाग्यपक्षे उत्तमस्य स्तोभस्य मध्यमेन वचनेन प्रतिहारः ॥४॥

**एकादश दैर्घतमसस्य ॥५॥**

स्पष्टम् ॥५॥

**अष्टमैः स्तोभैस्त्रिरुक्तैर्भद्रश्रेयसोः ॥६॥**

**इमा नु कं भुवना सीषधेमे** (सा. ११९०) ति द्विपदायां भद्रम् । **पवस्व सोम मन्दयन्** (सा. १८१०) इति श्रेयः साम । तत्र द्वयोः पादयोः निधनस्य च स्तोभत्रयमाहर्तव्यम् । ते चावृत्त्या नव भवन्ति । तत्राष्टमेन त्रिरुक्तेन प्रतिहारः । **अष्टमैरिति** बहुवचनमभ्यासापेक्षम् ॥६॥

**पञ्चमैश्च यदि द्विप्रतिहारे ॥७॥**

**यदि द्विप्रतिहारे** भद्रश्रेयसी कर्तुमिष्टे तदा **पञ्चमैश्च** स्तोभैस्त्रिरुक्तैः प्रतिहारः ॥७॥

---

4. My[2] T. उत्तराणि for इतराणि

5. My[1] उत्तमेऽनु[0] for उत्तमानु[0]

17. My[2] आवृत्ता: for आवृत्त्या; My[1] T. न for नव

18. My[2] [0]वचनस्य सापेक्षम् for [0]वचनमभ्यासापेक्षम्

**पञ्चाक्षरशः स्तोभविभाग्ये धर्मविधर्मणी ॥८॥**

द्विपदयोः ऋचोर्धर्मविधर्मणी साम्नी भवतः। तयोर्द्विपदामृचं पञ्चाक्षरशश्चतुर्धा कृत्वा तानि चत्वारि पदानि निधनानि कुर्युः। प्रतिनिधनं च स्तोभाभ्यासः। ततः स्तोभविभाग्ये स्याताम्। धर्मसाम्नि केवलमन्तस्तुब्धेऽपि स्तोभविभाग्ये इति वचनसामर्थ्यात् प्रतिपादं स्तोभवृत्तिः ॥८॥

**द्विपदाकारं वा ॥९॥**

यद्वा द्विपदामेव कृत्वा स्तोभविभाग्ये कुर्यात्। उभयथाप्युपदेशात्। तथा च निदानकारः—**द्विपदा एना एके प्रतिजानते** (नि. १.३) इति। **पञ्चाक्षरपदाः चतुष्पदा अक्षरपङ्क्तय इत्यन्ये** (नि. १.३) इति ॥९॥

**तयोर्दशमैः स्तोभैः प्रतिहारः ॥१०॥**

औहोवेति त्रीण्यक्षराणि स्तोभाः। ते च द्विपदाकारपक्षे प्रतिनिधनं चतुरभ्यस्ता द्वादश। तत्र **दशमैरभ्यस्तैः प्रतिहारः** ॥१०॥

**षष्ठैश्च यदि द्विप्रतिहारे ॥११॥**

तयोर्द्विप्रतिहारमिष्टं चेत् तदा षष्ठैरपि स्तोभैः प्रतिहारः ॥११॥

**पदान्ते त्र्याणि सौहविषे ॥१२॥**

**सौहविष** इति हाङ्कारस्वरो गृह्यते ॥१२॥

**पादादौ वा ॥१३॥**

यद्वा उत्तमपादोपक्रमे त्र्यक्षरः प्रतिहारः ॥१३॥

**मध्यमं वचनं स्वर्णिधने सौहविषे ॥१४॥**

**स्वर्निधने सौहविषे** पूष्णे भगायेत्यस्य त्रिरुक्तस्य **मध्यमं वचनं** प्रतिहारः ॥१४॥

---

2. My[2] ⁰विधर्मसामनी for धर्मणी साम्नी; My[1] सामनी for साम्नी

3. My[2] ⁰अभ्यासं for अभ्यासः

8. My[1] ⁰अक्षरपदैः for ⁰अक्षरपदाः

19. My[1] स्वर्वन्नि for स्वर्णि⁰

20. My[2] om. स्वर्निधने ··· स्वर्निधनम् (p. 420. L. 2)

**विभाग्यं वा ॥१५॥**

यद्वा पञ्चाक्षरशो विभाग्यं स्वर्णिधनम् ॥१५॥

**मध्यममेव वचनं पुरस्तात्स्तोभं वैराजस्य ॥१६॥**

**पिबा सोममिन्द्र मन्दतु त्वे** (सा. ६२७) ति **वैराजस्योत्तमः** पादस्त्रिरभ्यस्यते। तत्र **मध्यमं वचनं** पुरस्तात्स्तोभयुक्तं प्रतिहारः ॥१६॥

**तस्य पदान्तांश्चतुर्वाभ्यस्येयुः ॥१७॥**

**तस्य** वैराजस्य त्रिरुक्तान् **पदान्तांश्चतुरभ्यस्येयुर्यथाम्नायम्**। वेति विकल्पः ॥१७॥

**तथा चातुर्थिकस्य वात्सप्रस्य ॥१८॥**

तथा पृष्ठस्य चतुर्थेऽहनि क्रियमाणस्य वात्सप्रस्यापि त्रिरुक्तान् पदान्तांश्चतुरभ्यस्येयुस्त्रिर्वेति विकल्पः ॥१८॥

किमु यत्रापि विकल्पे याथाकाम्यम्। नेत्याह—

**समाधिं तु ॥१९॥**

साम्येन प्रयोगः समाधिः। वैराजवात्सप्रयोः साम्यं तु कुर्यात्। न पुनरेकस्य चतुरभ्यासः स्यादन्यस्य त्रिरभ्यास इति वैषम्यं कुर्यात्। तथा च निदानकारः— **तेन वात्सप्रं समादध्याद्यदि वैराजं त्र्यनुतोदं वात्सप्रप्रथममपि त्र्यनुतोदम्। यदि चतुरनुतोदं वात्सप्रमपि चतुरनुतोदम्** (नि. सू. ३.१२) इति। तथा च वात्सप्रमधिकृत्य ब्राह्मणम् **एतस्मिन् वैराजं प्रतिष्ठितम्** (तां. ब्रा. १२.११.२४) इति। गानसादृश्यात् प्रतिष्ठितमिति वादः ॥१९॥

**ऋगादिमुपरिष्टाल्लामकायनः ॥२०॥**

वैराजस्य समाप्तौ पिबेत्यक्षरद्वयमाम्नातम्। तत्र संदेहः। किमेतत् **पिबा सोममिन्द्र मन्दतु त्वे** (सा. ६२७) ति ऋगाद्यक्षरद्वयम्। किं वा तत्सदृशस्तोभाक्षरमिति तत्र ऋगादिरिति लामकायनः। यथा लोके गाथां गीत्वा पुनरपि तदादेरावेष्टनम् तद्वत् **पिबा सोममिन्द्र मन्दतु त्वेति** ऋचं गीत्वा पुनरावेष्टनमिदं **पिबे**त्यक्षरद्वयम् ॥२०॥

---

10. T. om. अपि

20. C. ऋगदिर् for ऋगादिम्

21. My[1] T. वैराज° for वैराजस्य

24. C. तृचं T. ऋचा for ऋचं

**स्तोभं शाण्डिल्यः ॥२१॥**

आवेष्टनमित्यत्र प्रमाणाभावादृगक्षरसदृशस्तोभ इति मन्यते। किं विवेकस्य प्रयोजनम्। आवेष्टनपक्षे उत्तरयोः स्तोत्रीययोस्तदादेरेवावेष्टनं कार्यम्। स्तोभपक्षे पिबेत्यस्यैवोत्तरयोरप्यतिदेशस्तोभान्तरवत् ॥२१॥

**त्रैककुभे च पदादिः ॥२२॥**

उपरिष्टादित्यनुवर्तते। शाण्डिल्य इति च। **त्रैककुभे** साम्नि उपरिष्टाद्यकार आम्नातः। सोऽपि **य एक इद्विदयत** (सा. १३४१-३) इति। पदादिर्यकार आवेष्टित इति शाण्डिल्यो मन्यते। स्तोभ इति स्वमतम्। अत्र निदानकारेण त्रैककुभस्य निधने विप्रतिपद्यन्त इत्यादिना निधनेऽपि विप्रतिपत्तिरुक्ता। सूत्रकारस्तु निधनात् पूर्वस्मिन् यकारे स्तोभो वा पदादिर्वेति मतभेदं दर्शितवानित्यनुसंधातव्यम् ॥२२॥

**अविभाग्यानामुत्तमे पदे प्रागुपायात् षट्सु व्यावर्गवत्स्वष्टसु वा यथा वामदेव्यक्रोशयोः पूर्वेण व्यावर्गेण प्रतिहरेदिति शाण्डिल्य उत्तरेणेति धानंजय्यः ॥२३॥**

**अविभाग्यानामुत्तमे पदे** निधनस्योपायात् **प्राक्** षडक्षरे मध्येऽवसानवति सति अष्टाक्षरे वा अवसानात् पूर्वोऽशः प्रतिहार इत्येकं मतम्। उत्तरोंऽश इत्यपरं मतम्। व्यावर्गो विभाग इति पर्यायः ॥२३॥

---

3. My[2] पदादेः for तदादेः; T. om. एव

9. C. after निधने adds : न
   C. T. My[2] °पद्यते for °पद्यन्ते; My[4] om. अपि

10. My[4] ऋगादिः, My[2] पादादिः for पदादिः
    My[1] C मति° for मत°; My[2] om. मतभेदं ... धातव्यम्

12. My[1] व्यावर्ग्यवत्सु for व्यावर्गवत्सु

13. My[1] व्यावर्ग्येण for व्यावर्गेण

16. My[1·2] T. C. om. अष्टाक्षरे वा

17. My[1] व्यावर्ग्यो for व्यावर्गो My[1·2] पर्याया: for पर्यायः;

एवं तावत् साम्नां स्वयोनिगताक्षरसंख्यया प्रतिहार उक्तः । यत्र योनिविसदृशच्छन्दः स्वक्षरवृद्धिर्लोपश्च भवति तत्र योनौ प्रतिहारे या गीतिः सैव प्रतिहारो नाक्षरसंख्यावर इत्याह—

**प्रातिहारिकमेव गीतं प्रतिहारो वैच्छन्दसेषु ॥२४॥**

इति । किमुदाहरम् । **इमं वृषणं कृणुतैकमिन्माम्** (सा. ५९१) इत्येकपदायां वृषाख्यं सामोत्पन्नं **अभि प्र वः सुराधसमि** (सा. ८११) ति बृहत्यां गीयते । तस्य योनौ नवमदशमाभ्यामक्षराभ्यां प्रतिहारः । बृहत्यां पुनः सा गीतिः दशाक्षरे भवति ॥२४॥

**अप्यपदादौ ॥२५॥**

**पदादिः प्रतिहारस्थानम्** (द्रा. श्रौ. १८.३.६) इति पूर्वमुक्तम् । **अपदादावपि** वैच्छन्दसेषु प्रतिहारः स्यात् । यथा **प्रत्नं पीयूषं पूर्व्यं यदुक्थ्यम्** (सा. १४६४) इत्यामहीयवस्य । एवमन्यान्यपि द्रष्टव्यानि ॥२५॥

अथोपद्रवभक्तिमनुसंधत्ते—

**नोर्ध्वं प्रतिहारादोंकारेणाददीतेति गौतमः ॥२६॥**

इति । तलवकारिणामूहाध्ययने उपद्रवभक्तेरप्योंकारेणादानं दृष्टम् । तस्य निषेधोऽयम् ॥२६॥

**प्रत्यवेत स्वराणां तु प्रत्युद्गृह्णीयात् । यथा कालेयवात्सगुर्द्दानाम् ॥२७॥**

चतुर्थमन्दादिना स्वरेण ये प्रारभ्यन्ते ते प्रत्यवेतस्वराः उपद्रवाः । तेषामोंकारेणादानं कर्तव्यमिति धानंजय्यमतं वक्ष्यति । गौतमस्तु तेषां प्रत्युद्ग्रहणमेव कार्यम् । न प्रणवेनादानमिति मन्यते । प्रत्युद्ग्रहणं नाम क्रुष्टप्रथमाद्युच्चैः स्वरेण प्रारम्भः ॥२७॥

---

1. My[2] T. ⁰ संख्यायाः for संख्यया
   My[2] ⁰सदृश⁰ for ⁰विसदृश⁰
2. My[2] ⁰हारे for ⁰हारः
6. My[4] तत्र My[1] तस्याः for तस्य
7. My[2] प्रतिहारे (या) गीतिः सैव for नवमदशमाभ्यामक्षराभ्यां
15. My[1] TC. द्रष्टव्यम् for दृष्टम्

तमेव पाठेन दर्शयति—

**नकारिणाम् । मयो वा । वरो वा ।।२८।।**

इति ।।२८।।

**ओंकारेण प्रत्यवेतस्वराणामाददीतेति धानंजय्यः ।।२९।।**

**यथाम्नायं शाण्डिल्यः ।।३०।।**

द्वयमपि स्पष्टम् ।।२९-३०।।

अथ निधनभक्तिमनुसंधास्यन्नन्तर्निधनानि तावदाह—

**इहकार इडाथकारौ गीतं च निधनस्वरं हीषीस्वरं च द्वचक्षरं देवताश्चारण्येगेयेषु तान्यन्तःसामनिधनानि ।।३१।।**

इति । इहकारेडाकाराथकाराः स्तोभरूपा अन्तर्निधनानि स्युः । यच्च सामान्यनिधनेन सदृशस्वरं तत्साममध्ये गीयते । यच्च निहोता सत्सि बर्हिषीति पदान्तेन हीष ं शब्देन सदृशस्वरं द्वचक्षरं यथा यौधाजये । यानि च देवतापदान्यरण्येगेयेषु स्वर्ज्योतिरित्यादीनि तान्येतानि चतुर्विधानि साम्नामन्तर्निधनानि सर्वैः प्रयोज्यानीत्यर्थः ।।३१।।

किमेतान्यविशेषेण निधनानि ? नेत्याह—

**वाक् चेत् स्तोभान्तोऽनन्तरः पुरस्ताद्वृद्धः क्रुष्टो वाकारः स्वरितं वार्चिकं वा वृद्धं पूर्वेषां त्रयाणाम् ।।३२।।**

इति । देवताभ्यः पूर्वेषां त्रयाणां देवताव्यतिरिक्तानामित्यर्थः । यदि **पुरस्तात्** **अनन्तरः** स्तोभान्तो वाक्छब्दः स्यात् । यदि वा वृद्धः **क्रुष्टो वाकारः पुरस्तात्** स्यात् । यदि वा **स्वरित**मक्षरं पुरस्तात् स्यात् । यदि वा वृद्धमृगक्षरं पुरस्तात्

---

2. C न 2 का 1234 रिणां 5 म 1 यों 1234 वा 5 व 1 रो 1234 वा 1 for नकारिणाम् · · · वा

11. T. °मध्येन for °मध्ये

12. T. स्वसदृश° for सदृश°

13. My[2] om. एतानि

18. My[1] C °व्यतिरेकानां for °व्यतिरिक्तानाम्

19. My वाशब्दः for वाक्छब्दः

स्यात् । यथा त्वाष्ट्रीसाम्नि । तदानीमेव तेषां त्रयाणां निधनत्वम् नान्यथेत्यर्थः ॥३२॥

तदेवं लक्षणचतुष्टयं देवताव्यतिरिक्तानां निधनत्वे हेतुः । देवतास्त्वविशेषेण निधनानीति विवेकः । तेषामुदाहरणमाह—

**यथा देवत्यस्त्वाष्ट्रीसाम यौधाजयं दार्ढच्युतमाथर्वणमान्धीगवम् ॥३३॥**

इति । अत्र **आन्धीगवं** वक्ष्यमाणनिधनस्योदाहरणमिति । उक्तानां निधनानां तत्राभावात् ॥३३॥

एवं चतुष्टयानि निधनान्युक्तानि । अथ पञ्चमं निधनमाह—

**तेभ्यो यन्निगदवर्त्यनन्तरमार्चिकं तेन सहोपेयुरनादेशः ॥३४॥**

इति । **तेन** इत्युभयेषां परामर्शः । **तेभ्यो** निधनेभ्यस्तल्लक्षणेभ्यश्च वागादिभ्यो **यदनन्तरमार्चिक**मक्षरं निगदस्वरेण वर्तते **तेन सहोपेयुः** । तदपि पूर्वैश्चतुर्भिः सह निधनत्वेन ग्राह्यमित्यर्थः । तत्र निधनेभ्योऽनन्तरवर्ति उदाहरणम् अच्छिद्रगूर्दादीनि सामानि । यथा अच्छिद्रे **परीतो षिञ्चता सुतम्** (सा. ५१२) इत्यत्र उत्तरे त्रयः पादा हीपीस्वरादुत्तरा निगदवर्तिनः । वागादिलक्षणानन्तरवर्तिनो निधनस्योदाहरणम् आन्धीगवगौतमरयिष्ठादिकम् । एतेषां पञ्चानामपि निधनत्वे ब्राह्मणमस्ति । यथा **त्रिणिधनं भवति** । (तां. ब्रा. ९.१.१४) **दशाक्षरं मध्यतो निधनमुपयन्ति** । (तां. ब्रा. ८.५.१३) यच्चानुष्टुभस्य मध्ये निधनस्य ब्राह्मणम् । **तदु चैतस्य** इत्यादिकम् । ननु आन्धीगवादिषु **गीतं च निधनस्वरमि** (द्रा. श्रौ. २०.३.३१) त्यनेनैव निगदवर्तिनोऽपि निधनत्वं सिद्धम् । नैवम् । तत्तत्सामान्तनिधनसादृश्याभावात् । वेदसामाध्ययने च सामान्त्यनिधनस्वरोऽप्यस्तीति वक्तव्यमेतत् । तदेवं पञ्चविधमन्तर्निधनम् ॥३४॥

---

1. निधनत्वात् for निधनत्वम्
10. My[1] °वृत्ति° for °वर्ति°
11. My[1] after निधनेभ्यस् ins. तु; My[2] om. °भ्यश्च ··· तेन (L. 12); My[4] स्मृतलक्षणेभ्यः for तल्लक्षणेभ्यः
15. My[2] °स्वरनिगद° for °स्वरादुत्तरा निगद°
20. TC. om. अपि My[2] om. one तत्

**इहकारादिमिडां सर्व उपेयुः ॥३५॥**

द्विविधा तावदिडा । इकारेण पृथग्भूता संयुक्ता चेति । तत्र संयुक्तामिडां सर्वे ब्रूयुः । इकारेण सहैव ब्रूयुरित्यर्थः ॥३५॥

उदाहरणमाह—

**तानि प्रतीचीनेडानि ॥३६॥**

इति । **तानि** सामानि **प्रतीचीनेडानि** काशीतप्रभृतीनि येष्विकारेण सह वचनमिति प्राप्ते वचनमुत्तरविवक्षार्थम् ॥३६॥

**इकारं त्वन्यासु गौतमः ॥३७॥**

अन्यास्विकारेण पृथग्भूतासु इडासु इकारमात्रमेव सर्वे निधनं ब्रूयुः । इकारं तु केवलमुद्गातैव ब्रूयात् ॥३७॥

**इडेति धानंजय्यः ॥३८॥**

इकारेण पृथग्भूतामपि तेन सहैव ब्रूयुरिति धानंजय्यमनम् । उदाहरणं कालेयादिसाम ॥३८॥

**इकारान्तं चैवोपायं प्रगाथेषु संप्रगायन्ति कुत्साः ॥३९॥**

पृथग्भूत इकारान्तो यस्योपायस्य तमिकारान्तं निधनोपायं होइकारमुद्गात्रा सह **संप्रगायन्ति कुत्स**शिष्याः । न केवलमिकारमात्रम् ॥३९॥

एवं करणं तेषां कोऽभिप्राय इति चेत्तमाह—

**एवं नः कृत्स्नेडोपेता भविष्यतीति ॥४०॥**

इति । एवं क्रियमाणे इकारेण सह पूर्णेडास्माकं प्रयुक्ता **भविष्यतीत्य**भिप्रायः ॥४०॥

कुत्समतं निराकरोति—

**प्रत्युद्गीतस्तु खल्वेषां तदोद्गाता भवति ॥४१॥**

---

9. My[1] प्रकार° My[2] इकार° for इकार°

15. My[2] om. इकारान्तं ··· सह सं° (L. 16)

19. C. पूर्वे° for पूर्णे°

22. My[2] °उद्गीतस् for °उद्गीतस्; C. भविष्यति for भवति

इति । उपायस्यापि सह वचन उद्गात्रैव गेयम् । सन्तमुपायं प्रस्तोता प्रतिहर्ता च द्वावपि प्रत्युद्गायत इति महान् दोषः ॥४१॥

गौतमपक्षोऽपि नातीव साधुरित्याह—

**कृत्स्नामेके समयाम्नायाभ्याम् ॥४२॥**

उपायं विना केवलमिकारेण पृथगवस्थितेनैव सह कृत्स्ना वक्तव्येत्येके मन्यन्ते यथोक्तं धानंजय्येन । कुतः । आचार्यसमयात् समाम्नायाच्च द्रवन्तीमिडामुत्तमामुपयन्तीति पृथग्भूतामिडामधिकृत्य समाम्नायो भवति । यदिडाकारमात्रमेव निधनं स्यात्तदेडामुपयन्तीति वक्तव्यं स्यात् । न पुनरिडायामुपयन्तीति । कालेयादीनामिडानिधनव्यपदेशो न स्यात् । यथाध्ययनं पृथक्स्थितमिकारं डाकारं च सर्वे ब्रूयुरिति सिद्धम् ॥४२॥

**पुरीषपदशेषाणि निधनान्याचार्याः स्वरितान्तानि यथाधीतं वा ॥४३॥**

महानाम्नीशेषभूतानि पुरीषपदानि **निधनानि** सर्वप्रयोज्यानि ब्रुवते । तदा **स्वरितान्तानि** स्युः । इडादिपदं स्वरितान्तं कृत्वा तत ऊर्ध्वस्य स्वरस्य लोप इत्येकं मतम् । अथवा **यथाधीतम**लोपेनैव निधनानि स्युरिति मतान्तरम् । स्वमते तु पञ्चभक्तीनि [सामानि] तेषु भक्तयश्च पूर्वमेव दर्शिताः ॥४३॥

**इति द्राह्यायणश्रौतसूत्रे विंशे पटले तृतीयः खण्डः ॥३॥**

---

4. CT समा° My[2] समवाया° for समया°
5. My[1] अवस्थिता for वक्तव्या
My[2] एव स्थितेन for अवस्थितेन
6. My[1] om. उत्तमाम्
7. My[1] om. पृथग् · · · उपयन्तीति (L. 8)
9. C. ऐडानि च My[2] ऐडानि T. ऐडादीनि च for इडानिधन°
11. My[2] °गीतं My[1] धीता [नि] for धीतं
16. T. °भक्तनिधनेषु for °भक्तीनि तेषु

## चतुर्थः खण्डः

**त्रिरात्रेषु च यौधाजयस्यैकाक्षराणि निधनानि ॥१॥**

**यौधाजयस्य** त्रीणि निधनानि हीपीस्वराणि द्व्यक्षराणि सन्ति। तान्येकाक्षराणि स्युः। **त्रिरात्रेषु** (च) इति। चकार आचार्यमतापवादानुकर्षणार्थः ॥१॥

**प्रगाथेषु बृहद्रथन्तरयोर्यज्ञायज्ञीयस्य चानादेशे ककुभावुत्तरे ॥२॥**

**प्रगाथेषु** बृहदादीनां त्रयाणा**मुत्तरे**स्तोत्रीये **ककुभा**वेव स्याताम्। न बृहत्यौ। कुतः। **ककुभावुत्तरे उपादधुर्** (तां. ब्रा. ७.७.५) इति ब्राह्मणवचनात्। **अनादेशे** यथा **पुरोजिती वो अन्धस** (सा. ६९७) इति **प्रगाथेषु** अनुष्टुभि यज्ञायज्ञीयम् इति विधानात्। अनुष्टुभावुत्तरे ककुभः कर्तुमशक्यत्वात्तथेति ॥२॥

**तयोर्द्व्यक्षरः प्रस्तावः सर्वत्र ॥३॥**

**तयो**रुत्तरयोः **सर्वत्र** प्रगाथेषु तृचेषु च **द्व्यक्षर** एव **प्रस्तावः** ॥३॥

तत्रैव तृचेषु विशेषमाह—

**तृचेष्वक्षरसंयोगेन ॥४॥**

इति। **कया नश्चित्र आभुवत्** (सा. ६८२-४) इत्यादि **तृचेषु** रथन्तरादीनां त्रयाणा**मुत्तरसंयोगेन** प्रस्तावः कार्यः ॥४॥

तदेव दर्शयति—

**प्रथमाया उत्तममक्षरं मध्यमायाश्च प्रथमम् ॥५॥**

इति। प्रथमस्तोत्रीयोत्तमाक्षरं मध्यमस्तोत्रीयाद्याक्षरं च संसृज्य ताभ्यां प्रस्तावः कार्य इत्यर्थः ॥५॥

---

4. My[1] after चकारः ins. हि

8. My[2] om. कुतः ककुभावुत्तरे; My[1,4] after कुतः add : ततः;
My[1] after उत्तरे adds : क॰
My[1] C. ॰वचनमनादेशः for ॰वचनात् अनादेशे

14. My[1] ॰संगेन TC. My[2] संसर्गेण for संयोगेन

19. T. om. प्रथमं ··· इत्यर्थः; (L. 20);
My[1-2] C. प्रथममुत्तमं for प्रथम ··· ॰द्याक्षरं

**एवमेवापरयोर्द्वितीयोत्तमयोः ॥६॥**

एवमेव द्वितीयोत्तमयोरप्यक्षरद्वयं संसक्तं कुर्यात् । तथैवोहाध्ययनमपि क्रियते ॥६॥

**प्रस्तावप्रतिहारनिधनानामक्षरपरिमाणं यथायोनि चिकीर्षेद्वैच्छन्दसेऽवनादेशे ॥७॥**

प्रस्तावप्रतिहारयोरन्तर्निधनानां च योनिवदेव विसदृशच्छन्दःसु अक्षरपरिमाणं सति संभवे संपादनीयम् । निधनेऽप्यस्त्येव परिमाणम् । यथान्धीगवादिषु **दशाक्षरं मध्यतो निधनमुपयन्ती** (तां. ब्रा. ८.५.१३) त्यादि परिमाणसंपादनाशक्तौ तु गतिरेव प्रतिहार इति पूर्वमेवोक्तम् ॥७॥

**यस्यार्चिकमुदात्तानुदात्तं तदृगूढमथ यस्य सामिकं तत् सामोढम् ॥८॥**

**आर्चिक**मित्यत्र ऋक्शब्देनोत्तरयोर्ग्रहणम् । ऋचं पर्यालोच्य तद्गतोदात्तादिस्वराविरोधेन यदुत्तरायामूह्यते **तदृगूढं** साम । **अथ** यत् स्वयोन्यामुत्पत्तौ साम्नः स्वरं पर्यालोच्य तदविरोधेनार्चिकं स्वरं बाधित्वा उत्तरयोरूह्यते **तत् सामोढ**मित्युच्यते ॥८॥

उभयमपि गानप्रदर्शनेनोदाहरति—

**यथा पौष्कलस्योत्तरयोर्यथाविदेऽ२३४५ । समप्सुजीऽ२३४५ दिति धानंजय्यस्तदृगूढम् । यथाविदेऽ२३४५ । समप्सुजीऽ२३४५ दिति शाण्डिल्यस्तत् सामोढम् ॥९॥**

इति । ननु च ऋगूढपक्षोऽनुपपन्नः । कथम् । सर्वत्र प्रायेण योन्यामार्चिकस्वरं बाधित्वा स्वतन्त्रेणैव स्वरेण साम्नो निष्पत्तिः । तेनोत्तरयोरपि तथैव युक्तम् ।

---

1. My[1] परयोः for अपरयोः; My[2] द्वितीययोः for द्वितीयोत्तमयोः
2. T. तथैवाह° for तथैवोह°
6. My[2] C. after च्छन्दःसु ins. अपि
   My[4] before विसदृश° adds : विच्छन्दःसु
13. C. सयोन्याम् for स्वयोन्याम्
20. My[4] om. च; T. प्रयोज्यम् for प्रायेण योन्याम्

सत्यम् । एवं यत्र योन्यामेकदेशे मन्त्रस्वरेणैव साम गीयते तत्र संदेहः । किं तस्मिन्नंशे मन्त्रस्वरो न बाधनीय इत्यभिप्रायेण तेन स्वरेण साम्नो निष्पत्तिः । किं वा तत्रापि स्वतन्त्र एव साम्नः स्वरः । यदृच्छया नु मन्त्रस्वर एकरूपो जात इति । तत्राबाधपक्षे उभयोरपि तस्मिन्नंशे योनेर्विसदृशस्वरेऽपि तत्स्वराबाधेन गेयमित्यूगूढ पक्षोपपत्तिः । योनौ यादृच्छिकमैकरूप्यमिति पक्षे सामोडपक्ष इति विवेकः ॥९॥

**ऊनाक्षरेषु पादेष्वक्षरोपधिं शाण्डिल्यः ॥१०॥**

योनिपादादूनाक्षरेषूत्तरपादेषु गानकाले संधिकार्येण ग्रस्तमक्षरं पुनरुपदध्यादिति **शाण्डिल्यः** ॥१०॥

तदुदाहरणेन दर्शयति—

**यथाग्नेस्त्रिणिधनस्य आनूपेऽ२३४गो । मान्गोभिराऽ३१उवाऽ२३ । आऽ२३४क्षाः । सोमोदूऽ२३४ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३४ क्षाः ॥ तदक्षरसधातु ॥११॥**

इति ॥११॥

**अनूपधिं धानंजय्यः । आनूपेऽ२३४गो । मान्गोभिरऽ३१उवाऽ२३ । आऽ२३४ क्षाः ॥ सोमोदूऽ२३ग्धा ॥ भिराऽ३१उवाऽ२३ ॥ आऽ२३४क्षाः ॥ तत्पदसधातु ॥१२॥**

---

1. My[1-2] My[4] C. मन्द्र० for मन्त्र०; T. ०देशं for ०देशे
2. My[1-2] C. My[4] मन्द्र० for मन्त्र०
3. T. इव for ०रूपो; My[2] T. तु for नु; My[4] om. नु
4. C. बाध० for अबाध०
   My[2] विच्छन्दस० for विसदृश०
5. My[1] TC. My[4] om. ०पक्ष०
7. M पदेषु for पादेषु; M ०पधि for ०पधिं
8. My[2] ०पदाद् for ०पादाद्; My[1] ०पदेषु for ०पादेषु

इति । **प्र सोम देववीतये** (सा. ५१४) इति योनौ तृतीयः पादो द्वादशाक्षरः । उत्तरायामानूपे **गोमानिति** नवाक्षरः । तत्र यावत्संभवं योन्यक्षरसादृश्यसंपादनेन गीतेर्निधानम् । यत्र तदक्षरसधातुसाम । योनिपादेऽनुपधानात्तत्सादृश्येन निधानम् । यत्र तत्पदसधातुसाम ॥१२॥

**पाङ्क्तस्यानुष्टुप्सु द्वितीयं पदं द्वैधं व्यूहेच्चतुरक्षरशो यथर्षभस्य शाक्वरस्य ॥१३॥**

पङ्क्तियोन्यामुत्पन्नस्य साम्नोऽनुष्टुप्सु गाने कर्तव्ये सति **द्वितीय**मनुष्टुभः पादं द्वौ चतुरक्षरौ भागौ कृत्वा पङ्क्तिवत् गायेदित्यर्थः ॥१३॥

**तृतीयं बृहतीष्वष्टाक्षरं चतुरक्षरं च यथा संकृतिनः ॥१४॥**

तस्यैव पाङ्क्तस्य **बृहतीषु** गाने कर्तव्ये सति **तृतीयं** पादं द्वेधा विभजेत् । **अष्टाक्षरं चतुरक्षरं च** ॥१४॥

**सिमा बृहत्यनुष्टुप्सु यथापदं व्यूहेत् ॥१५॥**

**सिमाः** शक्वर्यो महानाम्न्यः इति पर्यायः । ता **बृहतीष्वनुष्टुप्सु** च गीयमाना **यथापदं व्यूहेत्** । **त्रयोदशपदा महानाम्न्य** इति पूर्वमुक्तम् । तदेव **सोम उष्वाणः सोतृभिः** (सा. ६६७-८) **पवस्व वाजसातय** (सा. १०१६-१८) इति बृहत्यनुष्टुभौ त्रयोदशधा विभजेत् ॥१५॥

---

3. My[2] विधानं, My[4] निधनम् for निधानम्;

   My[1] अनुपाधानम् My[4] अनुपाधानात् for अनुपधानात्

5. My[2] पादं for पदं

7. My[1] अनुष्टुभि; My[2] आनुष्टुभं for अनुष्टुभः;

8. My[1] पदं for पादं

10. T. द्विधा for द्वेधा

13. My[2] पर्याया: for पर्यायः

14. My[2] °पादं for पदं

कुत इत्याह—

**स हि ऋग्धर्मः ॥१६॥**

इति । यथारूपा योनिस्तथारूपमृगन्तरं कार्यमित्येष ऋचां धर्मः ॥१६॥

सिद्धान्तमाह—

**सप्तधेत्याचार्याः ॥१७॥**

इति । सप्तधैव विभजेदिति (आचार्याः) ॥१७॥

कुत इत्याह—

**सप्त हि शाक्वराणि ॥१८॥**

इति । **सप्त** पदानि **हि शाक्वराणि** । शक्वरीशरीरभूतानीत्यर्थः । इतराणि पदानि शक्वरीबहिर्भूतानि स्तोभवन्महानाम्नी शेषभूतानीति पूर्वमेवोक्तम् ॥१८॥

तत्र प्रमाणमाह—

**उपक्षुद्रा इति चाह ॥१९॥**

इति । महानाम्नीरधिकृत्य ब्राह्मणम्—**उपक्षुद्रा गायति । तस्मादुपक्षुद्राः पशवः** (तां. ब्रा. १३.४.५) इति । तस्यायमर्थः । यासां समीपे क्षुद्राणि पञ्च छन्दांसि व्यतिषक्तानि द्विपदा धातुर्वत्सः पुरोपोऽध्यास्येति भवन्ति ताः **उपक्षुद्राः** शक्वरीगायेत् । अत एव हि **पशवोऽप्युपक्षुद्रा** भवन्ति । तथा हि धेनुसमीपे वत्साः स्त्रीपुंसरूपास्तिष्ठन्तीति किं च । **शक्वर्यः पृष्ठं भवन्त्यन्यदन्यच्छन्द** (तां. ब्रा. २१.४.६) इति ब्राह्मणम् । **संश्लिष्टा गयती** (तां. ब्रा. १३.४.६) नि पूर्वमेव व्याख्यातम् । तेन सप्तपदा एव शक्वर्य इति ऋगन्तरमपि सप्तधैव कार्यम् ॥१९॥

तत् कथमित्याह—

**तासां द्वितीयं पदं द्वे द्वे कृत्वा चत्वार्यूधः ॥२०॥**

**तासां** बृहत्यनुष्टुभां **द्वितीयं** पादं **द्वे द्वे** अक्षरे **कृत्वा** इतराणि **चत्वार्यूधः** संज्ञकः पादः कार्यः । ततः पूर्वौ द्वौ द्व्यक्षरौ पादद्वयमिति विद्यात् ॥२०॥

---

8. My[1-2] सप्तभिः for सप्त हि

11. My[2] om. तत्र प्रमाणमाह

22. My[2] चत्वार्यक्षराणि for इतराणि चत्वारि
T. after तासां adds : द्वौ

**अष्टौ चत्वारीति तृतीयम् ॥२१॥**

तासां **तृतीयं** पादम**ष्टौ चत्वारीति** एवं द्वेधा विभजेत् ॥२१॥

**चत्वार्यष्टाविति वा ॥२२॥**

यद्वा चतुरक्षरमष्टाक्षरमित्येवं विभजेत् ॥२२॥

**समधानुष्टुप्सु ॥२३॥**

अनुष्टुप्सु तृतीयं पादं **समधा** समशो विभजेत् ॥२३॥

**यथास्थानमशाक्वराणि ॥२४॥**

महानाम्नीनाम**शाक्वराणि** यानि पदानि द्विपदाधातुवत्सादीनि तानि सर्वाणि **सोम उष्वाणः सोतृभिर्** (सा. ६९७) इत्यादिबृहतीषु **यथास्थानं** स्तोभवन्निवेशये-दित्यर्थः । तेन द्विपदां गीत्वा महानाम्नीनां प्रस्तावः कार्यः धातुवत्साद्यपि तत्रैव निवेशयेत् ॥२४॥

**योनौ यान्यभ्यासेनान्यच्छन्दः संपद्यन्ते यथा गौरीवितौदल-कौत्सत्रैककुभवैखानसानि तदापन्नेषु तेषु गौतमसार्दागवावन-भ्यासम् ॥२५॥**

**योनौ** यानि सामानि पदानाम**भ्यासेन** छन्दोन्तरमापन्नानि यथा गौरीविता-दीनि । तेषु साक्षादेव तच्छन्दःसु गीयमानेषु पादाभ्यासो न कार्यः । मुख्यस्यैव छन्दसो लाभादिति गौतमश्च सार्दागवश्च मन्यते ॥२५॥

---

7. My[1] om. यथास्थानम···बृहतीषु (L. 9)

8. My[2] TC. °धातुर्° for °धातु°; My[4] om. महा°···बृहतीषु (L. 9)

10. My[1-2] TC. My[4] धातुर् for धातु°

13. My[1] MT. सार्दृगवौ, My[2] शार्गवौ for सार्दागवौ

17. My[2] शार्दृगश्च for सार्दागवश्च

**मशको गार्ग्योऽभ्यासं मशको गार्ग्योऽभ्यासम् ॥२६॥**

मशकाचार्यस्तु तत्राभ्यासं कर्तव्यं मन्यते । योन्यां दर्शनात् ॥२६॥

**इति द्राह्यायणश्रौतसूत्रे विंशे पटले चतुर्थः खण्डः ॥४॥**

सामनां भक्तिविभागज्ञः शास्त्रदृष्टानुसारतः ।
उपगच्छेत् श्रियं धाम साम्नां विष्णोश्च शाश्वतम् ॥ ५

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः ।
छन्दोगसूत्रदीपोऽयं मध्यमे दशके कृतः ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे विंशः पटलः समाप्तः ॥२०॥** ८

---

2. C. मशको गार्ग्यः for मशकाचार्यस्तु; my[2] after तत्र ins. अपि; my[2] स्मर्तव्यं for कर्तव्यं

एकविंशः पटलः

## प्रथमः खण्डः

**ऊपास्थानेष्वन्यानि निधनानि ॥१॥**

तिस्रस्तावदूपाः । अर्द्धा पूर्णा अध्यर्द्धा चेति । तासां सर्वासां स्थाने प्रयोगकाले निधनान्तराणि स्युः । कुतः क्वचिदाहत्य ब्राह्मणे विधानात् ।क्वचिदनुवाददर्शनाच्च । ऊपाध्ययनं तर्हि किमर्थम् । ब्रह्मयज्ञाद्यर्थम् ॥१॥

**स्वरानादेशे तथा स्वराणि स्युः ॥२॥**

तानि च निधनानि **तथा स्वराणि** ऊपास्वराणि **स्युः** । ननु च स्थानापत्तेः सिद्धमेवैतत् । (इति चेत् ।) न सिद्धम् । **सुर्याय त्वा जुष्टं निर्वपामीत्यादिषु** अग्निपदस्थानापन्नस्य सूर्यादिपदस्य स्वतन्त्रस्वरदर्शनात् । तेन वक्तव्यमेतत् ॥२॥

**इडाश्चानादेशे ॥३॥**

**ऊपास्थानेष्वित्यनुवर्तते** । निधनविशेषानादेशे तत्स्थानेष्विडाः स्युः । सामान्यविधिरयम् ॥३॥

अथ विशेषं वक्तुमारभते—

**उबित्यर्द्धेडा ॥४॥**

इति । **उबित्यर्द्धेडास्थाने स्यात्** । **अर्द्धेडया वै देवा असुरानवहत्य** (तां. ब्रा. ८.६.१५) इति ब्राह्मणेऽनुवाददर्शनात् ॥४॥

---

3. My[2] before ऊपास्थानेषु⁰ adds :–

गण्डस्थलगलद्दानभ्रमद्भ्रमरशोभितम् ।
विघ्नराजमहं वन्दे मन्मनोरथसिद्धिदम् ॥
श्रीमनोरथसिद्धिविनायकाय नमः ॥हरिः ओम्॥

5. T. om. कुतः । .... ⁰यज्ञाद्यर्थम् ॥ (L. 6);

T. निधनान्तस्वराणि for निधनान्तराणि

My[2] after विधानात् । adds :—यथा कार्तयशमधिकृत्य ब्राह्मणम्—इडेति निधनमुपयन्तीति ।

My[2] after ⁰दर्शनाच्च । adds :—यथाऽङ्गीरसमधिकृत्य अर्धेडया वै देवा असुरानवहत्येत्यादि

10. My[1] C. after तेन add :—न

**प्रकृतिस्वरा प्रथमस्वरा वा ।।५।।**

सा चार्द्धेडास्थानस्वरा स्यात् । प्रथमस्वरा वेति विकल्पः ।।५।।

**अध्यर्द्धा त्वध्यर्द्धोपानाम् ।।६।।**

अध्यर्द्धोपानां स्थानेऽध्यर्द्धेडा स्यात् ।।६।।

**औत्पत्तिकः स्वरः स्वः काशीते ।।७।।**

काशीते साम्नि ऊपास्थाने स्वरिति शब्दो भवेत् । स औत्पत्तिकः स्वरः स्यात् । आत्मीयस्वर इत्यर्थः ।।७।।

**दैवोदाससुज्ञानयोश्च ।।८।।**

दैवोदाससुज्ञानयोरप्यूपास्थाने स्वरिति निधनं भवेत् । स्वर्णिधनं भवती (तां. ब्रा.-११.१०.१६) ति ब्राह्मणानुवाददर्शनात् ।।८।।

**स्वःपृष्ठे च पूर्वः ।।९।।**

स्वःपृष्ठे साम्नि ऊपाद्वयमस्ति । तत्र पूर्वस्मिन् ऊपास्थाने स्वरिति निधनं भवेत् ।।९।।

**उत्तर इति गौतमधानंजय्यौ ।।१०।।**

स्वःपृष्ठस्योत्तरस्मिन् ऊपास्थाने स्वरिति भवेत् । पूर्वस्मिन्निडेति मतान्तरम् ।।१०।।

**औपगवयोरथामथा वा ।।११।।**

औपगवयोः साम्नोरूपास्थानेऽथेति निधनं स्यान्मथेति वा ।।११।।

**कामं तु नाना ।।१२।।**

अथवौपगवयोरथामथेति निधनद्वयं पृथगेव क्रमेण स्यात् । प्रथमेऽथेति स्यात् । द्वितीये मथेत्यर्थः ।।१२।।

**अभिचरणीयेषु वा मथाथान्यत्र ।।१३।।**

---

4. C. before अध्यर्द्धो° adds अध्यर्द्धा तु

9. T. my[2] om. भवेत् । स्वर्णिधनम्

यद्वा अभिचरणीयेषु क्रतुषु औपगवयोरुभयोरपि मथेति निधनं स्यात् । तेभ्योऽन्यत्र क्रतुष्वथेति व्यवस्था स्यात् ॥१३॥

इदानीं जागतस्य सोमसाम्नः ऊपास्थाने दश पक्षान् वक्ष्यन् प्रथमं पक्षमाह—

**जागतस्य सोमसाम्न इन्द्र इव दस्यूँरमृणाः । सूर्य इव दस्यूँरमृणाः । वज्रिन् सुवज्रिन् ॥१४॥**

इति । सोमसाम्न उपास्थाने इन्द्र इव दस्यूँरमण इत्यादि वाक्यत्रयं पृथक् पृथक् निधनस्वरेण स्वरयित्वावस्येत् ॥१४॥

तत्रैवावसाने विकल्पमाह—

**द्विर्वावस्येत् ॥१५॥**

इति । तदेव पाठेन दर्शयति—

**इन्द्र इव दस्यूँरमृणाः । सूर्य इव दस्यूँरमृणाः । वज्रिन् सुवज्रिन् । इन्द्र इव दस्यूँरमृणाः । सूर्य इव दस्यूँरमृणो वज्रिन् सुवज्रिन्निति वा ॥१६॥**

इति ॥१५-१६॥

**सकृच्चान्ततः इन्द्र इव दस्यूँरमृणः सूर्य इव दस्यूँरमृणो वज्रिन् सुवज्रिन् ॥१७॥**

इति । तदेवं प्रथमे पक्षेऽवसानविकल्प उक्तः ॥१७॥

अथोत्तरैः सूत्रैर्नव पक्षान् दर्शयति—

**यथा वायोभस्त्रायां निहन्यमानायां ह्लादः स्यात् ॥१८॥**

---

1. My[1] My[4] om. उभयोः
   C. before तेभ्यः adds ;—स चौत्पत्तिकः
3. CT. उपा⁰ for ऊपा⁰
7. T. निधनेन for निधनस्वरेण
9. My[1-2] व्यवस्येत् for अवस्येत्
17. My[4] om. तद्; C. नव विकल्पा उक्ताः for अवसानविकल्प उक्तः; My[1-2] My[4] ⁰विकल्पाः उक्ताः for ⁰विकल्प उक्तः
19. C. वायोर् for वायो⁰

यथा (वा) अयस्कारः स्वीयामयोभस्त्रां वायुना संपूर्य निहृ (?ह) त्य ह्लादयेत् तादृशस्वरं निधनं फूत्काररूपमूपास्थाने कुर्यात् ॥१८॥

**यथा वायसी समृच्छेयाताम् ॥१९॥**

यथा आयसी द्वे वा परस्परं समाहते ध्वनतः तादृशशब्दं निधनं कुर्यात् ॥१९॥

**यथा वा निष्कः कृन्तत्रेणाभिहतो ध्वनेत् ॥२०॥**

यथा निष्कः स्वर्णकारेण कृन्तत्रेणाभिहतो ध्वनेत् तादृशशब्दं निधनं कुर्यात् ॥२०॥

**यथा वा सनूपुरपादस्य निघातः स्यात् ॥२१॥**

यथा वा सनूपुरपादस्य भूमौ निघाते कृते यः शब्दस्तादृशं वा निधनं स्यात् ॥२१॥

**गण्णिति वा ॥२२॥**

गण्णिति वा निधनं कुर्यात् ॥२२॥

**यथा वाप्सु पिप्पलं निपतेत् ॥२३॥**

पिप्पलं फलम् । यथाप्स्वाम्रादिफलं निपतच्छब्दं करोति तादृशं वा निधनं स्यात् ॥२३॥

**प्लुगिति वा ॥२४॥**

**प्लौगिति वा ॥२५॥**

**सहोभीरिति वा ॥२६॥**

सूत्रत्रयमपि स्पष्टम् । एवं जागते सोमसाम्नि ऊपास्थाने दश पक्षाः ॥२४-२६॥

---

1. My[2] विहृत्य for निहृत्य
2. C. उपा⁰ for ऊपा⁰
8. My[1] CT. My[4] निखातः for निघातः
9. My[2] T. सनूपुरस्य for सनूपुर⁰; My[2] तत्सदृशं for तादृशं
16. My[1] प्लगिति, T. प्सुगिति for प्लुगिति
19. T. ⁰द्वयम् for ⁰त्रयम्

**कार्तयशे च त्रयो विकल्पाः ॥२७॥**

**कार्तयशे** साम्नि ऊपास्थाने **हेति निधनमुपयन्तीति** प्रत्यक्षब्राह्मणं तस्य निधनस्य पूर्वैरार्चिकैरक्षरैः सह प्रयोगकाले स्वरप्रकारे विकल्पत्रयमस्तीत्यर्थः ॥२७॥

तदेव पाठेन दर्शयति—

**दयित्नवे हम् । दयित्नवे हम् । दयित्नवे हम् ॥२८॥**

इति । **पुरोजिती वो अन्धसः सुताय मादयित्नवे** (सा. ७९७) इत्यर्द्धसमाप्तावूपास्थाने हम् इति निधनं प्रयोज्यम् । तस्य प्रयोगे स्वरविशेषप्रदर्शनं **दयित्नवे हम्** इति सूत्रकारेण क्रियते ॥२८॥

**एवमेवोत्तरस्मिन् निधने ॥२९॥**

एवमेव कार्तयशस्य **उत्तरस्मिन्** ऊपास्थाने स्वरत्रयं द्रष्टव्यम् । यथ **जिह्विं** हम् इत्यादि विकल्पत्रयदर्शनं कर्तव्यम् ॥२९॥

अथ गायत्रे साम्नि यद् वक्तव्यं तद् वक्तुमारभते—

**गायत्रस्य पादेन प्रस्तावः सर्वत्र ॥३०॥**

**गायत्रस्य सर्वत्र** त्रिष्टुब्जगतीषु गायत्रीषु च गीयमानस्य **पादेन प्रस्तावः** कार्यः ॥३०॥

**अष्टाक्षरेणेति धानंजय्यः ॥३१॥**

त्रिष्टुब्जगतीषु **अष्टाक्षरेणैव** प्रस्तावो न पादेनेति धानंजय्यः ॥३१॥

तत्र प्रमाणमाह—

**तथा पुराणं ताण्डम् ॥३२॥**

इति । पुरातनं ताण्डिब्राह्मणमित्यर्थः ॥३२॥

**तस्य निदर्शनार्थं गानं गायत्रीषु ॥३३॥**

---

1. T. °यशसे च त्रेधा विकल्पः for °यशे च त्रयो विकल्पाः

10. My[1] एतस्मिन् for उत्तरस्मिन्

11. T, om. एवम् · · · आरभते (L. 13) My[1] TC. यथा for यथ;

12. My[1-2] TC. om. आदि; My[2] प्रदर्शनं for दर्शनं

14. My[2] T. पदेन for पादेन

21. T. om. इति · · · अर्थः My[1] TC. after ब्राह्मणम् ins अस्ति

22. My[1] TC. My[4] om. निदर्शनार्थं;

**तस्य** गायत्रस्य साम्नः सर्वासु **गायत्रीषु** निदर्शनार्थं कस्यांचिद् ऋचि **गानं** करिष्याम इत्यर्थः। रथन्तरादिवदूहाध्ययने गायत्रस्य गानाभावादेवमुक्तम्। किं पुनस्तस्य मूलमिति चेत्। उपनिषदि सावित्र्यां गायत्रस्य गानं तदनिशेषश्चेति ब्रूमः। यथा **सावित्रीगेयं यत्रागीतम्** (दे. ब्रा. ३.२३) इति। अस्यायमर्थः। यत्र यत्र गायत्रं न गीयते तत्र सर्वत्र यथा सावित्रीगेयं भवेत्। सावित्र्यां गानं यथा गीयते तथा गेयमित्यर्थः ॥३३॥

**उपास्मै गायता नरोमिति धानंजय्यः ॥३४॥**

**उपास्मै गायता नरो इति शाण्डिल्यः ॥३५॥**

**उपास्मै गायता नरा इत्येके ॥३६॥**

स्पष्टानि ॥३४-३६॥

**शेषमुद्गाता ॥३७॥**

प्रस्तावादूर्ध्वं गायत्रशेषमुद्गातैव ब्रूयान्नान्य इत्यर्थः। कुत एतत्। **द्विरवनर्दन् हिंकुर्यात् तृतीयम्** (तां. ब्रा. ६.७.२) इत्यवनर्दकर्तुरुद्गातुरेव प्रतिहारे विधानात्। **तथेडां पशुकामाय** निधनं कुर्यात् (तां. ब्रा. ७.१.११) इत्येकवचनात् उद्गातुरेव निधनम् ॥३७॥

तत्र विशेषमाह—

**मनसा तु स्वभक्तिमोंकारं तथा स्वरं वाचा ॥३८।**

इति। **स्वभक्ति**मुद्गीथमुपद्रवं च **मनसा** प्रयुञ्ज्यात्। **तथा स्वरं** स्वभक्तिसदृशस्वरम**ोंकारं** कृत्वा तं **वाचा** ब्रूयात्। **अनिरुक्तं गेयम्** (तां. ब्रा. ७.१.८) इति श्रुतेः ॥३८॥

**सर्वे वा निधनन्यायात् ॥३९॥**

गायत्रस्य निधनं **सर्वे वा** ब्रूयुः। सर्वप्रयोज्यं निधनमिति हि न्यायः। निधनं कुर्यादित्येकवचनमविवक्षितमित्येकं मतम् ॥३९॥

**इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले प्रथमः खण्डः ॥१॥**

---

3. My[2] गायत्र्यां for सावित्र्यां

5. My[2] तत्र तत्र for तत्र

## द्वितीयः खण्डः

**इमे वै लोका गायत्रं त्र्यावृद् गेयम्** (तां. ब्रा. ७.१.१) इति ब्राह्मणम्। तद्व्याख्यानेन गायत्रगानं दर्शयति—

**पवमानायेन्दावा इत्येकावृत् ॥१॥**

इति ॥१॥

**अभिदेवां इया इत्यपरा ॥२॥**

इति ॥२॥

**क्षाता इत्यपरा ॥३॥**

इति। तिस्र आवृतो यस्येति त्र्यावृत्। आवृद्गीति खण्डः। त्रिभिर्गीतिखण्डै-रुपेतं गायत्रं गायेदिति ब्राह्मणार्थः। त्रयोऽपि खण्डाः सूत्रत्रयेण दर्शिताः। उत्तरयोस्तु गीतिखण्डयोराधारभूतावार्चिकावंशावुपात्तौ। तयोर्गीतिमनन्तरमेव दर्शयिष्यति ॥३॥

**द्विरवनर्दति** (तां. ब्रा. ७.१.२) ति ब्राह्मणं व्याचष्टे—

**पूर्वा वा वर्गाववनर्द्याविति धानंजय्यः ॥४॥**

**पूर्वा वा वर्गौ** गीतिखण्डौ **अवनर्द्यौ** अवनर्दनीयौ। अवस्वरेदित्यर्थः। खण्ड-योरन्त्यमक्षरमुच्चैः कृत्वा नीचैरवस्थापयेदित्यर्थः। तथैव हि सावित्र्यां गीयते। **अवनर्द्याविति** कृत्यप्रत्ययः। केचित्तु लुप्तयकारं पठन्ति। तत्र छान्दसो लोपः प्रमादपाठो वा ॥४॥

**मध्यमायामावृति द्वौ स्तोभौ कुर्यात्तावनर्द्याविति गौतमः ॥५॥**

मध्यमे गीतिखण्डे तदन्त्यस्वरसदृशौ द्वौ स्तोभौ कुर्यात्। तौ च द्विरवनर्द-नीयाविति गौतमः ॥५॥

तावेव गानेन दर्शयति—

**अभिदेवां इया ॥६॥**

इति। अत्र द्वावाकारावन्त्याक्षरसदृशौ प्रत्येकमवनर्दितौ ॥६॥

---

10. My[2] °कारेण for °त्रयेण

16. My[2] सावित्रीसाम My[1] सावित्र्या हीयते for सावित्र्यां गीयते

19. T. मध्यमा° for मध्यमायाम्; My[1] C. °नर्दौ for °नर्द्यौ

**सर्वत्रौकारावित्येके स्तोभधर्मत्वात् ॥७॥**

सर्वास्वृक्षु सावित्रीयोनिदृष्टावोकारावेव मध्यमे गीतिखण्डे स्तोभौ कुर्यात् । न पुनस्तदन्त्याक्षरसदृशावित्यर्थः । कुतः । **स्तोभधर्मत्वात्** । योनिदृष्टः स्तोभोऽन्यत्र प्रवर्तत इति स्तोभानां धर्मोऽयम् । केचित्तु **सर्वत्राकारावित्येक** इति पठन्ति । स तु प्रमादपाठ एव । सावित्र्यामाकारयोरदर्शनात् । न च; **द्विरवनर्देदि** (तां. ब्रा. ७.१.२) ति वचनात् आकारयोः स्तोभधर्मत्वम् । अवनर्दनमात्रविधानात् । तस्मात् सर्वत्र ओकारावित्येव पाठः । **धियो यो नः प्रचो** इति मध्यमावृत्योकारयोरेव दर्शनात् । तस्मात्तद्वदेव सर्वत्र मध्यमे गीतिखण्डे तावेव स्तोभौ कुर्यादित्यर्थः ॥७॥

तदेतन्निराकरोति—

**यथर्चमाचार्यास्तथर्क्सलिङ्गदृष्टान्तात् ॥८॥**

इति । मध्यमे गीतिखण्डे यादृगन्त्यमार्चिकमक्षरं तत्सदृशौ स्तोभौ कार्यौ । कुतः । तथैवर्क्सलिङ्गयोरार्चिकाक्षरसरूपयोरेव स्तोभयोर्योनौ दर्शनात् । तथा हि **धियो यो नः प्रचो** इति मध्यमे गीतिखण्डे षष्ठस्वरे ओकारोऽन्त्यस्तत्सदृशावोकारावेव तत्र स्तोभौ विवक्षितौ । तत्रार्थादोकारत्वं जातम् । अतः सर्वत्रान्त्याक्षरसदृशावेव स्तोभौ कुर्यात् ॥८॥

**स्तोभानैकान्त्याच्च ॥९॥**

किं च । सावित्र्यामोकारयोर्न स्तोभैकान्त्यमस्ति । एकान्तेन स्तोभाविति निश्चेतुं न शक्यावित्यर्थः । **द्विरवनर्द्दे**दित्यृगक्षरस्यैवावनर्द्दनविधानोपपत्तेर्न स्तोभत्वे किंचित्प्रमाणमिति यावत् । तेन **स्तोभधर्मत्वा**दित्यसिद्धो हेतुरिति ॥९॥

---

2. T. स्तोभं for स्तोभौ
4. My$^{4}$ स्तोभ ' My$^{1}$ स्तोभं for स्तोभानां
7. My$^{1}$C प्रचोद for प्रचो;
8. My$^{2}$ मध्यमावृत्तोऽन्ते उकारयोः T. My$^{1}$ मध्यमावृतोऽन्ये औकारयोः for मध्यमावृत्योकारयोः
9. My$^{1}$ कुर्यताम् My$^{2}$ T. कार्यौ for कुर्यात्
13. My$^{4}$ om योनौ; My$^{1}$ एव for योनौ
15. My$^{1}$ C. ततः for अतः

एवं तावत् गायत्रीगानप्रकारो दर्शितः। अथ ज्यायसि च्छन्दसि कथं गानमत आह—

**ज्यायसि च्छन्दसि प्रथमायामावृत्यावपेदुत्तमं पादं शिष्ट्वा ॥१०॥**

इति। **ज्यायसि च्छन्दसि** जगत्यादिषु अन्त्यं पादमवशिष्य प्रस्तावादूर्ध्वमृगक्षराणि सर्वाण्यनुद्धृत्य तदन्ते प्रथमो गीतिखण्डः कर्तव्यः ॥१०॥

**अष्टाक्षरमिति धानंजय्यः ॥११॥**

**अष्टाक्षरमेवावशेषयेत्** कृत्स्नमन्त्यं पादमिति **धानंजय्यः**। अत्रानन्तरं ब्राह्मणम्—**हिंकुर्यात् तृतीयम् यत्त्रिरवनर्द्द्ति। अतितद् गायत्रं रेचयती** (तां. ब्रा. ७.१.२-३) ति। तस्यायमर्थः। द्विरवनर्द्दनानन्तरं तृतीयमवनर्द्दनरूपं हिंकारं कुर्यात्। तेनैव तृतीयावनर्द्दसिद्धेस्तृतीये गीतिखण्डे पुनरवनर्द्दनमतिरिक्तमेव। तस्मात् तृतीयो गीतिखण्ड उच्चैरेव गेयः ॥११॥

अत्र **हिंकुर्यादिति** सामान्येनोक्तम्। तत्प्रवृत्तिविषयं तत्स्वरूपं च दर्शयति—

**ऊर्ध्वं रेतस्याया द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात् हिं आ इति ॥१२॥**

**हिं आ** इति बहिष्पवमानस्य प्रथमा रेतस्या। तद्वर्जमुत्तरास्वेव **द्व्यक्षरं शिष्ट्वा हिंकारं ब्रूयात्**। कुतः। षड्विंशब्राह्मणे रेतस्याया हिंकारनिषेधात् ॥१२॥

अत्रानन्तरं ब्राह्मणम्—**यो वै गायत्रेणाप्रतिहृतेनोद्गायतीत्यादि स मनसा ध्येयः** (तां. ब्रा. ७.१.३-४) इत्यन्तं हिंकारस्य मनसा ध्यानं विधत्ते। तत्राचार्याणां मतभेदं दर्शयति—

---

1. My[2] गायत्रीषु for गायत्री°
3. My[2] पदं for पादं
6. My[1] TC. My[4] om. अष्टा° ··· धानंजय्यः
9. C. नर्द्द° for नर्द्दन°
10. My[1] T. इति रिक्तम् for अतिरिक्तम्
20. My[1] C. मति° for मत°

**तं रेतस्यायां प्रतिहर्ता मनसा ध्यायेन्न परास्विति गौतमः ॥१३॥**

इति । **रेतस्यायामेव तं** हिंकारं **प्रतिहर्ता मनसा ध्यायेत्** । **न परासु** । कुतः । **यो वै गायत्रेणाप्रतिहृतेनोद्गायती** (तां. ब्रा. ७.१.३) ति प्रतिहार भक्तिलोपे मनसा ध्यानस्य निमित्तत्वेनावगम्यते । भक्तिलोपश्च रेतस्यायामेव नान्यत्रेति तत्रैव तद्ध्यानमिति **गौतमो** मन्यते ॥१३॥

**परास्वेवेति धानंजय्यशाण्डिल्यौ ॥१४॥**

**परास्वेव** मनसा ध्यानं न रेतस्यायाम् । कुतः । न प्रतिहारलोपो निमित्तम् । किं तु प्रतिहर्तुः प्रतिहारवचने प्राप्ते तं विहायोद्गातुः प्रतिहारवचनमेव निमित्तम् । तथा हि यो वै गायत्रेण प्रतिहर्त्रा प्रतिहृतेन स्वयमेव प्रतिहारं कृत्वा गायति सोऽप्रतिष्ठितः स्यादिति ब्राह्मणार्थः । ततश्चोद्गातुः प्रतिहारवचनम् उत्तरास्वेवेति तत्रैव ध्यानमिति **धानंजय्यशाण्डिल्यौ** ॥१४॥

रथन्तरवर्णामुत्तमां गायेदिति ब्राह्मणं व्याचष्टे—

**रथन्तरवर्णायामक्षराण्यभिष्टोभेत् ॥१५॥**

इति । उत्तमायां **रथन्तरवर्णायामृ**चि प्रस्तावादूर्ध्व**मक्षराणि** रथन्तरस्य भकारै**रभिष्टोभेत्** । ऊर्ध्वं प्रस्तावाच्चत्वार्यक्षराणीति पूर्वमुक्तम् । सूत्रकारेण शाखान्तरदर्शनात् ॥१५॥

अभिष्टोभप्रकारमाह—

**भाऽ३भाऽ३ इति शाण्डिल्यः ॥१६॥**

इति ॥१६॥

**भ भ इति धानंजय्यः ॥१७॥**

इति ॥१७॥

---

4. My[2] before भक्ति ins. तद्
6. C. मनसा My[1] तदा for तद्; My[2] om. तद्
8. My[1] CT. My[4] om. न
9. My[1-2] T. My[4] °वचननिमित्तं for वचनमेव निमित्तम्
21. M. भ इति for भ भ इति

**त्र्यक्षरं चाभिष्टोभेत् ॥१८॥**

इति । चकारो धानंजय्यानुकर्षणार्थः । त्र्यक्षरमेवाभिष्टोभेत् । न चत्वारि । इत्यपि धानंजय्यस्य पक्षः ॥१८॥

तत्र हेतुमाह—

**प्रथमं ह्यक्षरं लुप्तमिति ॥१९॥**

इति । सर्वत्रोद्गीथादाने प्रथमाक्षरलोपं तु धानंजय्य (द्रा. श्रौ. १८.२.२६) इति पूर्वमुक्तम् । तेनात्रापि तन्मते प्रथमाक्षरलोपात् त्र्यक्षरमेवाभिष्टोभेत् ॥१९॥

**हिम् इति हिंकारः ॥२०॥**

रथन्तरवर्णायामाकाररहितो हिंकारः स्यात् । तथा च पूर्वमुक्तम्—आविसृष्टहिंकारे—(द्रा. श्रौ. ३.४.२४) ति ॥२०॥

**द्वादशाक्षराण्यभिष्टोभेदनुष्टुभि ॥२१॥**

अभिषेचनीयस्य बहिष्पवमाने रथन्तरवर्णा अनुष्टुप् कार्या । तस्यां द्वादशाक्षराण्यभिष्टोभेत् ॥२१॥

**सर्वत्र चत्वारीति शाण्डिल्यः ॥२२॥**

स्पष्टमेतत् ॥२२॥

अतः परं खण्डशेषेण गायत्रस्य निधनं विचार्यते । सर्वत्र तावच्चत्वार एव सामान्ताः । स्वरो निधनमिडा वागिति । ऋचामन्त्याक्षरं स्वरयित्वा समापितं हाइकारश्च द्वयमपि स्वर इति रूढ्या व्यपदिश्यते । स्वरवागिडाभ्योऽन्ये सामान्ता निधनमित्युच्यन्ते । तेषां चतुर्णां सामान्तानामिडावाचोर्गायत्रे शङ्कैव नास्ति । अनध्ययनादविधानाच्च स्वरनिधनयोरेव विचारः । सावित्र्यामाकारनिधनस्याध्ययनात् सर्वाणि स्वाराण्याज्यानि तज्जामि नाना देवत्यैः स्तुवन्त्यजामितायै (तां. ब्रा. १६.५.२१) इति ब्राह्मणेऽनुवादाच्च संशयः । तत्रैकं मतमाह—

**यथर्चं चान्तं ब्रूयात् क्षाता इवायू इति ॥२३॥**

---

4. My[2] हेतुमेदम् for हेतुम्

7. C. ⁰लोपे for ⁰लोपात्

17. My[2] अन्त्यमक्षरं for अन्त्याक्षरं

19. T. My[2] उच्यते for उच्यन्ते

चकारः शाण्डिल्यानुकर्षणार्थः । यथर्च्चम् ऋचामन्त्यो यः स्वरस्तमेव गायत्रस्यान्तं कुर्यात् । न योनिदृष्टमाकारनिधनमिति शाण्डिल्यः ॥२३॥

कुत इत्याह—

**स्वाराण्याज्यानीति स्तुत्वा निधनवतेति च नानात्वचोदनात् ॥२४॥**

इति । **सर्वाणि स्वाराण्याज्यानि** (तां. ब्रा. १६.५.२१) भवन्तीति ब्राह्मणे स्वारत्वानुवादात् स्वारं गायत्रम् । यथा माध्यंदिने पवमाने **गायत्रेण स्तुत्वा निधनवता स्तुवन्ति** (तां. ब्रा. ७.३.११) इति गायत्रनिधनवतोर्भेदव्यपदेशात् न गायत्रं निधनवत् । किंतु स्वारमेव । निधनाध्ययनं तु ब्रह्मयज्ञार्थम् ॥२४॥

ननु च **स्वाराण्याज्यानी**त्यनुवादाद्धाइकारस्वारमपि स्यात् । न यथर्च्चं पादानुस्वारमेवेति नियमः । तत्राह—

**पदानुस्वारमेके स्तोभाश्रुतेः ॥२५॥**

**पादानुस्वारमेवे**त्येके । स्तोभस्य ऋगक्षरबहिर्भूतस्य हाइकारस्याश्रवणात् । स्वाराण्याज्यानीत्येतावदेव श्रूयते । तेन यथर्च्चं पादानुस्वारमेव गायत्रम् ॥२५॥

**बहिःस्वारं वा प्राणसामान्यात् बार्हतं हीति ॥२६॥**

---

2. My[2] T. आकारं for आकार
7. T. स्वरवत्त्व⁰ My[2] स्वरत्व⁰ for स्वारत्व⁰
   My[1-2] C. My[4] तथा for यथा
8. My[1] T. स्तुवीत for स्तुवन्ति
10. My[2] ⁰यिकार⁰ C. ⁰इकारः for ⁰इकार⁰; T. ⁰स्वरम् for ⁰स्वारम्
11. My[2] T. पदा⁰ for पादा⁰; My[1] My[4] after इति ins. एक इति
12. My[1] C My[4] पादा⁰ for पदा; C. स्तोभ⁰ for स्तोभा⁰;
    My[1] एक⁰ for एके
13. My[2] ⁰यिकारस्य for ⁰इकारस्य C. श्रवणात् for अश्रवणात्
14. C. My[2] पदा⁰ for पादा⁰
15. C. ⁰स्वरम् for ⁰स्वारम्

अथवा **बहिःस्वारं** गायत्रम् । हाइकारस्वारमित्यर्थः । ततः **बार्हतं हि** गायत्रं बृहत्सामपक्षे निविष्टमित्यर्थः । कुतो बार्हतत्वम् । **प्राणसामान्यात्** । **प्राणो गायत्रम्** (तां. ब्रा. ७.१.९) इति श्रुतिर्भवति । तथा **प्राणो वै बृहदपानो रथन्तरम्** (तां. ब्रा. ७.६.१७) इति श्रुतिः । तेन बृहद्गायत्रयोः प्राणत्वसंस्तवात् बृहत्पक्षीयं गायत्रम् । बृहत्सदृशमित्यर्थः । ततः किं बर्हिनिधनं बृहत् तद्वत् गायत्रमपि वहिःस्वारं युक्तम् । तथा च निदानकारः—**यानि बर्हिनिधनानि तानि बार्हतानी** (नि. २.३) ति ॥२६॥

अथ सिद्धान्तमाह—

**आकारं त्वाचार्याः स्मृतेः ॥२७॥**

इति । योनिदृष्ट**माकार**मेव निधन**माचार्याः** तथैव पूर्वेषां **स्मृतेः** ॥२७॥
किं च स्वारादपि गायत्रस्य भेदेन व्यपदेशोऽस्तीत्याह—

**गायत्रं निधनवदनिधनमैडं गायत्रं पुरस्तात् भवति स्वारमन्ततः इति नानात्वदर्शनात् ॥२८॥**

इति । **गायत्रं निधनवदनिधनमैड**मिति । ब्राह्मणे **अनिधन**मिति माध्यंदिनपवमानान्त्यस्यौशनस्य स्वारस्य गायत्राद् भेदेन व्यपदेशो भवति । तथा **गायत्रं पुरस्ताद् भवति । स्वारमन्ततः** (तां. ब्रा. ७.३.२७) इति च ब्राह्मणे गायत्रस्वारयोर्भेदव्यपदेशः । तेन न स्वारं गायत्रमिति निश्चयः ॥२८॥

---

1. My[2] हायि⁰ for हाइ⁰; My[1] हाइकारस्वरम् for हाइकारस्वारम्; T. बहिःस्वरम् for बहिःस्वारम् My[1-2] C. My[4] कुतः for ततः;
2. My[1] C. विनष्टम् for निविष्टम्
4. My[1] C. My[4] संस्तावात् for संस्तवात्
5. My[4] after गायत्रम् ins. इति
6. T. ⁰स्वरं for ⁰स्वारं; My[1] T. after युक्तम् adds : युक्तमिति and My[4] अयुक्तमिति
9. T. च for तु
14. My[1] My[4] CT. माध्यंदिने for माध्यंदिन⁰;
15. T. पवमानस्य for पवमानान्त्यस्य; My[2] om. स्वारस्य
16. My[1-2] C. ब्राह्मणेन for ब्राह्मणे
17. C. My[1] ⁰स्वरयोर् for स्वारयोर्; T. भेदेन for भेद⁰;

कथं तर्हि **स्वाराण्याज्यानी** (तां. ब्रा. १६.५.२१) ति ब्राह्मणनिर्वाहः। तत्राह—

**स्वाराणीति स्वरितत्वात् स्वरत्वाद् वा तस्य स्वरप्रधानत्वाद् वा गायत्रस्य ॥२९॥**

इति। आकारस्य **स्वरितत्वात् स्वाराणीति** ब्राह्मणम्। अथवा तस्य स्वरत्वात् स्वरो ह्याकारः। अथवा **गायत्रस्य स्वरप्रधानत्वात्** व्यञ्जनानि विहाय स्वरेण गानात् ओकारस्वरेणानिरुक्तगानात् स्वरप्राधान्यम् ॥२९॥

अथ यदुक्तम्—बृहत्सादृश्यात् बहिःस्वरं गायत्रम् इति तथा गायत्रस्य निधनवतश्च भेदेन व्यपदेशात् स्वारं गायत्रमिति तत् परिहरति—

**समे च भक्तिनानात्वे ॥३०॥**

इति। या तावत् **प्राणो गायत्रमिति** भक्तिर्गौणो वादः स गायत्रस्याकारनिधनत्वपक्षेऽपि समानः। सुतरामुपपद्यत एवेत्यर्थः। बहिर्निधनत्वात्। तथा स्वारत्वपक्षेऽपि गायत्रस्वारयोर्नानात्वदर्शनं समानम्। अनुपपन्नमेवेत्यर्थः। तेन पक्षद्वयेऽपि नानात्वदर्शनानुपपत्तेर्न स्वारं गायत्रं नापि निधनवत्। किंतु कोट्यन्तरमेवेति सिद्धम्। अत एव निधनवद्भिरामहीयवादिभिः संनिपाते जामिदोषोऽपि न भवति ॥३०॥

---

3. M. My[1] स्वरत्वाद्वान्तस्य T. स्वरान्तत्वात्तस्य for स्वरत्वाद्वा तस्य

5. C. om. अथवा ... ⁰प्रधानत्वात् (L. 6)
My[1] T. My[2] अथ वान्तस्य for अथवा तस्य;

6. My[2] हायिकारः for ह्याकारः

7. C. आकार⁰ My[2] ओंकार⁰ My[1] उकार⁰ for ओकार⁰;
My[1-2] निरुक्त⁰ for अनिरुक्त⁰ T. ⁰प्राधान्यात् for ⁰प्राधान्यम्

8. My[2] यथा for तथा

11. My[1] TC. My[4] यावत् for या तावत्; T. ब्राह्मणे for प्राणो; C. भक्तियोगो for भक्तिर्गौणो

14. My[1] C My[4] ⁰द्वयेन for ⁰द्वये.

**तं दीर्घम् ॥३१॥**

**तम्** आकारं निधनं दीर्घमेव ब्रूयात् । न योनिवदवस्वरेदित्यर्थः । अवस्वरणे सति तस्यावनर्दनरूपत्वात् **अति तद् गायत्रं रेचयति** (तां. ब्रा. ७.१.३) इति ब्राह्मणोक्तातिरेकप्रसङ्गः ॥३१॥

**अवस्वरेदिति धानंजय्यः ॥३२॥**

योन्यामवस्वरणदर्शनादिति मन्यते ॥३२॥
अवस्वरणमेव पाठेन दर्शयति—

**क्षाता आऽ३ इति गौतमः ॥३३॥**

इति ॥३३॥

**क्षातो वा इत्येके ॥३४॥**

इति । ऋगन्तनिधनयोर्मध्ये वकार उपजनः कर्तव्य इत्येके । न कर्तव्य इति गौतममतम् ॥३४॥

**इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले द्वितीयः खण्डः ॥२॥**

---

1. My तद् for तं
2. My[1] °स्वरेणेति C. °स्वरसो for °स्वरणे;
3. TC. इति for अति
4. My[2] ब्राह्मणोक्ति° for ब्राह्मणोक्त°
6. My[1] °स्वरेण My[2] °स्वर° for °स्वरण°
7. My[1-2] TC. °स्वरम् for °स्वरणम्
10. MT. before क्षातो add : क्षातो आऽ३

## तृतीयः खण्डः

**काम्यानां निधनानां किंचिच्चिकीर्षन्नुत्तमस्य द्व्यक्षरस्य स्थाने कुर्यादिति शाण्डिल्यः ॥१॥**

**इडां पशुकामाय निधनं कुर्यादि** (तां. ब्रा. ७.१.११) त्यादिब्राह्मणेन गायत्रस्य काम्यानि निधनानि विहितानि । तेषामेकं कर्तुमिच्छन् ऋचामुत्तमस्य **द्व्यक्षरस्य स्थाने कुर्यादिति शाण्डिल्यः** । कुतः । तन्मते गायत्रस्य पदानुस्वारत्वादृगन्तनिधन-स्वारमिति तत्स्थाने कार्यं निधनम् ॥१॥

पक्षान्तरमाह—

**अभिदेवां इयक्षताइ इति सर्वामृचं समाप्य ॥२॥**

इति । **सर्वामृचं समाप्य** ऋगन्ते अवनर्दनं कृत्वा तत उत्तरं काम्यं स्यात् ॥२॥

पक्षान्तरमाह—

**अविकारेण सर्वं गीत्वेति धानंजय्यः ॥३॥**

इति । **अविकारेण सर्वं** निधनमपि **गीत्वा** तत उत्तरं काम्यं निधनमिति **धानंजय्यः** ॥३॥

स्वमतमिदानीमाह—

**तान्याकारस्थानेषु स्युर्निधनत्वेन हि चोद्यन्ते ॥४॥**

इति । **तानि** काम्यानि **निधनान्याकार**निधनस्य **योनिदृष्टस्य स्थाने स्युः** । **पशुकामाय निधनं कुर्यात्** (तां. ब्रा. ७.१.११) इति **निधनत्वेन** चोदितत्वात् ॥४॥

अथ तेषां स्वरनिर्णयं करोति—

**कृतलक्षणचोदनाच्चौत्पत्तिकस्वराणि ॥५॥**

इति । लक्षणं चिह्नम् । सामान्तरेषु कृतचिह्नानाम् अवगतस्वरूपाणामिडा-दीनामिह काम्यत्वेन चोदनात्तत्र तत्र उत्पत्तावगतस्वराण्येवात्रापि स्युः । न पुन-स्तानि स्वराणीत्यर्थः ॥५॥

---

7. My[2] कामं for कार्यं T. निधनस्वरम् for निधनम्

10. C. उत्तमं for उत्तरं

14. T. उत्तरतः for उत्तरं

पक्षान्तरमाह—

**एकाक्षरं ष्ठास्वरं द्व्यक्षरं हीषीस्वरमिति वा न्यायात् ॥६॥**

इति । शैशवस्य साम्नो योन्यामसाव्यंशुर्मदायाप्सु दक्षो गिरिष्ठा (सा. ४७३) इत्यत्र ष्ठाकारस्य यः स्वरस्तत्स्वरसदृशमेकाक्षरं काम्यं निधनं स्यात् । द्व्यक्षरं काम्यं निधनं स्यात् । द्व्यक्षरं काम्यं निधनं हीषी स्वरसदृशं स्यात् । तथैव प्रायेण दर्शनात् ॥६॥

अथ सिद्धान्तमाह—

**कृतस्वरं तु निधनं तस्य चोद्यते वर्णविकारः ॥७॥**

इति । सावित्रीयोन्यां कृतस्वरमवगतस्वरमेव निधनमाकारस्तस्य केवलमिडां पशुकामाय निधनम् (तां. ब्रा. ७.१.११) इति वर्णविकारश्चोद्यते । न स्वरविकारः । तेन स्थानिस्वराण्येव स्युः ॥७॥

अत्र दृष्टान्तमाह—

**यथा रथन्तरस्य गायत्र्यः ॥८॥**

इति । यथा वामदेव्यस्यर्क्षु रथन्तरं गायतीति रथन्तरस्य योनिवर्णविकार एव चोद्यते न गीतिविकारस्तद्वद् ॥८॥

**तानि सर्वत्र स्युरनारभ्योत्पत्तिकत्वाद्गायत्रस्य ॥९॥**

स्तोत्रविशेषमनारभ्योत्पत्तिर्येषामिति बहुव्रीहिः । तानि काम्यानि निधनानि सत्यां कामनायां सर्वत्र स्युः । न केवलं बहिष्पवमाने । कुतः । स्तोत्रविशेषमनारभ्य गायत्रस्य निधनोत्पत्तेः ॥९॥

---

3. My[4] om. अप्सु दक्षो गिरिष्ठा
4. My[2] after द्व्यक्षरं adds : तु
9. My[1] TC. My[4] आकारस्य for आकारस्तस्य
14. T. स्थानि⁰ for योनि⁰
15. My[2] धीति T. गीत⁰ for गीति⁰
17. My[1] TC. My[4] आरभ्य for अनारभ्य
18. C. आरभ्य for अनारभ्य
19. C. My[2] निधनस्वेनो⁰ for निधनो⁰;

मतान्तरमाह—

**बहिष्पवमान इत्येके ॥१०॥**

इति ॥१०॥

तत्र हेतुमाह—

**तद्धि विकारा नातिक्रामन्ति । यथा रेतस्यारथन्तरवर्णयोर्धुरां च सामान्ताः इति ॥११॥**

तत् बहिष्पवमानं सर्वेऽपि गायत्रविकारा नातिक्रामन्ति । तत्रैव विनिविशन्ते यथा रेतस्यारथन्तरवर्णे धुरां निधनानि च । तद्वदेव काम्यान्यपि तत्रैव निविशन्ते ॥११॥

तदिदं निराकरोति—

**बहिष्पवमानसंयोगस्तु तेषां न कामसंयोगः ॥१२॥**

इति । तेषां रेतस्यादीनां बहिष्पवमानेनैव संबन्धो न फलेन । काम्यनिधनानां तु फलेन संयोगात् फलार्थिना सर्वत्र (तानि) प्रयोज्यानि । न बहिष्पवमान एवेति सिद्धम् ॥१२॥

एवं गायत्रस्य गीतिर्दर्शिता । अथ षड्विंशब्राह्मणे यस्य धुरो विगीयन्ते (ष. विं. ब्रा. २.२.३) इत्यादिना धूर्गानं विहितम् । काः पुनर्धुरो नाम । अत आह—

**गीतिविकारा गायत्रस्य धुरः ॥१३॥**

गायत्रस्य गीतेरेव केचन विकारा धुर इत्युच्यन्ते ॥१३॥

तासां प्रवृत्तिस्थानं दर्शयति—

**स्तोत्रीयानुरूपयोर्ज्योतिष्टोमस्यैवाज्येषु नान्यत्र ॥१४॥**

---

7. T. निवेशयन्ते My[2] निविशन्ते for विनिविशन्ते

8. My[1] My[4] C. विनिविशन्ते T. निवेशन्ते for निविशन्ते; C. after धुरां adds : च

13. My[1] TC. My[4] फलार्थिनां for फलार्थिना

18. M My[1] C. °विकारो for विकाराः

19. T. केवल° for केचन

सर्वक्रतुप्रकृतिभूतस्याग्निष्टोमस्य बहिष्पवमाने प्रथमद्वितीययोस्तृचयोराज्यस्तोत्रेषु च धुरं कुर्यात् । नान्यत्र विकृतिषु नापि स्तोत्रान्तरेष्वित्यर्थः ॥१४॥

तानेव विकारान् गानेन दर्शयति—

**रेतस्यायास्त्रिरुद्गृह्णातीति ब्राह्मणं भवति । पाऽ३बाऽ३माऽ३ नायेन्दावा३ ॥१५॥**

रेतस्या नाम प्रथमा धूरुच्यते । तदन्वयात्तृगपि तथैवोच्यते ॥१५॥

**गायत्र्युत्तरा ॥१६॥**

उत्तरा द्वितीया धूर्गायत्रीति विद्यात् ॥१६॥

**तस्या द्वे अक्षरे सशयनी व्यतिषजतीति ब्राह्मणं भवति ॥१७॥**

सह शयाते इति सशयनी इति ॥१७॥

**मध्यमस्य च पदस्योत्तममुत्तमस्य च प्रथमम् ॥१८॥**

इति ॥१८॥

व्यतिषङ्गमेव गानेन दर्शयति—

**आथर्वणो आशिश्रादेऽ२युर्वन्देवायदा३३३इति ॥१९॥**

**त्रिष्टुबुत्तरा ॥२०॥**

तृतीया धूस्त्रिष्टुबिति ज्ञेया ॥२०॥

**तां बलवद्दिवोरसेव गायतीति ब्राह्मणं भवति । शाऽ३म् । जाऽ३ ।नाऽ३ । यशमार्वता३ । शं राजानोऽ३षा । धाऽ३३॥२१॥**

**तस्या द्वे उत्तमार्द्धेऽक्षरे द्योतयतीति ब्राह्मणं भवति ॥२२॥**

तदेव ब्राह्मणं मतभेदेन व्याचष्टे—

**ये ऊर्ध्वं हिंकारात्ते निर्ब्रूयादिति गौतमः ॥२३॥**

**षा धा इति धानंजय्यः ॥२४॥**

इति । हिंकारादूर्ध्वमक्षरद्वयं निरुक्तं गायेदित्येकं मतम् । हिंकारात् पूर्वमक्षरद्वयं निरुक्तं गायेदिति मतान्तरम् ॥२४॥

---

2. My[2] धुरः for धुरं

3. My[1] TC. My[4] गाने for गानेन

5. M. after न्दावा३ adds : अभिदेवां इया

22. My[4] षधा M. षड्धा for षा धा

जगत्युत्तरा ॥२५॥

तस्याश्चत्वारि चत्वार्यक्षराणि निक्रीडन्निव गायत्र्या द्वाभ्यां द्वाभ्योऽक्षरेभ्य इति ब्राह्मणं भवति ॥२६॥

पारिष्टोभां२तयाकृपा२सोमाः शुक्राः२गवा२२२ ॥२७॥

तस्याश्चत्वार्युत्तमार्द्धेऽक्षराणि द्योतयतीति ब्राह्मणं भवति ॥२८॥

तदेव ब्राह्मणं पूर्ववन्मतभेदेन व्याचष्टे--

द्वे पुरस्ताद्धिकारात्तथोपरिष्टादिति गौतमः ॥२९॥

स्तोमाश्शुक्रा इति धानंजय्यः ॥३०॥

इति । सूत्रद्वयं स्पष्टम् ॥२९-३०॥

इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले तृतीयः खण्डः ॥३॥

# चतुर्थः खण्डः

**अनुष्टुबुत्तरा ॥१॥**

पञ्चमो धूरनष्टुबिति विज्ञेया ॥१॥

**तान्निनर्द्दन्निव गायतीति ब्राह्मणं भवति । आवाजं वाज्यक्रमी-ऽ२२२त् । सीदन्तोवाऽ२२२ । नुषाऽ२२२ः ॥२॥**

तां चतुर्धा व्यावृज्य गायेदिति वचनाच्चतुर्ऋक्खण्डा पञ्चमी कार्या । हिंकारादूर्ध्वमेकः खण्डः । त्रयः पूर्वे खण्डाः । त्रिष्वपि खण्डेषु अन्त्यमक्षरं निनर्देदिति ब्राह्मणार्थः । तथैव गानं दर्शितम् ॥२॥

**निरुक्तां चानिरुक्तां च गायेदिती (ष. वि. ब्रा. २.१.२५) ति ब्राह्मणं भवति । समस्तधुरां मन्यत इति गौतमः । त्रिष्टुब्जगत्योर्ह्यक्षराणि निराहेति ॥३॥**

**निरुक्तां चानिरुक्तां गायती** (प. वि. ब्रा. २.१.२५) ति ब्राह्मणं समस्तानां धुरां साधारणम् न केवलं पञ्चम्याः इति **गौतमः** । कुतः । **त्रिष्टुब्जगत्योः** पूर्वं निरुक्तविधानात् न विशेषतः पञ्चम्यां निधनं युक्तम् । तेन यां कांचिदपि धुरं **निरुक्तामनिरुक्तां च गायेदिति** ब्राह्मणार्थः । ततश्च रेतस्यादिष्वपि एकदेशो गेयः निरुक्तं (च) गेयमिति गौतमस्य पक्षः ॥३॥

मतान्तरमाह—

**एतस्या एवेति धानंजय्यशाण्डिल्यौ ॥४॥**

इति । **एतस्याः** पञ्चम्या **एव** धुर एतद् ब्राह्मणम् । तां प्रस्तुत्य निधानात् ।

---

3. My ज्ञेया for विज्ञेया

6. My[1] चतुर्धुष्पण्डा, T. चतुष्कखण्डा for चतुर्ऋक्खण्डा

7. My[4] अन्तिम° for अन्त्यम्

9. T. निरुक्तं चानिरुक्तं for निरुक्तां चानिरुक्तां

15. My[1] TC. My[4] om. गेयः; C. गायेत्;

16. T. गेयः for गेयम्

19. C. प्रत्यक्ष° for प्रस्तुत्य;

ननु विशेषतस्तत्र विधानमनुपपन्नम् । त्रिष्टुब्जगत्योरपि निरुक्तत्वादित्युक्तम् । सत्यम् । अयं तु वचनार्थः । पञ्चम्याश्चत्वारो गीतिखण्डाः । तान् क्रमेण निरुक्तमनिरुक्तमित्येवं व्यत्यासं गायेत् ॥४॥

तद् दर्शयति—

**तस्या द्वितीयं पादं निर्ब्रूयात् । तृतीये चाक्षरे पञ्चमषष्ठे ॥५॥**

इति । **द्वितीयं पादं** निरुक्तं गायेत् । तृतीये पादे प्रथमं चतुरक्षरमनिरुक्तं पुनः **पञ्चमषष्ठे अक्षरे**ऽनिरुक्ते हिंकारादूर्ध्वं पुनरपि अनिरुक्तमित्येवं व्यत्यासः ॥५॥

**पङ्क्तिरुत्तरा तस्या द्वे द्वे अक्षरे उदासं गायत्र्या षड्भ्योऽक्षरेभ्य (ष. वि. ब्रा. २.२.१३) इति ब्राह्मणं भवति । संजग्मानो दाइवा कावाइ इति धानंजय्यः ॥६॥**

**कावा इति शाण्डिल्यः ॥७॥**

सूत्रद्वयमपि स्पष्टम् ॥६-७॥

इदानीं धुरां निधनानि विधत्ते—

**सदिति रेतस्याया धुरो निधनं समिति गायत्र्या स्वरिति त्रिष्टुभ इडेति जगत्या वागित्यनुष्टुभः ॥८॥**

इति ॥८॥

तेषां काम्यैर्गायत्रनिधनैस्समानः स्वरनिर्णय इत्याह—

**तेषामुक्तो न्यायः काम्यैः सामान्तैर्निधनैः ॥९॥**

इति ॥९॥

---

1. My$^{2}$ after ननु adds : च
5. My$^{1}$ My$^{4}$ पदं for पादं;
7. T. om. अपि; My$^{1}$ C. my$^{1}$ निरुक्तम् for अनिरुक्तम;
   My$^{1}$ व्यत्यासा: My$^{2}$ व्यत्यासम् for व्यत्यास:
17. My$^{2}$ T. after तेषां add : निधनानां
18. My$^{1}$ C. My$^{4}$ om. निधनै:

तद्वदेवं सर्वत्र निधनानि स्युः । नेत्याह—

**न तूर्ध्वं बहिष्पवमानात्स्युः ॥१०॥**

इति । बहिष्पवमान एव तेषां निवेशो न पुनराज्यस्तोत्रेष्वित्यर्थः ॥१०॥

अथाज्येषु धूर्विधायकं ब्राह्मणम्—**यस्य वै धुरो विगीतास्तस्य संगीताः** (प. विं. ब्रा. २.३.११) इत्यादि । तस्यायमर्थः । **यस्य** धुरां विगानं कृतं **तस्य** ताः **संगीता** अपि कार्या इति । तत् स्वयमेव व्याचष्टे—**यस्य वै बहिष्पवमाने** (प. विं. ब्रा. २.३.१२) इत्यादि । तस्यायमर्थः । यस्य बहिःसदसो बहिष्पवमाने पृथक् पृथक् निधनैर्धुरो गीताः ताः सदसोऽन्तराज्येषु एकेनैव निधनेन प्राकृतेन समानं गायति । तस्य विगानं संगानं चोभयमपि कृतं भवति । उभयमप्यवश्यं कार्यमेव । कुतः । धुरां चक्षुःश्रोत्रादिरूपत्वेन संस्तावाच्चक्षुरादीनां च बहिर्मुखे पृथक् पृथगवस्थितानामन्तर्मुखेनास्यामेकस्यां संहत्य मूलतोऽवस्थानात् । तेनोभयमवश्यं कार्यम् । तत्राज्येषु चतस्र एव धुरः संगेयाः रेतस्यापङ्क्तिवर्जम् । कुत एतत् । **सुरभिरेव गन्धो गायत्र्या व्रतं दर्शनीयं त्रिष्टुभः** (प. विं. ब्रा. २.३.६) इत्यादौ पूर्वस्मिन् ब्राह्मणे चतसृणामेव विशेषसंनिवेशस्तासामेव **यस्य वा एता धुरो विगीयन्त** इति सर्वनाम्ना परामर्शात् । ताश्च होतुराज्ये संगायेत् । यथाज्यं संगायतीति प्रकारद्वयं विहितं तयोर्विकल्पः । कुतः । **ता वा एता देवलोकाय युज्यन्ते यत् पराच्यः । प्रतीच्यो मनुष्यलोकाये** (प. विं. ब्रा. २.२.१२) ति बहिष्पवमाने धुरां पराचीत्वमानुलोम्यमाज्येषु च प्रतीचीत्वं प्रातिलोम्यं चतसृणां दर्शयति । तत्र प्रातिलोम्ये शाखान्तराद् विशेषं दर्शयन् प्रयोगप्रकारमाह सूत्रकारः—

**जगतीगायत्र्यौ त्रिष्टुबनुष्टुभाविति पृथगाज्यप्रथमासु गायेत् ॥११॥**

इति । जगत्यादीनां चतस्रो धुरश्चतुर्ष्वाज्येषु क्रमेण तत्तत्प्रथमासु सकृत् सकृद्गायेत् ॥११॥

**तत्पुराणं यथाज्यगानम् ॥१२॥**

पुराणं चिरंतनं ब्राह्मणोक्तम् । शाखान्तरीयमित्यर्थः ॥१२॥

---

8. My[1] सदोऽन्तरा C. सदस्येतराः for सदसोऽन्तरा; My[1] T. om. निधनेन

**गायत्रीत्रिष्टुभोर्व्यतिक्रमं धानंजय्यः ॥१३॥**

**गायत्रीत्रिष्टुभो**र्धुरः स्थानव्यतिहारं कुर्यादिति **धानंजय्यः** । द्वितीयाज्य-प्रथमायां त्रिष्टुप् । तृतीयप्रथमायां गायत्रीति यावत् ॥१३॥

**गायत्रीं मैत्रावरुणस्याज्यप्रथमायां होतुरितरा आदितः ॥१४॥**

तासामेव चतसृणां धुरां मध्ये **गायत्रीं मैत्रावरुणस्याज्यप्रथमायां** सकृद् ब्रूयात् । इतरास्तिस्रो होतुराज्यप्रथमायां स्तोत्रोपक्रमे सकृद् गायेत् ॥१४॥

**तत् पुराणं होतुराज्यगानम् ॥१५॥**

व्याख्यातमेतत् ॥१५॥

तत्रैव मतान्तरमाह—

**त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्या एव द्वितीयायामृच्या-नुष्टुभं गायेदिति धानंजय्यो गायेदिति धानंजय्यः ॥१६॥**

इति । होतुराज्यप्रथमायां जगतीत्रिष्टुभौ गीत्वा त्रिष्टुभ उत्तरां गायत्रीं गीत्वा तस्या एवोत्तरामनुष्टुभं द्वितीयायामृचि गायेत् ॥१६॥

**इति द्राह्यायणश्रौतसूत्रे एकविंशे पटले चतुर्थः खण्डः ॥४॥**

इति छन्दोगसूत्रस्य तृतीये दशके सुधीः ।
प्रथमं पटलं व्याख्याद् धन्वी श्रुत्यनुसारतः ॥

**इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे एकविंशः पटलः समाप्तः ॥२१॥**

**इति द्राह्यायणश्रौतसूत्रे सप्तमः प्रपाठकः समाप्तः ॥७॥**

---

2. T. om. द्वितीय° · · · यावत् (L. 3)

6. My[2] °प्रथमायाः for °प्रथमायां

11. My[1] अनुष्टुभा for आनुष्टुभं

अष्टमः प्रपाठकः

## द्वाविंशः पटलः

## प्रथमः खण्डः

इदानीमेकाहाहीनसत्राणि ब्राह्मणोक्तानि क्रमेणानुसंधास्यंस्तेषां कालं विधत्ते—

**उदगयनपूर्वपक्षपुण्याहसंनिपाते यज्ञकालोऽनादेशे ॥१॥**

इति । स्पष्टम् ॥१॥

**संख्यामात्रे च दक्षिणा गावः ॥२॥**

यत्र च ब्राह्मणे दक्षिणाविधौ संख्यामात्रमेव श्रूयते न संख्याविशेषः यथा **सन्नेषु नाराशंसेष्वेकादश दक्षिणाः** (तां. ब्रा. १७.११.२) इत्यादौ । तत्र **गावो दक्षिणाः** प्रत्येतव्याः ॥२॥

**हिरण्यमिति जातरूपं विद्यात् ॥३॥**

यत्र हिरण्यं ददातीति श्रुतं तत्र यद्यपि रजतस्यापि हिरण्यशब्दवाच्यत्वं तथापि जातरूपं सुवर्णमेव हिरण्यशब्देन विवक्षितमिति मन्तव्यम् । कुतः । तैत्तिरीयके रजतस्य दाननिषेधात् । यथोक्तम्—**तस्माद् रजतं हिरण्यमदक्षिण्यम्** (तै. सं. १.५.१.२) इति ॥३॥

**प्रथमायां पूर्वपक्षस्य दीक्षेतैकाहेभ्यः ॥४॥**

उदगयनपूर्वपक्षे (द्रा. श्रौ. २२.१.१) ति सूत्रेणैव सिद्धे पुनर्वचनमपुण्याहार्थम् । अपुण्याहेऽपि प्रथमैव दीक्षायामादरणीयेति ॥४॥

**दृष्ट्वा वा नक्षत्रयोगम् ॥५॥**

ज्योतिःशास्त्रसिद्धं शुभं **नक्षत्रयोगं दृष्ट्वा** तस्मिन् **वा** दीक्षितव्यमेकाहेभ्यः । ननु सिद्धमेवैतत् । सत्यम् । विकल्पार्थं वचनम् । अन्यथा प्रथमायामेव दीक्षा स्यात् ॥५॥

---

4. C. अथ for इदानीं; C. om. ब्राह्मणो$^{0}$ ··· ब्राह्मणं व्या$^{0}$ (p.466. L. 15 द्रा. श्रौ. 22.2.10)

15. My[1] TC. My[4] आदान$^{0}$ for दान$^{0}$; T. om. रजतं

21. My[2] $^{0}$शास्त्रे for शास्त्र$^{0}$

**तेषामेका दीक्षानादेशे तिस्रश्चतस्रोऽपरिमिता वा ।।६।।**

अत्रापरिमितव्यतिरिक्तेषु दीक्षाकल्पेषु यदि कदाचित् प्रधानकालस्य पुण्याहकालो न सिद्ध्येत् तथापि वचनबलान्न विरुध्यते ।।६।।

**तिस्र उपसदः ।।७।।**

**अनादेश** इत्यनुवर्तते ।।७।।

**ज्योतिष्टोमस्योक्थानामुत्तरे सौभरनार्मेधेऽतिरात्र उक्थ्यान्त इतराणीति गौतमो वृत्तिग्रहणात् ।।८।।**

प्रकृतौ ज्योतिष्टोमे त्रीण्युक्थस्तोत्राणि सन्ति । तेषां मध्यमे सौभरं हारिवर्णमिति सामद्वयं विहितम् । उत्तमे तु स्तो त्रे नार्मेधोद्वंशीये आष्टादंष्ट्रे इति सामचतुष्टयं विहितम् । तेषां च तत्र विकल्पेन प्रवृत्तिरित्यपवादः । इदं तु संदिह्यते किमविशेषेण (उत) किं विशेषेण विकल्पः । किं वा व्यवस्थितो विकल्पः इति । तत्र गौतमस्तावद् व्यवस्थां मन्यते । कथं ज्योतिष्टोमस्य उक्थ्यस्तोत्राणामुत्तरस्तोत्रद्वयसंबन्धे सौभरनार्मेधे सामनी अतिरात्रप्रयोगे एव स्याताम् । न पुनरुक्थ्यप्रयोगे । तथेतराण्यपि हारिवर्णादीनि उक्थ्य एव स्युर्न पुनरतिरात्रे इति । कुतः **जामि वा एतद्यज्ञे क्रियत इत्याहुर्यद्रथन्तरं पृष्ठं रथन्तरं संधिरि** (तां. ब्रा. ८.८.१०) त्यारभ्य **सौभरं कुर्यादजामितायै** (तां. ब्रा. ८.८.१२) इत्यन्तेन ब्राह्मणेन सौभरस्यातिरात्रावगमात् । तथा नार्मेधस्य**विच्छन्दस ऋचो भवन्त्यहोरात्रयोः रूपम्** (तां. ब्रा. ८.८.२४) इत्यतिरात्रसंबन्धोऽवगतः । तथा हारिवर्णादीनामुक्थ्यसंस्थ एव प्रयोग इति कल्पकारप्रवृत्या जानीमः । तद्यथा—**अथात उक्थ्यान्तस्य**

3. My[1] TC. My[4] सिद्ध्यति for विरुध्यते.

8. उक्थ्य⁰ for उक्थ⁰

9. My[1] उत्तरे for उत्तमे

11. My[1-2] C. अविशेषण for विशेषेण; T. om. किं विशेषेण

13. My[1] My[4] om. एव

15. My[1] CT. यज्ञस्य for यज्ञे

17. My[1] CT. ⁰विच्छन्दसमृचो for ⁰विच्छन्दस ऋचो⁰

18. My[1-2] TC. ⁰रात्रे for ⁰रात्र⁰

19. T. वृत्या for प्रवृत्या

**भवत आष्टादंष्ट्राच्छावाकसाम्नः** (क्षु. क. १.५.१) इत्यारभ्य हारिवर्णादीन्युक्थ्यसंस्थान्युक्थ्यसंस्थ एव कल्पयंस्तत्रैव तानीति दर्शयति। तेन कल्पकारस्य ऋग्ब्राह्मणपर्यालोचनव्यवस्थितो विकल्पः ॥८॥

मतान्तरमाह

**अनियोगमितरेषां धानंजय्यो विशेषाम्नानात् ॥९॥**

इति। **इतरेषां** सौभरनार्मेधातिरिक्तानामनियमेन विकल्पः। सौभरनार्मेधयोस्तु गौतमोक्तव्यवस्थैव। तयोर्विशेषाम्नानात्। इतरयोस्तु तदभावात् ॥९॥

मतान्तरमाह—

**सर्वेषां यथाकामीति शाण्डिल्यस्तुल्यचोदनात् ॥१०॥**

इति। ब्राह्मणे **सर्वेषामपि** तुल्यतयैव विधानान्न नियमः। **जामि वा एतद्यज्ञे क्रियते** (तां. ब्रा. ८.८.१०) इति तु सौभरस्यातिरात्रे गुणातिशयप्रदर्शनार्थमिति मन्यते ॥१०॥

**आष्टादंष्ट्रयोर्विकल्पः स्यात् ॥११॥**

उक्थ्योत्तममधिकृत्याष्टादंष्ट्रे **भवत** (तां. ब्रा. ११.११.११) इति ब्राह्मणम्। तयोरायास्ये भवत इति वत्समुच्चयमाशङ्क्य निराकरोति **विकल्प** एवेति। आयास्ययोस्तु पवमानगतत्वाद्युक्तः समुच्चयः। अन्यथा स्तोमानिष्पत्तेः। आष्टादंष्ट्रयोस्तु पुनरावृत्तिः स्तोत्रगतत्वादेकैकेन स्तोमनिष्पत्तेर्विकल्पः ॥११॥

---

2. My[2] om. उक्थ्यसंस्थानि

3. My[2] अचारात् T. आचारात् My[1] आचारद् for ऋग्;
My[2] T. लोचनया for °लोचन°

6. My[2] °व्यति° for °अति°

7. My[1] om. °उक्त°; My[2-4] गौतमवद् for गौतम°; My[4] om. व्यवस्थैव

10. My[1] TC. My[4]. om. न T. यज्ञस्य for यज्ञे

13. My[4] after दंष्ट्रयोः ins तु

14. My[4] उक्थ्याद्यम् for उक्थ्योत्तमम्

15. My[1-4] C. om. °वत्°

17. My[2] एकेन for एकैकेन

**काम्यानुकथ्यच्छन्दोयोगानतिरात्रस्यमन्यन्ते सौभरनार्मेधप्रमाणाः ॥१२॥**

गायत्रीषु **ब्रह्मवर्चसकामायोक्थ्यानि प्रणयेयुः** (तां. ब्रा. ८.१०.१) इत्यादि-ब्राह्मणोक्ता उक्थ्येषु काम्याश्छन्दोयोगा अतिरात्र एव स्युः । न पुनरुक्थ्यसंस्थ-प्रयोग इति **मन्यन्ते** । के पुनस्त इत्याह—**सौभरनार्मेधप्रमाणा** इति । सौभरं नार्मेधं च येषां प्रमाणं ते **सौभरनार्मेधप्रमाणा** इति बहुव्रीहिः । किमुक्तं भवति । काम्यानुकथ्यच्छन्दोयोगान् व्याचक्षाणेन कल्पकारेण सौभरं नार्मेधं च सर्वत्र कल्पितम् । तद्यथा—**तं ते मदं गृणीमसीति सौभरम्** । **इन्द्रं विश्वा अवीवृधन्निति नार्मेधम्** (क्षु. क. १.६.१) इति । तच्च सामद्वयं गौतममतेनातिरात्रस्यैवेति निश्चितम् । तद्बलात् काम्याश्छन्दोयोगा अपि तत्रैवातिरात्रे निविशन्ते ॥१२॥

तदेतन्निराकरोति—

**वृत्तिस्त्वनुष्टुभां रात्र्युपाये न विद्यते ॥१३॥**

इति । काम्येषु छन्दोयोगेषु सर्वत्रानुष्टुभि अच्छावाकसामेति ब्राह्मणम् । न क्वचिदपि **रात्र्युपाये** रात्रिप्रयोगे उक्थ्योत्तमेऽनुष्टुभां प्रवृत्तिर्दृष्टा । तस्मादुक्थ्य-संस्थे प्रयोग एव काम्याश्छन्दोयोगा इति निश्चयः ॥१३॥

ननु च **सौभरनार्मेधप्रमाणा** (द्रा. श्रौ. २२.१.१२) इत्युक्तम् । तत्राह—

**दृश्यते चान्यत्र रात्र्युपायान्नार्मेधम् यथाभिप्लवस्य पञ्चाहे ॥१४॥**

इति । अतिरात्रप्रयोगादन्यत्रापि नार्मेधं दृश्यते । यथा सप्तरात्रेऽभिप्लवपञ्चाहे । तत्र पञ्चमेऽहनि कल्पकारः—**पञ्चमस्य द्वे सवने षष्ठस्य तृतीयसवनं यजिष्ठं त्वा ववृमह इत्यैध्मवाहं त्रैककुभं नार्मेधमित्युक्थानि** (आ. क. ६.११.२) इति । तेन नार्मेधमतिरात्रेणानैकान्तिकम् ॥१४॥

---

4. My[1·2] °रात्रप्रयोगे for °रात्रे°

9. My[1] C. My[4] तत्र for तच्च

11. My[2] एवं for एतत्

14. My[1] C. त्रिरात्रप्र° T. अतिरात्रप्र° for रात्रिप्र°;

16. My[2] तत् for तत्र

**तस्यानुष्टुभः स्तोत्रीयः स्यादुक्थ्यान्तेषु वैच्छन्दसोऽतिरात्रेषु । वृत्तिविभागात् ॥१५॥**

**तस्य नार्मेधस्य इन्द्रं विश्वा अवीवृधन्** (सा. ८२७) इत्यादिरानुष्टुभ एव **स्तोत्रीयः स्यादुक्थ्यसंस्थेषु । अधाहीन्द्र गिर्वणः** (सा. ७१०) इति **वैच्छन्दसः स्तोत्रीयोऽतिरात्रेषु स्यात्** । विभागेन वृत्तेः कल्पेन दर्शनात् ॥१५॥

**वैच्छन्दसमेवैके ब्राह्मणोक्तत्वात् ॥१६॥**

**विच्छन्दस ऋचो भवन्ति । ककुप्प्रथमाथोष्णिगथ पुर उष्णिग्** (तां. ब्रा. ८.८.२४-२६) इति ब्राह्मणे विहितत्वाद् वैच्छन्दसमेव स्तोत्रीयं नार्मेधस्योभयोरप्युक्थ्यातिरात्रसंस्थयोः ॥१६॥

**स्वतन्त्रस्य ज्योतिष्टोमस्य संस्थाविकल्पा आग्निष्टोम्यमुक्थ्यतातिरात्रमिति ॥१७॥**

**स्वतन्त्रस्य** नित्यतया प्रयोज्यस्य ज्योतिष्टोमस्य संस्थात्रयमाग्निष्टोम्यादिकं ब्राह्मणोक्तं विकल्प्यते । एतदुक्तं भवति । योऽयमृणसंस्तुतः पुरुषस्यावश्यको ज्योतिष्टोमः सोऽग्निष्टोमः उक्थ्योऽतिरात्रो वा स्यादिति विकल्पः ॥१७॥

**तस्यानतिरात्रस्य द्वादशशतं दक्षिणाः ॥१८॥**

**तस्य** ज्योतिष्टोमस्यातिरात्रसंस्थावर्जितस्य द्वादशाधिकं शतं गावो **दक्षिणाः** । अतिरात्रस्तु सहस्रदक्षिण इति अहीनप्रकरणे वक्ष्यति ॥१८॥

**गो आयुषोश्च ॥१९॥**

**गो आयुषो**रप्येकाहयोरनतिरात्रयोः पूर्ववदेव दक्षिणा ॥१९॥

**विश्वजिदभिजिद्भ्यां यमाभ्यां यजमानः पूर्वापराभ्यां यजेतेति धानंजय्यः ॥२०॥**

विश्वजिदभिजितोर्दर्शपूर्णमासवत् सहितयोः फलसाधनत्वं ब्राह्मणेनोक्तम् । **यमाभ्यां यजेते** (तां. ब्रा. १६.४.१०) ति । तयोः कथमनुष्ठानमिति चिन्तायां दर्शपूर्णमासवदेव क्रमेण पूर्वापरयोरनुष्ठानमिति **धानंजय्यः** ॥२०॥

---

5. My[2] प्रवृत्तेः for वृत्तेः; My[1] TC. विवृत्तैकत्वेन for वृत्तेः कल्पेन

12. My[2] नियततया for नित्यतया

13. T. °संस्कृतः for संस्तुतः

19. My[2] अतिरात्रयोः for अनतिरात्रयोः

**युगपदिति शाण्डिल्यः ॥२१॥**

एकोपक्रमोपसंहारावित्यर्थः ॥२१॥

कथमित्याह—

**अभिजितो दक्षिणं देवयजनं स्याद्विश्वजित उत्तरम् ॥२२॥**

इति । स्पष्टम् ॥२२॥

**तत्प्रति पत्नीशाला स्यात् ॥२३॥**

तदुत्तरं विश्वजितो देवयजनं प्रति पत्नीशालां कुर्यात् । न तद्दक्षिणमित्यर्थः ॥२३॥

**नानर्त्विजः ॥२४॥**

उभयत्र पृथक् पृथक् षोडशर्त्विजो भवेयुः ॥२४॥

**यच्चान्तर्वेदि कर्म ॥२५॥**

अन्तर्वेदि यत्कर्म क्रियते तदप्युभयत्र पृथक् पृथगेव स्यात् ॥२५॥

**अथ यद् बहिर्वेद्येकं तत् ॥२६॥**

बहिर्वेदि यत् कर्म वसतीवरी परिग्रहणादि तदुभयोरपि तन्त्रम् ॥२६॥

**अभिजितः पूर्वं पूर्वं कर्म संतिष्ठेत विश्वजित उत्तरम् ॥२७॥**

ऋत्विग्भेदाद् युगपदनुष्ठानेऽपि सहारब्धयोरेतयोरभिजितः **पूर्वं पूर्वं कर्म** दीक्षणीयादि संस्थाप्य पश्चाद् **विश्वजितः** कर्म संस्थापयेत् ॥२७॥

**तयोः पृथक् सहस्रे दक्षिणाः ॥२८॥**

स्पष्टम् ॥२८॥

**कामं तु यमाभ्यां यजेत ॥२९॥**

---

2. My[1] संहरी T. °संहारः for °संहारौ

7. My[1] तदक्षिणम् My[2] My[4] न दक्षिणम् T. न दक्षिणा दक्षिणम् for न तद्दक्षिणम्

18. My[2] T. सहस्र° for सहस्रे

20. My[1] My[4] C. चे for तु; My[2] T. अयमाभ्यां for यमाभ्यां

नावश्यं सहितयोरेव फलसाधनत्वम् । कामं संहिताभ्यामपि यष्टव्यम् । उभयथापि ब्राह्मणे विधानात् ॥२९॥

तत्पक्षे दक्षिणामाह—

**सहस्रमभिजिति दक्षिणाः ॥३०॥**

इति । स्पष्टम् ॥३०॥

**शताश्वं सहस्रं सर्ववेदसं वा विश्वजिति ॥३१॥**

शताश्वाधिकं गोसहस्रं सर्वस्वं वा विश्वजिति देयम् ॥३१॥

इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले प्रथमः खण्डः ॥१॥

2. My[1] My[4] TC. उभयत्र for उभयथा

## द्वितीयः खण्डः

अथ सर्वस्वदानपक्षे यजमानस्य धर्मविशेषानाह—

**तस्यावभृथादुदेत्य रोहिणीं वत्सच्छविं परिधाय धर्मान् कुर्यात् ॥१॥**

तस्य सर्वस्वदक्षिणस्य विश्वजितोऽवभृथादुदेत्य रोहिणीं गोवत्सत्वचं परिधाय धर्मान् कुर्याद्यजमानः ॥१॥

के पुनस्ते धर्माः । अत आह—

**त उक्ता ब्राह्मणेन ॥२॥**

इति । **उष्णीषं बिभर्त्ति न मृन्मयेन पिबती** (तां. ब्रा. १६.६.१३-१४) त्यादि ब्राह्मणेनैव विहिताः ॥२॥

अत्र ब्राह्मणम्—अरण्ये तिस्रो वसति ॥ उदुम्बरे वसती (तां. ब्रा. १६.६.३४) ति तद्व्याचष्टे—

**अरण्ये तिस्रो वसतीत्युदुम्बरे वसेदिति ॥३॥**

अरण्ये उदुम्बरमूले तिस्रो रात्रीर्वसेदित्यर्थः । अरण्यवासात् पृथगेव उदुम्बरवासोऽपि कर्तव्य इति न शङ्कनीयमिति सूत्राभिप्रायः ॥३॥

**उदुम्बराभावेऽप्युदुम्बरशाखां निखनेयुः ॥४॥**

यद्यरण्य उदुम्बरो न स्यात् तथापि ग्रामादुदुम्बरशाखामाहृत्य खात्वा तन्मूले वसेत् ॥४॥

अथ **खनित्रेण जीवती** (तां. ब्रा. १६.६.५) ति ब्राह्मणमनुभाष्यव्याचष्टे—

**खनित्रेण जीवतीति यत्तत्र खान्यं स्यात्तेन जीवेत् ॥५॥**

यदरण्ये कन्दमूलादिकं खान्यं तेन जीवेदित्यर्थः ॥५॥

**खान्याभावे धान्यपात्राणि निखाय तैरुत्खानं जीवेत् ॥६॥**

खान्यस्य मूलादेरभावे धान्यपूर्णानि पात्राणि निखाय तानि पुनरुत्खायोत्खाय तैर्जीवेत् । एवमावश्यकखाननेन जीवेदित्यर्थः ॥६॥

---

5. My[1] सर्व० for सर्वस्व०

15. My[1] CT. My[4] before कर्तव्यः add: न

24. My[1] अस्य for आवश्यक० My[1] My[4] C. खनने for खाननेन

अपरं ब्राह्मणं व्याचष्टे--

**उभयतःक्ष्णुदभ्रिर्भवती (तां. ब्रा. १६.६.६) ति वैणवी कालमाषीति शाण्डिल्यो याकाचनेति धानंजय्यः ॥७॥**

इति । अभ्रिः खननसाधनं तदुभयतस्तीक्ष्णमुखं वैणवमित्येकं मतम् । यत्किंचन वैणवमन्यद्वेत्यपरम् ॥७॥

ब्राह्मणान्तरमुपादाय व्याचष्टे--

**निषादेषु तिस्रो वसती (तां. ब्रा. १६.६.७) ति पार्श्वतो निषादग्रामस्य वसेत् ॥८॥**

इति । गतम् ॥८॥

निषादसमीपे वसतः किं जीवनमत आह--

**तेषां काममारण्यं भुञ्जीत नीवारं श्यामाकं मार्गं वा मांसम् ॥९॥**

तेषां निषादानामन्नं नीवारं श्यामाकं वा प्रतिगृह्य कामं भुञ्जीत । यद्वा मृगसंबन्धि मांसम् ॥९॥

अपरं ब्राह्मणं व्याचष्टे--

**जने तिस्रो वसती (तां. ब्रा. १६.६.८) ति राजन्यबन्धुर्जनो ब्राह्मणः समानजन इति शाण्डिल्यः ॥१०॥**

इति । **समानजने तिस्रो वसती** (तां. ब्रा. १६.६.९) त्येतदपि ब्राह्मणं प्रतीकेनोपात्तमिति मन्तव्यम् । राजन्यबन्धोर्ब्राह्मणस्य च गृहे तयोरन्नं प्रतिगृह्य तिस्रस्तिस्रो रात्रीर्वसेदिति ब्राह्मणार्थः ॥१०॥

**विवाह्यो जनः सगोत्रः समानजनः इति धानंजय्यः ॥११॥**

विवाहयोग्यो भिन्नगोत्रो विवाह्यो जनः ॥११॥

**प्रतिवेश्यो जनो जनपदो यत्र वसेत् स समानजन इति शाण्डिल्यायनः ॥१२॥**

---

1. C. om. ब्राह्मणो° · · · (p. 316 L. 4) ब्राह्मणं व्या°

23. My[2] T. °वेशो for °वेश्यो My[2] जनपदे for जनपदो

24. My[2] शाण्डिल्यः for शाण्डिल्यायनः

**प्रतिवेश्यो** गृहस्थो जनः इत्युच्यते । जनपदो मनुष्यसंघो यत्र वसति स समानजनः । क्वचिज्जनपद इति सप्तम्यन्तः पाठः । तदायमर्थः । यत्र जनपदे स्वयं पश्चात् वत्स्याम् मन्यते स समानजनः ॥१२॥

**एते धर्माः सर्ववेदस दक्षिणानां सर्वेषाम् ॥१३॥**

**एते** वनवासादयो **धर्माः** सर्वस्वदक्षिणानां **सर्वेषामेव** क्रतूनां धर्माः । न केवलं विश्वजित एव । कुतः । **पशुभिर्वा एष व्यृध्यत इत्याहुः यः सर्वस्वं ददाती** (तां. ब्रा. १६.८.७) ति । सर्वस्वदानस्य निमित्तत्वावगमात् ॥१३॥

अथ विश्वजिदनन्तरं सर्वजिन्नाम महाव्रतवानेकाहः । तत्प्रसङ्गात् सर्वेषु महाव्रतवत्सु कर्तव्यमुपदिशति—

**व्रतवत्सु सर्वेष्वमावास्यायां दीक्षित्वोखामाबध्नीत सांवत्सरिकेभ्योऽन्यत्रेति गौतमः ॥१४॥**

इति । संवत्सरसत्रेभ्यो गवामयनादिभ्योऽन्येषु महाव्रतवत्सु क्रतुषु अमावास्यायां दीक्षित्वाग्निचयनार्थमुखां बध्नीयाद् यजमानः । **सांवत्सरिकेभ्योऽन्यत्रेति** वचनं तेषां गवामयनप्रकृतित्वात् । गवामयने चैकाष्टकायां दीक्षेरन्नित्यादि विशेषविधानात् ॥१४॥

कियता कालेन क्रतोः समाप्तिरिति चेत् । अत आह—

**सह सुत्याभिः षडहानि संवत्सरादधिकानि कृत्वोत्तिष्ठेयुः ॥१५॥**

इति । व्रतवत्सु क्रतुषु यथाशास्त्रनियतसंख्यैः सुत्योपसददिवसैश्च सह षडहाधिकं संवत्सरं संपाद्योत्थानम् । कुतः । व्रतवन्तं पञ्चरात्रमहीनमधिकृत्य **अकृतं वा एते कुर्वन्ति ये पुरा संवत्सराद्व्रतमुपयन्ती** (तां. ब्रा. २१.१५.४) ति ब्राह्मणे-

---

3. My$^2$ वत्स्यं सन्मन्यते My$^1$ वत्स्याम मन्यते T. वत्स मन्यते C. जनस्य मुच्यते for वत्स्यां मन्यते

8. C. तत्र for तत्;

9. C. कर्तव्यतामति° for कर्तव्यमुप°

12. My$^2$ before संवत्सर° adds : अन्यत्र

16. T. अत्र for अतः

19. C. om. अहीनम्

20. C. om. संवत्सरात्

नान्यथाकरणे दोषकथनात् । तथा गवामयनेऽपि व्रतमधिकृत्य ब्राह्मणम्–**तद्बाहुर्यन्मध्यत उपयन्त्यर्द्धमन्नाद्यस्याप्नुवन्त्यर्द्धं संवद् कुर्वन्तीत्युपरिष्टादेव संवत्सरस्योपेत्यं संवत्सरे वा अन्नं सर्वं पच्यते** (तां. ब्रा. ४.१०.४) इति । तेन दीक्षाभिर्वा सुत्याभिर्वा संवत्सरमेकं तप्ततपसामेव पश्चान्महाव्रतानुष्ठानयोग्यत्वात् नान्यथेति गम्यते । भवत्वेवम् । संवत्सरादूर्ध्वं महाव्रतानुष्ठानं किमर्थम् । उच्यते । षड्भिरहोभिः षडृतव आप्यन्ते । तैश्च संवत्सर इति । अनेनापि प्रकारेण संवत्सराप्तिः सिद्धा भवति । तत्रापि ब्राह्मणम्–**एतद् वै व्रतमाप्तं यत् पञ्चरात्रे पञ्च ह्यृतव** (तां. ब्रा. २१.१५.५) इति ॥१५॥

**असमाप्ते वा संवत्सरे रात्रिसत्रेषु राजानं क्रीणीयुः ॥१६॥**

अथवा महाव्रतवत्सु रात्रिसत्रेषु दीक्षाभिरेव संवत्सरे समाप्ते राजक्रयं कु(र्या)त् ॥१६॥

**यथा जाति तु प्रथमे पञ्चदशरात्रे दीक्षेरन् ॥१७॥**

**प्रथमे पञ्चदशरात्रे** महाव्रतयुक्ते **यथाजाति** सत्रसामान्योक्तप्रकारमनतिक्रम्यैव दीक्षा । न संवत्सरयापनं तत्र कर्तव्यम् । कुतः । पञ्चदशरात्रमधिकृत्य **प्रतिनोदात्तुभयमितरमनुपक्षो दीक्षेरन्** (तां. ब्रा. २३.६.६) इति पूर्वपक्षे दीक्षाविधानादपरपक्षे कृत्स्नसुत्याविधानाच्च तदानीं न पूर्वोक्तसंवत्सरकल्पः संभवतीति

---

2. My[2] T. My[2] च्छंवद् for संवद्

4. C. om. नान्यथेति गम्यते । भवत्वेवम् (L. 5)

5. My[1] T. मता My[4] व्रता⁰ for महाव्रता⁰;
My[2] before उच्यते adds : तत्;

6. My[1] ऊतयः for ऋतवः; T. आप्यायन्ते for आप्यन्ते

13. T. ⁰प्रयुक्ते for ⁰युक्ते; My[2] om. सत्र⁰

14. T. ⁰मापनं for ⁰यापनं

15. My[1] T. My[2] My[4] पक्षं for पक्षो
My[4] My[1] TC. om. दीक्षा⁰

16. T. ⁰संकल्पः for ⁰कल्पः

तत्रैव वक्ष्यामः । तथा च सूत्रकारो वक्ष्यति **प्रथमे पञ्चदशरात्रे एकान्नविंशतिदीक्षा** (द्रा. श्रौ. २८.१.८) इति । जातिकल्पं च सत्राण्यधिकृत्य वक्ष्यति **दीक्षाक्रयप्रसवोत्थानानि सर्वे सर्वेष्विव** (द्रा. श्रौ. २८.१.१) त्यारभ्य **जातिकल्पोवे** (द्रा. श्रौ. २८.१.११) त्यन्तेन ॥१७॥

**सर्वत्र वा यथाजात्यन्यत्र चेदुपेतमिति शाण्डिल्यः ॥१८॥**

अथवा सर्वेष्वेव व्रतवत्सु यथाजात्येव दीक्षाकल्पः । यदि पूर्वमन्यत्रकृतो कदाचित् महाव्रतं संवत्सरयापनेनानुष्ठितं स्यात् ततः पुनः संवत्सरयापनं नादरणीयमित्यर्थः ॥१८॥

**अनुपेतं चेदपीति धानंजय्यः ॥१९॥**

यद्यपि न कदाचित् पूर्वं संवत्सरयापनेन महाव्रतमनुष्ठितं स्यात् तथापि जातिकल्प एवेत्यर्थः ॥१९॥

**तिस्र उपसदो व्रतस्यैकाहिकस्य गौतमीयेन षड्वा द्वादश वा ॥२०॥**

**गौतमीयेनेति** गौतममतेनेत्यर्थः ॥२०॥

**तत्र ब्रह्मणेऽश्वरथं शतं च दद्यात् ॥२१॥**

तत्रैकाहभूते महाव्रते गवां **शतमश्वरथं च ब्रह्मणे** देयम् ॥२१॥

**तथाग्निं चिन्वतेऽध्वर्यवे ॥२२॥**

**चिन्वत** इति वचनात्तदभावे क्रतुदक्षिणामात्रं वक्ष्यमाणम् ॥२२॥

**पृष्ठेन च स्तुवानायोद्गात्रे ॥२३॥**

महाव्रते **पृष्ठेन स्तुवत उद्गात्रे च तथैव** देयम् ॥२३॥

---

1. My$^3$ after च adds तत्र, My$^2$ तत्
   C. एकोन° for एकान्न°
2. T. °विकल्पं for °कल्पं
6. My$^1$ My$^4$ अन्य° for अन्यत्र
10. My$^4$ My$^1$ T. तदा for तथा
15. My$^1$ T. अत्र for तत्र

**तच्चानुशंसते होत्रे ॥२४॥**

**तच्च** महाव्रतं स्तोत्रं बृहतीसहस्रेणानुशंसत इत्यर्थः । अग्निचयनं महाव्रतं बृहतीसहस्रं च तुल्यवीर्याणीति दर्शयितुं तत्तत् कर्म कुर्वत इत्युक्तम् ॥२४॥

**सर्वेभ्यश्च सहस्रम् ॥२५॥**

सर्वेभ्यः षोडशर्त्विग्भ्यः ॥२५॥

**सर्ववेदसदक्षिणं वा ॥२६॥**

महाव्रतमिति शेषः ॥२६॥

**इतरच्छाण्डिल्यम् ॥२७॥**

इतरत् पूर्वोक्तदक्षिणादानं शाण्डिल्यमतम् ॥२७॥

**सर्वे साहस्राः पृथक्सहस्रदक्षिणाः ॥२८॥**

**सहस्रा** नाम चत्वार एकाहाः । ते प्रत्येकं सहस्रदक्षिणाः । कुतः । ब्राह्मणे तथैव विधेरनुवादाच्च ॥२८॥

इति द्राह्यायणश्रौतसूत्रे द्वात्रिंशे पटले द्वितीयः खण्डः ॥२॥

---

3. C. °शस्त्रं for सहस्रं; My[2] °विषयाणि for °वीर्याणि
C. कुरुते for कुर्वते

## तृतीयः खण्डः

**साद्यस्क्रेण यक्ष्यमाणो महारात्रे प्रातराहुतिं हुत्वाचक्षीतर्त्विग्भ्यः साद्यस्क्रोम इति ॥१॥**

आदित्याश्चाङ्गिरसश्चादीक्षन्त (तां. ब्रा. १६.१२.१) त्यारभ्य पञ्चभिरनुवाकैरेकत्रिकान्ताः पञ्च साद्यस्क्राः ब्राह्मणे विहिताः । शाखान्तरे त्वेकत्रिकात् पूर्वः श्येनः पञ्चमः । एवं साद्यस्क्राः कल्पकारेण क्लृप्ताः । तेषामन्यतमेन यक्ष्यमाणो महारात्र एव श्वो भाविनीं प्रातरग्निहोत्राहुतिं प्रतिकृष्य हुत्वा साद्यस्क्रो मे श्वः कर्तव्यः इति बहिःस्थितेभ्यो महर्त्विग्भ्यः सोमप्रवाकमुखेनाचक्षीत ॥१॥

**प्रागेव प्रहिणुयादिति धानंजय्यः ॥२॥**

प्रभात एव सोमप्रवाकं प्रहिणुयात् न महारात्रे ॥२॥

**दीक्षाप्रभृति सद्यः सर्वं कुर्युः । प्रथमद्वितीययोः श्येनस्य च ॥३॥**

यत्र आपस्तम्बः—उदित आदित्ये दीक्षिते प्रागस्तमयादवभृथः (आप. श्रौ.) इति ॥३॥

**एकत्रिकान्ताः षट् साद्यस्क्राः इति शौचिवृक्षिर्निकायित्वात् ॥४॥**

एकत्रिकान्ताः षडपि सद्य एवानुष्ठेयाः । न केवलं प्रथमद्वितीयौ श्येनश्च । कुतः । कालबविब्राह्मणे षण्णामपि साद्यस्क्रशब्दचोदितत्वेनैकनिकायान्तःपातित्वात् । तथा च भारद्वाजसूत्रे षट्स्वप्येकाहेषु प्रत्येकमुक्तम्—**साद्यस्क्र इत्येनं कालबविनां चोदयती** (भा. श्रौ. ) ति । स्वगतस्य तु स्वयमेव हेतुं वक्ष्यति ॥४॥

अत्र ब्राह्मणे प्रथमं साद्यस्क्रमतीत्य द्वितीयसंनिधावुर्वरावेदिः (तां. ब्रा. १६.१३.६) इत्याद्यङ्गजातमाम्नातम् । तत्तस्यैवेति शङ्कामपनुदन्नाह—

---

5. My[1-3] T. My[4] ब्राह्मणेन for ब्राह्मणे

7. My[4] °त्र् for °रात्र

9. C. प्रगएव, प्रगं एव for प्रागेव

17. My[1] साद्यस्क्रह्व My[4] साद्यस्क्राह्व ? C. साद्यस्क्राद (?) for साद्यस्क्रशब्द

**उर्वरा वेदिरिति प्रथमे ॥५॥**

इति । **निकायित्वादित्यनुवर्तते** । निकायिनो नाम प्रकृतेर्विलक्षणाः परस्परं तुल्यधर्मान्वयिनः किंचिद्व्यावृत्ताश्च । तानुपदिशन् **प्रथम** एव साधारणं धर्मजातमुपदेष्टुमर्हति । तदतिक्रमे हेत्वभावात् । किं च **सक्षीरदृतयो रथा भवन्ति । ततोऽध्यन्नवनीतमुदीयात् । तदाज्येऽपि कार्यम् सद्यस्त्वाये** (तां. ब्रा. १६.१३.१३) ति वदन् साद्यस्क्रतैव धर्मान्वयहेतुः । न द्वितीयः साद्यस्क्र इति दर्शयति । किमर्थं तर्हि द्वितीयसंनिधौ धर्माम्नानम् । तदुच्यते । प्रथम एव साद्यस्क्रो गुणविकृतो द्वितीयो भवति । न पुनः कर्मान्तरम् । कुतः । **एतस्यैवैकविंशमग्निष्टोमसाम कृत्वामयाविनं याजयेत्** (तां. ब्रा. १६.१३.१) इति प्रथमं साद्यस्क्रं सर्वनाम्ना परामृश्य तत्रैव गुणमात्रचोदनात् तावन्मात्रेण क्रतुभेदः यथा दर्शपूर्णमासयोर्दर्श एव गुणविकृतः साकंप्रस्थायीयः । तेन विकारमुक्त्वा तदनन्तरमेव च प्राथम्यधर्मान् वक्ष्यामीति ब्राह्मणाभिप्रायः । तथा च भारद्वाजसूत्रम् **यथा पुनरेतदतोऽत्य प्रथमद्वितीय आम्नातानि भवन्तीति स एवैष भवती** (भा. श्रौ.) ति ॥५॥

**यवोर्वरा पक्वा स्याद् व्रीर्वह्चुरा वा ॥६॥**

ब्राह्मणे उर्वरेति अविशेषेणोक्तापि श्रुत्यन्तरदर्शनात् व्रीहियवयोरन्यतरसस्यशालिनी तत्रापि पक्वालवालयोग्या पक्वसस्यशालिनी ग्राह्येत्यर्थः ॥६॥

**तत एव समुत्कर्तुं खल उत्तरवेदिं कुर्युः ॥७॥**

ततः उर्वरायाः पक्वं सस्यं समुत्कृत्य खलप्रदेश उत्तरवेदिं कुर्युः । समुत्कर्तुमिति णमुल्प्रत्ययान्तम् ॥७॥

---

3. C. तावत् साधारण्यं for एव साधारणं

4. My[1·2] C. °क्षीण° for °क्षीर°

6. My[1] °न्वये for °न्वय°

11. My[1] My[4] प्रस्थाक्षीय: T. प्रस्थायिय: for प्रस्थायीय:
C. My[2] प्रथमस्य for प्राथम्य; My[1] वा for च; om. च

15. My[2] उक्तावपि for उक्तापि My[1] C. My[4] अन्यतरस्य for अन्यतरसस्य°

16. My[1,4] मालिनी for शालिनी My[1] पक्वा एव न योग्या for पक्वालवालयोग्या; My[2] °योग्य° for °योग्या My[4] गृह्यते, C. गृह्येत for ग्राह्या

**खले वालीयूपो भवतीति लाङ्गलेषायूपः स्यात् ॥८॥**

**एतया हि तं समुत्क्षषन्ती** (तां. ब्रा. १६.१३.८) ति ब्राह्मणवाक्यशेषाल्लाङ्गलेषेति गम्यते ॥८॥

**कलापी चषालभागा ॥९॥**

व्रीहीणां यवानां वा सिलमुष्टिः कलापी । लाङ्गलस्येषादण्डमुद्धृत्य तदग्रे व्रीहिसिलमुष्टिं चषालत्वेन बध्नीयादित्यर्थः । चषालत्वं भजत इति चषालभागा ॥९॥

**अतीतायां चेद्यववेलायां व्रीहिवेलायां वा यजेत । धान्यपात्राण्युप्त्वाभिक्षषेयुः ॥१०॥**

यदि पूर्वमेव स लूनः सस्यः स्यात् तदानीं धान्यपात्रेभ्यो बीजान्युद्धृत्य तस्यामुप्त्वाभिक्षषेयुः । तेन कथंचिदुर्वरात्वं संपादनीयमिति भावः ॥१०॥

**धान्यपात्रा उत्तरवेदिः स्यात् ॥११॥**

मृन्मयाणि धान्यपात्राणि पूर्णीकृत्योत्तरवेदिं कुर्युः । भारद्वाजस्त्वाह—**यवा उत्तरवेदिर्भवन्तीति विज्ञायते** (भा. श्रौ.      ) इति । तद्वचनात् धान्यराशिरेवोत्तरवेदिरिति प्रतिभाति ॥११॥

**मूतश्चषालभागः ॥१२॥**

सस्यकालेऽतीते कलाप्या अभावाद्व्रीहिमूतश्चषालः कार्यः । चषालभागेति स्त्रीलिङ्ग अपपाठः ॥१२॥

**त्रिवत्सः साण्डः** (तां. ब्रा. १६.१३.९) इति ब्राह्मणम् । तद्व्याचष्टे—

**त्रिवत्सः साण्ड इति बहुत्रिवर्षस्य जानपदी त्रिवत्स इति ॥ १३॥**

इति । समाख्येति शेषः । **बहुत्रिवर्षस्येति विभाषा सुपो बहुच्पुरस्तात्** (पा. ५.३.६८) इति बहुच् प्रत्ययः । ईषदसमाप्तत्रिवर्षस्य **त्रिवत्स** इति जनपदप्रसिद्धा लौकिकी संज्ञेत्यर्थः ॥१३॥

---

2. My[2] °उकर्षन्ति for °उत्कृषन्ति

4. M. खलापी for कलापी

13. C. सुपूर्णी for पूर्णी°; T. om. मृन्मयाणि

16. My[1] मूतं My[2] मूलः C. सूत्रं for मूतः

18. C. °लिंगमयः My[1] °लिंगमुप° for °लिंग अप°

**यो वा तिस्रो धयेत् ॥१४॥**

अथवा यो वत्सस्तिस्रो धेनूर्धयेत् मृतवत्सत्वात् स तिसृणां वत्सस्त्रिवत्सः ॥१४॥

**त्रिवर्षो वैव स्यात् ॥१५॥**

यद्वा त्रिवर्ष एव त्रिवत्सः । वत्सरपदस्यान्त्यवर्णलोपः ॥१५॥

सर्वा विशोऽश्वरथाः सोमप्रवाका विधावन्ती (तां. ब्रा. १६.१३.१०) ति ब्राह्मणं श्रुत्यन्तरदर्शनादुपकृत्य व्याचष्टे—

**प्राञ्चं होतारं वहेयुरुदञ्चमुद्गातारं प्रत्यञ्चमध्वर्युं दक्षिणा ब्रह्माणम् ॥१६॥**

अश्वरथेष्वेव स्थिताः सोमप्रवाकास्तं तं महर्त्विजं रथमारोप्य तेभ्यः सोमं प्रवक्तुं तत्तद्दिङ्मुखा गच्छेयुरिति ब्राह्मणार्थः ॥१६॥

**पुरस्ताद्वात्र वसेयुः ॥१७॥**

यद्वा पूर्वमेव तस्यां तस्यां दिशि महर्त्विजो वसेयुः । न पुनरिदानीं तान् सोमप्रवाका वहेयुः ॥१७॥

**तत्रैभ्यः सोमं प्रब्रूयुः अश्वरथैर्यात्वा ॥१८॥**

तत्र दिशि पूर्वमेव स्थितेभ्यः सोमप्रवाकाः स्वयमेव केवलमश्वरथैर्यात्वा सोम प्रब्रूयुः ॥१८॥

**त उक्ता ब्राह्मणेनाध्वानश्च ॥१९॥**

ते अश्वरथाः तैर्गन्तव्याः पन्थानश्च ब्राह्मणेनैव विशेषतो निर्दिष्टा इत्यर्थः ॥१९॥

**कुर्युरेवर्त्विज इति शाण्डिल्यः ॥२०॥**

एवकारो भिन्नक्रमः । ऋत्विज एव सोमप्रवचनं कुर्युरिति शाण्डिल्यमतम् ॥२०॥

---

4. My[1] वैय for वैव

7. C. ⁰स्कृत्य T. ⁰क्रम्य for ⁰कृत्य

8. My[1] om. वहेयुः

10. C. om. ⁰प्य तेभ्य . . . ⁰प्रवाका व⁰ (L. 14)

11. My[2] वक्तुं for प्रवक्तुं

कथमित्याह—

**अन्यांस्तु ब्राह्मणांस्तानध्वन ऊर्ध्वा तेभ्यः सोमं प्रब्रूयुः ॥२१॥**

चत्वारो महर्त्विजः स्वव्यतिरिक्तान् ब्राह्मणांस्तं तमध्वानमश्वरथैरूर्ध्वा तेभ्यः **सोमं प्रब्रूयुः**। इदानीं ब्राह्मणगतः सोमप्रवाकशब्दो महर्त्विग्विषयः ॥२१॥

मतद्वयसाधारणं प्रवचनमन्त्रमाह—

**असौ सद्यस्क्रिया यजते। तदहं प्रब्रवीमीन्द्राय विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोमेभ्यः सोमपेभ्यः इति ॥२२॥**

इति। **असाविति** यजमाननामग्रहः कार्यः ॥२२॥

**सक्षीरदृतयो रथा भवन्ती** (तां. ब्रा. १६.१३.१३) ति ब्राह्मणं व्याचष्टे—

**सक्षीरदृतयो रथा भवन्तीति साद्योदुग्धेन क्षीरेण दृतयः पूर्णाः स्युः ॥२३॥**

इति। **सद्योदुग्धेन क्षीरेण पूर्णाः** सक्षीरादृतयो येषु रथेषु ते **सक्षीरदृतयः** ॥२३॥

**ततोऽयं नवनीतमुदीयात् फेनो वा तदाज्ये विसृजेयुः ॥२४॥**

तस्मात् क्षीराद् रथयानसंघट्टनेन यन्नवनीतमुदीयात् फेनो वा तदाज्ये क्रत्वर्थे **विसृजेयुः** संसृजेयुः ॥२४॥

**अश्वः श्वेत एतस्य दक्षिणा तमुद्गात्रे दद्यात् ॥२५॥**

ब्राह्मणे आदित्यानां साद्यस्के आयास्यायोद्गात्रे अश्वदानकीर्तनात् ॥२५॥

**किञ्चिच्चेतरेभ्यः ॥२६॥**

**इतरेभ्योऽप्यृत्विग्भ्यो यत् किंचित् दद्यात्** ॥२६॥

**इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले तृतीयः खण्डः ॥३॥**

---

2. C. तत्रैभ्यः for तेभ्यः; My[2] C. उद्वः for ऊर्ध्वा
3. My[1,2] My[4] C. ऊद्वा for ऊर्ध्वा
6. My[2] सद्यः क्रीयया, C. सद्यःपरिक्रिया, for सद्यस्क्रिया
8. C. नामधेय⁰ for नाम⁰
9. My[1] सक्षीण⁰ for सक्षीर⁰
15. My[4] क्षीरवद् for क्षीराद्; C. om. ⁰यान⁰
17. My[4] श्वेततरः for श्वेतः; My[2] तस्य for एतस्य
18. My[1] अयास्याय T. अयास्वास्य for आयास्याय

## चतुर्थः खण्डः

**एतेनैवोत्तरो व्याख्यातस्तस्याश्व एकविंशो दक्षिणानाम् ॥१॥**

विंशतिर्गावो दक्षिणाः। तासामेकविंशोऽश्वः स्यात् ॥१॥

**अश्वो वै वा ॥२॥**

अथवा पूर्ववदश्व एव दक्षिणा स्यान्न गावः ॥२॥

**एकरात्रीणः ॥३॥**

अयमपि पूर्ववदेकेनैवाह्ना समापनीयः साद्यस्क इत्यर्थः। उत्तरविवक्षार्थमुक्तस्यैव कथनम् ॥३॥

**द्व्यहीनोऽनुक्रीः ॥४॥**

**अथैषोऽङ्गिरसामनुक्रीः** (तां. ब्रा. १६.१४.१) इति ब्राह्मणोक्तो योऽनुक्रीः स द्व्यहसाध्यः। न पूर्वसाद्यस्क्रः ॥४॥

कुत इत्याह—

**तेऽङ्गिरस आदित्येभ्यः श्वसुत्यामिति ह्याह ॥५॥**

इति। **आदित्याश्चाङ्गिरसश्चादीक्षन्त। ते स्वर्गे लोकेऽस्पर्द्धन्त। तेऽङ्गिरस आदित्येभ्यः सुत्यां प्राब्रुवन्** (तां. ब्रा. १६.१२.१) इति कथनात्तेषामङ्गिरसां श्वः किंचित् कार्यं पूर्वेद्युश्च किंचिदिति गम्यते। तेन द्व्यहीनः ॥५॥

**तस्य क्रयप्रभृत्युत्तरमहः स्यादिति गौतमः ॥६॥**

कुत इत्याह—

**तं सद्यः परिक्रीयेति ह्यादित्यानाह नेतरान् ॥७॥**

इति। **तं सद्यः परिक्रीये** (तां. ब्रा. १६.१२.१) ति दीक्षादिवसे सोमक्रयमादित्यानामेव दर्शयति। नेतरेषामङ्गिरसाम्। तेन तेषामुत्तरेद्युरेव क्रय इति गम्यते। क्रयप्रभृति सर्वमुत्तरेद्युरेव द्व्यहसाध्यत्वादिति सिद्धमेव ॥७॥

---

7. C. इतर⁰ for उत्तर⁰;

8. My[1] T. My[4] उत्तरस्य for उक्तस्य

11. My[2] T. पूर्ववत् for पूर्व⁰

15. My[2] एषां for तेषां

17. My[1] TC, after ⁰प्रभृति add : च

हेत्वन्तरं चाह—

**अपरेद्युः क्रयणाच्चानुक्रीरित्याख्या ॥८॥**

इति । यत्र दीक्षादिवसादुत्तरेद्युः सोमः क्रीयते न सद्यः सोऽनुक्रीरिति संख्यायते । तस्मादपि क्रयप्रभृत्युत्तरमहः ॥८॥

मतान्तरमाह—

**उपवसथान्तं पूर्वमहः स्यादिति धानंजय्यः ॥९॥**

इति । स्पष्टम् ॥९॥

हेतुमाह—

**श्वः सुत्यामिति ह्याह श्वः क्रयं प्राप्नुवन्नित्यभविष्यत् ॥१०॥**

इति । **श्वः सुत्यां प्राप्नुवन्निति** सुत्याशब्दश्रवणात् सुत्यैव श्वः कार्या । ततः पूर्वमुपवसथान्तं दीक्षाप्रभृति सर्वं पूर्वेद्युरेवेति गम्यते । यदि क्रयप्रभृत्युत्तरमहः स्यात् तदानीं तेऽङ्गिरस आदित्येभ्य श्वः क्रयं प्राप्नुवन्निति वक्तव्यं स्यात् । न चैवमुक्तम् । तस्मादुपवसथान्तं पूर्वमहरिति ॥१०॥

तत्र यदुक्तं **तं सद्यः परिक्रीयेत्यादित्यानेवाह । नेतरान्** (द्रा. श्रौ. २२.४.७) इति तत्राह—

**तं सद्यः परिक्रीयेति च प्रथमस्य सद्यस्तां दर्शयति ॥११॥**

इति । **प्रथमस्यै**काहस्य सद्यस्त्वमनेनोच्यते । आदित्याः सद्य एव सर्वमकुर्वन् । अङ्गिरसो द्व्यहेनेति नैतावन्मात्रेण क्रयप्रभृत्युत्तरमहरिति सिद्ध्यतीत्यर्थः । अस्मिन् मते **तं सद्यः परिक्रीये** (तां. ब्रा. १६.१२.१) ति परिक्रयशब्दः सर्वकर्मोपलक्षणार्थः मतान्तरे तु सुत्याशब्दः क्रयप्रभृतिसर्वकर्मोपलक्षणार्थः ॥११॥

अथ यदुक्तमनुक्रीरिति समाख्यया परेद्युः क्रय इति तदपि नेत्याह—

**द्व्यहीनत्वात्तु जघन्यतरेऽङ्गिरसोऽक्रीणंस्तस्मादनुक्रीरित्याख्या ॥१२॥**

इति । अङ्गिरोभिरेककालमादित्या दीक्षित्वा सद्य एव सर्वचिकीर्षया त्वरमाणाः पूर्वमेव क्रयमकुर्वन् । अङ्गिरसस्तु द्व्यहचीकीर्षया जघन्यतराः सोमक्रयम-

---

21. C, समाख्यायां for समाख्यया

22. My[2] अनुक्रीणन् for अक्रीणन्

कुर्वन् । तेन दीक्षादिवस एवाङ्गिरसामपि सोमक्रयः । तत्र त्वादित्यापेक्षया किंचिद्विलम्बादनुक्रीरित्युच्यते ॥१२॥

**तस्याश्व एकशततमो दक्षिणानामश्वो वै वा ॥१३॥**

स्पष्टम् ॥१३॥

**एतेनोक्तो विश्वजिच्छिल्पो द्विरात्रीणः ॥१४॥**

अनुक्रीवद् द्व्यहीन इत्यर्थः ॥१४॥

मतान्तरमाह—

**त्र्यहीन इति धानंजय्यः ॥१५॥**

इति । स्पष्टम् ॥१५॥

कथमित्याह—

**दैक्षं प्रथममहः क्रयप्रभृत्युपवसथान्तं द्वितीयं सौत्यमुत्तमम् ॥१६॥**

इति । शाखान्तरदर्शनादेवमुक्तम् ॥१६॥

**तस्य दक्षिणा धनानि यथोत्साहं दद्यात्तस्मिन् जनपदे यान्यभिध्याततमानि स्युः ॥१७॥**

**अभिध्याततमानि** अतीव श्रद्धेयानि पुरुषाणामित्यर्थः ॥१७॥

**सर्ववेदसनिर्मां दद्यादिति धानंजय्यः ॥१८॥**

सर्ववेदसतुल्याम् इत्यर्थः ॥१८॥

तामेवाह—

**विमितं शयनमारोहणं महानसे दासमिथुनौ धान्यपल्यं सीरं धेनुरिति ॥१९॥**

इति । **विमितं** गृहम् । **आरोहणमश्वादिकम्** । **महानसं** महाशकटम् । महच्चानश्चेति । अथवा प्रसिद्धमेव **महानसम्** । इह तु तदुपकरणमुलूखलमुसलादिकम् । दासी दासश्च **दासमिथुनौ** । धान्यपल्यं धान्यराशिः । एषा सर्ववेदसतुल्या दक्षिणानुक्रान्ता ॥१९॥

**इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले चतुर्थः खण्डः ॥४॥**

---

14. M यानानि, T. दानानि for धनानि

23. My[1] उन्मूले for उलूखल°

## पंचमः खण्डः

**व्रतीनानां यौधानां पुत्राननूचानानृत्विजो वृणीत श्येनस्य ॥१॥**

त्रैवर्णिकेषु ये हीनवृत्तयो योधाः सन्तो व्रातेन जीवन्ति तेषां पुत्राननूचानान् साधुवृत्तांश्च श्येनस्यर्त्विजः कुर्यात् ॥१॥

**अर्हतामेवेति धानंजय्यः ॥२॥**

अर्हतां योग्यानां साधुवृत्तानामेव पुत्रानित्यर्थः ॥२॥

**अभिवातासु या अनभिवाताः स्युस्तासामाज्यं मन्थयेत् ॥३॥**

मृतवत्सा धेनवोऽभिवातास्तासां समूहे यदि काश्चिदमृतवत्साः स्युस्तासामाज्यं मथित्वा घृतकार्यं कुर्युः ॥३॥

**यत्र स्तम्बा वा वृक्षा वा बहुलाः जाताः स्युस्तांश्छेदन्देवयजनं कुर्युः ॥४॥**

यत्र देशे ओषधिस्तम्बा वनस्पतयो वा प्रभूतास्तांश्छित्वा तत्र देवयजनं कुर्युरिति। छेदमिति णमुल्प्रत्ययः ॥४॥

**यद्वा विदाहि स्थण्डिलम् ॥५॥**

अथवा यद् दावादिना विदग्धं स्थण्डिलं तद् देवयजनम् ॥५॥

**शवनभ्ये अधिषवणे इति ॥६॥**

ब्राह्मणोपादानमेतत् ॥६॥

तद् व्याचष्टे—

**येन यानेन मृतं निर्हरेयुस्तस्य नभ्ये अधिषवणफलके कुर्युः ॥७॥**

इति। येन शकटेन मृतं निर्हरेयुस्तस्य शकटस्य च कट्योर्ये मध्यमे फलके ते अधिषवणफलके द्वे इति ब्राह्मणार्थः ॥७॥

---

3. T. यौधाः for योधाः

6. My[2] T. योग्यादीनां for योग्यानां

7. My[2] वा for याः

13. My[2] छेदनम् for छेदम्

15. My[2] दावाग्निना C. विदाहिना for दावादिना; My[1] विदह्यास्थलेन्तर for विदग्धं स्थण्डिलं तद्; My[1] My[4] CT. स्थलं for स्थण्डिलं

यूपःस्फ्याग्र इति (ष. वि. ब्रा. ४.२.१६) इति ब्राह्मणं व्याचष्टे—

**यूपःस्फ्याग्र इति चषालभागः स्यात् ॥८॥**

इति । चषालप्रतिषेधोऽयम् । स्फ्याग्रसदृशं चषालं यूपं कुर्यादित्यर्थः ॥८॥

**लोहितोष्णीषा लोहितवाससो निवीता ऋत्विजः प्रचरन्त्युपेत-पुरुषा उद्ज्यधन्वानः ॥९॥**

उपेतः पुरुषो येषां त उपेतपुरुषाः । प्रतिगृहीतपुरुषा इत्यर्थः । उद्गतज्यं धनुर्येषां ते उद्ज्यधन्वानः ॥९॥

**पवमाने रथन्तरं कुर्यादिति बृहत्यामेकर्च्चानां स्थाने स्यात्तद्धि बार्हतानां स्थानम् ॥१०॥**

**यं कामयेत परां परावतमियान्न प्रतितिष्ठेदिति पवमाने रथन्तरं कुर्यात्** (ष. विं. ब्रा. ४.२.१४) इति ब्राह्मणम् । तस्यायमर्थः । जिघांसत्कल्पे ये बृहत्यामेकर्च्चाः कल्पकारक्लृप्ताः **वषट्कारणिधनमेकस्यां रौरवमेकस्यां यौधाजयमेकस्याम्** (आ. क. ३.१५.३) इति तेषां स्थाने रथन्तरं कार्यमिति । तद्धि बार्हतानां स्थानं रथन्तरं च बृहत्यामुत्पन्नम् ॥१०॥

**एवं च तृचे भवति ॥११॥**

एवमेकर्च्चानामपोह्यकरणे तृचे रथन्तरं कृतं भवतीति नैकर्च्चलाभ इति । युक्तं चैतत् । **तस्माद् बृहद्रथन्तरे एकर्च्चेन कुर्वन्ति** (तां. ब्रा. ७.७.५) इति श्रुतेः ॥११॥

**अविप्रतिषेधेनेतरेषामनुकल्पयेदित्यपरमेवमल्पीयान् विकारः ॥१२॥**

---

3. My[4] सदृश⁰ for सदृशं, C. चषाल⁰ for चषालं

4. My[1] ⁰वासना: T. ⁰वसाना: My[4] वसना: for ⁰वासस:

6. My[1-2] CT. om. उपेत ··· ते; My[2] T. ⁰पुरुषाकारा इति⁰ for ⁰पुरुषा इति⁰

8. My[2] om. स्थाने स्यात्तद्धि बार्हतानां (L. 9)

10. My[1-2] CT. गच्छेत् for इयात्

16. My[2] T. भवति नैकर्च्च इति for भवतीति ··· ⁰लाभ इति

19. M विप्रति⁰ for अविप्रति⁰; TMC. षेधेतरेषां for ⁰षेधेनेतरेषां, My[2] T. न विकल्पयेत् for अनुकल्पयेत्

एकर्च्चानामविरोधेन रथन्तरमप्येकर्च्चमेव कल्पयेत् इति मतान्तरम्। एवं सति अतिस्वल्प एव विकारो भवति। रथन्तरस्यैकर्च्चत्वमात्रकरणात् ॥१२॥

**तत्र पञ्चमं बार्हतमाहरेत् स्तोमवशेन ॥१३॥**

**त्रिवृतः पवमानाः स्युः** (तां. ब्रा. ९.८.१४) इति ब्राह्मणोक्तस्तोमसंपत्यर्थं बृहत्यां **पञ्चमं बार्हतमाहरेत्**। ननु एवमपि एकादशस्तोमः स्यात्। औशनस्य तृचे करणात्। सत्यम्। अत एवौशनमप्येकर्च्चे कार्यमिति भावः ॥१३॥

**तत् पौरुमद्गं स्यात् भ्रातृव्यवधं ह्यस्मिन् दर्शयतीति ॥१४॥**

तत् बृहत्यामाह्रीयमाणं पञ्चमं साम **पौरुमद्गं स्यात्**। तस्य क्रतुवधाभिरूपत्वात्। कथं दशरात्रे पौरुमद्गं विधाय तस्मिन् भ्रातृव्यवधं दर्शयति ब्राह्मणम्। तद्यथा **तस्माद् देवाः पौरुमद्गेन रक्षांस्यपाघ्नन्** (तां. ब्रा. १२.३.१३) इति ॥१४॥

**पृष्ठेषु रथन्तरस्योत्तरयोर्द्विपदे स्यातामित्याचार्याः। पराचीष्विति ह्याह ॥१५॥**

यदा पृष्ठस्थाने रथन्तरं क्रियते तदा तस्योत्तरे द्विपदे स्याताम्। न पुनः ककुभौ। कुतः। **पराचीषु रथन्तरम्** (प. वि. ब्रा. ४.२.१०) इति श्रुतेः। यदि ककुभावुत्तरे स्यातां तदा पूर्वस्तोत्रीयान्त्यपादाभ्यासात् पराचीत्वं न स्यात्। अनभ्यासो हि पराचीत्वं नाम ॥१५॥

**ककुभावेवेति गौतमः ॥१६॥**

कुत इत्याह—

**अनावृत्तिमेतत् स्तोमस्य दर्शयतीति ॥१७॥**

इति। स्तोमस्य साम्नोऽनावृत्तिः पराचीष्वित्यनेनोच्यते। न तृचपादस्येति। तथा च कल्पकारः—**तिसृभिस्तिसृभिराज्यपृष्ठानी** (आ. क. ३.१५.७) ति पृष्ठस्य त्रिकस्तोमत्वमाह। तेन स्तोत्रीयानभ्यासात् पराचीत्वम् ॥१७॥

---

5. My[2] T. after पञ्चमं add : साम; C. सति for अपि
7. My[4] °वधे for वधं
9. My[4] तस्य for तस्मिन्
15. T. °स्तोत्रीयान्त° My °स्तोत्रीयां तत् for °स्तोत्रीयान्त्य°
21. My[1] आज्ये for आज्य°

**प्लवं ब्रह्मसाम कुर्वंश्चैतस्यर्क्षु कुर्यात् ॥१८॥**

ननु ब्राह्मणे प्लवं ब्रह्मसामेति स्तोत्रीयानुपादानात् स्वस्तोत्रीयमेव युक्तम्। अत आह--

**वृत्तिर्ह्येतस्मिन् स्थाने पावमानीनां न विद्यते ॥१९॥**

इति। सत्यम्। पावमान्योऽभिप्लवस्य स्वस्तोत्रीयाः । न च पावमानीनाम् ऋचां ब्रह्मसामस्थाने कदाचित् प्रवृत्तिरस्ति । तेनैव वचनबलात् ऐन्द्रीष्वेव प्रवृत्तिः ॥१९॥

**नव नव दक्षिणा इति नव वर्गान् यथोत्साहं दद्यात्। काणखोर-कूटवण्टानाम् ॥२०॥**

नव काणान् दद्यात्। स एको वर्गः। उत्तरे त्रयो वर्गाः ॥२०॥

**तासामभि दक्षिणावेलायां लोहितं जनयेयुः ॥२१॥**

कण्टकादिभिर्दक्षिणाकाले तासु लोहितमभिजनयेयुः ॥२१॥

**एकत्रिके सद्यः सर्वं कुर्युः ॥२२॥**

शौचिवृक्षिमतेनेति शेषः ॥२२॥

**एकदीक्षस्त्र्युपसत्क इति गौतमः ॥२३॥**

स्पष्टम् ॥२३॥

**तस्य गायत्रपार्श्वमार्भवोऽध्या रुच्चेति ॥२४॥**

कल्पसिद्धमेवेदं पक्षान्तरविधानार्थमुक्तम् ॥२४॥

**पुरोजित्यां शाण्डिल्यः ॥२५॥**

**पुरोजिती वः** (सा. ६९७) इति अस्यां गायत्रपार्श्वं कुर्यात् ॥२५॥

**तस्याः ससुन्वे यो वसूनामित्येतां मध्ये कुर्यात् ॥२६॥**

**पुरोजिती वो अन्धसः** (सा. ६९७) इत्येतस्या मध्ये। अर्धर्च्चयोर्मध्य इत्यर्थः। तन्मध्ये **ससुन्वे यो वसूनाम्** (सा. ५८२) इत्येतामृचं क्षिपेत् । ततस्तया सह **पुरोजिती**त्येषा सप्तपदा संपद्यते। अयारुच्चेतिवत् ॥२६॥

---

8. My[4] घोर for खोर[0];

9. C. कुट for कूट, My[2] [0]पुच्छानाम् for [0]वण्टानाम्

12. My[4] काणाद्यभिः My[1] कणकाभिः for कण्टकादिभिः

**प्राचीमनुप्रदिशं याति चेकितदित्येतस्यामुद्ग्रंशीयं कुर्यादुद्धृत्य गायत्रपार्श्वमिति लामकायनः ॥२७॥**

स्पष्टम् ॥२७॥

**त्रिकं बहिष्पवमानं स्यादिति शाण्डिल्यः ॥२८॥**

**पञ्ची माध्यंदिनः सप्तार्भव एकोनीत्तराणि ॥२९॥**

इतराणि पवमानेभ्यो व्यतिरिक्तानि नवस्तोमान्येकिस्तोमानि स्युः ॥२९॥

**त्र्यैकिनमेके ॥३०॥**

त्रिकस्तोमं बहिष्पवमानम् एकिस्तोमादनन्तरम् । एवं व्यत्यासं द्वादशस्तोत्राणि-स्युः । सोऽयं त्र्यैकीति ॥३०॥

मतान्तरमाह—

**होतृषामाणि वा त्रिकाणि पवमानाश्च ॥३१॥**

इति । त्रीणि होतृषामाणि त्रयश्च पवमानाः त्रिकस्तोमाः स्युः । इतराणि षडेकिस्तोमानि ॥३१॥

पक्षान्तरमाह—

**चतुरुत्तरसंपन्नो वा ॥३२॥**

इति । यद्वायमेकत्रिकः शाखान्तरे चतुरुत्तरसंपन्नः ॥३२॥

**द्वे द्वे त्रिकपञ्चिनी ॥३३॥**

बहिष्पवमानं त्रिकस्तोमं तदनन्तरं पञ्चिस्तोमम् । एवं व्यत्यासं कुर्यात् । तानि षट् द्वन्द्वमष्टावष्टो स्तोत्रीयाः । एकत्रिके तु प्रतिद्वन्द्वं चतस्रश्चतस्रः इति तदपेक्षया चतुरुत्तरसंपन्न इति ॥३३॥

---

7. My[1] T. त्रियैकिनम् M त्रिकैकिनम् for त्र्यैकिनम्

9. My[1] T. त्रियैकिनी for त्र्यैकी.

16. My[1] T. om. त्रिकः; T My[4] om. अयम्.

18. My[1] C [0]पवमानः for [0]पवमानं; My[2] पञ्चिस्तोमः for पञ्चिस्तोमम्

19. My[1] om. एकत्रिके तु प्रति[0]; My[2] एकत्रिकेषु for एकत्रिके तु

**प्रत्यवरोहेण तस्य तत् षष्ठम् ॥३४॥**

तस्य चतुरुत्तरसंपन्नस्यैकाहस्य षष्ठं द्वन्द्वं प्रत्यवरोहेण स्यात् । पञ्चिस्तोममार्भवम् । त्रिकस्तोमं यज्ञायज्ञीयमित्यर्थः ॥३४॥

**शतं दक्षिणा दक्षिणाः ॥३५॥**

स्पष्टम् ॥३५॥

**इति द्राह्यायणश्रौतसूत्रे द्वाविंशे पटले पञ्चमः खण्डः ॥५॥**

द्राह्यायणीयसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीये दशके वृत्तो द्वितीयः पटलोऽधुना ।

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे द्वाविंशः पटलः समाप्तः ॥२२॥**

---

7. My[2] द्राह्यणस्य for द्राह्यायणीय⁰; T ⁰सूत्रेऽस्मिन् for ⁰सूत्रस्य

## त्रयोविंशः पटलः

## प्रथमः खण्डः

**व्रात्यस्तोमैर्यक्ष्यमाणाः पृथगग्नीनाधाय यज्ञोपकरणानि चेष्ट्वा य एषामध्ययनेऽभिक्रान्तितमः स्यादभिजनेन वा तदभावेऽपि भोगलाभेन तस्य गार्हपत्ये दीक्षेरन् ॥१॥**

व्रात्यस्तोमेषु क्रतुषु सत्रवद् व्रात्यानां सहाधिकारात् आधानेऽपि तच्छङ्का स्यादिति । तन्निवृत्तये **पृथगग्नीनाधाये**त्युक्तम् । **यज्ञोपकरणानि** आश्विनैन्द्राग्नयः प्रायश्चित्तपशुबन्धाः । तानपि पृथगेव कृत्वा **य एषां** व्रात्यानां मध्येऽध्ययनेऽभियुक्ततमः स्यात् । अभिक्रान्तमभियोगस्तद्वान् अभिक्रान्ती । **तस्य गार्हपत्ये** गृहपतिभावे तं गृहपतिं कृत्वा **दीक्षेरन्**निति । कुत एतत् । **अजिने रजतो निष्कस्तद्गृहपतेः** (तां. ब्रा. १७.१.१४) इत्यादि ब्राह्मणे व्रात्यानां सहाधिकारस्, कस्यचित् गृहपतित्वमन्येषां गुणाभावं च दर्शयति । गृहपतित्वविधानं तद्गोत्रानुसारेण प्रयाजाद्यनुष्ठानार्थम् । तदुक्तम्—**गृहपतेर्वा प्राधान्यात्** (द्रा. श्रौ. १६.४.१७) इति । यद्वाभिजनेन युक्तं गृहपतिं कुर्यात् । तदभावे धनलाभेन विशेषतो युक्तम् ॥१॥

**भक्षांश्चानुभक्षयेयुः ॥२॥**

गृहपतेर्हविःशेषभक्षानन्वन्येऽपि यजमाना **भक्षयेयुः** ॥२॥

अत्र संशयः । ज्योतिष्टोमं प्रथमं कृत्वा पश्चात् व्रात्यस्तोमम् । किं वा विपरीतमिति । तत्रैकं मतमाह—

**ज्योतिषानिष्ट्वा प्रायश्चित्तपूर्वकारबलीयस्त्वात् ॥३॥**

---

5. My[1] M[0] लोभेन for [0]लाभेन

9. My[1] TC. [0]क्रमः for [0]तमः

10. My[1-2] TC after इति ins. अर्थः

12. My[1] C My[4] गुणभावं for गुणाभावं

C. after दर्शयति ins. इति

C. प्रयता[0] My[4] पृच्छा[0] My[1] प्रजा[0] for प्रयाजा[0]

14. CT. [0]लोभेन for [0]लाभेन

16. My[1] [0]पक्षा नत्वन्ये[0] C. भक्षाजन्ये My[2] भक्षाजन्त्वन्ये for भक्षानन्वन्ये

19. My[1] TC. My[2] [0]काल for [0]कार

इति । ज्योतिष्टोमेनानिष्ट्वैव प्रथमं व्रात्यस्तोमं कुर्युः । कुतः प्रायश्चित्तस्य पूर्वकारः । पूर्वकारमितरस्याप्राथम्याद् बलीयः । कृते हि प्रायश्चित्ते नित्यकर्मण्यधिकारः । प्रायश्चित्तं च व्रात्यस्तोमः ॥३॥

अत्र दृष्टान्तमाह--

**यथा दक्षिणः स यज्ञक्रतुः पञ्च दक्षिणा इति ॥४॥**

इति । प्रायश्चित्तं प्रबलं भवतीति शेषः । यथा तस्मिन्नेव ज्योतिष्टोमे चोदितमपि दक्षिणादानं प्रायश्चित्तेनादक्षिणेन बाध्यते । बहिष्पवमानप्रसर्पण उद्गातुरवच्छेदे अदक्षिणः स यज्ञक्रतुः संस्थाप्य इति । तथा सोमापहारे निमित्ते **पञ्च दक्षिणा** देया इति । पाञ्चदाक्षिण्येन प्राकृतदक्षिणासंख्याबाधस्तद्वत् ॥४॥

तदेतन्निराकरोति--

**विसमाप्ते त्वेतानीन्द्रात् तस्मादप्रमाणम् ॥५॥**

इति । इन्द्रशब्दो निमित्तवचनः । यथा ब्रह्मत्वप्रकरणे इन्द्रात् स्तोत्राणि द्विवृत्तेरित्युक्तम् । तदयमर्थः । **एतानि अदक्षिणः स यज्ञक्रतुः** (तां. ब्रा. ६.७.१४) इत्यादीनि वचनानि प्रारब्ध एव कर्मण्यसमाप्ते निमित्तात् प्रवृत्तानि । तस्मान्नैमित्तिकत्वेन नित्यबाधो युक्तः । व्रात्यस्तोमस्तु नैवं नित्यात् पूर्वानुष्ठेयत्वेन चोदितः । तेनैतानि व्रात्यस्तोमस्य न पूर्वक्रियायां प्रमाणम् ॥५॥

---

2. My[1] C. My[2] प्राथम्यात् My[4] प्राथम्याम् for अप्राथम्यात् My[1-2] My[4]अवलीयः for बलीयः;

7. My[1-2] C. प्रसर्पणम् for प्रसर्पणे;

8. C. उपच्छेदे My[1] एवच्छेदे for अवच्छेदे; My[1] यज्ञः कृतः for यज्ञक्रतुः T. यथा for तथा

9. My[2] प्रावृत$^0$ for प्राकृत$^0$

11. My[2] M समाप्ते for विसमाप्ते; T. $^0$नीद्रात् for $^0$नीन्द्रात्

12. T. ईद्र$^0$ for इन्द्र$^0$; T. ईद्रात् for इन्द्रात्

13. My[2] तद्वन्दे T. द्विवृत्तिः for द्विवृत्तेः

14. C. समाप्ते for असमाप्ते; C. निमित्तानि My[2] निमित्ति$^0$ for निमित्तात्

15. My[1] तेनैवम् C. नैव for नैवं; My[1-2] C. My[4] निमित्तात् for नित्यात्; C. पूर्वानिपेक्षत्वेन for पूर्वानुष्ठेयत्वेन

**इष्ट्वैवानारभ्य दोषवचनात् ॥६॥**

**ज्योतिष्टोमेनेष्ट्वैव** व्रात्यस्तोमः कार्यः । कुतः । ज्योतिष्टोमेनानिष्ट्वा क्रत्वन्तरकरणे अधिकारविशेषं क्रतुविशेषं चानारभ्य सामान्येनैव दोषवचनात् । तद्यथा--**य एतेनानिष्ट्वा व्रात्येन यजते गर्तपत्यमेव तत् । प्र वा मीयत** इति ॥६॥

हेत्वन्तरमाह--

**व्रातप्रतिपद्विधेः ॥७॥**

इति । ज्योतिष्टोमे **दविद्युतत्यारुचेति व्राताय प्रतिपदं कुर्यात्** (तां. ब्रा. ६.९.२४) इति व्रातानां प्रतिपद्विधिर्भवति । तत्र यदि व्रात्यस्तोमः पूर्वः स्यात्तदानीं तस्मिन् कृते व्रात्यतापगमाद् व्रातायेति वचनमनुपपन्नं स्यात् । व्रातो व्रात्यसंघः ॥७॥

अथ यदुक्तं कृते प्रायश्चित्ते कर्मण्यधिकार इति तत्राह--

**यथा चाग्न्याधेयमपूतानाम् ॥८॥**

इति । यथा व्रात्यस्तोमैरपूतानामेवैषामग्न्याधेयम् । एवं ज्योतिष्टोमोऽपीति युक्तम् ॥८॥

अन्यथा बह्वनिष्टापत्तिरित्याह--

**उपहव्याग्निष्टुन्मीमांसितसत्रं पुनःस्तोमाश्चानिष्ट्वा स्युः ॥९॥**

---

1. C. om. दोष० · · · चानारभ्य (L. 3)
3. My² अवि० for अधि०
4. T. एतानिष्ट्वा धान्येन for एतेनानिष्ट्वा व्रात्येन
   C. कत्रपत्यम्, T. क॑पत्यम्, for गर्तपत्यम्
   My² तज्जीयते वा for तत्
7. My² व्रात्य० for व्रात०
9. My¹ व्रातन्यं for व्रातानां; My⁴ om. व्रातानां
10. My² व्रात्यानप० for व्रात्यताप०
14. My² सर्वेषामग्न्याधेयः for एवैषामग्न्याधेयम्

इति । द्वितीयः पञ्चदशरात्रो मीमांसितसत्रम् उपहव्यादयश्चत्वारः पापक्षयार्थत्वात् प्रायश्चित्तानि । ते च ज्योतिषानिष्ट्वैव प्रथमं कार्याः स्युः । न चैवमिष्टमिति । अत्र ब्राह्मणे निन्दिताः कनिष्ठा ज्येष्ठा इति त्रिविधान् व्रात्यान् उक्त्वा तेषां पृथगेव त्रयः क्रतव उक्ताः । प्रथमे तु व्रात्यस्तोमे न विशेष उक्तः ॥९॥

तत्राधिकारिणो दर्शयति—

**ये के च व्रात्याः संपादयेयुस्ते प्रथमेन यजेरन् ॥१०॥**

इति । संपादनं संप्रतिपत्तिः । यथा देवा वै सोमस्य राज्ञो ग्रहपेयेन संपादयन्नित्यैतरेयकं तथा तौ ह मध्यमे संपादयांचक्रतुः शुनः शेप इति । ये केचन परस्परमनुष्ठानेन प्रतिपद्यन्ते ते प्रथमेन यजेरन् । तत्रापस्तम्बश्चतुः षोडशी सर्वेषाम् इति ॥१०॥

**ब्राह्मणेनेतर उक्ताः ॥११॥**

इतरे अधिकारिणो निन्दितादयः ॥११॥

**अथैष शमनीचामेढ्राणां स्तोमः** (तां. ब्रा. १७.४.१) इति ब्राह्मणम् । के पुनस्त इत्याह—

**स्थाविर्यादपेतप्रजनना ये ते शमनीचामेढ्राः ॥१२॥**

ये स्थविरभावादपगतप्रजननसामर्थ्यास्त एवमुक्ताः । शमो यौवनोपरमः । तस्मान्नीचमनुद्धतं मेढ्रं येषां ते **शमनीचामेढ्राः** । छान्दसो दीर्घः ॥१२॥

अत्र ब्राह्मणे द्योतानं ब्रह्मसाम विधायानन्तरमाम्नातम्—

**यन्निरुक्तं निधनमुपेयुर्गृहपतिरेवर्ध्नुयादपेतस्तदार्ध्नोतेति कस्येदं ब्राह्मणं स्यादिति ॥१३॥**

इति । संशय इति शेषः । कस्यार्थस्य प्रतिपादकमिति संशय इत्यर्थः ॥१३॥

---

3. My[1] My[4] प्रकृतान् T. प्रकृत्या for व्रात्यान्

15. C. स्थाविराद् for स्थाविर्याद्

16. My[1] ⁰वृजन⁰ for ⁰प्रजनन⁰

19. T. My[4] My[1-2] अपेतर आर्ध्नीत C. अपेतरां आर्ध्नीत for अपेतस्तदार्ध्नीत

तदेतत् पूर्वाचार्यमतेन व्याचष्टे—

**नौधसप्रतिषेध इत्याचार्याः ॥१४॥**

इति । अनेन प्राकृतब्रह्मसाम्नो नौधसस्य निन्दया प्रतिषेधः क्रियते ॥१४॥

कथमित्यत आह—

**निरुक्तनिधनत्वात् ॥१५॥**

इति । नौधसस्य यथाध्ययनं प्रत्यक्षनिधनत्वादित्यर्थः । द्यौतानं पुनः परोक्षनिधनम् । तथा च कात्यायनेन प्रतिहारग्रन्थे **अथ छन्ननिधनानि इडोपायास्तदाकृतिः** (प्र. सू. १५.१-२) इत्युपक्रम्य **द्यौतनयोरा ईन्द्रा आ आग्नाइ** (प्र. सू. १५.२३) इति परोक्षं शाखान्तरीयं निधनमुक्तम् । तत्प्रशंसां कृत्वा नौधसस्य प्रतिषेधकमिदं ब्राह्मणम् । तस्य चायमर्थः । यदि नौधसं ब्रह्मसाम कृत्वा यथाध्ययनं प्रत्यक्षं **निधनमुपेयुस्तदा गृहपतिरेवर्ध्नुयात्** । स हि सर्वत्र साक्षात् फलभागी तस्य राद्धिः सर्वेषामित्याश्वलायनवचनात् । ब्रह्मसाम च फलाशीस्थानम् । ब्रह्मसाम्नि यः कामो यजमानस्य स्यात् स सिध्यत्विति ध्यायन्नुपासीतेत्युक्तत्वात् । एवं सति साक्षान्निधनकरणे साक्षात् फलभागी गृहपतिरेव समृद्धो भवेदानुरूप्यात् । इतरस्त्वपार्ध्नुयात् । तस्मात् छन्ननिधनं द्यौतानमेव ब्रह्मसाम श्रेयः ॥१५॥

अथ स्वमतेन व्याचष्टे—

**इन्द्रेति वा द्यौताने निधनं निराहुस्तस्य प्रतिषेधो यथाम्नायमेवोपेयुः ॥१६॥**

---

4. C. तत्र for कथमित्यतः; My[2] T. om. अतः
6. My[1-] My[4] C. यथार्थनिधनं T. यथान्त्यनिधनं for यथाध्ययनं; C My[4] प्रत्यक्षा⁰ for प्रत्यक्ष⁰
9. T. ⁰षेधः किमिदम् for प्रतिषेधकमिदम् (L.10) The Ms. T. ends here.
12. My[2] before राद्धिः adds : राद्धीमनु
14. My[2] ⁰कारणे for ⁰करणे
15. My[2] अप⁰ for अपा⁰; My[2] छन्नं for छन्न⁰; My[1] TC. द्यौताननिधानम् for द्यौतानम्
17. My[1] om. निधनं · · · द्यौताने (P. 490:L. 1)

इति । यदिदं द्यौताने शाखान्तरीयमिन्द्रे ति निधनं प्रयुञ्जते तस्यैवायं प्रतिषेधः । निरुक्तं हि तत् । इन्द्रे ति निष्कृष्यैकदेवताकथनात् । अध्ययनसिद्धं त्वनिरुक्तम् । अनिर्द्धारितैकदेवतात्वेन सर्वसाधारणत्वात् । तस्माद् यथाध्ययनमेव द्यौतानस्य निधनमुपेयुरिति । इदानीमयं ब्राह्मणार्थः । इन्द्रे ति प्रधानैकदेवतायां निष्कृष्य कथने प्रधानस्यैव गृहपतेः फलं स्यात् । नेतरेषामिति । अत एव द्युतानो गृहपतिर्नूनमात्मनः परेषां च साधारणमिदमनिरुक्तं निधनमपश्यत् ॥१६॥

अथ दक्षिणाद्रव्यविधायकमुष्णीषं च प्रतोदश्च (तां. ब्रा. १७.१.१४) इत्यादि ब्राह्मणम् । तत्राप्रसिद्धान्युपादाय व्याचष्टे—

**उष्णीषं च प्रतोदश्चेति उष्णीषं च यत्तिर्यङ्नद्धं भवत्यव्रात्यानाम् ॥१७॥**

इति । यत्तिर्यक्शिरोवेष्टनं तदुष्णीषम् ॥१७॥

**धनुष्केणानीषुणा व्रात्याः प्रसेधमाना यान्ति सज्याह्लोडः ॥१८॥**

येनेषुरहितेन केवलं धनुष्काण्डेन पश्वादीन्निवारयन्तो यान्ति स ज्याह्लोडः ॥१८॥

**विपथश्च फलकास्तीर्ण इति कम्पमिश्राभ्यामश्वाश्वतराभ्यां रथो युक्तः स्यादिति शाण्डिल्यः ॥१९॥**

---

1. My[1] प्रयुञ्जीत for प्रयुञ्जते
2. My °सिध्यत्वात्° for °सिद्धं त्वन्°
6. My[1] आम्नान My[4] आम्नातः for आत्मनः, My[2] न तम for नूनम्; My[2] om. इदं; My[2] निरुक्त° for निरुक्तं
9. My[2]निषिद्धं for नद्धं
10. C. व्रात्यानां for अव्रात्यानाम्
12. C. सेज्याक्रोडम् for स ज्याह्लोडः ·
13. C. स ज्याक्रोडः for स ज्याह्लोडः
16. M. यथोक्तः for रथो युक्तः

अदान्ततयाश्वो रथं कम्पयति स कम्पः। तत्सहितौ कम्पमिश्रौ। तत्राश्वतरयोः स्वयमेव गतिभेदाद् दान्तमिश्रत्वाच्च तद् युक्तम्। कुटिलगामी रथो विपथ इत्युच्यते ॥१९॥

**याभ्यां काभ्यां चाऽश्वाभ्यामश्वतराभ्यां वेति धानंजय्यः ॥२०॥**

अश्वाश्वतरयोर्गतिभेदादेव विपथत्वसिद्धेः कम्पमिश्रतादरणीयेति धानंजय्यो मन्यते ॥२०॥

**इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले प्रथमः खण्डः ॥१॥**

---

2. My[1] My[4] C. युक्तः for युक्तम्

## द्वितीयः खण्डः

**कृष्णशं वास इति कृष्णं कद्रुमिश्रमिति शाण्डिल्यः ॥१॥**

कद्रुमिश्रं पैङ्गल्ययुक्तम् ॥१॥

**शुक्लं कृष्णदशमिति गौतमः ॥२॥**

कृष्णा दशा यस्येति कृष्णदशम् । दकारलोपश्छान्दसः ॥२॥

**कृष्ण इत्येवं मन्यत इति धानंजय्यः ॥३॥**

कृष्णमेवाहं कृष्णशं मन्ये । लोमश इति वन्मत्वर्थीयः शप्रत्ययः ॥३॥

**कृष्णवलक्षे अजिने इति ॥४॥**

**यावविकौ द्वाभ्यामेकैकोऽविभ्यां क्रीतः स्यात् तयोः पार्श्वसंहिते कृष्णवलक्षे अजिने स्याताम् ॥५॥**

यावव्ी कृष्णशुक्लौ महार्घतया प्रत्येकं द्वाभ्यामविभ्यां क्रीतौ तयोरजिने समाधाय तन्तुभिः पार्श्वतः संहिते कृष्णवलक्षे ॥५॥

**वलक्षमिति श्वेताख्या ॥६॥**

स्पष्टम् ॥६॥

**रजतो निष्कस्तद्गृहपतेरित्येतत् सर्वं गृहपतिराहरेत् ॥७॥**

उष्णीषप्रतोदादि रजतनिष्कस्तद्गृहपतेः । तत्सर्वं गृहपतिराहरेदिति

---

2. My[1] कृष्णः for कृष्णं
5. My[1] after छान्दसः adds: इति मन्यते
6. My[2] एवमन्ये for एवं मन्यते
9. M. आविकौ for अविकौ
   C. trans. एकैकः after अविभ्यां
   My[4] सहिते for संहिते; My[1-4] C. after संहिते add : कृते
11. C. महागमितया My[1] महत्तया for महार्घतया; My[2] क्रीतो for क्रीतौ
12. My[2] सहिते for संहिते
16. My[2] om. उष्णीष°····आहरेदिति

(ब्राह्मणम्) । उष्णीषप्रतोदादि रजतनिष्कान्तं दक्षिणाद्रव्यं गृहपतिः संपादयेदिति ब्राह्मणार्थः । तद्गृहपतेरिति षष्ठीनिर्देशात् स्रगुद्गातुः (द्रा. श्रौ. २५.२.८) इति वत् संप्रदानत्वशङ्कानिवृत्यर्थमुक्तम् ॥७॥

**त्रयस्त्रिंशतं च ॥८॥**

गवां त्रयस्त्रिंशतं गृहपतिः संपादयेत् । त्रयस्त्रिंशता त्रयस्त्रिंशता गृहपतिमभियान्ती (द्रा. श्रौ. २३.२.१८) ति वचनात् गृहपतेरपि त्रयस्त्रिंशत्संपादनं कार्यमिति वक्ष्यामः ॥८॥

**द्विस्त्रयस्त्रिंशतमिति धानंजय्यः ॥९॥**

द्वौ त्रयस्त्रिंशद्वर्गौ इत्यर्थः ॥९॥

**वलूकान्तानि दाम तुषाणीतरेषामित्याविकानि लोहितप्रवाणानि वसनानि स्युः ॥१०॥**

लोहितप्रवाणानीति । प्रवाणं नाम वस्त्रस्य निर्माणोपक्रमदेशः । वलूकमिति लोहिताभिधानम् ॥१०॥

**दामतूषाणीति दामदशानि स्युः ॥११॥**

रज्जुरूपदशानीत्यर्थः ॥११॥

**दशाख्या तूषमिति ॥१२॥**

स्पष्टम् ॥१२॥

---

1. My कर्षणा⁰ for दक्षिणा⁰; My[1] निष्कः for ⁰निष्कान्तं
5. My[2] after ⁰शतं adds : चेति
8. My[2] My[4] C. द्वि⁰ for द्विस्
9. My[2] ⁰वर्षौ for ⁰वर्गौ
10. My[1] प्रमाणानि for ⁰प्रवाणानि
12. My[1] प्रमाणं for प्रवाणं
14. My[1] ⁰तुषाणि for ⁰तूषाणि

**द्वे द्वे दामनी इति ॥१३॥**

द्वे द्वे एकैकस्य वसनस्य दशे स्याताम् इति । प्रतिवस्त्रमुभयोरावृतयोस्तन्तवो वेष्टिताः । न पुनरेकस्मिन्नित्यर्थः ॥१३॥

**द्वे द्वे उपनहाविति कृष्णाः कर्णिन्य इति शाण्डिल्यो याः काश्चेति धानंजय्यः ॥१४॥**

कर्णसदृशं पादाङ्गुष्ठवेष्टनं चर्मकर्णम् ॥१४॥

**द्विषंहितान्यजिनानीति पूर्वाभ्यामजिनाभ्यां व्याख्यातानि ॥१५॥**

पार्श्वतः संहितमजिनद्वयं द्विषंहितम् ॥१५॥

**तच्चेतरेषामेकैक आहरेत् ॥१६॥**

वलूकान्तप्रभृति द्विषंहितान्तं व्रात्याः प्रत्येकमाहरेयुः ॥१६॥

**त्रयस्त्रिंशतं च ॥१७॥**

एकैक इत्येव ॥१७॥

कुत इत्यत आह--

**त्रयस्त्रिंशता त्रयस्त्रिंशता गृहपतिरभिसमायन्तीति ॥१८॥**

इति । वीप्साश्रुतेरिति शेषः । अत्र **गृहपतिमभिसमायन्तीति** वचनं गृहपतिसंपादितेन त्रयस्त्रिंशद्वर्गेण संसृजेयुरित्येवं परम् । अन्यथानर्थकत्वात् । संगता हि ते पूवम् ॥१८॥

**त्रयस्त्रिंशतमृत्विग्भ्यो दद्युः ॥१९॥**

स्पष्टमेतत् । उत्तरविवक्षार्थं वचनम् ॥१९॥

**व्रात्येभ्यो व्रात्यधनानि ये व्रात्यचर्याया अविरताः स्युर्ब्रह्मबन्धवे वा मगधदेशीयाय ॥२०॥**

तत्र ब्राह्मणमुदाहरति—

---

4. M. कृष्टाः for कृष्णाः; My[4] कण्ठिन्यः for कर्णिन्यः;

6. My[4] कण्ठ⁰ for कर्ण⁰, My[4] ⁰कण्ठम् for ⁰कर्णम्

**यस्मा एतद्ददति तस्मिन्नेव मृजनायन्तीति ।।२१।।**

श्रुतेरिति शेषः। एतद्धि व्रात्यधनं यस्मा एतद्ददतीति वाक्यस्वरसादेवं गम्यते। व्रात्यधनं तावद्व्रात्येभ्य एतद्देयम् । यस्मै व्रात्याय दीयते तस्मिन्नेव आत्मीयं पापं निर्मृज्य सुखं गच्छन्तीति ।।२१।।

**तैरिष्ट्वा त्रैविद्यवृत्तिं समातिष्ठेयुः ।।२२।।** ५

तदूर्ध्वं निर्विशङ्कास्त्रैविद्यवत् सर्वं समाचरेयुः ।।२२।।

**तेषां तत ऊर्ध्वं भुञ्जीत याजयेच्चैनान् ।।२३।।**

त्रैविद्योऽपि साधुवृत्तोऽपि निर्विशङ्कं त्वद्गृहे भुञ्जीतैव ।।२३।।

**इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले द्वितीयः खण्डः ।।२।।** ६

2. My[1] My[4] स्वरत्वात् for स्वरसात्

# तृतीयः खण्डः

**इन्द्रो वै त्रिशिरसं त्वाष्ट्रम्** (तां. ब्रा. १७.५.१) इत्यारभ्य पञ्चभिरनुवाकैरग्निष्टुतो विहिताः। ते चत्वार एवेति कल्पकारस्य पक्षः। इदानीं स्वमतमाह—

**षडग्निष्टुतः ॥१॥**

इति ॥१॥

ननु **त्रिवृदग्निष्टोमस्तस्य वायव्यासु** (तां. ब्रा. १७.६.१) इति चतुर्भिरनुवाकैश्चत्वार एव भिन्ना दृश्यन्ते। नान्यः। अत आह—

**त्रिवृज्ज्योतिष्टोमश्चाद्यौ स्वर्क्कवारवन्तीयावधिकारकामनानात्वात् ॥२॥**

इति। स्वा एवर्चो यस्य तत् स्वर्क्कम्। तथा भूतं वारवन्तीयं ययोस्तौ **स्वर्क्कवारवन्तीयौ** प्रथमानुवाकेनोक्तौ। उत्तरैरनुवाकैस्तु परकीयर्ग्वारवन्तीयाश्चत्वार इत्येवं षडग्निष्टुतः। कुतः। अधिकारभेदात् कामभेदाच्च। अधिकारः प्रस्तावः। **इन्द्रो वै त्रिशिरसम्** (तां. ब्रा. १७.५.१) इति पृथक् प्रस्तावो दृश्यते। तथा उत्तरचतुष्टयसाध्येभ्यो ब्रह्मवर्चसादिभ्यः पृथगेवात्र फलमुपदिश्यते। **योऽपूत इव स्यात्सोऽग्निष्टुता यजेत** (तां. ब्रा. १७.५.३) इति। यथा **शुचिः पूत उदेती** (तां. ब्रा. १७.५.७) ति च। तत्र **तदाहुर्यत् त्रिवृद् भवती** (तां. ब्रा. १७.५.४) त्यतः पूर्वेणांशेन ब्रह्महत्यापनोदनार्थं त्रिवृदग्निष्टोमस्वर्क्कवारवन्तीय उक्तः। उत्तरेणांशेन ज्योतिष्टोमः ॥२॥

पक्षान्तरमाह—

**न वा त्रिवृदविशेषात् ॥३॥**

इति। न प्रथमेऽनुवाके त्रिवृदस्ति। उत्तरेऽनुवाके वक्ष्यमाणेन त्रिवृता सहास्य विशेषाभावदत्रापि तदेव फलं कीर्त्यते। **अग्निनैवास्य पाप्मानमपहत्य त्रिवृता तेजो ब्रह्मवर्च्चसं ददाती** (तां. ब्रा. १७.५.३) ति ॥३॥

---

6. My[1] T. ष्टोमस्तोमस्य for °ष्टोमस्तस्य;
My[1] वामव्यासु त्रि° for वायव्यास्विति

12. My[1] कारि° for °कार°; My[2] कमना° for काम°

17. My[1] °हत्यात्यप° C. हन्यस्वप°, My[2] °हत्याद्यप for °हत्याप°

21. My[2] उत्तरानु° for उत्तरेऽनु°; My[1] C. वाकेम for °वाके

23. My[2] दधाति for ददाति

ननु च स्वर्क्कवारवन्तीयमित्यस्त्येव विशेषः । अत आह—

**परे च वारवन्तीयातिदेशात् ॥४॥**

इति । ज्योतिष्टोम एव कार्य इत्यधिकृत्य परस्मिन् ज्योतिष्टोम एव वारवन्तीयं विधीयते । न पूर्वत्रेति । तेन विशेषोऽस्ति ॥४॥

**क्रतुषु चानुवाक नानात्वात् ॥५॥**

भिन्नेष्वेव क्रतुषु अनुवाकभेदो दृश्यते । इह च पञ्चानुवाका इति पञ्चाग्निष्टुतो न चत्वारः । तेन प्रथमानुवाके ब्रह्मवर्चसकामस्य ज्योतिष्टोमोऽग्निष्टुद् विहितः । तत्प्रशंसार्थः त्रिवृत्स्तोत्रोपक्षेपो न स्वार्थः इति । तथा च पञ्चाग्निष्टुत इति भरद्वाजमतम् ॥५॥

मतान्तरमाह—

**स्मृतेश्चत्वार इत्याचार्याः ॥६॥**

इति । कल्पकारस्य स्मृतेरित्यर्थः स हि चतुर्णामिव क्लृप्तिमाह ॥६॥

तस्यैव किं मूलमिति चेदत आह—

**पुनराम्नानात्त्रिवृज्ज्योतिष्टोमयोः ॥७॥**

इति । **त्रिवृदग्निष्टुदग्निष्टोमः ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत** (तां. ब्रा. १७.८.१) इति **त्रिवृज्ज्योतिष्टोमयोः** पुनराम्नानं भवतीति तदनर्थकं स्यात् यदि प्रथमानुवाकेऽपि तौ विहितौ स्याताम् ॥७॥

किमर्थस्तर्हि प्रथमोऽनुवाकः । अत आह --

**सर्वेषां च सार्ष्टोऽनुवाक आद्यो गवामयनवत् ॥८॥**

इति । सर्वेषां चतुर्णामप्यग्निष्टुतां सृष्टिप्रतिपादनार्थः **सार्ष्टोऽनुवाकः**

---

1. C. अस्य for अस्ति

6. My[1] फलं च for च पञ्च; C. इदं for इह

8. My[1-3] C. प्रशंसर्थ for प्रशसार्थः

9. My[2] भार॰ for भर॰

18. C. क्रिमर्थं for क्रिमर्थः

साधारणः। कथम्। **स एतदग्निस्तोत्रमपश्यत्** (तां. ब्रा. १७.५.१) इति चतुर्णामपि साधारणं जातावेकवचनम्। तथा वारवन्तीयमग्निष्टोमसामकार्यमपि सर्वसाधारणम्। **योऽपूत इव स्यात् सोऽग्निष्टुता यजेत। ज्योतिष्टोम एव कार्यः।** (तां. ब्रा. १७.५.३-५) इत्येतदुभयमपि वक्ष्यमाणयोस्त्रिवृज्ज्योतिष्टोमयोरनुवादः। न पृथग्विधिः। एतत्कल्पकारस्य मतम्। सूत्रकारस्य नायं पक्षः। कथम्। **इन्द्रो वै त्रिशिरसम्** (तां. ब्रा. १७.५.१) इत्युपाख्यानात् अभिशस्ताधिकरणे स्ववर्कवारवन्तीययोरेव त्रिवृज्ज्योतिष्टोमयोर्विधानावगतेः। वक्ष्यमाणयोस्तु त्रिवृज्ज्योतिष्टोमयोर्ब्रह्मवर्चसं यज्ञविभ्रंशसमाधानं च फलमिति महान् भेदोऽस्ति। न च तयोः प्रथमेऽनुवाकेऽनुवादः। **तदाहुर्यत् त्रिवृद्भवती** (तां. ब्रा. १७.५.४) त्यारभ्य अभिशस्तप्रायश्चित्ते त्रिवृत्पक्षापरितोषेण ज्योतिष्टोमविध्यवगमात्। उत्तरयोस्तु पृथगेव फलार्थयोः कथं परितोषेणानुवाद इति। यथा गवामयने **गावो वा एतत् सत्रमासत** (तां. ब्रा. ४.१.१) इत्यभिप्लवादीनां सृष्टिप्रतिपादकोऽनुवाकः। तद्वत् ॥८॥

यत् पुनरुक्तमनुवाकभेदे क्रतुभेद इति तदप्यनियतमित्याह—

**न वानुवाक नानात्वात् क्रतुपृथक्त्वम्। यथा ज्योतिष्टोमेनानुवाकानाम्। यथा चतुर्मास्यवाजपेयराजसूयगर्गत्रिरात्रेषु ॥९॥**

इति। ज्योतिष्टोमविधानेऽनुवाकभेदेऽप्येक एव क्रतुः। तथा चातुर्मास्यादिष्वपि ॥९॥

---

1. My[1] My[4] एव तत् for एतत्
2. C. एव for अपि
3. C. एव for इव
6. My[4] ⁰शास्त्र⁰ for ⁰शस्ता⁰
7. C. om. तु
10. C. ⁰श्चिते for ⁰श्चित्ते C. परि⁰ for अपरि⁰
11. C. अपरि⁰ for परि⁰
12. My[1-4] ⁰वादः for ⁰वाकः
15. My[1-4] C. चाशु⁰ for वानु⁰
17. My[1] विधनम् My[2] ⁰विधौ for ⁰विधाने

अथ त्रयस्त्रिवृत एकाहे विहिताः । प्रजापतेरपूर्वो बृहस्पतिसवः सर्वस्वार इति ।ताननुसंधत्ते—

**तेष्वनडुहामश्वानामजानामिति यथोत्साहं दद्यात् । तथा हिरण्यस्य ॥१०॥**

इति । स्पष्टम् ॥१०॥

**कंचिदर्थमर्हन् यो न वाप्नुयात् स त्रिवृता प्रथमेन यजेत । तस्य चतुर्युगश्वरथो दक्षिणास्तेषामेकः श्यावः स्यात् ॥११॥**

चतुर्भिरश्वैर्युक्तश्चतुर्युक् । तेषामश्वानामेकः कपिशः स्यात् ॥११॥

**यं ब्राह्मणाः सराजानः पुरस्कुर्वीरन् बृहस्पतिसवेन यजेत् ॥१२॥**

यं स्थापत्यायाभिषिञ्चेरन् (तां. ब्रा. १७.११.६) इति ब्राह्मणम् । तद्व्याख्यानमिदं सूत्रम् । स्थपतिर्नाम धर्माणां व्यवस्थापकः इति भारद्वाजेनोक्तम् । तेनायमर्थः । राज्ञा सह ब्राह्मणाः यं ब्राह्मणं धर्मस्थापकत्वेन वृणीरन् तस्य बृहस्पतिसवो नैमित्तिकः । न काम्यः । स्थापत्यस्य पूर्वमेव सिद्धत्वात् । यथा लब्धहिरण्यस्य नैमित्तिकेष्टिः । तद्वत् ॥१२॥

**तस्य प्रातःसवने सन्नेषु नाराशंसेष्वेकादश दक्षिणा व्यादिशति ॥१३॥**

श्रुतिसिद्धमेवेदमुक्तं व्यादिशतीति पदस्यार्थं दर्शयितुम् ॥१३॥

तद्दर्शयति—

**ऋत्विग्भ्यो नापाकुर्यात् ॥१४॥**

इति । प्रातः सवने दक्षिणानां व्यादेशः । युष्माकमेतदिति निर्देशमात्रं कार्यम् नापाकरणम् ॥१४॥

**अश्वद्वादशा माध्यंदिने ॥१५॥**

अश्वा द्वादश यासां ता अश्वद्वादशा गावः ॥१५॥

---

1. My[1] यत्र for त्रय:

8. My[2] कपिलः for कपिशः

16. CM. व्यादिशत् My °दिशन्ति for °दिशति

23. My[2] मध्यं for माध्यं°

**ता उभयोरपाकुर्यात् ॥१६॥**

ताश्च पूर्वोक्ताश्च माध्यंदिनकालेऽपाकुर्यात् ॥१६॥

**एकादश तृतीयसवने ता अनुबन्ध्य वपायां हुतायामपाकुर्यात् ।**

**तान्यप्येकादशैकादशशतानि स्युः सहस्राणि वा ॥१७॥**

यान्येकादशोक्तानि तानि शतानि सहस्राणि वा स्युः । शाखान्तरे तथा विधानात् ॥१७॥

**नित्यस्त्वश्वो मध्यंदिने ॥१८॥**

शाखान्तरीयेऽपि पक्षे नित्य एवाश्वो न निवर्तते ॥१८॥

**य एवं पुरस्कुर्वीरन्नन्वग्भूतवृत्ति तत ऊर्ध्वं तेषु वर्तयेत् ॥१९॥**

अन्वग्भूतः शिष्यादिः । तद्वृत्तिं तेषु कुर्यात् । पुरस्कृतोऽहमिति न दर्पः कार्यः इत्यर्थः ॥१९॥

**स्थपतिरिति चैनं त आचक्षीरन् ॥२०॥**

ते च पुरस्कर्तारः स्थपतिरित्येनं ब्रूयुः । तस्य नाम न गृह्णीयुः ॥२०॥

**श्येनेनेषुर्व्याख्यातः ॥२१॥**

अत्र सर्वस्वारात् पूर्वमिषुर्नामैकाहः शाखान्तरात् कल्पकारेण क्लृप्तः । स श्येनवत् कार्यः ॥२१॥

तद्वदेव साद्यस्क्रत्वे प्राप्ते निवृत्त्यर्थमाह—

**दीक्षोपसदस्त्वस्यैकाहिक्यः ॥२२॥**

इति । एकाहयुक्तास्तस्य दीक्षोपसदः स्युः । न साद्यस्क्रोऽयमित्यर्थः ॥२२॥

**इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले तृतीयः खण्डः ॥३॥**

---

5. My[2] after यानि ins. एतानि

15. C. अतः for अत्र

19. My[2] °युक्तस्य for °युक्तास्तस्य

## *चतुर्थः खण्डः

**सर्वस्वारेण यक्ष्यमाणो दीक्षाप्रभृति प्रयतेत यथा सौत्येऽहनि प्रेयामिति ॥१॥**

[अग्निष्टुतः प्रकृताः । तत्र सर्वस्वारस्य ब्राह्मणम्—त्रिवृदग्निष्टोमः स सर्वस्वारो यः कामयेतानामयतामुं लोकमियामिति स एतेन यजेते (तां. ब्रा. १७.१२.१) ति । तस्य सर्वस्वारस्य विधिरुच्यते । सर्वाण्यस्मिन् स्वराणीति सर्वस्वारः । तेन **सर्वस्वारेण यक्ष्यमाणो** दीक्षाभ्य आरभ्य **प्रयतेत** प्रयत्नं कुर्यात् । **यथा सौत्येऽहनि प्रेयां** म्रियेयमिति । दीक्षास्तस्यापरिमिताः कुर्यात् ॥१॥]

**प्राणभक्षान् सर्वत्र भक्षान् भक्षयेत् ॥२॥**

[दीक्षाभ्य आरभ्य यावन्तो भक्षास्तान् सर्वान् **प्राणभक्षान् भक्षयेत्** । न प्रत्यक्षभक्षान् । सर्वग्रहणाद्व्रतमपि प्राणभक्ष एव ॥२॥]

**तानपोऽभ्यवहारयेत् कर्ते वानुषेचयेतत् ॥३॥**

[**तान्** भक्षान् **अपः अभ्यवहारयेत्** अप्सु प्रक्षिपेत् । **कर्ते वा** प्रक्षिपेत् । खाते वा **अनुषेचयेत्** ॥३॥]

**सोममद्भिः संसृज्य मार्जालीयसदेशे निनयेयुः ॥४॥**

[**सोमं** प्राणभक्षं भक्षितम् **अद्भिः संसृज्य** मार्जालीये उत्कृष्टे देशे **निनयेयुः** । संसर्गो मिश्रणम् ॥४॥]

**आर्भवे पवमाने स्तूयमाने दक्षिणेनौदुम्बरीं कृष्णाजिनमुपस्तीर्य दक्षिणशिराः प्रावृतो निपद्येत । तदेव संगच्छते । तदेव म्रियते इति ॥५॥**

---

*In all MSS we consulted the Commentry of Dhanvin on this khanda is missing. We have therefore, given here in square brackets the Commentry of Agnisramin on these sutras from the Latyayana-Shrauta-Sutra.

15. ला.श्रौ. °सदेशे for °देशे

18. ला.श्रौ. उदुम्वर्या दक्षिण । for दक्षिणेनौदुम्बरीं°

19. ला.श्रौ. trans. कृष्णाजिन····°शिराः after निपद्येत

[इह ब्राह्मणम्—आर्भवे पवमाने स्तूयमान औदुम्बर्या दक्षिणे प्रदेशे कृष्णाजिनमुपस्तीर्य दक्षिणशिरा निपद्येत । संविशेत् । तदेव संगच्छते । तदेव म्रियते (तां. ब्रा. १७.१२.५) इति । संगमनं मरणम् ।।५।।]

**एतं मृतं यजमानं हविर्भिः सहर्जीषैर्यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरिति शाण्डिल्यः ।।६।।**

[एतं मृतं यजमानं हविर्भिः सहर्जीषैः यज्ञपात्रैश्चाहवनीये प्रहृत्य प्रव्रजेयुरित्येवं शाण्डिल्यो मन्यते । प्रहरणं प्रक्षेपः । प्रव्रजेयुरिति एतावन्तमेतत् कर्मेति विज्ञापयति । अथ एतं मृतं यजमानमिति किमर्थम् उच्यते । एतमेव सर्वस्वारे यजमानं मृतम् एवं कुर्युः । अन्यत्र तु मृते यजमाने समापयेयुः शेषमिति ।।६।।]

**समापयेयुः शेषमिति धानञ्जय्यः ।।७।।**

[धानञ्जय्य आह समापयेयुरेव शेषमिति ।।७।।]

**समापयेयुश्चेदिति शाण्डिल्यायनो नेदिष्ठी तत् कृष्णाजिनं प्रतिमुच्य याजमानं कुर्याद्भक्षांश्च भक्षयेत् ।।८।।**

[शाण्डिल्यायन आह यदि समापयेयुः शेषं कर्म ततो यद्यजमानस्य कृष्णाजिनं तत्पुत्रो भ्राता वा यो नेदिष्ठी स्यात् स तत् प्रतिमुच्य आवृत्य याजमानं कर्म कुर्यात् । भक्षांश्च भक्षयेत् त (?पूर्व) त्र हि यजमानस्य प्राणभक्षं (क्षान् ?) सर्वत्र भक्षान् भक्षयेत् (द्रा. श्रौ. २३.४.२) इत्युक्तम् । अयं (?त्र) तु पुनर्भक्षं भक्षयेत् इति ।।८।।]

**ऋत्विजो याजमानं कुर्युः सर्वहुतोभक्षान् जुहुयुरिति धानञ्जयः ।।९।।**

---

4. ला.श्रौ. सहजीषे for सहर्जीषैः

6. The commenry reads सहजीषेण

13. ला.श्रौ. reads this sutra (16) पश्चाद्गार्हपत्यमुपदध्युः पुरस्तादाहवनीयं पश्चिमेन गार्हपत्यं दक्षिणत आग्नीध्रीयं परिहरेयुः .। The ला.श्रौ. dose not speak of अन्वाहार्यपचन and दक्षिणाग्नि while the द्रा.श्रौ. of आग्निध्रीय. We have therefore, made the changes in the commentery given here as warranted by the readings found in the द्रा.श्रौ.

[धानञ्जय आह ऋत्विजो याजमानं कुर्युः। ये याजमानस्य भक्षास्तान् सर्वहुतो जुहुयुरिति ॥९॥]

संस्थितेऽहनि सन्त्वा हिन्वन्तीत्यासन्द्यङ्गानि समाहरेयुः ॥१०॥

[संस्थिते सप्तमेऽहनि हुते समिष्टयजूंषि सन्त्वा हिन्वन्तीत्यनेन साम्ना आसन्द्योरङ्गानि समाहरेयुः। आसन्दी मञ्ची ॥१०॥]

सन्त्वा रिणन्तीति प्रक्षालयेयुः ॥११॥

[सन्त्वा रिणन्तीति साम्ना प्रक्षालयेयुस्तान्यासन्द्यङ्गानि ॥११॥]

सन्त्वा ततक्ष्णुरिति तक्ष्णुयुः ॥१२॥

[सन्त्वा ततक्ष्णुरित्यनेन साम्ना तक्ष्णुयुस्तान्यङ्गानि ॥१२॥]

सन्त्वा शिशन्तीति विवयेयुः ॥१३॥

[सन्त्वा शिशन्तीत्यनेन साम्ना तान्यासन्द्यङ्गानि विवयेयुः ॥१३॥]

तयैनमवभृथꣳहृत्वा सोमोपनहनेन प्रच्छाद्यानूबन्ध्यवपायाꣳ हुतायां दक्षिणे वेद्यन्ते केशश्मश्रूण्यस्य वापयेयुः ॥१४॥

[तया आसन्द्या एनं यजमानम् अवभृथं हृत्वा सोमोपनहनेन वाससा प्रच्छाद्य अनूबन्ध्यपशोर्वपायां हुतायां महावेदेर्दक्षिणे प्रदेशे केशश्मश्रूण्यस्य यजमानस्य वापयेयुः वपनं कारयेयुः ॥१४॥]

अनूबन्ध्यशेषं समाप्य मध्ये देवयजनस्य चितां चिनुयुः ॥१५॥

[अनूबन्ध्यस्य पशोः शेषं समाप्य देवयजनस्य मध्ये काष्ठैश्चितां चिनुयुः ॥१५॥]

पुरस्तादाहवनीयम् (उपदध्युः) पश्चाद्गार्हपत्यं दक्षिणतोऽन्वाहार्यपचनं पश्चिमेन गार्हपत्यं दक्षिणाग्निं मध्येशरीरम् ॥१६॥

[तस्याश्चितायाः पुरस्तात् पूर्वे प्रदेशे आहवनीयम् अग्निं स्थापयेयुः। पश्चात् पश्चिमे प्रदेशे गार्हपत्यमग्निं स्थापयेयुः। दक्षिणतः दक्षिणे प्रदेशे अन्वाहार्यपचनम् अग्निम्। गार्हपत्यं पश्चिमेन प्रदेशेन परिहृत्य निदध्युः। दक्षिणाग्निं मध्येशरीरम् उपदध्युः ॥१६॥]

**तं दक्षिणाशिरसं चितावाहितं यज्ञपात्रैः कल्पयेदध्वर्युः ॥१७॥**

[तं यजमानं दक्षिणाशिरसं चितावाहितम् आरोपितं यज्ञपात्रैः कल्पयेत् संयोजयेदध्वर्युः । तस्य हि व्यापारो यज्ञपात्रैः ॥१७॥]

**शिरसि कपालानि नियुञ्ज्यात् ॥१८॥**

[शिरसि यजमानस्य कपालानि कुर्यात् । कपालानि येषु पुरोडाशाः संस्क्रियन्ते ॥१८॥]

**समोप्तधानं च चमसम् ॥१९॥**

[समोप्तधानं यस्मिन् हवींषि सर्वाणि समोप्यन्ते । इडापात्रमित्यर्थः । तच्च शिरसि स्थापयेत् ॥१९॥]

**ललाटे प्राशित्रहरणम् ॥२०॥**

[येन प्राशित्रं ह्रियते चमसे तल्ललाटे स्थापयेत् ॥२०॥]

**नासिकयोः स्रुवौ ॥२१॥**

[नासिकयोः स्रोतसि स्रुवौ स्थापयेत् ॥२१॥]

**आस्ये हिरण्यमवधायानुस्तरणिक्या गोर्वपया मुखं प्रच्छाद्य तत्राग्निहोत्रहवनीं तिरश्चीम् ॥२२॥**

[यजमानस्य आस्ये मुखे हिरण्यं प्रक्षिप्य यानुस्तरणिकी गौस्तस्या वपया मुखं प्रच्छाद्य यजमानस्य तत्र तस्मिन् मुखे अग्निहोत्रहवनीं स्रुचं तिरश्चीं स्थापयेत् प्राङ्मुखीम् ॥२२॥]

**दक्षिणे पाणौ जुहूम् ॥२३॥**

[दक्षिणे पाणौ जुहूँ स्रुचं स्थापयेत् । तिरश्चीमिति [अनु] वर्तते ॥२३॥]

**सव्य उपभृतम् ॥२४॥**

[सव्ये पाणौ उपभृतं स्रुचं स्थापयेत् । तिरश्चीमेव ॥२४॥]

---

1. ला. श्री. om. अध्वर्युः but it is found in the commentery of Agnisramin

5. ला. श्री. युञ्ज्यात् for नियुञ्ज्यात्

15. ला. श्री. गोर्मुखं वपया for गोर्वपया मुखं

**पार्श्वयोः स्फ्ये ॥२५॥**

[पार्श्वयोरुभयोः स्फ्ये स्थापयेत् ॥२५॥]

**तथा वृक्वौ ॥२६॥**

[यथा स्रुचौ तथा वृक्वौ दक्षिणे दक्षिणं सव्ये सव्यम् ॥२६॥]

**उरसि ध्रुवाम् ॥२७॥**

[स्रुचं स्थापयेत् । तिरश्चीमेव ॥२७॥]

**उदरे पात्रीम् ॥२८॥**

[उदरे पात्रीं स्थापयेत् ॥२८॥]

**उपस्थे कृष्णाजिनम् ॥२९॥**

[उपस्थे कृष्णाजिनं स्थापयेत् ॥२९॥]

**अन्तरेण सक्थ्नी शम्यादृषदुपले यच्च नादेक्ष्यामः ॥३०॥**

[सक्थ्नी अन्तरेण शम्यां स्थापयेत् । शम्या च दृषदुपलं च शम्यादृषदुपले । यच्च नादिश्यते यज्ञपात्रं तच्चास्मिन्नेव देशे स्थापयेत् । अरण्यादि [च] ॥३०॥]

**दक्षिणस्योखस्य दक्षिणत ऊलूखलम् ॥३१॥**

[दक्षिणस्योखस्य कटिसन्निकृष्टजघनप्रदेशे उखस्तस्य दक्षिणे प्रदेशे उलूखलं स्थापयेत् ऊर्ध्वं तु ॥३१॥]

**अनुसक्थं मुसलम् ॥३२॥**

[सक्थिमनु अनुसक्थम् । तत्रैव मुसलं स्थापयेत् । पुनः सक्थ्न ऊर्ध्वम् ॥३२॥]

**पादयोः शकटशूर्पे ॥३३॥**

[पादयोः शकटशूर्पे स्थापयेत् । शूर्पं प्रज्ञातमुपकरणद्रव्यम् ॥३३॥]

**सर्वाण्युत्तानान्यासेचनवन्ति पृषदाज्यवन्ति कृत्वा सर्वेभ्योऽग्नि-भ्य उलपराजीस्तृणुयुर्यथास्मिन्नग्नयः समवेयुरिति ॥३४॥**

---

1. ला. श्रौ. om. this sutra (25) and the commentery thereon subsequantly is our own.

17. द्रा. श्रौ. °सक्थिय for °सक्थं

21. ला. श्रौ. om. आसेचनवन्ति

22. ला. श्रौ. समवेष्यन्ति for समवेयुः

[यावन्त्युत्तानानि यज्ञपात्राणि तानि **सर्वाणि** पृषदाज्येन पूरयित्वा **सर्वेभ्योऽग्निभ्य उलपराजीस्तृणुयुः यथास्मिन्** यजमानस्य शरीरेऽग्नयः एकत्र समाधानं करिष्यन्तीति। अथ सर्वग्रहणं किमर्थमिति। अग्निभ्य इत्युक्ते बहुवचनसामर्थ्यात् सिद्धमिदम्। यथा सर्वेभ्य इति। उच्यते। सर्वग्रहणं क्रियते गृह्यस्याप्यग्नेरेवोपयोग इति। अथ किं स्थानं तस्येति। उच्यते। उक्तं **यच्च नादेक्ष्याम** (द्रा. श्रौ. २३.४.३०) इति ॥३४॥]

**आहवनीयाच्चेत्प्रथममेयात् ब्रह्मलोकमेष्यतीति विद्यात्। गार्हपत्याद्देवलोकम्। दक्षिणाग्नेः पितृलोकम् ॥३५॥**

[उक्तम्—**अनन्तो वै स्वरोऽनन्तोऽसौ लोकोऽनन्तमेवैनं स्वर्गलोकं गमयती** (तां. ब्रा. १७.१२.३) ति। अप्रत्यक्षश्चासौ स्वर्गस्तस्य स्वर्गस्य प्राप्तिरुच्यते। **यद्याहवनीयं प्रथम**मागच्छेत् अग्निर्यजमानं तत एवं जानीयात् ब्रह्मलोकं गमिष्यति यजमान इति। यदि गार्हपत्यं प्रथममागच्छेत् देवलोकं यास्यतीति विद्यात्। अथ दक्षिणाग्निं प्रथममागच्छेत् पितृलोकं यास्यतीति विद्यात्। यदुक्तम् **अनन्तमेवैनं स्वर्गं लोकं गमयती** (तां. ब्रा. १७.१२.३) ति तदेषु स्थानेषु स्वर्गसंज्ञा। यत् स्थानमागच्छति तदस्यानन्तं भवति ॥३५॥]

**एवमेनं यज्ञपात्रैः क्लृप्तं त्रिश्छन्दोगः परिगायेन्नाके सुपर्णमिति ॥३६॥**

[**एवं यज्ञपात्रैः क्लृप्तमेनं** यजमानं छन्दोगस्त्रिः परिगायेत्। **नाके सुपर्णम्** (ग्रा. गे. ८.६.३२०.१) इत्येतत्साम। अथ छन्दोगग्रहणं किमर्थमिति। यस्य परिसामगानं प्राप्तं स गास्यत्येव। उच्यते। वक्ष्यत्ययम् **एवैवावृत्सर्वाहिताग्नीनाम्** (ला. श्रौ. सू. ८.८.३८) इति। तदस्मिन्नपि त्रिश्छन्दोगः परिगायेदिति ॥३६॥]

**धूम उदिते त्वेषस्ते धूम ऋण्वतीति ॥३७॥**

[यदा **धूम** उद्गच्छेत् तदा तस्मिन्नुदिते **त्वेषस्ते धूम ऋण्वती** (ग्रा. गे. २.६.८३-१) त्येतत्साम गायेत्। त्रिरिति प्रक्रान्तम् ॥३७॥]

---

16. ला. श्रौ. क्लृप्तेषु यज्ञपात्रेषु for एवमेनं यज्ञपात्रैः

18. ला. श्रौ. व्या यदा यज्ञपात्राणि क्लृप्तानि भवन्ति तस्मिन् यजमाने ततः for एवं ····यजमानं

प्रज्वलितेऽग्ने मृडमहां असीत्येतयोरन्यतरेण ॥३८॥

[**प्रज्वलितेऽग्नौ** अग्नेमृडमहांअसी (ग्रा. गे. १.३.२३.१-२) **त्येतयोः** साम्नोः **अन्यतरेण** परिगायेत् । अन्यतरेणेति विकल्पः ॥३८॥]

तथैवावृता वृद्धाः श्रोत्रिया ज्ञातं परिगायन्ति । स एष यज्ञायुधि यजमानः स्वर्गं लोकमेष्यतीति विद्यात् ॥३९॥

जीवेच्चेद् यजेतोदवसानीयया ॥४०॥

[एतत् तावत् कृत्स्नं सर्वस्वारिकमुक्तं कर्म यावत्परिगाणमिति । अथ पुनर्जीवेन्नैव म्रियेत यजमानस्ततः **उदवसानीयया यजेत** । उदवसानीयान्तं कृत्स्नं कर्म समापयेयुरिति । एतदुक्तं भवति मृते तु परिगणान्तमेव कर्म । नोदवसानीयान्तम् इति ॥४०॥]

अभोजनेन तत ऊर्ध्वं मुमूर्षेदिति शाण्डिल्यः ॥४१॥

[**ततस्**तस्मात् कर्मण **ऊर्ध्वम् अभोजनेन मुमूर्षेत्** मर्तुमिच्छेत् । यजमानस्तावन्न भुञ्जीत यावन्मृत इति ॥४१॥]

भुञ्जीत जिजीविषेदेवेति धानञ्जय्यः ॥४२॥

[**धानञ्जय्य** आचार्यः आह **भुञ्जीत** । **जिजीविषेदेवेति** । जीवितुमिच्छेत् ॥४२॥]

तस्य कृतान्नं दक्षिणा ॥४३॥

[**तस्य** सर्वस्वारस्य **कृतान्नं** सक्तुतण्डुलादि **दक्षिणा** । तस्य ग्रहणं किमर्थमिति । उच्यते । जीवितस्य मृतस्य चेति ॥४३॥]

फाल्गुन्यां पौर्णमास्यां चातुर्मास्यान्यारभेत ॥४४॥

[फल्गुनीभ्यां युक्ता फाल्गुनी । तस्यां **फाल्गुन्यां पौर्णमास्यां चातुर्मास्यान्यारभेत** । उक्तम्—**त्रिवृदग्निष्टोमो वैश्वदेवस्य** लोकः (तां. ब्रा. १७.१३.१) इति विधानम् ॥४४॥]

उक्तं कालान्तरं ब्राह्मणेन ॥४५॥

[कालान्तरमुक्तं ब्राह्मणेन । ततश्चतुर्षु मासेषु ॥४५॥]

---

4. ला. श्रौ. एषैवावृत् सर्वाहिताग्नीनाम् for तथैवावृता····विद्यात् (L. 5)

11. ला. श्रौ. om. इति शाण्डिल्यः

**यजनीयेऽहनि वैश्वदेवशुनासीर्ये स्याताम् । उत्तरं च वारुण-प्राघासिकम् ॥४६॥**

[फाल्गुन्यां पौर्णमास्यां दीक्षितस्य यदन्तरस्मिन् पूर्वपक्षे यजनीयमहस्तत्र वैश्वदेवं स्यात् । यजनीयमहः प्रतिपत् । एवमेव शुनासीर्यं यथाकालम् । उत्तरं च वारुणप्राघासिकमहः यजनीय एवाहनि स्यात् ॥४६॥]

**पर्वण्युत्तमꣳसाकमेधानाम् ॥४७॥**

[उत्तममहः पर्वणि स्यात् साकमेधानां सप्तदशस्य । एवं पूर्वपक्षे यज्ञपुच्छं संपद्यते ॥४७॥]

**द्वादशशतꣳशुनासीर्यस्य दक्षिणाः ॥४८॥**

[तत्किमिदमारभ्यते यदा सिद्धमेव ब्राह्मणे द्वादशशतं दक्षिणाः (तां. ब्रा. १६.१.११) इति । उच्यते । इतरार्थ आरम्भः ॥४८॥]

**पञ्चाशदितरेषामह्नामेकैकस्यैकैकस्य ॥४९॥**

[इतरेषां वैश्वदेवादीनाम् एकैकस्याह्नः पञ्चाशत् पञ्चाशत् दक्षिणाः । वरुणप्रघासे शतं दक्षिणा इति पठितम् । साकमेधे पञ्चाशच्छतमिति । ताः प्रत्यहं समत्वविभागेन कल्पयति ॥४६॥]

**इति द्राह्यायणश्रौतसूत्रे त्रयोविंशे पटले चतुर्थः खण्डः ॥४॥**

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे त्रयोविंशः पटलः समाप्तः ॥२३॥**

# चतुर्विंशः पटलः

## प्रथमः खण्डः

अथोपहव्ये क्रतौ **सोऽनिरुक्तमाहरत्** (तां· ब्रा. १८.१.३) इति ब्राह्मणम्। तस्यार्थमाह—

**उपहव्ये देवता नामधेयानि परोक्षं ब्रूयुः स्वस्थानासु ॥१॥**

इति। स्वस्थानस्थासु देवतासु तन्नामधेयं **परोक्षं ब्रूयुः**। प्रर्यायेणेत्यर्थः ॥१॥

**प्रत्यक्षमस्वस्थानासु ॥२॥**

स्वस्थानात् स्थानान्तरगतासु **प्रत्यक्ष**मेव वचनम्। तत्र तावत् सर्वे पवमानाः सोमस्य स्वस्थानम्। तेषां सोमदेवत्यत्वात्। सर्वाणि पृष्ठानीन्द्रस्य स्वस्थानम्। अग्नेरग्निष्टोमस्तोत्रम्। इत्यादि द्रष्टव्यम् ॥२॥

**देवशब्दं सर्वत्र वर्जयेयुः ॥३॥**

सर्वेष्वपि स्तोत्रेषु **देवशब्दं वर्जयेयुः** ॥३॥

**होता देवो महीमित्रस्येत्येते होता यज्ञोमहीयज्ञस्येति ब्रूयुः ॥४॥**

प्रथमद्वितीययोराज्ययोः देवमित्र शब्द [योः] स्थाने यज्ञपदं ब्रूयुरित्यर्थः ॥४॥ तत्र केनचित् पर्यायेण निर्देशे प्राप्ते नियममाह—

**इन्दुरिति सोमम् ॥५॥**

**सुषाव सोममद्रिभिः** (सा. १३१३) इत्यादौ **सुषावेन्दुमिति** ब्रूयुरिति। अत्राग्नेरिन्द्रस्य च स्तोत्रेषु **सोऽनिरुक्तमाहरेद्** (तां· ब्रा. १८.१.३) इति ब्राह्मणानुरोधेन प्रत्यक्षनामरहिता एव स्तोत्रीयाः कल्पकारेण क्लृप्ताः। तेन तत्र प्रत्यक्षनामधेयाभावादेव तत्पर्यायो नोक्तः। उत्तमे स्तोत्रे **यज्ञायज्ञा वो अग्नये** (सा. ३५)

---

5. My[1] स्वस्थानस्थसु for स्वस्थानासु

6. My[1-2] C. स्वस्थानसु for स्वस्थानस्थासु

11. My[1] after वर्जयेयुः। adds : देवमादन इत्यादौ

13. My[1] M. यज्ञे for यज्ञो

14. My[2] आद्यन्तयोः for आज्ययोः

20. My[2] उत्तरे for उत्तमे

इति प्रत्यक्षमेव नामधेयं ब्राह्मणेनानुज्ञातमिति न किंचिद् व्यसनमस्ति । अत्र बहिष्पवमाने **इन्द्रस्य जठरं विशे** (सा. १२०६) ति इन्द्रस्य प्रत्यक्षमेव कथनं परस्थानगतत्वादित्याह । ननु च अनिरुक्तप्रातः सवने वाजपेये **इन्द्रमग्निं न वोढवे** (सा. ११५१) इत्यत्र स्वस्थानयोरिन्द्राग्न्योः पर्यायनिर्देशो वक्तव्यः । नैवम् । गायत्रस्यानिरुक्तगानत्वादेव प्रत्यक्षनामप्रसंगाभावात् । ननु च ऋग्जपकाले प्रत्यक्षनामप्रसङ्गः सत्यम् । अनुज्ञातमेव जपकाले प्रत्यक्षवचनम् । अन्यथा तयोः पर्यायत्वं सूत्रकारोऽवक्ष्यत् । न चोक्तम् । तस्मादृग्जपकाले प्रत्यक्षमेव वचनम् । केचिज्जपकालेऽपि पर्यायनिर्देशमिच्छन्ति । **शक्रमग्निं च वोढव** इति ॥५॥

**आदिष्टा दक्षिणा ब्राह्मणेन ॥६॥**

**अश्वःश्यावो दक्षिणा स ब्रह्मणे देय** (तां. ब्रा. १८.१.२०-२२) इति ब्राह्मणेन ॥६॥

**इतरेभ्यश्च किंचिद्दद्यात् ॥७॥**

ब्रह्मव्यतिरिक्तेभ्योऽपि **किंचिद् दद्यात्** ॥७॥

इदानीमृतपेये क्रतौ **तस्य द्वादश दीक्षोपसदः** (तां. ब्रा. १८.२.२) इति ब्राह्मणम् । तद्व्याचष्टे—

**ऋतपेयस्य द्वादश दीक्षोपसद इति तिस्र उपसदः । षड्वा ॥८॥**

इति । नव दीक्षास्तिस्रश्चोपसद आहत्य द्वादशेति वादः । कुतः । **तिस्र एव साह्नस्योपसद** (द्रा. श्रौ. २२.२.२१) इति प्रकृतौ वचनादिहापि तस्य चोदकप्राप्तत्वात् । अथवा **षड्दीक्षाः षडुपसद** इति समविभागे विशेषाश्रवणात् भारद्वाजस्तु प्रत्येकं द्वादशेति व्याख्यातवान् ॥८॥

---

1. My[4] ब्राह्मानु⁰for ब्राह्मणेनानु⁰

3. My[2] om. आह; C. निरुक्त⁰ for अनिरुक्त⁰

5. My[1,4] ⁰गानं⁰ for ⁰नाम⁰; C. अनिरुक्तत्वात् for अनिरुक्तगानत्वात्

7. C. om. च

13. My[4] च for अपि

16. My[2] ⁰देये तस्य for ⁰पेयस्य

18. My[2] अभिप्रेत्य My[1] प्रत्य for आहत्य

20. My[1] अथ for अथवा; My[1] ⁰विशेषश्रणात् for विशेषाश्रवणात्
My[2] भर⁰ for भार⁰

**धृतव्रतो भवतीति यथोत्साहं दीक्षासु प्राश्नीयात् ॥९॥**

**धृतव्रतो भवती** (तां. ब्रा. १८.२.५) ति ब्राह्मणम् । प्राकृतस्य पयोव्रतस्य प्रत्याम्नायोऽयम् । तत्र दीक्षादिवसेषु यथाबलं घृतप्राशनं नियमः ॥९॥

**उत्तरेणोत्तरेण काण्डेनोपैतीति पृथगुपसत्स्वङ्गुलिपर्वभिः प्रतिलोमैः प्राश्नीयादिति शाण्डिल्यः ॥१०॥**

**उत्तरेणोत्तरेण काण्डेनोपैती** (तां. ब्रा. १८.२.७) ति ब्राह्मणमुपसत्सु नियमविधायकम् । अङ्गुलेरुत्तमेन काण्डेन घृतमुपादाय प्रथमायामुपसदि तावन्मात्रं घृतं प्राश्नीयात् । ततो मध्यमेन ततः प्रथमेनेत्येवं **प्रतिलोमैः** पर्वभिः पृथगश्नीयादित्यर्थः कुतः । **उत्तर उत्तर एषां लोकानां ज्यायानि** (तां. ब्रा. १८.२.७) ति वाक्यशेषात् प्रातिलोम्य एव पर्वणामुत्तरोत्तरभूयस्त्वात् । आनुलोम्ये वैपरीत्याच्च । अत्र प्राशने अङ्गुलिपर्वविधानात् प्राकृतचमसनिवृत्तिः ॥१०॥

**एकाङ्गुल्या पृथक्पर्वभिः सर्वान् देशांश्चमसा मिताः स्युः । तैरनुलोमैरिति शौचिवृक्षिः ॥११॥**

प्राकृतचमसबाधो न कार्यः । अबाधेनापि शास्त्रसंभवात् । कथम् । चमसस्यैव पृथक् परिणामविधिरयम् । चमसरूपाः सर्वत्र ऊर्ध्वप्रमाणेन पृथक् पृथक् अङ्गुलिकाण्डदघ्नाः स्युः । तत्र प्रथमाङ्गुलिकाण्डदघ्नं चमसं घृतेन पूरयित्वा प्रथमोपसदि प्राश्नीयात् । एवमुत्तरोत्तरकाण्डदघ्नौ चमसौ उत्तरोत्तरयोरुपसदोः । कुतः । **उत्तरोत्तरेणे** (तां. ब्रा. १८.२.७) ति वचनात् अनुलोमप्रतीतेः ॥११॥

---

2. My[4] °भृतस्य for व्रतस्य
3. My[2] before नियमः adds : न
8. My[1] तथा for ततो
   My[4] om. प्रतिलोमैः; My[2] after पर्वभिः adds : न
11. My[1] प्रकाशने for प्राशने
    C. प्रकृति° for प्राकृत°
12. M. चमसामितराः for चमसा मिताः
14. C. प्रकृत° for प्राकृत°
15. My[1] सर्वतः ऊर्ध्वं for सर्वत्र ऊर्ध्व°; My[2] om. one पृथक्
16. My[1] repeats पूरयित्वा

**प्रतिलोमैरिति धनंजय्यः ॥१२॥**

स्पष्टम् ॥१२॥

**ऋतमुक्त्वा प्रसर्पन्ती** (तां. ब्रा. १८.२.९) ति ब्राह्मणम् । तथा **ऋतं वदन्तो भक्षयन्तीति** च शाखान्तरीयम् । द्वयमपि व्याचष्टे—

**ऋतमुक्त्वा प्रसर्पन्तीति प्रसर्प्स्यन्तः सदो भक्षयिष्यन्तश्च देवसत्यानि ब्रूयुरियं भूमिरित्युक्त्वासावादित्य उदेता प्रातरादित्य इति ॥१३॥**

सदःप्रसर्पणं सोमभक्षणं च करिष्यन्तो **देवसत्यानि ब्रूयुः । इयं भूमिरि**त्येकं सत्यम् । **असावादित्य** इत्यपरम् । उदेतेत्यपरम् । उदेष्यतीत्यर्थः । त्रीण्येतानि देवताश्रितानि सत्यानि परमार्थभूतानि ॥१३॥

धानंजय्यस्तु ऋतं वदन्तो भक्षयन्तीति ऋतवचनमन्यथा व्याचष्टे इत्याह—

**या अस्य देवताश्चमसैरिज्येरन् तत्पीतवद्भक्षमन्त्रानूहेयुरिति धानंजय्यः ॥१४॥**

इति । **अस्य** श्रुतपेयस्य क्रतोः **या देवताश्चमसैरिज्य**न्ते **तत्** पीतशब्दयुक्त-भक्षणमन्त्रानूहेयुः । तद्यथा—**अग्निपीतस्य मित्रावरुणपीतस्येन्द्रियावत** इत्यादि । एतदेव ऋतवचनं यथार्थ [त] त्त्वम् । पानकर्तृदेवतासंकीर्तनात् । एवं ऋतपेय-नाम्नश्च सामञ्जस्यं भवति ।इन्द्रपीतस्येति कथने त्वं न्यस्य पानमन्यस्य कीर्तन-मिति अनृतपेयं भवति ॥१४॥

**अविकारेण तु नाराशंसानाम् ॥१५॥**

नाराशंसभक्षणे तु न मन्त्रस्य विकारः प्रकृतावप्यनृताभावात् ॥१५॥

---

1. My[2] after प्रतिलोमैः adds : प्राश्नीयात्
10. My[1] देवश्रुतानि for देवताश्रितानि
15. My[1] अपिनीतस्य My[2] निपीतस्य for अग्निपीतस्य
16. My[1] यथातत्वं for यथार्थं तत्त्वं
17. My[1] इन्द्रस्य for इन्द्र०
18. My[4] अनृतं for अनृत०

**सर्वक्रतुष्वेवमेके ॥१६॥**

सर्वेष्वपि क्रतुषु यथादेवतम् भक्षणमन्त्रोहः कार्यः इत्येके ॥१६॥

**अनुव्यूहन्ति च भक्षच्छन्दांसि ॥१७॥**

व्यूढे दशरात्रे व्यूहानुसारेण भक्षणमन्त्रेषु छन्दांस्यपि व्यूहन्ति । यथा पृष्ठ्यस्योत्तरे त्र्यहे प्रातःसवनेषु जगतीछन्दसः सर्वगणस्येत्यूहः ॥१७॥

**सर्वत्राविकारेणाचार्याः ॥१८॥**

सर्वत्र ऋतपेये ततोऽन्यत्र च भक्षणमन्त्रेष्वविकार एवेति आचार्याः । ऋतवचनमपि देवसत्यकथनमेवेति मन्यन्ते ॥१८॥

सोमचमसो दक्षिणा (तां. ब्रा. १८.२.१०) इति ब्राह्मणं व्याचष्टे—

**सोमचमसो दक्षिणेत्यभिषुतस्य स्यात् ॥१९॥**

क्रत्वर्थतया अभिषुतस्य सोमरसस्य पूर्णः सोमचमसः । न तु लौकिकस्येति ॥१९॥

कुत इत्याह—

**तस्मिन् हि चमसं प्रमाणम् ॥२०॥**

इति । अभिषुते हि शास्त्रीये सोमरसे सदिति (!) चमसप्रतीतिः । स तु प्राकृतेभ्यो दशभ्योऽतिरिक्तः संपादनीयः ॥२०॥

**तं मध्यंदिने चमसमुखीयैः सहोन्नयेयुः ॥२१॥**

सवनमुखीयानां दशचमसानामुन्नयनकाले तमप्युन्नयेयुः ॥२१॥

---

2. My[4] °दैवतम् for °देवतम्
3. My[4] om. भक्ष°
6. My[2] °अधि° for अवि
7. My[2] अवि° for अवि°
10. My[1] अभिष्टुतस्य for अभिषुतस्य
11. C. My[2] अभिष्टुतस्य for अभिषुतस्य
14. My[4], My[2] चमस° for चमसं
15. My[1] °ष्टुते for °षुते ; My[1-2] °चमसे for °रसे
18. My[1] ददाम° for दश°

**जुहुयुश्चास्य हुतो देयः इति ब्राह्मणम् ।।२२।।**

होमकाले तस्य चमसस्यैकदेशं जुहुयुः । हुतो देय इति शाखान्तरीयब्राह्मणम् ।।२२।।

**तं दक्षिणवेलायां पूर्वेणाहवनीयमनिर्हरन्तो वेदेर्दक्षिणेन सदो हविर्धानानि हारयित्वा पूर्वया द्वारा सदः प्रविशेयुः ।।२३।।**

वेदेर्बहिरनिर्हरन्त इत्यर्थः ।।२३।।

**संस्थितेऽहन्यृत्विग्भ्यः किंचिद्दद्यात् ।।२४।।**

सोमचमस एव क्रतोर्दक्षिणा । तथापि ऋत्विगानमनार्थं किंचिद् दद्यात् ।।२४।।

इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले प्रथमः खण्डः ।।१।।

---

2. My[4] एकादशं for एकदेशं
   My[2] °ब्राह्मणात् for °ब्राह्मणम
4. My[4] भक्षण° for दक्षिण°; M[1] My[4] निर्हरन्तो for अनिर्हरन्तो
8. My[1] आनयनार्थं for आनमनार्थं

## द्वितीयः खण्डः

**आदिष्टा दक्षिणा ब्राह्मणेन दूणाशस्य ॥१॥**

दूणाश इति क्रतोर्नामधेयं शाखान्तरीयम् । तस्य दीक्षणीयायामिष्टौ द्वादशमानं हिरण्यं चतुर्विंशतिमानम् । **प्रायणीयायामित्यादिना** ब्राह्मणेन पूर्वस्माद् द्विगुणाभ्यासेन उत्तरोत्तरदक्षिणादानं विहितमित्यर्थः ॥१॥

तत्र विशेषं व्याचष्टे—

**एतावन्त्यष्टाविंशतिशतमानानीति यत्र स्याच्चतुर्विंशतिमानानां तावन्त्यष्टाविंशतिशतानि दद्यात् ॥२॥**

ब्राह्मणं तावदुपसदन्तं स्पष्टार्थम् । तत्रोपसदन्ते अष्टाविंशतिशतं चतुर्विंशतिमानानीत्युक्तम् । तत ऊर्ध्वमग्नीषोमीयप्रभृतिद्वे अष्टाविंशतिशतमाने चत्वार्यष्टाविंशतिशतमानानीत्येवं द्विगुणोऽभ्यासः कृतः । तत्र मानशब्दश्चतुर्विंशतिमानं लक्षणयाह । यथा भामेत्येकादशोकावपि सत्यभामेत्यवगम्यते तद्वत् अष्टाविंशतिशतमाने इत्यादौ तत्संख्याविशिष्टानि चतुर्विंशतिमानान्येव देयानीत्यर्थः । कुत एतत् । पूर्वेषु स्थानेषु द्विगुणाभ्यासस्य प्रक्रान्तत्वात् यथाश्रुतमानग्रहणे कनीयस्त्वप्रसङ्गाच्च । तेनाग्नीषोमीयप्रभृतिषु मानशब्दश्चतुर्विंशतिमानलक्षणार्थः । एतावन्तीति पदमग्नीषोमीयप्रभृतिब्राह्मणपठितसंख्योपलक्षणम् ॥२॥

---

4. C. after हिरण्यं adds : ददाति
5. C. उत्तरोत्तरं for उत्तरोत्तर°
9. My[2] after चतुर्विंशति ins. °शत°
11. My[1] द्विगुणाभ्यासः for द्विगुणोऽभ्यासः
12. My[1] न तेन My[2] तद्वत् तेन C. द्वे for तद्वत्
13. My[2] तत्तत्° for तत्°
14. C. एते for एतत्
15. My[2] °षोम° for °षोमीय°;
16. My[2] om. °पठित°

तत्रैव माध्यंदिने सवने रुक्मो होतुः स्रगुद्गातुरित्याद्यधिकदानमुक्तम् । तद् व्याचष्टे--

**रुक्मो होतुरिति निष्को नामालंकारस्तं दद्यात् । स्रगुद्गातुरिति हिरण्मयी स्यात् ॥३॥**

इति । गतम् ॥३॥

अथ वैश्यस्तोमे प्रातःसवनीयान् सोमान् प्रतिदुहा श्रीणाती (तां. ब्रा. १८.४.२) त्यादि ब्राह्मणं व्याचष्टे--

**वैश्यस्तोमे सद्यो दुग्धेन पयसा सोमं मिश्रम् कुर्युः प्रातः सवने शृतेन माध्यंदिने दध्ना तृतीयसवने ॥४॥**

इति । सद्योदुग्धं पयः प्रतिधुगित्युक्तम् । शृतं क्षीरम् ॥४॥

**तस्य दक्षिणा द्वादशशतं सहस्रं वा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते ॥५॥**

**पञ्चशारदीये**ऽहीने पञ्चरात्रे **यथारूपाः** पशवो राजीवा नवनीतपृश्नीररुणाः पिशङ्गीः सारङ्गीरिति नानावर्णा वत्सतरीर्वक्ष्यति । तद्वदत्रापि नानावर्णाः स्युः ॥५॥

अथ तीव्रसुति क्रतौ सोमातिपवितं याजयेत् (तां. ब्रा. १८.५.३) इति ब्राह्मणम् । तद्व्याचष्टे—

**तीव्रसुति सोमातिपवितं याजयेदिति य इष्ट्वा पापीयान् स्यात् स सोमातिपवित इति शाण्डिल्यः ॥६॥**

इति । यं सोमोऽतिपवते स सोमातिपवितः । सोमयागोत्तरकालं यो नष्टश्रीकः स एवमुक्तः ॥६॥

---

6. My[1] स्तोमान् for सोमान्

10. My[2] ससोमो for सद्यो; My[2] after शृतं adds : पयं

11. My[2] द्वादशं for द्वादश[3]

13. My[1] हि for अहीने

**यः सोमं पीत्वा छर्दयेत विरिच्येत वेति धानंजय्यः ॥७॥**

यः सोमं पीत्वा वमति विरिच्येत् वेत्यर्थः । वमनं विरेको वातिपवनमित्यर्थः ॥७॥

**ज्येष्ठो वानिष्टीकः कनीयसीष्टिनीति ॥८॥**

अथवा यः कनीयसि भ्रातरि इष्टवति सति स्वयं सोमेन नेष्टवान् स सोमातिपावित इति ॥८॥

**तत्र भक्षावृता चमसानवजिघ्रेयुः ॥९॥**

तत्र तीव्रसुति भक्षणस्यावृता धर्मेणावघ्राणं कुर्युः ॥९॥

कुत इत्याह—

**अभक्षयन्त ऋत्विजश्चमसानवजिघ्रन्तीति ह्याह ॥१०॥**

इति । **अभक्षयन्तोऽवजिघ्रेयुरिति** भक्षणप्रत्याम्नायत्वेनावघ्राणविधानात् तद्धर्मापत्तिः ॥१०॥

**तानच्छावाकस्य स्तोत्रे भक्षयेयुरेवं सर्वेषु सवनेषु ॥११॥**

सवनत्रयेऽप्यच्छावाकस्य स्तोत्रे सर्वे चमसान् भक्षयेयुः ॥११॥

**अभ्यभिसोमानुन्नयन्तीति यानवजिघ्रेयुस्तेष्वेवाभ्युन्नयेयुः ॥१२॥**

यांश्चमसानवजिघ्रेयुस्तानपरित्यज्यैव तेषामुपर्युत्तरयागेभ्यः सोमानुन्नयेयुः । अवघ्रातोऽपि भक्षित एवेति मत्वा न त्याज्य इत्यर्थः ॥१२॥

**शतमाशिरं दुहन्तीति धेनुशतं दोहयित्वा तत्त्रेधं विभज्य सोममिश्रं कुर्युर्यथा वैश्यस्तोमे ॥१३॥**

सोममिश्रणार्थं दध्यादिकमाशिर इत्युक्तम् ॥१३॥

**तस्य तदेव धेनुशतं दक्षिणास्ता उ एव दक्षिणा इति ह्याह ॥१४॥**

स्पष्टम् ॥१४॥

**इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले द्वितीयः खण्डः ॥२॥**

---

5. My[1] अनिष्टवान् for नेष्टवान्

9. My[2] after इति ins. अतः

19. My[1] आज्यशिरं for आशिरं C. om. तत्$^0$

22. My[1] om. ता उ एव दक्षिणाः; C. om. उ; My[2] वा for एव

## तृतीयः खण्डः

**यं ब्राह्मणा राजानश्च पुरस्कुर्वीरन् स वाजपेयेन यजेत ॥१॥**

**तस्य पौर्णमास्यां दीक्षित्वा त्रयोदश दीक्षाः कुर्वीरन् ॥२॥**

**सप्तदश वा ॥३॥**

**अमावास्यायां दीक्षित्वा मासमिति गौतमः ॥४॥**

**संवत्सरमिति धानंजय्यः ॥५॥**

**षडुपसत्कश्च साग्निचित्यः स्यादिति ॥६॥**

स्पष्टानि ॥१-६॥

पक्षान्तरमाह—

**पार्ष्ठिकान् स्तोमान् ज्योतिष्टोमस्य तन्त्रे कल्पयित्वा तैर्ज्योतिष्टोमव्यपेतैस्तत्प्रभृतिभिः संवत्सरं पूर्वपक्षेषु यजेत ॥७॥**

ज्योतिष्टोमसंबन्धम् (? न्धि) तन्त्रमृक्सामजातं गृहीत्वा तत्र पृष्ठ्यषडहस्य **स्तोमान्** त्रिवृत्पञ्चदशादीन् त्रयस्त्रिंशान्तान् **कल्पयित्वा** तैः षडहोभिः प्रत्येकं ज्योतिष्टोमव्यवहितैर्ज्योतिष्टोमोपक्रमैश्च द्वादशसु **पूर्वपक्षेषु** वाजपेयाङ्गत्वेन **यजेत**। तद्यथा चैत्रमासे तावत् पूर्वपक्षे ज्योतिष्टोमः कार्यः । तदनन्तरकृष्णपक्षं विरम्य वैशाखपूर्वपक्षे पार्ष्ठिकं प्रथममहः कार्यम्। ततो ज्येष्ठमासपूर्वपक्षे पुनरपि ज्योतिष्टोमः। आषाढपूर्वपक्षे पार्ष्ठिकं पञ्चदशमहरित्यादि। अत्र पार्ष्ठिकस्तोमकल्पेन तत्संबन्धि सामजातमप्यवगमितव्यं स्तोमसंपत्त्यर्थम् ॥७॥

**त्रयोदशे पूर्वपक्षे वाजपेयेनेष्ट्वैतैरेवावृत्तैरपरं संवत्सरम् ॥८॥**

---

10. $My^2$ M. पाकान् for पार्ष्ठिकान्; M. मन्त्रे for तन्त्रे

11. C. तत्तत्$^0$ for तत्$^0$

12. $My^1$ C. $My^4$ om. तन्त्रम्

15. $My^1$ तदनन्तरं for तदनन्तर$^0$

16. $My^2$ विरम्यते for विरम्य

17. $My^2$ द्वितीयं for पञ्चदशं, $My^1$ तत्र for अत्र

18. $My^2$ $^0$कल्पने for $^0$कल्पेन;

तत्र पूर्वस्मिन् संवत्सरे षड्ज्योतिष्टोमाः षट् पाष्ठिकानि । तथैवोत्तरस्मिन्नपि । तन्मध्ये वाजपेयः प्रधानभूतः इति । एवं पञ्चविंशतिः सुत्याः ॥८॥

**ता यथोत्साहदक्षिणाः स्युः ॥९॥**

ताः पञ्चविंशतिरपि सुत्याः यथाशक्ति दक्षिणाः स्युः ॥९॥

मतान्तरमाह—

**राजसूयेन यजेतेति लामकायनः ॥१०॥**

राजसूयप्रकारयुक्तेन वाजपेयेनेत्यर्थः ॥१०॥

तमेव प्रकारमाह—

**त्रिवृत्पञ्चदशोऽभ्यारोहणीयस्य स्थाने स्यात् ॥११॥**

इति । राजसूये यदभ्यारोहणीयं प्रथममहस्तस्य स्थाने त्रिवृत्पञ्चदशो वा स्यात् । यस्य स्तोत्रेषु त्रिवृत्पञ्चदशौ व्यत्यासं स्याताम् स त्रिवृत्पञ्चदशः ॥११॥

**वाजपेयोऽभिषेचनीयस्य ॥१२॥**

अभिषेचनीयस्याह्नः स्थाने वाजपेयः स्यात् ॥१२॥

**पञ्चदशं त्रिवृत्केशवपनीयस्य ॥१३॥**

केशवपनीयातिरात्रस्थाने पञ्चदशत्रिवृत्स्तोमः क्रतुः स्यात् ॥१३॥

**व्युष्टिक्षत्रधृत्योर्ज्योतिष्टोमः ॥१४॥**

व्युष्टिद्विरात्रस्य क्षत्रधृतेश्च स्थाने ज्योतिष्टोमः कार्यः । अन्यत्सर्वमङ्गजातं परस्परं सुत्यानां कालविधिश्च राजसूयवत् ॥१४॥

अथ मतान्तरमाह—

**बृहस्पतिसवेनैव पुरस्तादुपरिष्टाच्च परियजेतेति शाण्डिल्यः ॥१५॥**

इति । वाजपेयस्य पुरस्तादुपरिष्टाच्च बृहस्पतिसवः कार्यो नान्यः ॥१५॥

---

4. C. चतुर्⁰ for पञ्च⁰
10. My[2] अह for वा
13. C. om. अह्नः
17. My[2] ⁰त्रिरात्रस्य for ⁰द्विरात्रस्य
18. My[4] ⁰विशेषः for ⁰विधिः; My[1] परस्पर⁰ for परस्परं

मतान्तरमाह —

**मासमात्रे पुरस्ताज्ज्योतिष्टोमेन तथोपरिष्टादिति धानंजय्यः ॥१६॥**

इति । स्पष्टम् ॥१६॥

**प्रत्यवरोहणीयेनैवान्ततो यजेत नैतेषां केनचिदिति गौतमः ॥१७॥**

प्रत्यवरोहणीयो ज्योतिष्टोमः कल्पकारोक्त एवोपरिष्टात् कार्यः । न पूर्वोक्तानां कश्चिदिति **गौतमः** ॥१७॥

**सदस्यसप्तदशान् पृथगृत्विजो वृणीत ॥१८॥**

यज्ञेभ्यः **पृथगेव** वाजपेयस्य **सदस्यसप्तदशान् ऋत्विजो वृणीत** । सदस्यसप्तदशानिति वचनान्नित्योऽत्र सदस्यः । अन्यत्र त्वनित्य इति गम्यते ॥१८॥

**तस्य दक्षिणा दासीनिष्करथहस्तियानगवां पृष्ठ्यानां चाश्वानां सप्तदशैकैकस्य जातस्य ॥१९॥**

पृष्ठे साधुः पृष्ठ्यः । वहने दान्त इत्यर्थः । दासीनिष्कादीनां सप्तवर्गाणामेकैकस्य वर्गस्य सप्तदश सप्तदश दक्षिणाः स्युः । सप्तदश दास्यः सप्तदश निष्का इत्येवम् ॥१९॥

**सहस्राणि गवां शतानि वा ॥२०॥**

अथवा गोजातस्य पूर्वैः सहोपात्तस्य सहस्रत्रयं शतत्रयं वा देयमिति विकल्पः ॥२०॥

पक्षान्तरमाह—

**सप्तदश वैव गावस्तं कुरुवाजपेयः कुवाजपेयः इत्याचक्षते ॥२१॥**

इति । **सप्तदशैव गावो** दक्षिणाः । नान्यत्र किंचिद्देयम् । तथाविधदक्षिणाः कुरुवाजपेय कुवाजपेयश्चेत्युक्तः ॥२१॥

**ताः सममृत्विग्भ्यो विभजेत् ॥२२॥**

स्पष्टम् ॥२२॥

---

20. C. om. पक्षान्तरमाह, My[1] om. पक्षान्तरमाह ··· स्पष्टम् (L. 25)

21. C. om कुवाजपेयः;

पक्षान्तरमाह—

**श्रेष्ठतो वा मध्यतःकारिभ्यः ॥२३॥**

इति । मध्यतःकारिणो महर्त्विजः ब्रह्मादयः श्रेष्ठत इति द्वितीयार्थे तसिल्प्रत्ययः । **मध्यतः कारिभ्यः** श्रेष्ठमुत्कृष्टं विभजेत् । व्यतिरिक्तेभ्यः सममेव ॥२३॥

**येन रथेनाजिं धावेत् तमुद्गात्रे दद्यादासन्दीं च सास्तरणां यामभिषिक्त आरोहेत् ॥२४॥**

**अभिषिक्तो** यजमानो **यामासन्दीम् आरोहति** ॥२४॥

**बस्तचर्म सरुक्मं होत्रे यस्मिन्नासीनोऽभिषिच्येत ॥२५॥**

गतम् ॥२५॥

**वसनमयी रशनाध्वर्यवे ॥२६॥**

आच्छादनोपकरणभूतास्तन्तुनिर्मिता रशना इत्यर्थः ॥२६॥

**हिरण्यस्थालं मधुना पूर्णं ब्रह्मणे ॥२७॥**

स्पष्टम् ॥२७॥

**कंसस्थाले वा हिरण्यतुषान् मधुमिश्रान् ॥२८॥**

**कंसस्थाले मधुमिश्रान्** हिरण्यशकलान् निधायेत्यर्थः ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले तृतीयः खण्डः ॥३॥**

## चतुर्थः खण्डः

**तस्य व्रतानि ॥१॥**

तस्य वाजपेययाजिनो व्रतानि वक्ष्यन्ते ॥१॥

**क्षत्रवृत्तिं वर्तयेत् ॥२॥**

क्षत्रस्य या वृत्तिस्तां कुर्यात् ॥२॥

तामेव दर्शयति—

**प्रत्यवरोहणाभिवादने जघन्यव्रज्यां समानशय्यतामिति च वर्जयेदवाजपेययाजिभिः ॥३॥**

इति । आत्मन उत्कृष्टैरप्यवाजपेययाजिभिः सह प्रत्यवरोहणादि न कुर्यात् । तेषु न कुर्यादित्यर्थः । पृष्ठतोऽनुगमनं जघन्यव्रज्या । सदृशशय्याकल्पनं समानशय्यता । इतिकरणात् प्रत्युत्थानादिकमपि ॥३॥

**यथावयसं वाजपेययाजिभिः ॥४॥**

वाजपेययाजिषु वयोऽनुसारेण वृत्तिः । वयसा ज्येष्ठे वाजपेययाजिनि प्रत्यवरोहणादि कार्यमेव ॥४॥

**प्रत्यवरोहणीयेनेष्ट्वा नैतानि व्रतानि चरेदिति शाण्डिल्यायनः ॥५॥**

कृतप्रत्यवरोहणीयस्य व्रतचर्या न विद्यत इत्यर्थः ॥५॥

**तस्य विकल्पाः ॥६॥**

वाजपेयविकल्पा वक्ष्यन्ते ॥६॥

**प्राकृत एव वाजपेय एकिप्रभृतिद्युत्तरान् सप्तदशत्रयस्त्रिंशान्तान् स्तोमान् कल्पयेत् स मयूरोनेकर्षी ॥७॥**

**प्राकृते** ब्राह्मणोक्ते **वाजपेये** तदुक्तम् । स्तोमान् विहायैकिप्रभृतीन् त्रयस्त्रिंशान्तान् स्तोमान् यथाक्रमं सप्तदशस्तोत्रेषु कल्पयेत् । द्वे द्वे उत्तरे येषां ते द्युत्तराः । तद्यथा एकी त्रिकः पञ्चकः सप्तकः इत्यादिस्तोमाष्टकं ब्रह्मसाम्नः पूर्वम् । एकः

---

21. C. My[2] निकर्षी My[1] नेकही for नेकर्षी

24. C. °सामपूर्वम् for °साम्नः पूर्वम्

पक्षः। सप्तदशस्तोम आत्मा ब्रह्मसाम । तत उत्तरमेकान्नविंशमेकविंशमित्यादि स्तोमाष्टकम्। अपरः पक्षः। सोऽयं वाजपेयो मयूरो नेकर्षी नाम । मयूरस्येव ऊनता उत्कर्षश्च यस्येति स मयूरोनेकर्षी । छान्दसो वर्णविकारः। यथाल्पतो मयूरस्यैकः पक्षः प्रसार्यते परः संकोच्यते तद्वत् सप्तदशादुत्तरं स्तोमाष्टकं प्रसारितं पूर्वं संकोचितम् ॥७॥

**तस्योपास्मै गायता नर (सा. ६५१) इति बहिष्पवमानम् ॥८॥**

तस्यैकिस्तोमं **बहिष्पवमानमुपास्मै गायता नर** इत्येकस्यां भवति। प्रकृतिवदितराणि स्तोत्रीयाणि ॥८॥

**ब्रह्मसामैव प्रत्येतेन स्वर्गलोकमाक्रमत इति शाण्डिल्यः ॥९॥**

ब्रह्मसामकाल एव स्वर्गलोकाक्रमणमुत्तरोत्तरस्तोमारोहादिति मन्यते ॥९॥

**ज्योतिष्टोमो वातिरात्रोऽषोडशिकः ॥१०॥**

अथवा **ज्योतिष्टोमः** षोडशिरहितो वाजपेयः स्यात् । तस्मिन्नेव दक्षिणादिविशेषं यूपारोहणादि न कुर्यात् ॥१०॥

**अनतिरात्रो वा षोडशिमान् ॥११॥**

अथवा रात्रिरहितः षोडशियुक्तो ज्योतिष्टोमो वाजपेयः ॥११॥

**तस्य बृहत् सप्तदशं स्तोत्रं स्यात्। पञ्चदशस्तोमं स्वासु ॥१२॥**

**तस्य** अनतिरात्रस्य बृहत्साम सप्तदशं स्तोत्रं स्यात् । तच्च स्वकीयास्वेवर्क्षु **त्वामिद्धि हवामहे** (सा. ८०९-८१०) इत्येतासु पञ्चदशस्तोमं कुर्यात् । **स्वास्विति** वचनं ब्राह्मणोक्तशिपिविष्टवतीनिवृत्त्यर्थम्। **पञ्चदश स्तोम**मिति वचनं प्राकृतवाजपेयस्तोत्रीयासंख्यासंपत्त्यर्थम् ॥१२॥

**अग्निष्टोमो वा ॥१३॥**

अथवा अग्निष्टोमसंस्थ एव वाजपेयः स्यात् ॥१३॥

---

1. C. तेषां षडुत्तरमेकोन° for ब्रह्मसाम। तत उत्तरमेकान्न°

3. My$^{1-2}$ My$^{4}$ अन्यतो for अल्पतो

10. C. आक्रमन्ते for आक्रमते

11. My$^{2}$ om. इति मन्यते

18. My$^{1}$ om. अनतिरात्रस्य; My$^{4}$ om. साम

23. My$^{1}$ My$^{4}$ C. °संस्थावाज° for °संस्थ एव वाज°

तस्य क्लृप्तिमाह—

**तस्याभीवर्तो ब्रह्मसामानुष्टुभि यज्ञायज्ञीयमनुकल्पयेत् बृहदग्निष्टोमसाम पञ्चविंशं पृष्ठानां ब्रह्मसामाच्छावाकसाम वा चतुर्विंशमितरत् ॥१४॥**

ब्रह्मसामाच्छावाकसाम्नोरन्यतरत् पञ्चविंशम् । इतराणि सर्वाणि चतुर्विंशानि ॥१४॥

**एतस्य वैव चतुस्त्रिंशानि पृष्ठान्यग्निष्टोमसाम च सप्तदशमितरत् सर्वम् ॥१५॥**

अथवा अग्निष्टोमसामपृष्ठानि पञ्चस्तोत्राणि चतुस्त्रिंशानि । शिष्टानि सप्तदशानि । तदेवं पञ्च वाजपेयविकल्पाः । ते चातिरात्रवर्जं प्राकृतवाजपेयसमानस्तोत्रीयाः । तेषु प्रत्येकं शतद्वयमेकोननवतिश्च स्तोत्रीयाः ॥१५॥

**नैतेषां कश्चन वाजपेय इति गौतमः ॥१६॥**

ब्राह्मणोक्त एव वाजपेयो न पुनरेतेषां कश्चिदपीति गौतमः ॥१६॥

तेन वाजपेयप्रयुक्ता दक्षिणा नैतेषु दद्यादित्याह—

**यजमानश्चैतेषु न वाजपेय दक्षिणा दद्यादिति दद्यादिति ॥१७॥**

स्पष्टम् ॥१७॥

इति द्राह्यायणश्रौतसूत्रे चतुर्विंशे पटले चतुर्थः खण्डः ॥४॥

द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते ।
तृतीये दशके वृत्तश्चतुर्थः पटलोऽधुना ॥२४॥

इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे चतुर्विंशः पटलः समाप्तः ॥२४॥

---

4. My[2] °विंशस्तोमम् for °विंशम्
5. My[1] उत्तराणि for इतराणि
9. My[1-2] °ष्टोमस्य for °ष्टोमसामपृष्ठानि
10. C. °पेयेन संपन्न° for °पेयसमान°;
11. My[1] °स्तोत्रिया: for °स्तोत्रीयाः
12. My[1] कश्चित् for कश्चन
16. C. My[2] om. स्पष्टम्

## पञ्चविंशः पटलः

## प्रथमः खण्डः

**अथाग्निष्टोमं प्रथममाहरती** (तां. ब्रा. १८.८.१) ति ब्राह्मणम् । तद्विधावधिकारि विशेषाश्रवणात् तद्दर्शयति---

**राजा राजसूयेन यजेत ॥१॥**

इति । **उद्वद्वा अनुष्टुभो रूपमानुष्टुभो राजन्यः** (तां. ब्रा. १८.८.१४) इत्यादि वाक्यशेषे राज्ञः श्रवणात् स अधिकारीति भावः ॥१॥

**फाल्गुनी पक्षस्य प्रथमायां दीक्षेताभ्यारोहणीयाय ज्योतिष्टोमाय ॥२॥**

फाल्गुन्या पौर्णमास्या युक्तः पक्षः फाल्गुनीपक्षः । **अग्निष्टोमं प्रथममारोहती** (तां. ब्रा. १८.८.१) ति विहितोऽभ्यारोहणीयः ॥२॥

**तस्यैका दीक्षा द्वादशशतं दक्षिणाः ॥३॥**

स्पष्टम् ॥३॥

**संवत्सरादूर्ध्वमभिषेचनीयेन यजेत ॥४॥**

स्पष्टम् । पश्चावर्ग्योऽभ्यारोहणीयः । तदनन्तरं षष्ठ्यामुपक्रम्यानुमत्यै पुरोडाशमष्टाकपालमिति तैत्तिरीयश्रुत्यनुसारेणाष्टाभिर्हविर्भिरन्वहं यष्टव्यम् । चतुर्दशीपञ्चदश्योश्चातुर्मास्यारम्भः । तैः संवत्सरमिष्ट्वा तत ऊर्ध्वमभिषेचनीयः ॥४॥

**तस्य तथैव दीक्षा । द्वे इति गौतमः ॥५॥**

**तथा सत्यभ्यारोहणीयस्यापि द्वे ॥६॥**

**एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति शाण्डिल्यः ॥७॥**

स्पष्टानि ॥५-७॥

---

7. C. वक्तव्यः for भावः

15. My[1] My[4] before स्पष्टम् । add :---तस्मापि द्वे इति । एकाभ्यारोहणीयस्य तिस्रोऽभिषेचनीयस्येति शाण्डिल्यः इति । My[2] °मतौ for °मत्यै ;

16. C. after °कपालं adds : निर्वपति

17. C. My[2] चातुर्मास्यानाम् for चातुर्मास्या°

**त्रयोदश्यां त्वपरपक्षस्य दीक्षेत ॥८॥**

चातुर्मास्यानन्तरमपरपक्षे द्वादशाहम् पत्नीनां हवींषि तैत्तिरीयोक्तानि ॥८॥

**तस्य दक्षिणा द्वात्रिंशतं सहस्राणि मध्यतःकारिभ्यो दद्यादेकैकस्मै ॥९॥**

मध्यतः कारिणो महर्त्विजः ॥९॥

**षोडश प्रस्तोतृमैत्रावरुणप्रतिप्रस्थातृब्राह्मणाच्छंसिभ्यस्ता अर्द्धिन्यः ॥१०॥**

अर्द्धभाक्त्वाद् **अर्द्धिन्यो** होत्रा विशेष्याः ॥१०॥

**अष्टौ प्रतिहर्तृपोतृनेष्टृच्छावाकेभ्यस्तास्तृतीयिन्यः ॥११॥**

**चत्वारि सुब्रह्मण्याग्नीध्रोन्नेतृग्रावस्तुद्भ्यस्ताः पादिन्यः ॥१२॥**

अष्ट सहस्राणि द्वात्रिंशतश्चतुर्थोऽशः । तेन कथं तृतीयिन्य इति वादः । सत्यम् । प्रकृतौ तृतीय भाक्त्वात्तृतीयिन्य इत्युक्तम् । तथोत्तरत्र पादिन्य इत्यपि । सर्वत्र स्त्रीलिङ्गं होत्रभिप्रायम् । गर्गत्रिरात्रे **पञ्चाशतमर्द्धिनीभ्यः** (द्रा. श्रौ. २६.१.२०) इति । व्यवहारार्थं संज्ञाकरणम् ॥१२॥

**अबलानस्य ज्ञातीन् सवित्तानावहेयुस्ताञ्जिनीयाद्दक्षिणावेलायाम् ॥१३॥**

दक्षिणाकाले यजमानस्य **ज्ञातीन्** बलहीनान् **सवित्तानावाह्य** प्रसह्य स्वाधीनान् कुर्यात् ॥१३॥

**इषूंश्चैभ्योऽस्येत् ॥१४॥**

तान् प्रति प्रत्येकमिषून्निरस्येत् विजयभावनार्थम् । न पुनरत्यन्तहिंसा कार्या ॥१४॥

---

2. My[1] द्वादशमरत्नीनां for द्वादशाहं पत्नीनां
7. C. अर्द्धिनीभ्यः for अर्द्धिन्यः
8. My[2] अर्द्धभक्ताः for अर्द्धभाक्तत्वात्
11. C. om. वादः
12. My[2] °भाक्ता for °भाक्त्वात्;
13. C. My[2] पञ्च° for पञ्चा°
15. My[1] M अस्मै for अस्य
20. My[1] om. प्रति

**तांस्त एव प्रत्याहरेयुर्विजयस्व राजन्निति ।।१५।।**

**त एव** ज्ञातयः स्वयमेव **तानि**षूनादाय यजमानसमीपे समर्पयेयुः **विजयस्व राजन्निति** वदन्तः ।।१५।।

**तेषां वित्तस्य तृतीयमृत्विग्भ्यो दद्यात् ।।१६।।**

स्पष्टम् ।।१६।।

**दशपेयेऽनुप्रसर्पिभ्यस्तृतीयम् ।।१७।।**

**दशपेये** चमसानुप्रसर्पिभ्यो ब्राह्मणेभ्यस्तृतीयम् ।।१७।।

**शेषं तेभ्य एव प्रत्युत्सृजेत् ।।१८।।**

**ग्रामानेभ्योऽपि दद्यात् ।।१९।।**

ग्रामानपि स्फीतानेभ्यो ज्ञातिभ्यो दद्यात् ।।१९।।

**राजन्यास्ते स्युस्तत ऊर्ध्वमनभिषेक्याः ।।२०।।**

तत ऊर्ध्वं ते ज्ञातयो राज्याभिषेकाय [अनर्हाः] राजन्यशब्दधारिणो न तु राजानः ।।२०।।

**तेनेष्ट्वा न साक्षादवभृथमभ्यवेयात् । कृष्णविषाणं कृष्णाजिन-पादं वा निदध्यात् ।।२१।।**

अभिषेचनीयेनेष्ट्वा न स्वयमवभृथे स्नानं कुर्यात् । किंतु कृष्णविषाणमप्सु निदध्यात् । तेनैव स्नानं कृतं भवतीति भावः । किमर्थमिति चेत्तदुच्यते । **शुक्रा दीक्षायै तपसो विमोचनीर्** इति अवभृथस्नानमन्त्रलिङ्गादवभृथस्नानदीक्षा-विमोचनार्थम् अभिषेचनीयदीक्षा च दशपेयस्यापि साधारणत्वाद् दशपेयान्ते विमोचनीया न मध्य इति भावः ।।२१।।

---

2. C. om. त एव ··· वदन्तः (L. 3)
7. C. °प्रसृप्तिभ्यः for °प्रसर्पिभ्यः
11. My[1] अनभिषेक्याः for अभिषेक्याः
12. My[4] राजाभिषेक्याः for राज्याभिषेकाय
16. C. °भृथ° for °भृथे
20. C. om. इति भावः

**वाराहीभ्यामित उपानद्भ्यां व्रजेत् कार्ष्णीभ्यां प्रत्याव्रजेत् ।।२२।।**

अवभृथार्थमितो देवयजनात् गच्छन् यजमानो वराहचर्मकृताभ्यामुपनद्भ्यां गच्छेत् । कृष्णमृगचर्मणा कृता कार्ष्णी ।।२२।।

**इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले प्रथमः खण्डः ।।१।।**

---

3. $My^1$ वाराह° for वराह°

# द्वितीयः खण्डः

**तद्दीक्षित एव दशाहे ततो दशपेयेन यजेत ।।१।।**

अभिषेचनीयादूर्ध्वं दशभिः संसृपेष्टिभिर्दशाहेऽतिक्रान्ते दशपेयं कुर्यात् । **तद्दीक्षित** इति अभिषेचनीयदीक्षयैव दीक्षितः । न पृथग् दीक्षां कुर्यादित्यर्थ इति । अत एव पूर्वमुक्तम् न साक्षादभिषेचनीयेऽवभृथस्नानम् इति ।।१।।

**तस्य ब्राह्मणं दश दश चमसमभियन्तीति ब्रह्मण्यचतुर्था उद्गातृचमसं भक्षयेयुः षट्सु चान्ये ।।२।।**

एकैकं **चमसं दश दश** ब्राह्मणा भक्षणार्थमनुप्रसर्पेयुरिति श्रुत्यर्थः । तत्र चोदकप्राप्तानामृत्विजामबाधेनैव दशसंख्योपपत्तिः । तथा चाश्वलायनः—नित्यान् **प्रसंख्यायेतराननुप्रसर्पेयुः** (आ. श्रौ.      ) इति । तत्र प्रकृतौ संप्रैषमन्त्रे उद्गातृणां चमसः प्रैत्विति बहुवचनाच्चत्वारोऽप्युद्गातारश्चमसं भक्षयेयुः । ततोऽन्ये षट् चेत्येवं दशपूर्तिः । ननु च एवं प्रकृतौ संप्रैषमन्त्रे सुब्रह्मण्यस्यापि भक्षणं कार्यम् । तथैव जैमिनिरब्रवीत् । सूत्रकारस्तु प्रकृतौ मतभेदान्नोक्तवान् ।।२।।

**एवमितरेषामेकैकं यावता दश पूर्येरन् यजमान चमसादन्यान् ।।३।।**

**इतरेषामपि** चमसिनां प्रत्येकचमसं दश दश भक्षयेयुः । किमत्रापि षडेव स्युः । नेत्याह—यावद्भिर्दशपूर्तिस्तावन्तः प्रवेशनीया इति । चमसी तावदेकः । ततोऽन्ये नव नवेत्यर्थः । अत्र यजमानस्य क्षत्रियत्वात् नवचमसभक्षणमेवेति । तस्य चमसे सोमभक्षणाभावात् । उक्तं **यजमानचमसादन्यानिति** । अत्रापस्तम्बः शतं ब्राह्मणाः

---

3. My[2] before दशाहे adds : अध्वर्युब्राह्मणोक्ताभिः
4. My[2] अस्य सूत्रकारस्य पक्षः for अर्थ इति
7. C. M. वा for च
11. C. प्रैषतु for प्रैतु
12. C. My[2] om. संप्रैषमन्त्रे
16. C. चमसानां for चमसिनां; My[1-2] C. प्रत्येकं for प्रत्येक
17. My[2] यावता दश पूर्येरन्निति तावन्तस्तावन्तः for यावद्भिः · · · · तावन्तः
18. C. च for चमसे

पिबन्तीति तैत्तिरीयकश्रुतेः प्राकृतचमसव्यतिरिक्तान् दश चमसानधिकान् कल्पयित्वा प्रतिचमसमृत्विग्व्यतिरिक्तानेव दश दश ब्राह्मणान् कल्पयति। अन्यथा शतं ब्राह्मणा इति संख्याविरोध इति मन्यते ॥३॥

आदशमात् पुरुषादन्वाख्यायेति ब्राह्मणं व्याचष्टे—

**ते दश मातॄर्दश पितॄनित्यन्वाख्याय प्रसर्पेयुरादशमान् पुरुषादिति ह्याह ॥४॥**

ते प्रत्येकं स्वकीयान् दश पितॄन् मातॄश्चानुपूर्वं कीर्तयेयुः। इत्थमसावस्खलितब्राह्मण्यः ॥४॥

**यत्राब्रह्मणीमधिगच्छेयुर्ब्राह्मण्येवाभ्यासं दश तं पूरयेयुः ॥५॥**

यदि मातृवर्गे काचिदब्राह्मणी स्यात्तदा ततः पूर्वकथितामेव ब्राह्मणीं पुनः कथयित्वा दशसंख्या पूरणीया ॥५॥

**अस्मरन्तश्च यतः स्मरेयुः ॥६॥**

कश्चित् पूर्वपुरुषमस्मरन्तो यं तावत् स्मरेयुस्तमेवाभ्यस्येयुः। तदिदमभ्यासेन पूरणं मुख्याभाव इति मन्तव्यम् ॥६॥

**ऋत्विग्भिः सह धिष्ण्यानुपतिष्ठेरन् ॥७॥**

अनुप्रसर्पण इति शेषः ॥७॥

स्रगुद्गातुः (तां. ब्रा. १८.६.८) इति ब्राह्मणं व्याचष्टे—

**स्रगुद्गातुरिति स्रप्स्यतेऽस्मै बहिष्पवमानं हिरण्यस्रजं त्रिपुष्करां प्रतिमुञ्चेत् ॥८॥**

इति। बहिष्पवमानार्थं प्रसर्पणं करिष्यत उद्गात्रे हिरण्यस्रजं प्रतिमुञ्चेदित्यर्थः ॥८॥

---

2. C. कल्पयेयुः for कल्पयति; My[1] after कल्पयति ins. इति

7. My[2] कथम् for इत्थम्

13. My[2] केचित् for कश्चित्, C. om. कश्चित् · · · बहिष्पवमानं (L. 18)

20. My[2] सर्पणं for प्रसर्पणं

**आस्ताव उपविष्टाय यजमान औदकीं द्वादशपुष्करां यास्य स्वा स्यात् ॥९॥**

बहिष्पवमानास्तावदेशे उपविष्टायोद्गात्रे द्वादशपुष्करामौदकीमुदके जातपुण्डरीकनिर्मितां स्रजम्। न पूर्ववद्धिरण्यनिर्मितामित्यर्थः। या यजमानस्य स्वा स्वभूता दीक्षाकाले स्वदेहप्रतिमुक्ता। तथा चापस्तम्बेनोक्तम्—**दीक्षायां स्थाने द्वादशपुण्डरीकां स्रजं प्रतिमुञ्चते** (आप. श्रौ. ) इति। तां बहिष्पवमानसमय उद्गात्रे प्रतिमुञ्चेत् ॥९॥

**स्तुते बहिष्पवमाने यजमानायैवौदकीं प्रत्युत्सृजेत् ॥१०॥**

बहिष्पवमानस्तुत्यनन्तरमौदकीं मालां यजमानायैव प्रतिदद्यात् ॥१०॥

**इतरया प्रतिमुक्तया सर्वमहः कुर्वीत ॥११॥**

इतरया स्वर्णस्रजेत्यर्थः। तामहः शेषं धारयाण एव कर्म कुर्वीत ॥११॥

**तां स एवाहरेत् ॥१२॥**

तां हिरण्मयीमुद्गातैव गृह्णीयात् ॥१२॥

**प्राकाशावध्वर्योः** (तां. ब्रा. १८.९.१०) इति ब्राह्मणं व्याचष्टे—

**प्राकाशावध्वर्य्वोरिति सौवर्णोऽध्वर्योर्दक्षिणतः स्याद्राजतः प्रतिप्रस्थातुः सव्यतः ॥१३॥**

इति। सौवर्णः प्राकाशकुण्डलो कर्णेऽध्वर्योर्देयः। राजतः कुण्डलः प्रतिप्रस्थातुः सव्ये कर्णे। **अध्वर्य्वोरिति** ब्राह्मणगतं द्विवचनं प्रतिप्रस्थातारमभिप्रेत्येति मन्तव्यम् ॥१३॥

**वासः पोतुरिति कार्पासं स्यात् ॥१४॥**

---

3. $^0$मानार्थम् for $^0$मान$^0$; My[1] $^0$पुण्डरीकाम् for $^0$पुष्कराम्

4. My[2] after स्रजं adds : प्रतिमुञ्चेत्

5. My[1] स्वदेहे for स्वदेह$^0$; My[2] दीक्षाया: for दीक्षायां

8. M $^0$मानेन for $^0$माने

9. My[1] om. प्रति$^0$

18. My[1] $^0$गत$^0$ for गतं
My[2] after $^0$प्रेत्य ins. उक्तम्

**वरासी नेष्टुरिति क्षौमी स्यात् ॥१५॥**

**ब्राह्मणेनैवेतरा विज्ञाताः ॥१६॥**

स्पष्टानि ॥१४-१६॥

**तस्यावभृथादुदेत्य संवत्सरं देवव्रतं चरेत् ॥१७॥**

स्पष्टम् ॥१७॥

तान्येवाह—

**उन्मृन्नी (?द्री) तानाप्लवमानः ॥१८॥**

स्नानमकुर्वन् उद्वर्तनमन्त्रं शरीरे कुर्यात् ॥१८॥

**धावेत दन्तान्निकृन्तयेन्नखानि श्मश्रूणि वापयेत न केशान् ॥१९॥**

दन्तधावनादित्रितयं सिद्धमेवोक्तम् । केशवपननिषेधेन तत्तुल्यजातीयत्वेन तस्यापि निवृत्तिर्मा भूदित्येवमर्थम् । अत्र केशवपनीय इति क्रतोः समाख्यानात् संवत्सरं धृतकेशस्य पश्चाद् दीक्षासमय एव केशवपनं न पूर्वमिति गम्यते । तेन न केशानिति तन्निषेधः ॥१९॥

**वैयाघ्रे चर्मण्युत्तरलोम्न्यग्न्यगारे संविशेत् ॥२०॥**

स्पष्टम् ॥२०॥

**अहरहः समिध आदध्यात् ॥२१॥**

स्वयमेव काष्ठान्यग्निसमिन्धनार्थमाहृत्यावदध्यात् ॥२१॥

**नानु ग्रामं प्रविशेत् ॥२२॥**

अरण्य एव वसेत् ॥२२॥

**नास्याब्राह्मणा राष्ट्रे वापयेरन् ॥२३॥**

ब्राह्मणव्यतिरिक्तास्त्रयोऽपि वर्णास्तावन्तं कालं तद्वदेव वपेयुः ॥२३॥

**आश्वानां च न केशांश्छिन्द्युः ॥२४॥**

---

5. $My^{1-4}$ C. om. स्पष्टम् · · · आह (L. 6)

7. $My^{1}$ उन्मृत्तिता $My^{4}$ उद्वत्तिता $My^{2}$ उद्धृलीता for उन्मृन्नीत

8. $My^{1}$ कुर्वन् for अकुर्वन्

9. $My^{2}$ निकुन्तयेत for निकृन्तयेत्

C. वापयेत् for वापयेत

14. C. $My^{2}$ $My^{4}$ om. तन्$^{0}$

स्पष्टम् ॥२४॥

**न तेजनीदन्तान् ॥२५॥**

इषुकाण्डप्रकृतिरोषधिस्तम्बविशेषस्तेजनीत्युच्यते । तदन्तलग्नशल्यस्तद्दन्तः । **सुपर्णं वस्ते मृगो अस्य दन्त** (ऋ. वे. ६.७५.११) इति दर्शनात् । तदयमर्थः । तेजनीलग्नानि शल्यानि न छिन्द्युः ॥२५॥

**न प्रस्रवणानि ॥२६॥**

सन्ततः (? ताः) रुद्रास्तोयप्रवाहाः प्रस्रवणानि । तान्यपि (न) छिन्द्यात् ॥२६॥

**ब्राह्मणास्तु यथाभिप्रेतं ये चताननु स्युः ॥२७॥**

ब्राह्मणास्तदधीनाश्च यथाकामं केशवपनादिकं कुर्युः ॥२७॥

**इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले द्वितीयः खण्डः ॥२॥**

---

3. $My^2$ after उच्यते adds :—यथा च गह्वृचब्राह्मणम्—चतुःसंधिर-राभीषुरनीकं शल्यस्तेजनं पर्णानिति; $My^2$ तदन्तः शल्यः for तदन्त-लग्नशल्यः

6. $My^1$ C. $My^4$ om. न प्रस्रवणानि · · · छिन्द्यात् (L. 7)

8. $My^2$ तानि नु for ताननु

9. $My^1$ ⁰क्रम् for ⁰कामं

## तृतीयः खण्डः

**संवत्सरादूर्ध्वं केशवपनीयाय दीक्षेत । यस्मिन् कालेऽभिषेचनीयेन यजेत ॥१॥**

**यस्मिन् काले** चैत्रमासस्य पूर्वपक्षद्वितीयायामभिषेचनीयः कृतः आगामिसंवत्सरे तस्मिन्नेव काले केशवपनीयस्य दीक्षेत्यर्थः ॥१॥

**तस्य पौर्णमास्यामतिरात्रः ॥२॥**

**तस्य** केशवपनीयस्य क्रतोश्चैत्र्यां **पौर्णमास्यां** सुत्येत्यर्थः ॥२॥

**दशपेयेनेष्ट्वा य उत्तरः पूर्वपक्षस्तस्मिन्नेव केशवपनीयेन यजेतेति धानंजय्यः ॥३॥**

**दशपेयेनेष्ट्वा उत्तरः पूर्वपक्षो** वैशाखमासस्य तस्मिन्नेव दीक्षेत ॥३॥

**पौर्णमास्यां चैवातिरात्रः ॥४॥**

वैशाखमासस्य **पौर्णमास्या**मित्यर्थः ॥४॥

**तस्य सहस्रं दक्षिणाः ॥५॥**

स्पष्टम् ॥५॥

**तस्योदवसानीयेनेष्ट्वा पौर्णमासेन व्यष्टिद्विरात्राय दीक्षेतामावास्यायां पूर्वमहरिति चेच्चिकीर्षेत् ॥६॥**

अपरपक्षस्य प्रथमायामुदवसानीयां कृत्वा पौर्णमासमकृत्वा तदानीमेव **व्यष्टिद्विरात्राय** दीक्षां कुर्यात् । **अमावास्यायां पूर्वमहरुद्विष्ट उत्तरम्** (तां. ब्रा. १८.११.८) इति ब्राह्मणोक्तपक्षं यदि **चिकीर्षेत** इति । **अनिष्ट्वा पौर्णमासेनेति** वचनं दर्शपूर्णमासयोः सहितयोः फलसाधनत्वादागामिन्याममावास्यायां व्युष्टिद्विरात्रकरणेन दर्शस्य कर्तुमशक्यत्वात् तन्निवृत्या पौर्णमासोऽपि न कर्तव्यः ॥६॥

---

4. My[2] om. आगामिसंवत्सरे .
7. C. चैत्र⁰ for चैत्र्यां
8. My[2] after एव adds काले
9. लामकायनः for धानञ्जयः
10. My[1] पूर्वः for पूर्व⁰
21. My[1] ⁰प्रकरणेन for ⁰करणेन
My[4] कार्यः for कर्तव्यः

**पौर्णमास्यामिति चेत्पूर्वपक्ष एव दीक्षेत ॥७॥**

अथ यदि पौर्णमास्यां पूर्वमहर्व्यष्टकायामुत्तरम् (तां. ब्रा. १८.११.८) इति पक्षं कर्तुमिच्छेत् तदानीं केशवपनीयानन्तरमपरपक्षं तूष्णीमासित्वा तदनन्तरं पूर्वपक्ष एव दीक्षेत ॥७॥

**उभयोर्विचारयोर्यजनीय उत्तरमहः ॥८॥**

उभयोरपि कल्पयोर्यजनीये प्रतिपदि द्विरात्रस्योत्तरमहः ॥८॥

अत्र व्यष्टकायामुत्तरमहरि (तां. ब्रा. १८.११.८) ति ब्राह्मणम् । तत्र व्यष्टकापदं व्याचष्टे—

**व्यष्टकायामुत्तरमिति तामिस्रप्रथमास्तिस्रो व्यष्टका इत्याचक्षते ॥९॥**

तामिस्रपक्षस्योपक्रमे तिस्रस्तिथयो व्यष्टका इति वदन्ति । व्यष्टकेति रूढिरियम् ॥९॥

**उभे एव पूर्वपक्षे स्यातां ये एव समानपक्ष इति ह्याह ॥१०॥**

यद्वा द्विरात्रस्योभेऽप्यहनी पूर्वपक्ष एव द्वयोः पुण्याहयोरव्यवधानेन कुर्यात् ॥१०॥

**पूर्वेणैव दक्षिणा व्याख्याताः ॥११॥**

पूर्वेण केशवपनीयेन ॥११॥

**तस्मिन्नेव पूर्वपक्षे क्षत्रस्य धृतिना यजेतावकाशश्चेत् स्यात् ॥१२॥**

स्पष्टम् ॥१२॥

**अविद्यमाने य उत्तरः पूर्वपक्षस्तस्मिन् ॥१३॥**

**सोऽभ्यारोहणीयेन व्याख्यातः ॥१४॥**

**तयोः पृथक् सहस्रे दक्षिणा इति गौतमधानंजय्यौ ॥१५॥**

**द्वे च सहस्रे केशवपनीये ॥१६॥**

**तथा व्युष्टौ ॥१७॥**

स्पष्टानि ॥१३-१७॥

---

2. My[1] अह्नो द्व्यष्ट[0] for अहर्व्यष्ट[0]

16. My[4] व्याख्यात् for व्याख्याताः

20. My[2] M पूर्वः for पूर्व[0]; My[2] om. तस्मिन्

**चत्वार्यभिषेचनीये गौतमः पञ्च धानंजय्यः ।।१८।।**

**अभिषेचनीये** चतुःसहस्रं पञ्चसहस्रं वेति पक्षद्वयम् । अभिषेचनीये पूर्वोक्तेन सह विकल्प्यते ।।१८।।

**नित्यं त्वबलानां ज्ञातीनां वित्तम् ।।१९।।**

त्रिष्वपि पक्षेषु ज्ञातीनामबलानां वित्तं नित्यमेव देयम्

समाप्तो राजसूयः ।।१९।।

अथ राज्ञामेकाहः । तत्राह—

**राज्येकविंशतिवर्गान् यथोत्साहं दद्यात् ।।२०।।**

इति । अश्ववर्ग एको गोवर्ग एको हस्तिवर्ग एक इत्येवमे**कविंशतिवर्गान्** यथोत्साहं दद्यात् ।।२०।।

**ऐन्द्रेण त्वृषभेण पुरस्तादुपरिष्टाच्च परियजेत ।।२१।।**

अस्यैकाहस्य **पुरस्तादुपरिष्टाच्च**ेन्द्रदेवत्यमृषभमालभेत ।।२१।।

**राजा राज्यमिच्छन्नेतेन यजेत ।।२२।।**

**विराजि दश वर्गान् यथोत्साहं दद्यात् ।।२३।।**

**आग्नेयेन तु पशुना पुरस्तादुपरिष्टाच्च परियजेत ।।२४।।**

स्पष्टानि ।।२२-२४।।

**वैश्वदेवेनोपशदे ।।२५।।**

उपशदस्य **वैश्वदेवेन** परियागः कार्यः ।।२५।।

**तस्य चतुर्विंशशतं दक्षिणाः ।।२६।।**

स्पष्टम् ।।२६।।

**पूर्वे वयस्युच्चावचान् याजयित्वोपनीय वा तेभ्यः समावर्त्स्यन् पुनःस्तोमेन यजेत ।।२७।।**

ब्राह्मणे बहुप्रतिग्रहणमभोज्यभोजनं च पुनःस्तोमाहरणे निमित्तमुक्तम् । सूत्रकारस्तु शाखान्तरीयमपि निमित्तद्वयमाह । उच्चावचाननियतवृत्तीनयाज्यानपि

---

19. My[1] विंशतिं for विंश

21. My[4] समावृत्तिमिच्छञ् for समावर्त्स्यन्

याजयित्वेत्यर्थः । पुनः प्रत्यापत्तिहेतुः पुनः स्तोमः । तेभ्यः समावृत्तिमिच्छन् अयाज्ययाजनादिभ्यो निवृत्तिं करिष्यन्नित्यर्थः । यस्य याज्ययाजनादिचिकीर्षा सर्वथा निवृत्ता तस्यात्राधिकार इत्यर्थः ॥२७॥

**तस्य द्वादशमिथुना दक्षिणा इति धानंजय्यः ॥२८॥**

गौश्चर्षभश्चेत्येकं मिथुनम् । तानि द्वादश ॥२८॥

**पुनः संस्कृतो रथः पुनरुत्स्यूतं शामूलं पुनर्धेनुः पुनर्वत्स इति शाण्डिल्यः ॥२९॥**

शामूलं वासोविशेषः । तज्जीर्णं सद्वयनविशेषेण नवीकृतं पुनरुत्स्यूतम् । या गौर्जीर्णत्वाच्चिरकालम् प्रसूता पुनर्दैवात् प्रसूयते सा पुनर्धेनुः ॥२९॥

**एतेषां यथोत्साहं दद्यात् ॥३०॥**

गतम् ॥३०॥

**चतुष्टोमयोरेकशफानां पूर्वस्मिन्यथोत्साहं दद्यात् ॥३१॥**

पूर्वस्मिंश्चतुष्टोमे यथाबलमेकशफानामश्वादीनां दानम् ॥३१॥

**उभयेषामुत्तरस्मिन् ॥३२॥**

उभयेषामेकशफानामन्येषां चेत्यर्थः ॥३२॥

इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले तृतीयः खण्डः ॥३॥

---

4. My[4] °मिथुनानि for °मिथुना

4. My[1] om. इति

6. My[4] शमूलं, M. श्वामूलं for शामूलं

13. C. °खुराणां for °शफानां; My[2] अश्वानां दानं कुर्यात् for अश्वादीनां दानम् ।

15. C. °खुराणां for °शफानां

## चतुर्थः खण्डः

**उद्भिद्वलभिद्भ्यामविप्रयोगेण यजेत ॥१॥**

**अविप्रयोगेणे**ति सहितयोरेव फलसाधनत्वान्न पृथक् पृथगित्यर्थः ॥१॥

**तावुभौ सप्तापवर्गौ स्याताम् ॥२॥**

तिस्रो दीक्षास्तिस्र उपसदः सप्तममहः सुत्येत्येवं सप्तापवर्गौ ॥२॥

**वसन्ते चार्द्धमास एनावन्तरेण स्यात् ॥३॥**

वसन्तर्तावनयोरर्द्धमासो व्यवधायकः स्यात् । अर्द्धमासस्य व्यवहिताभ्यां वसन्ते यजेतेत्यर्थः ॥३॥

**मासः संवत्सरो वा ॥४॥**

अन्तरेण स्यादित्येव ॥४॥

**तत्रेषुरिष्टिः ॥५॥**

**तत्र** तयोरन्तरालकाले इषुर्नामेष्टिः कार्या । अत्रापस्तम्ब :—**आग्नेयेनाष्टाकपालेनान्तरालं प्रतिपद्यते** (आप. श्रौ.          ) इति । अत्रैतुरिति पाठे उद्भिद्वलभिदोरन्तरालमेतुर्गच्छतो यजमानस्येष्टिः कार्या ॥५॥

**तयोः पृथक् चतुर्विंशति वर्गान्यथोत्साहं दद्यात् ॥६॥**

गतम् ॥६॥

**पृथक् चतुर्युजावश्वरथावपचित्योरुभयतः कांस्यकवचौ ॥७॥**

**अपचित्यो**रेकाहयोः प्रत्येकं चतुर्भिरश्वैर्युक्तौ रथौ दद्यात् । कंसमयेन कवचेनाधस्तादुपरिष्टाच्च बद्धौ **कांस्यकवचौ** ॥७॥

**शतार्हाः स्युरश्वाः शतक्रियो वा ॥८॥**

ते च चत्वारोऽप्यश्वाः रथे युक्ताः प्रत्येकं गोशतार्हाः स्युः । यद्वा गोशतेनैव क्रीत्वा देयाः । ते **शतक्रिय** इति ब्राह्मणेनोक्ताः ॥८॥

**राजैताभ्यां यजेतेति शाण्डिल्यः ॥९॥**

**यः कश्चापचितिकाम इति धानंजय्यः ॥१०॥**

सहेति वचनाभावान् पृथगेवोभयोरपि फलसाधनत्वम् ॥१०॥

---

9. M. माससंवत्सरेषु for मासः संवत्सरो

17. My² °युगा° for °युजा°

**ऐकाह्निकेन व्रतेनोक्त उपायोऽग्नेः स्तोमयोः ॥११॥**

ऐकाहिकस्य महाव्रतस्य दीक्षोपसत्प्रकारेणानुष्ठानमुपायः ॥११॥

**तयोः पृथक् चत्वारि धान्याचितानि दक्षिणाः ॥१२॥**

धान्यैराचितानि शकटानि धान्याचितानि ॥१२॥

**षड्गवानि पूर्वे चतुर्गवाण्युत्तरस्मिन् ॥१३॥**

षड्भिरनडुद्भिर्युक्तं षड्गवम् । शकटं विशेष्यम् ॥१३॥

**ऋषभाणां द्वादशशतं दक्षिणाः सहस्रं वर्षभे ॥१४॥**

ऋषभसंज्ञके क्रतावित्यर्थः ॥१४॥

**अविद्यमानेषु कतिचिद् अप्यृषभाः स्युः साण्डा इतरे वत्सतराः ॥१५॥**

अविद्यमानेष्वृषभेषु **कतिचिदपि** तावत् दश वा विंशतिर्वा अवश्यमृषभाः संपाद्याः । ततोऽन्ये वा **साण्डाः** वत्सतराः स्युः । तैः सहस्रसंख्या पूरणीया ॥१५॥

**वैश्यं यं विशः सराजानः पुरस्कुर्वीरन् स गोसवेन यजेत । स बृहस्पतिसवेन व्याख्यातः ॥१६॥**

**सराजानो** राज्ञा सहिता वैश्या **यं वैश्यं** महत्तया पुरस्कुर्वन्ति तस्य गोसवो बृहस्पतिसववद् दक्षिणापाकरणादिधर्माः ॥१६॥

**अयुतं त्वस्य दक्षिणाः ॥१७॥**

स्पष्टम् ॥१७॥

अथ मरुत्स्तोमे क्रतावेतेन त्रीन्याजयेद् (तां. ब्रा. १९.१४.३) इति ब्राह्मणम् के पुनस्ते त्रयः । अत आह —

**सखायो भ्रातरो वा ये संपादयेयुस्ते मरुत्स्तोमेन यजेरन् ॥१८॥**

संपादनं संप्रतिपत्तिरिति पूर्वमेव व्याख्यातम् । ये परस्परं प्रतिपद्यन्ते सह यक्ष्यामह इति ते त्रयः **सखायो भ्रातरो वा यजेरन्** ॥१८॥

---

9. M. कतिपयाः for कतिचित्

23. My[2] om. °प्रति°; My[2] after एव adds: व्रात्यस्तोमे

24. My[2] यक्ष्यामः for यक्ष्यामहे

**तस्य दक्षिणा यथारूपाः पञ्चशारदीये पशव आलभ्यन्ते। तेषां यथोत्साहं दद्युः ॥१९॥**

**पञ्चशारदीये** राजीवा नवनीतपृश्नीरित्यादीनि रूपाणि वक्ष्यन्ते। तद्रूपाः स्युः ॥१९॥

**येषां केषां चेति धानंजय्यः ॥२०॥**

न रूपविशेषादरः कार्यः ॥२०॥

**कुलदक्षिण इन्द्राग्न्योः कुलायः ॥२१॥**

कुलं वर्गो दक्षिणा यस्य स कुलदक्षिणः। यथा दासकुलं गोकुलमित्यादि ॥२१॥

**सहस्रमिन्द्रस्तोमे ॥२२॥**

स्पष्टम् ॥२२॥

**राजपुरोहितौ यजेयातामिन्द्राग्न्योः स्तोमेन ॥२३॥**

स्पष्टम् ॥२३॥

**गायत्रीसंपन्ना दक्षिणा ब्राह्मणो दद्याज्जगती संपन्ना राजा ॥२४॥**

**गायत्रीसंपन्ना** इति चतुर्विंशतिर्गावो देया इत्यर्थः ॥२४॥

**कामं तु पृथग्यजेयाताम् ॥२५॥**

कामं पृथगेव यष्टव्यं न सहैवेति नियमः। **पुरोधाकामो यजेत** (तां. ब्रा. १९.१७.७) इति स्वतन्त्रस्याप्यधिकारात्। एवं यज्ञोऽपि राज्यकामस्य पृथगधिकार इति कल्प्यम् ॥२५॥

**तयोरेवमेव दक्षिणाः ॥२६॥**

पृथगधिकारयोरपि तथैव दक्षिणाः ॥२६॥

**विघनाभ्यां पशुकामो यजेताभिचरन्वा ॥२७॥**

विघनयोः पृथगेव पशुसाधनत्वम् ॥२७॥

---

19. My[1] कल्प्यः for कल्प्यम्

20. My[1] C. My[4] om. एवम्

अत्र प्रथमे विघने तृतीयं पवमानमधिकृत्य कल्पकार आह—**सोमसामाथर्वणं वे** (आ. क. ५.१८.१) ति । तदनुभाष्यं व्याचष्टे—

**सोमसामाथर्वणं वेत्याथर्वणं पशुकामस्य यज्ञे कुर्यात् सोमसामाभिचरत ॥२८॥**

इति । **अभिचरतो** यजमानस्य **सोमसाम** साम स्यात् । पशुकामस्य तु **आथर्वणम्** इति व्यवस्थित [:] विकल्पः ॥२८॥

**बृहतीसंपन्ना दक्षिणाः पशुकामस्य ॥२९॥**

षट्त्रिंशदित्यर्थः ॥२९॥

**इषुणाभिचरतो व्याख्यातौ ॥३०॥**

**अभिचरतो** यजमानस्येषुणा **व्याख्यातौ** विघनौ । इषुवद्दक्षिणादानमित्यर्थः । कुत एतत् । ऋक्सामयोः कल्पकारेणैव क्लृप्तत्वात् ॥३०॥

**संदंशवज्रौ च ॥३१॥**

पञ्चविंशब्राह्मणे अनधीतावपि संदंशवज्रावेकाहौ षड्विंशब्राह्मणे दर्शनात् । विघनानन्तरं कल्पकारेण क्लृप्तौ तावपीषुणा व्याख्यातौ । अत्रापि दक्षिणादिकमेवादिश्यते ॥३१॥

**राजानं संदंशेनाभिचरेज्जनपदं वज्रेण ॥३२॥**

स्पष्टम् ॥३२॥

**राजानमभिचरन्व्यत्यासमेनौ प्रयुञ्जीत ॥३३॥**

**राजानमभिचरन्**यदि सकृत्प्रयोगे फलं न प्राप्नुयात् ततो यावत्फललाभं संदंशवज्रयोर्व्यत्यासं प्रयोगः स्यात् ॥३३॥

---

2. My[1] तदा भाष्यं, My[4] तदनुभाष्य for तदनुभाष्यं

3. My[1] ⁰काम⁰ for ⁰कामस्य

5. My[4] om. साम

11. My[4] एवं for एव

20. My[1] om. स्यात्

**ज्योतिष्टोमेनैवान्ततो यजेत शान्त्यर्थः शान्त्यर्थः ।।३४।।**

कृतेऽभिचारे पश्चात् प्रकृतिभूतो ज्योतिष्टोमः शान्त्यर्थः कार्यः ।।३४।।

**इति द्राह्यायणश्रौतसूत्रे पञ्चविंशे पटले चतुर्थः खण्डः ।।४।।**

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
समाप्ताः सर्व एकाहाः अथाहीनान् प्रवक्ष्यति ।।२५।।

**इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे पञ्चविंशः पटलः समाप्तः ।।२५।।**

---

4. My[2] धन्विनारोपिते दीपे पञ्चमे पटलेऽधुना for इति छन्दोगसूत्रस्य ··· °निर्मिते ।

## षड्विंशः पटलः

## प्रथमः खण्डः

### अहीनाः

अथाहीनान् प्रस्तौति—

**पौर्णमासीदीक्षामासापवर्गा अहीनाः ॥१॥**

इति । उदगयने कस्यांचित् पौर्णमास्यां दीक्षित्वा मासेन समापनीयाः सर्वेऽप्यहीनाः ॥१॥

**तेषां द्वादशोपसदः । षडिति धानंजय्यः ॥२॥**

द्वादशाहीनस्येति तैत्तिरीयकश्रुतेः द्वादशोपसत्त्वम् । धानंजय्यस्तु श्रुत्यन्तरात् षडुपसद इत्याह ॥२॥

**एकविंशेऽहनि यज्ञपुच्छं त्रिंशे वा ॥३॥**

हारियोजनप्रभृतियज्ञपुच्छम् । तदेकविंशेऽहनि कार्यम् । तस्य पुच्छमात्रत्वात् । तेन विनैव मासापवर्गत्वं युक्तमित्येकं मतम् । सह तेनैवेति मतान्तरम् । तदानीं **त्रिंशेऽहनि यज्ञपुच्छं मासापवर्गा** इति श्रुतेः । उभयथाप्युपपत्तेरिति भावः ॥३॥

अत्र त्रयोदशातिरात्रेषु सप्तदश दीक्षा द्वादशोपसदः सुत्यमहरुत्तममिति मासापवर्गत्वम् । अथ द्विरात्रादिषु सुत्याभ्युच्चये कथमित्याह—

**सुत्याभ्युच्चये दीक्षाप्रतिह्रासः ॥४॥**

इति । द्विरात्रे षोडश दीक्षा त्रिरात्रे पञ्चदशेत्येवं दीक्षायाः प्रतिह्रासः कार्यः । द्वादशोपसत्त्वनियमात् ॥४॥

अथ के पुनरहीना इत्यत आह—

**सर्वेऽतिरात्रा अहीना द्विरात्रप्रभृतयश्चाहर्गणाः ॥५॥**

---

9. My[1] after ⁰श्रुतेः adds : च; My[1] om. द्वा⁰; C. ⁰सोनसमत्वम् for ⁰उपसत्त्वम्

12. My[4] हार्योजन⁰ for हारियोजन⁰

14. after त्रिंशे ins. अह्नि
My[4]प्रतिपत्तेः My[1] अतिपत्तेः for उपपत्तेः

17. My[4] दीक्षां for दीक्षा⁰; M. ⁰प्रमृति⁰ for ⁰प्रति⁰

इति । अह्नां समूहोऽहीनः । **अह्नः खः क्रताविति** समूहार्थे व्याकरणस्मृतेः । तत्र द्वादशाहप्रभृतीनि सत्राणीति वक्ष्यति । तेष्वहीनशब्दस्य प्रयोगाभावात् । ततः पूर्वेष्वेवाहर्गणेषु पङ्कजादिवदहीनशब्दो योगरूढः । त्रयोदशातिरात्रेषु अहर्गणत्वाभावेऽपि यज्ञपुच्छस्य द्वितीयदिवससाध्यत्वेन कथंचिदहर्गणत्वमाश्रित्याहीनत्वमिति कल्प्यम् । तत्रापि अहीनशब्दप्रयोगबलात् ॥५॥

अथ किमविशेषेण द्विरात्रादयोऽहीनाः । नेत्याह—

**अन्यत्र चातुर्मास्यराजसूयाभ्याम् ॥६॥**

इति । राजसूयोऽभ्यारोहणीयाभिषेचनीयाद्यनेकसुत्यासमुदायरूपत्वादहर्गणः । तथैव सोमचातुर्मास्यान्यपि । सुत्यासमुदायत्वात् । तथापि नाहीनौ ॥६॥

कुत इत्याह—

**ऋक्समाम्नायान्तरायादहीनवैधर्म्याच्च ॥७॥**

इति । ऋक्समाम्नायस्य **पन्यंपन्यमिन् सोतारः** (सा. १६५७) इत्यादिराहीनिकस्य तयोरन्तरायात् । अनध्ययनादित्यर्थः । यदि तावप्यहीनौ स्यातां तदानीं चातुर्मास्यप्रकरण एव **पन्यं पन्यमि**त्यादेरध्ययनं स्यात् । न चैतदस्ति । किं च राजसूये पृथग्दीक्षोपसत्काः सुत्याः । तथैव चातुर्मास्येषु द्विरात्रादिषु पुनस्तन्त्रेणैव दीक्षोपसद इत्यहीनत्ववैधर्म्याच्च नाहीनत्वम् ॥७॥

ततः किमित्याह—

**तेषां रात्रेर्विशेषः पन्यं पन्यं श्रौतकक्षं दैवोदासं होतृषाम कौत्सस्य लोक आष्टादंष्ट्रं त्वामाविशन्त्विति ॥८॥**

आहीनिक्यां रात्रौ **यः पन्यं पन्यमिति** कल्पकारोक्तो **रात्रेर्विशेषः** स **तेषां**

---

4. C. अपि for इति

5. My[1-2] My[4] शब्द⁰ for अहीनशब्द⁰

8. My[4] My[1] C. om. ⁰रूप⁰;

12. My[2] before ऋक्⁰ adds: अतः; My[1] अहीनकस्य for आहीनिकस्य

13. My[1] तेषु for तयोः My[1] अनध्यायात् for अनध्ययनात्; My[1] तेऽप्यहीनाः स्युः for तावप्यहीनौ स्याताम्

राजसूयचातुर्मास्यव्यतिरिक्तानामेवाहीनानां धर्मः । तथाहीनयाजनमकार्यमिति याजननिषेधोऽपि तयोर्न प्रवर्तते । तयोरहीनत्वाभावात् ॥८॥

अथ सर्वाहीनेषु दक्षिणाविधानमारभते—

**अश्वमेधादन्ये सहस्रदक्षिणाः प्राक् चतूरात्रेभ्यः ॥९॥**

ज्योतिष्टोमातिरात्रमुपक्रम्य प्राक्चतूरात्रे ये अहीना ब्राह्मणे विहितास्ते सर्वे **सहस्रदक्षिणाः** । अश्वमेधवर्जम् ॥९॥

**तत्प्रभृतीनां भूयस्यः सुत्याभ्युच्चयेन ॥१०॥**

चतूरात्रप्रभृतीनां तत्तदधिकसुत्यानुसारेण भूयस्योऽधिका दक्षिणाः स्युः ॥१०॥

कथमित्यत आह –

**त्रयस्त्रिंशता त्रिभिश्च शतैरित्येके कृतान्तदर्शनात्त्रिरात्रे ॥११॥**

गवां त्रयस्त्रिंशता त्रिभिश्च शतैरधिकैः सह गोसहस्रं चतूरात्रे दद्यात् । एवं पञ्चरात्रादावप्यधिकसुत्यासु प्रत्येकं शतत्रयं त्रयस्त्रिंशच्च देयाः । कुत एतत् । गर्गत्रिरात्रे तथैव कृतान्तस्य दक्षिणानिर्णयस्य ब्राह्मणे दर्शनात् । तत्र हि प्रत्येकं शतत्रयं त्रयस्त्रिंशच्च विहितम् ॥११॥

**पञ्चविंशं शतं सहस्रं चोपजन इत्यपरम् ॥१२॥**

चतुर्थप्रभृतिदिवसेषु प्रत्यहं सहस्रं शतं च पञ्चविंशत्यधिकं उपजनोऽधिकमिति मतान्तरम् ॥१२॥

कुत इत्याह—

**एवमयुतोपपत्तिः पौण्डरीके ॥१३॥**

**पौण्डरीके** एकादशरात्रे **अयुतं दक्षिणाः** (तां. ब्रा. १९.१३.६) इति श्रुतेरेवमेवोपपद्यते । कथम् । त्रिरात्रे तावत् सहस्रं ततः परे दिवसाष्टके नव सहस्रमुपजायते । तदयुतं संपद्यते ॥१३॥

---

1. My² transp. राजसूय after चातुर्मास्य; C. om. एव

5. My¹ om. सर्वे

9. My¹ om. कथमित्यत आह

13. My¹ प्रत्यहं for प्रत्येकं

21. My¹ om. नव⁰.

**ताः समं सर्वेष्वहःसु विभजन् दद्यात् ॥१४॥**

यद्यपि चतुर्थप्रभृतिसहस्राद्युपजनः तथापि ताः सर्वेष्वहःसु समशो विभज्य दद्यात् ॥१४॥

**समानुपपत्तावुत्तमेऽहनि भूयिष्ठाः ॥१५॥**

समविभागानुपपत्तौ उत्तमेऽहनि भूयसीर्दद्यात्। तथा सप्तरात्रे प्रतिदिवसं पञ्चाशीत्यधिकं सप्तशतमुत्तमेऽहनि समानुपपत्तौ पञ्च गावोऽधिका देयाः ॥१५॥

समविभागस्यापवादमाह—

**अयुतमेकादशरात्रे दद्यान्नवनव पूर्वेष्वहःसु शतानि सहस्रमुत्तमे ॥१६॥**

अयुतं दद्यादिति सिद्धस्यैवानुवादोऽपवादप्रदर्शनार्थः नव नव पूर्वेष्वहनि समविभागस्यापवादोऽयम् ॥१६॥

**त्रिरात्राणां प्रथमेऽहनि वषट्कारिभ्यो दद्यात्। ग्रावस्तुते च ॥१७॥**

सप्त वषट्कर्तारः। तेभ्यो ग्रावस्तुते च प्रथमेऽहनि दानम् ॥१७॥

**छन्दोगेभ्य उत्तमे ॥१८॥**

उत्तमे तृतीयेऽहनि छन्दोगेभ्यो दानम् ॥१८॥

**मध्यम इतरेभ्यः ॥१९॥**

इतरेभ्यश्चतुर्भ्यो मध्यमेऽहनि दानम् ॥१९॥

**शतमेकैकस्मैमध्यतः कारिभ्यो दद्यात् ॥२०॥**

महर्त्विग्भ्यः प्रत्येकं शतं शतं यथोक्ते काले देयम् ॥२०॥

---

6. My[1] सप्तदशम् for सप्तशतम्
   My[1] om. अधिका:
10. My[1] प्रदानार्थः for ⁰प्रदर्शनार्थः
12. M. अतिरात्राणां for त्रिरात्राणां
15. C. after उत्तमे ins. अहनि
20. My[2] om. one शतं; My[2] यथोक्त⁰ for यथोक्ते

**पञ्चाशतमर्द्धिनीभ्यः ॥२१॥**

अर्द्धिनीभ्यः होत्रादिभ्यः प्रत्येकं पञ्चाशतमुक्तकाले देयम् । अर्द्धिनीप्रभृतयो राजसूये दर्शिताः **ता अर्द्धिन्य** (द्रा. श्रौ. २५.१.१०) इत्यादिना ॥२१॥

**तृतीयिनीभ्यो विंशतिं पोत्रे तथा नेष्ट्रे त्रिंशतम् इतराभ्याम् ॥२२॥**

तृतीयिनीनां होत्राणां चतसृणां मध्ये **पोत्रे नेष्ट्रे** च प्रत्येकं विंशतिः । **इतराभ्याम**च्छावाक प्रतिहर्तृभ्यां प्रत्येकं त्रिंशत् ॥२२॥

**आग्नीध्राय च ॥२३॥**

**आग्नीध्राय** पादिनी होत्रेति राजसूये पठितम् । तस्मै च त्रिंशद्देयाः ॥२३॥

**पादिनीभ्यो नवोन्नेत्रे दशेतराभ्याम् ॥२४॥**

पादिनीनां मध्ये **उन्नेत्रे नव** देयाः । आग्नीध्रस्य तु पूर्वमेवोक्तम् । इतरे द्वे पादिनीशिष्टे । ग्रावस्तुत् सुब्रह्मण्यश्च ताभ्यां प्रत्येकं **दश** दश ॥२४॥

**अन्वहं उन्नेत्रे समं दद्यात् ॥२५॥**

**उन्नेत्रे** नव देया इत्युक्तम् । तास्वन्वहं तिस्रस्तिस्रो देया इत्यर्थः ॥२५॥

**इति द्राह्यायणश्रौतसूत्रे षड्विशे पटले प्रथमः खण्डः ॥१॥**

## द्वितीयः खण्डः

**दश सदस्याय प्रथमेऽहनि सप्तर्ति द्वितीये विंशर्ति तृतीये ॥१॥**

सदस्यः सप्तदश ऋत्विजाम् ॥१॥

**दश दशार्षेयप्रवादेभ्यो य उक्ता ब्राह्मणेन ॥२॥**

आर्षेय इति प्रवादो येषां त आर्षेयप्रवादाः ये ब्राह्मणेनोक्ताः । तद्यथा— य आर्षेयो विद्वांस्तस्मै **प्रथमेऽहनि देयम्** । **योऽनार्षेयो विद्वांस्तस्मै द्वितीयेऽहनि** । **य आर्षेयो विद्वांस्तस्मै तृतीयेऽहनि देयम्** (तां. ब्रा. २०.१५.९-११) इति । ननु च द्वितीयेऽहन्यनार्षेयः श्रुतः । तत् कथमार्षेयप्रवादेभ्य इत्यविशेषेणोक्तम् । तदुच्यते । भूयस्त्वादेवं वाद इत्यदोष इति ॥२॥

अत्र ब्राह्मणे विद्वानविद्वानिति पदच्छेदे संदेहः । अत्र आह—

**अनूचानौ पूर्वयोरह्नोरननूचान उत्तमे ॥३॥**

पूर्वयोरह्नोरनूचानौ विद्वांसौ तृतीयेऽहन्यविद्वानिति मन्तव्यम् । ब्राह्मणस्य चायमर्थः । ऋषिर्वेदपारगः । तस्यापत्यमार्षेयः । तस्मै स्वयं च श्रोत्रियाय प्रसर्पकाय प्रथमेऽहनि दश देयाः । उत्तरयोस्त्वह्नोरेकैकगुणहीनाय दश दशेति । तत्र द्वितीयेऽहनि आर्षेयत्वगुणहीनाय देयाः । तृतीये त्वश्रोत्रियायेति । अत्र भरद्वाजस्त्वाह—**ब्राह्मणे विद्वानविद्वानिति संदेहः** । तत्र विद्वानित्यर्थं **ब्रुवते** (भा. श्रौ. ) इति सूत्रकारस्य तन्नेष्टम् । तथैव निदानकारोऽप्याह—**विद्वानविद्वानिति ब्राह्मणं भवति । नानासाधुरयं त्रिरात्रस्तत्र नानर्त्विजौ चिकीर्षेत् । कथमविद्वानृत्विक् स्यादिति । सदस्यानेव प्रतिग्राहकानधिकुरुत** (नि. सू. ) इति ॥३॥

**दश शतं शिष्यन्ते । ता ऋत्विग्भ्यो दद्यात् । प्रसर्पकेभ्यो वा ॥४॥**

---

4. CM. ⁰प्रवादिभ्यो for ⁰प्रवादेभ्यो

9. My[1] वादा: for वादः

10. My[1] च्छेद⁰ for च्छेदे ; C. ततः for अत्र

15. My[1-2] ⁰रहिताय for ⁰हीनाय

My[2] तत्र भार⁰ for अत्र भर⁰

16. C. विद्वानविद्वानिति संदेहत्वं च for विद्वानित्यर्थं

सहस्रतमीं विना दशाधिकं शतमवशिष्यन्ते ॥४॥

**सहस्रतमीं षोडशकलां मध्यमेऽहनि ब्रह्मण आग्नीध्राय च ॥५॥**

**सहस्रतमीं** गां मूल्यतः षोडशभागं कृत्वेत्यर्थः ॥५॥

**शुक्लं कृष्णं रोहितमित्यस्या रूपाणि ॥६॥**

**त्रिरूपा सहस्रतमीति** ब्राह्मणम् । तद्व्याख्यानमेतत् **शुक्लं कृष्णं रोहितमिति रूपाणीति** ॥६॥

**दश कला ब्रह्मणे । पञ्चाग्नीध्राय ॥७॥**

कलाशब्दो भागवचनः ॥७॥

**एकाममा कुर्वीत ॥८॥**

**एकां** कलां भागमात्मने निदध्यादित्यर्थः । **अमेति** निपातः स्वीकारवचनः ॥८॥

**तामन्यया गवा निष्क्रीय काम्यासीत्यनुमन्य दक्षिणे वास्याः कर्णे जपित्वा गोष्वपि विसृजेत् ॥९॥**

तां सहस्रतमीमन्यां गां दत्वा निष्क्रीय प्रत्यादाय यजमानः स्वकीयासु गोष्वात्मन एव स्थापयेत् ॥९॥

एवमहीनेषु दक्षिणाविधिरुक्तः । अथ प्रथममहीनं ज्योतिष्टोमातिरात्रमनुसंधत्ते—

**ज्योतिष्टोमविधिरनन्तराम्नानात् द्वादशाहाङ्गभूतः स्यात् ॥१०॥**

इति । अत्र ब्राह्मणम्—**ज्योतिष्टोमेनातिरात्रेणर्द्धिकामो यजेत** (तां. ब्रा. २०.१.२) इति । तत्र कल्पकार आह—**क्लृप्तो ज्योतिष्टोमोऽतिरात्रोऽषोडशिक** (आ. क. १.१.१) इति । अस्यायमर्थः । **प्रजापतिरकामयत । बहु स्याम् । प्रजा-**

---

1. $My^{1\cdot 2}$ C. after विना ins. एव

10. C. अपाकुर्वीत $My^1$ M. मा कुर्वीत for अमा कुर्वीत

14. $My^1$ सृजेत् $My^2$ सृजेत for विसृजेत्

23. $My^1$ om. अस्यायमर्थः

**येयेति । स एतमग्निष्टोममपश्यत्** (तां. ब्रा. ६.१.१) इत्युपक्रम्य चतुर्भिरध्यायैः ज्योतिष्टोमः क्लृप्त इत्यर्थः । तत्र सूत्रकारश्चोदयति । योऽयं चतुर्भिरध्यायैर्ज्योतिष्टोमविधिः स तु द्वादशाहावयवभूतस्य ज्योतिष्टोमातिरात्रस्य विधिः । न पुनः स्वतन्त्रस्येति । कुतः । **अग्निना पृथिव्यौषधिभिः** (तां. ब्रा. १०.१.१) इत्यादिं ब्राह्मणं द्वादशाहं विधाय **स्तोमो युज्यते** (तां. ब्रा. ११.१.१) इत्यादिना स्वकण्ठेनैव दशरात्रमकल्पयत् । शिष्टमहर्द्वयमतिरात्रः । तस्य कथं क्लृप्तिरित्यपेक्षायां ततः पूर्वं ज्योतिष्टोमविधिरनन्तराम्नानात् द्वादशाहार्थ इति गम्यते । अन्यथा शिष्टमहर्द्वयमज्ञातं भवेत् । ततश्च द्वादशाहविधिरपूर्णः स्यात् ॥१०॥

**तल्लिङ्गदर्शनाच्च यथा पृष्ठानाम् ॥११॥**

किं च । ज्योतिष्टोमविधौ द्वादशाहलिङ्गस्य दर्शनं भवति । यथा बृहद्रथन्तरादेर्द्वादशाहीयस्य पृष्ठषट्कस्य साङ्गस्य सृष्टिवर्णनम् । तद्यथा—**स रथन्तरमसृजत । तद्रथस्य घोषोऽन्वसृज्यत** (तां. ब्रा. ७.८.६) इत्यादि । यदि स्वतन्त्रस्य ज्योतिष्टोमस्य विधिः स्यात् तदा रथन्तरादिषट्कस्य तद्धर्माणां च रथघोषादीनां सृष्टिवर्णनमयुक्तम् । द्वादशाहाङ्गभूतस्य विधौ तु द्वादशाहप्रकरणानुवृत्तेस्तदङ्गस्य रथन्तरादेः रथघोषादेश्च सृष्टिकथनं युक्तमेवेति भावः ॥११॥

**पुनराम्नानाच्चाहीनैकाहादौ ॥१२॥**

किं च । एकाहोपक्रमे अहीनोपक्रमे च ज्योतिष्टोमस्य **पुनराम्नानात्** ततः पूर्वं न तस्य स्वतन्त्रो विधिः । यदि स्यात् पुनराम्नानमनर्थकं स्यात् । तस्मात् **क्लृप्तो ज्योतिष्टोमोऽतिरात्रः** (आ. क. १.१.१) इत्युक्तमिदं कल्पकारवाक्यम् ।

---

6. My[1-4] ⁰रात्रम् for रात्रः

7. My[2] अनन्तरम् for अनन्तर⁰; My[2] द्वादशार्थः for द्वादशाहार्थः

10. My[2] अदर्शनं for दर्शनं;

My[2] तथा for यथा

13. My[1] ⁰घोषाणां for ⁰घोषादीनां

18. My[2] om. पुनराम्नानमनर्थकं स्यात्

19. My[4] om. इदं

तेन **द्वादशाहस्य षोडशिमन्तावति रात्रौ** (आ. क. ६.१.१) इति कल्पकारो यद् वक्ष्यति तदप्ययुक्तम् । ब्राह्मणे षोडश्यनाम्नानात् । एवं सति अहीन द्वादशाहेऽप्यहीनतोक्तिर्न भवति । ज्योतिष्टोमातिरात्रस्य द्वादशाहप्रकरणेनागृहीतत्वात् तथा चाहीनव्यतिरिक्तरात्रेरनाम्नानात् ॥१२॥

एवमाक्षिप्य समाधत्ते—

**नाना प्रकरणवत्तु चोदितानामानन्तर्यात् संबन्धो न स्याद् यथोपहव्यर्तपेययोः ॥१३॥**

इति । फलार्थतया स्वतन्त्रस्य प्रस्तावः प्रकरणमित्युच्यते । पृथक् प्रस्तावयोगेन चोदितानां कर्मणामानन्तर्यमात्रान्न परस्परसंबन्धः । यथा उपहव्यर्तपेययोरेकाहयोर्ज्योतिष्टोमविधौ च पृथगेव द्वादशाहात् प्रस्तावो भवति । यथा **प्रजापतिरकामयत बहु स्यां प्रजायेय** (तां. ब्रा. ६.१.१) इत्युपक्रम्य **एकस्मा अन्यो यज्ञः कामायाह्रियते सर्वेभ्योऽग्निष्टोमः** (तां. ब्रा. ६.३.२) इति ॥१३॥

यत् पुनर्लिङ्गमुक्तं तत्राह—

**लिङ्गग्रहणं चान्यार्थेन यथा षष्ठेऽहनि शक्वरीणाम् ॥१४॥**

अन्यस्य वामदेव्यस्य प्रशंसार्थं रथन्तरादिसृष्टिवर्णनम् । तद्यथा **पिता वै वामदेव्यम् । पुत्राः पृष्ठानि । तस्मात् पृष्ठानां स्तोत्रे वामदेव्येनानुष्टुवन्ती** (तां.ब्रा.७.६.१-३) इति पृष्ठस्तुत्यनन्तरं वामदेव्येन स्तवनं विधातुं तस्मात् पृष्ठानां सृष्ट्युपन्यासः । न पुनः स्वार्थतया । यथा पृष्ठस्य षष्ठेऽहनि **मृज्यमानः सुहस्त्ये**

---

3. My[4] तस्मात् for तथा

4. My[1-4] °अव्यतिरिक्त° for °व्यतिरिक्त°;

6. My[1-2] My[4] °वक्तु° for °वत्तु

8. M[2] प्रस्तावं for प्रस्तावः; My[2] लक्षणं for प्रकरणं

My[2] योगे प्रकरणपृथक्प्रस्तावनचोदितानां for पृथक् प्र.··चोदितानां(L. 9)

9. My[2] om. एकाहयो

11. My[1] after एकस्मा adds वा

(सा. ५१७) ति । **सिमानां रूपम् सिमाभ्योह्यधिदेवत्यः प्रजायन्ते** (तां. ब्रा. १३.६.३-४) इति ब्राह्मणं शक्वरीणां जनकत्वं कीर्तयति । सिमा इति शक्वरीणां नामधेयम् ॥१४॥

अथ यदुक्तं पुनराम्नानमनर्थकमिति तत्राह—

**शेषविधिः पुनराम्नानम् ॥१५॥**

इति । **पुनराम्नानं** गुणविध्यर्थम् । न पुनः स्वरूपविधानार्थम् । कः पुनरत्र गुणः । **त्रिवृद्बहिष्पवमानम् । पञ्चदशान्याज्यानी** (तां. ब्रा. २०.१.१) ति स्तोमः । तथा **ऋद्धिकामो यजेत** (तां. ब्रा. २०.१.२) ति फलविधिश्चाभिप्रेतः । एकाहादौ **त्वेष एव प्रथमो यज्ञानामिति** प्राथम्यगुणविधिः । तस्मात् स्वतन्त्रोऽतिरात्रः पूर्वमेव क्लृप्तः इति सुष्ठूक्तं कल्पकारेण ॥१५॥

एवं स्थिते तत्रैवापरं विचारं प्रस्तौति—

**तस्मिन् स्वतन्त्रेऽहीनरात्रिः स्यादविशेषेण ह्यहीनेषु चोद्यते ॥१६॥**

एवं **स्वतन्त्रे** ज्योतिरतिरात्रे **आहीनिक्यां रात्रौ पन्यं पन्यमिति श्रौतकक्षमि** (आ. क. ६.१.२) ति कल्पकारोक्तातिरात्रः स्यात् । कुतः । सर्वाहीनेष्वविशेषेण विधानात् ॥१६॥

सिद्धान्तमाह—

**प्राकृती त्वेव स्यादधिकृत्याम्नानात् ॥१७॥**

इति । **प्राकृत्येव** रात्रिः **स्यात्** । अतिरात्रमधिकृत्याम्नानात् ॥१७॥

अविशेषविधानं तर्हि कथम् । अत आह—

---

1. C. अनि for हि
4. My[2] om. अनर्थकम
6. My[4] ⁰कथन⁰ for ⁰विधान⁰
9. My[1-4] C. एवं for एव; My[1-4] C. after प्रथमो add: यज्ञो
11. My[1] परं for अपरं
20. My[4] ⁰शेषेण for ⁰शेष⁰

**अविशेषचोदना शेषे यथा चतुरवत्तम् ॥१८॥**

इति । स्वतन्त्रातिरात्रव्यतिरिक्तेष्वहीनेष्वविशेषचोदना कल्पोक्ता भविष्यति । **यथा चतुरवत्तम् । जुहोतीत्य**विशेषवचनं जामदग्न्यव्यतिरिक्तेषु भवति । जमदग्नीनां तु पञ्चावत्तम् इति विशेषविधिः ॥१८॥

यथोक्तमेव न्यायं प्रसङ्गाद् विषयान्तरेऽतिदिशति—

**एतेनोंकास्योक्तं प्रत्याम्नानं वाचा रथन्तरे ॥१९॥**

**प्रस्तुतं वै सामावसीदति तदुद्गातोंकारेणोत्तभ्नोती** (द्रा. श्रौ. १८.३.१) ति सामान्यविहितस्योंकारस्य रथन्तरे साम्नि वागित्यादेयमिति विशेषविधानाद् वाक्शब्देन प्रत्याम्नानमेतेन व्याख्यानम् । ओंकारेणादानं रथन्तरे न कर्तव्यमित्यर्थः ॥१९॥

**असंभवाच्च शब्दार्थस्य ॥२०॥**

किं च । **वागित्यदेय**मित्यादानशब्दस्योंकारनिवृत्तावेव संभवः । आदानं नामोद्गीथोपक्रमः । येन ह्युपक्रान्ते नान्यस्य विषयोऽस्ति ॥२०॥

सिद्धान्तमाह—

**समुच्चयो वै तयोरपघाटिलावत् ॥२१॥**

ओंकारवाचोः **समुच्चयः** स्यात् । यथा महाव्रतस्तोत्रे । अपघाटिलानां वीणाविशेषाणामुद्गातृभिः समुच्चयः । न पुनरुद्गातॄणां निवृत्तिः । अर्थभेदात् । तद्वदत्रापि प्रस्तावशान्त्यर्थो वाक्शब्दः । **समुद्रमन्तर्धायोद्गा—वज्रेण वा एष**

---

3. My[1-4] रिक्ते⁰ for ⁰रिक्तेषु;
4. My[2] ⁰विधेः for ⁰विधिः
7. My[1] तम् for तद्
11. My[1-4] C. संभवाच्च for असंभवाच्च
13. एतेन for येन
17. My[4] after उद्गातृभिः adds. सह

**प्रस्तोतोद्गातारमभिप्रवर्तयति । यद्रथन्तरं प्रस्तौति । यद्वागित्यादेयम्** (तां. ब्रा. ७.७.६) इति श्रुतेः । तथा **प्रस्तुतं वै सामावसीदतीति** श्रुतेः सामावसानपरिहारार्थं ओंकारः ॥२१॥

यत् पुनरुक्तं आदेयमिति [अस्य] शब्दार्थौ न संभवतीति तत्राह—

**वागित्यादेयमिति देशविपर्ययमात्रम्** ॥२२॥

इति । सत्यम् । असंभवादेव वागोंकारयोः स्थानविपर्ययमात्रं कार्यम् । वाक्-शब्दं प्रथमं कृत्वा पश्चादोंकारः इत्यर्थः ॥२२॥

अत्र दृष्टान्तमाह—

**यथा वामदेव्ययज्ञायज्ञीययोः** २३॥

इति । यथा व्यूढस्य दशमेऽहन्यविवाक्ये वामदेव्ययज्ञायज्ञीययोः स्थानविपर्यय-मात्रम् । न पुनर्वामदेव्येन यज्ञायज्ञीयस्य निवृत्तिः । कार्यभेदात् शान्त्यर्थं वाम-देव्यमह्नः समाप्तौ कार्यम् । यज्ञायज्ञीयस्यावश्यकर्तव्यत्वात् । यज्ञायज्ञीयं पवमाने कार्यमिति । अत्र निदानकारस्तु रथन्तरेऽपि ओंकारं प्रथमं करोति । तत् सूत्र-कारस्य नेष्टम् ॥२३॥

**इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले द्वितीयः खण्डः ॥२॥**

---

2. My$^{2}$ सामावसीद$^{0}$ for सामावसान; My$^{1}$ $^{0}$साना$^{0}$ for $^{0}$सान$^{0}$

5. My$^{4}$ before वागि$^{0}$ adds:—समुद्रमन्तर्विद्गायेत्

6. C. विपर्यास for विपर्यय$^{0}$

8. My$^{1-4}$ C. तत्र for अत्र

10. My$^{1-4}$ C. om. व्यूढस्य

13. My$^{1-4}$ C. om. रथन्तरेऽपि

## तृतीयः खण्डः

अथाप्तोर्यामे मतान्तरप्रदर्शनार्थं कल्पकारोक्तमनुभाषते—

**अप्तोर्यामे कृता गर्भाः कल्पेन ॥१॥**

इति । **अप्तोर्याम्णस्तृतीयस्य सहस्रस्याज्यबहिष्पवमानमि** (आ. क. ६.३.१) त्यादिना कल्पकारेणाप्तोर्यामस्य क्लृप्तिरुक्ता गर्भाश्च क्लृप्ताः । तद्यथा **वैश्वजितानि पृष्ठानि पृष्ठानां गर्भाः** (आ. क. ६.३.३) इति । तस्यायमर्थः । विश्वजितो यानि पृष्ठानि तान्यप्तोर्यामस्य पृष्ठेषु गर्भाः स्युरिति । तेन **त्वामिद्धि हवामहे** (सा. ८०९-१०) इति बृहता प्रथमं पर्यायं स्तुत्वा **पिबा सोममिन्द्रमन्दतु त्वे** (सा. ६२७-९) ति वैराजेन मध्यमं पर्यायं कुर्यात् । पुनश्च बृहता तृतीयं पर्यायं कुर्यात् । एवं कृते वैराजस्य गर्भोपपत्तिरिति निदानकारेणोक्तं **बृहद्वैराजगर्भं करोती** (नि. सू. ८.२) त्यादिना । एवं वामदेव्यादिषु महानाम्नीप्रभृतीनां गर्भत्वं द्रष्टव्यम् ॥१॥

अथ सूत्रकारः स्वमतमाह—

**रथन्तरं वा पृष्ठं तस्य स्थाने बार्हतं वाजिजित् ॥२॥**

इति । माध्यंदिने पवमाने कल्पकारेण रथन्तरं क्लृप्तम् । **तस्य स्थाने वाजिजित् स्यात्** । बृहत्यामुत्पन्नं बार्हतम् ॥२॥

**बृहद्वारवन्तीये उत्तरे पृष्ठे ॥३॥**

श्यैतकालेययोः कल्पकारोक्तयोरुत्तरयोः पृष्ठयोः स्थाने क्रमेण बृहद्वारवन्तीये स्याताम् ॥३॥

---

2. My[1] om. अथ

5. My[2] क्लृप्तिमुक्त्वा for क्लृप्तिरुक्ता

7. My[1] C. om. पृष्ठानि

9. My[1-4] C. om. वैराजेन; My[1-4] C. om. पुनश्च ··· कुर्यात् (L. 10)

11. My[1-4] °देव्यादौ C. °देव्ये for °देव्यादिषु;
My[1-4] °नाम्नीनां for नाम्नीप्रभृतीनां

18. My[1-4] C. om. कल्पकारोक्तयोरुत्तर°

**कालेयस्यर्क्षु वारवन्तीयम् ॥४॥**

स्पष्टम् ॥४॥

**तस्य स्थाने पूर्वम् ॥५॥**

**तस्य** वारवन्तीयस्यातिरिक्तस्तोत्रेषु ब्राह्मणविहितस्य स्थाने पूर्वं वारवन्तीयं कार्यम् । अन्यथा एकस्यैव साम्नः एकस्मिन्नहनि पुनः करणे जामिदोषप्रसङ्गात् संचारदोषप्रसङ्गाच्च ॥५॥

**समन्तस्य च कालेयं पार्थस्य चौशनम् ॥६॥**

माध्यंदिने पवमाने कल्पकारोक्ते समन्तपार्थे त्यक्त्वा **कालेयमौशनं** च कार्यम् ॥६॥

एवं विकार उक्तः । गर्भास्तु त एव कार्या इत्याह—

**त एव गर्भाः पृष्ठेषु ॥७॥**

इति । **त एव** कल्पोक्ता इत्यर्थः ॥७॥

अथ पक्षद्वयस्यापि साधारणमाह—

**वैश्वजितान्याज्यान्याज्येषु गर्भान् कुर्यादिति धानंजय्यः । षाष्ठिकान्युक्थान्युक्थेषु ॥८॥**

**सुषमिद्धो न आवहे** (सा. १३४७-९) त्यादीनि वैश्वजितान्याज्यानि द्विविधस्याप्तोर्यामस्याज्येषु गर्भान् कुर्यात् । तथा षष्ठाहः संबन्धीन्युक्थान्यग्ने **त्वन्नो अन्तम** (सा. ११०७-९) इति गूर्दप्रभृतीनि गर्भान् कुर्यात् ॥८॥

**यथैवार्षेयकल्पेन शाण्डिल्यः ॥९॥**

पृष्ठेषु यदुक्तं गर्भे स्तवनं तदेवादरणीयं नाधिकं किंचिदिति **शाण्डिल्यः** ॥९॥

---

4. My[4] °रिक्तेषु for °रिक्तस्तोत्रेषु

5. My[2] करणात् for करणे; My[1] जामिदोषस्य for जामिदोष°

19. My[2] तथा for यथा; My[2] °कल्पत्वेन for कल्पेन

20. My[1] गर्भहननं My[4] गर्भभवनं for गर्भे स्तवनं

एवं ज्योतिष्टोमातिरात्रात् क्रत्वन्तरभूतोऽप्तोर्याम उक्तः । अथ ज्योतिरप्तोर्याममाह—

**ज्योतिष्टोमे वातिरात्रेऽतिरिक्तस्तोत्राण्यादध्यात् षोडशिमतीति ।।१०।।**

इति । सर्वप्रकृतिभूते ज्योतिरतिरात्र एव चत्वार्यतिरिक्तस्तोत्राणि कुर्यात् । **इति**-शब्दः शाण्डिल्यमतसमाप्त्यर्थः ।।१०।।

**त एव गर्भाः पृष्ठेषु यज्ञायज्ञीयं च बृहद्गर्भम् ।।११।।**

ज्योतिरप्तोर्यामेऽपि पृष्ठेषु गर्भस्तुतिः कार्या । तथा यज्ञायज्ञीये च स्वस्तोत्रीयं बृहद्गर्भं कुर्यात् । न पुनर्वैश्वजितम् । **त्वमग्ने यज्ञानाम्** (सा. १४७४-६) इति बृहत् । कुत एतत् । **वैश्वजितम्** इति विशेषावचनात् । अत्र क्रत्वन्तरभूतेऽप्तोर्यामे यज्ञायज्ञीयस्य बृहद्गर्भत्वं सूत्रकारो नेच्छति । ज्योतिरप्तोर्याममधिकृत्य वचनात् । पूर्वत्र **वैश्वजितान्याज्यानीति** सूत्रकारवचनाभावाच्च । निदानकारस्त्वाह—अपि च वैश्वजितैरावर्तिभिः सर्वाण्यावर्तीनि गर्भवन्ति कुर्यात् (नि. सू. ८.२) इति ।।११।।

**एकस्तोमेषु बैदत्रिरात्रे च स्वस्तोमातिरात्रिः स्यात् । तथा संधिः ।।१२।।**

एक एव स्तोमो येषां क्रतूनां ते एकस्तोमाः । **त्रिवृतातिरात्रेण ब्रह्मवर्चसकामो यजेत** (तां. ब्रा. २०.१०.१) इति खण्डचतुष्टयेन विहितास्त्रयस्त्रिवृतोऽतिरात्राः सर्वे षोडशिमन्त इति खण्डेन बैदत्रिरात्र उक्तः । तेषु सर्वेषु रात्रिः स्वकीयेन

---

1. My[1] om. अथ

5. C. कार्याणि for कुर्यात्

8. My[2] om. अपि

10. My[4] विशेषवचनाभावात् for वैश्व····वचनात्;
My[2] विशेष० for विशेषा०

12. My[2] सूत्रे for सूत्रकार०; My[4] om. च

17. My[4] मताः for ते

स्तोमेन पञ्चदशेनैव कार्या । तथा तेषु संधिस्तोत्रमपि स्वस्तोमेन त्रिवृतैव कार्यम् ॥१२॥

कुत इत्याह—

**उभयं ह्यविकारेण वर्तते ॥१३॥**

इति । रात्रिः संधिस्तोत्रं च उभयमप्यविकारेणैवान्यत्र सर्वत्र ब्राह्मणे श्रूयते । तद्यथा—**पञ्चदशीरात्रिस्त्रिवृत्सन्धिर्** (तां. ब्रा. २०.११.२) इति ॥१३॥

रांधौ हेत्वन्तरमाह—

**पराक्त्वं च त्रिवृतोऽन्यत्र संधेर्नोपपद्यते ॥१४॥**

प्रकृतौ तावत् संधिः पराक् भवति । न पुनरावर्तते । नवभिः ऋग्भिः क्लृप्तत्वात्तच्च पराक्त्वं त्रिवृतोऽन्यत्र पञ्चदशादौ न सिध्यति । नवभिरतिरिक्तानामृचामनाम्नानात् । तस्मात् सर्वथापि त्रिवृदेव संधिः ॥१४॥

न त्वयमाचार्यपक्षः । न पूर्वपक्षमात्रमित्युत्तरत्र व्यक्तिर्भविष्यति । अथ स्वमतमाह—

**त्रिवृतातिरात्रेणेत्यविशेषचोदना ॥१५॥**

इति । **त्रिवृता अतिरात्रेण ब्रह्मवर्चसकामः** (तां. ब्रा. २०.१०.१) इत्यविशेषेण स्तोम चोदनात् । तेन रात्रावपि त्रिवृदेव स्तोमः । तथा **पञ्चदशेनातिरात्रेण वीर्यकामः** (तां. ब्रा. २०.१०.१) इत्यविशेषात् संधिरपि पञ्चदश एव ॥१५॥

---

1. My[2] before स्तोमेन adds : प्राकृतेन
4. My[1] अपि for हि
9. My[2] My[4] कृतत्वात् for क्लृप्तत्वात्
12. My[1] उत्तारमत्र for उत्तारत्र;
    My[2] उत्तारव्यक्तिर् for उत्तरत्र व्यक्तिर् My[1] om. तु
14. My[2] before अविशेष ins. तु
15. My[2] before त्रिवृता adds : तु शब्दः पक्षनिवृत्त्यर्थः
16. My C. °दशाति° My °दश° for °दशेनाति

यत् पुनरुक्तं सर्वत्रोभयमप्यविकारेण वर्तन इति तत्राह—

**वृत्त्यपेक्षा चादेशे न विद्यते । यथा षोडशं प्रथमं रात्रिषामेति ॥१६॥**

इति । आदेशः प्रत्यक्षविधानम् । तस्मिन् सति न वृत्तिरादरणीया । **यथा** गर्गत्रिरात्रे **षोडशं प्रथमं रात्रिषामेति** प्रत्यक्षवचने सति पञ्चदशीरात्रिरिति सामान्यतो वृत्तिर्नापेक्ष्यते । तद्वत् ॥१६॥

दृष्टान्तप्रसङ्गात् सूत्रकरणलाघवार्थं तत्रैव किंचिदाह—

**तद्वैदोत्तमेऽप्याचार्या मध्यम इत्येके ॥१७॥**

**तत् षोडशं प्रथमं रात्रिषामे**ति वचनं वैदत्रिरात्रस्योत्तमेऽप्यहनि अतिदेशात् प्रवर्तत इत्या**चार्याः । मध्यमे**ऽहनी**त्येके** । किमर्थमिति चेत् तत्रोक्तं निदानकारेण— एवं सति तावत् स्तोत्रीया भवन्ति । यथा त्रिरात्र (नि. सू.      ) इति तस्यायमर्थः । यथा प्रकृतिगर्गत्रिरात्रः सहस्रस्तोत्रीयस्तथैव वैदत्रिरात्रोऽपि संपन्नो भवतीति । तत्राचार्याणां मते स्वस्तोमातिरात्रिरित्युक्तम् । तत्र प्रत्यहं त्रीणि शतानि त्रयस्त्रिंशच्च स्तोत्रीयाः । तेनैकन्यूनं सहस्रं प्रथमरात्रिषाम्नः षोडशत्वे सति पूर्णमेव सहस्रमिति भावः ॥१७॥

अथ यः स्वपक्षे संधेः पराक्त्वं न सिद्ध्यतीति तत् परिहरति—

**अर्थोक्तः संधावावापोऽभ्यासो वा ॥१८॥**

अविशेषविधिबलादेव संधेरपि पञ्चदशत्वे सति तत्सामर्थ्यादधिकानामृचामावापः कार्यः । **अभ्यासो वा** नवर्चस्य ॥१८॥

---

7. C. om. एव
8. C. तत्र for तत्
10. C. तत् for तत्र
11. My[1] स्तोत्रीयो भवति for स्तोत्रीया भवन्ति
12. My[1] प्रकृतिर् for प्रकृति⁰; My[1] om. वैद⁰
15. My[1] लाभः for भावः
17. M. अर्थोक्तिः for अर्थोक्तः

अत्रैकस्तोमानधिकृत्य कल्पकारेणोक्तम्—**षोडशः षोडशिनोऽनुब्राह्मणं वे** (आ. क. ६.११.३) ति । तदुपादाय व्याचष्टे—

**अनुब्राह्मणं वेति प्रकृत्यन्वयादेकविंशाः ॥१९॥**

इति । **एकविंश एव स्तोमो भवति प्रतिष्ठायै** (तां. ब्रा. १२.७.१२) इति प्रकृतौ **षोडशी**ति ब्राह्मणम् । तदनुसारेण कल्पार्थः । प्रकृतावेकविंश स्तोमान्वयादिहाप्येकविंशाः स्युरित्यर्थः ॥१९॥

पक्षान्तरमाह—

**अहस्तोमस्त्वधिकारात् ॥२०॥**

इति । **त्रिवृतातिरात्रेणे** (तां. ब्रा. २०.१०.१) ति यदहश्चोद्यते तस्यैव स्तोमः षोडशिनोऽपि स्यात् । **अनुब्राह्मण**मिति तस्यैव ब्राह्मणस्य प्रकृतत्वात् परामर्शः ॥२०॥

पूर्वस्मिन् पक्षे कंचिद्दोषमाह—

**नचैकस्मिन्नन्विति भवति ॥२१॥**

इति । यदि ब्राह्मणशब्देन प्रकृतिब्राह्मणमुच्यते तदा तस्यैकत्वाद**नुब्राह्मणमि**ति वीप्सा [न] वाच्या । **अनु**-शब्दो न युज्यत इति [अर्थः] । पक्षान्तरे तु त्रिवृतातिरात्रेण पञ्चदशेनातिरात्रेणेत्येवं तत्तद्ब्राह्मणानुसारेणेत्येवमर्थत्वादनुब्राह्मणमिति वीप्सोपपत्तिः ॥२१॥

दोषान्तरमाह—

**ज्यायांश्चोक्थेभ्य एकविंशः स्यादन्याय्यम् ॥२२॥**

प्रकृतिब्राह्मणानुसारे सति उक्थस्तोत्रेषु यः स्तोमस्त्रिवृदादिः ततो **ज्यायानेकविंशः** षोडशिनिः **स्यात्तच्च** ज्यायस्त्वं न क्वचिदपि दृष्टमित्य**न्याय्यम्** ॥२२॥

---

1. My[2] before षोडशिनो⁰ adds :–षोडशः
3. My[2] after वेति adds : विचारयन्ति
5. My[2] षोडशिनि for षोडशीति; My[2] after ⁰सारेण ins. इति
7. C. प्रकाश⁰ for पक्षा⁰
15. My[1], My[4] C. om. तत्तत् · · · इत्येवम्
19. M. उक्थ्य⁰ for उक्थ⁰
20. C. षोडशीन for षोडशिनिः

एवमनुब्राह्मणपदं व्याख्यातम् । अथेदानीं शौचिवृक्षेर्मतमाह—

**संपन्नित्येति शौचिवृक्षिः ॥२३॥**

इति । एकस्तोमेषु त्रिवृता पञ्चदशेनेत्यादिभिः शब्दैः स्तोमसंपत्तिर्विवक्षिता । **त्रिवृता त्रिवृत्संपन्नेन क्रतुनेत्यर्थः** । तेन तत्संपत्तिरेव **नित्या** अवश्यंभाविनी । **न पुनः** प्रतिस्तोत्रं त्रिवृदेव स्तोमः । ततश्च तन्मतेनैकस्तोमेषु रात्रिः संधिश्च स्वस्तोमावेव । तदविरोधेनैव संपत्तिसिद्धेः कथं प्रथमे तावदेकस्तोमे कृत्स्नापि रात्रिः पञ्चदशस्तोमा विंशतिस्त्रिवृतो भवन्ति । रात्रिव्यतिरिक्तानि सर्वाणि स्तोत्राणि त्रिवृन्तीति । एवं त्रिवृत्संपन्नेनातिरात्रेणेति शास्त्रार्थ इति ॥२३॥

ननु च सर्वदा षोडशिनः एकविंशत्वात् संपत्तिर्न सिद्ध्येत् । अत अह—

**एकविंशपञ्चदशौ मध्यमयोरहस्तोमावितरयोः ॥२४॥**

इति । **मध्यमयो**रेकस्तोमयोर्यौ षोडशिनौ तौ क्रमेणै**कविंशपञ्चदशौ** स्याताम् । **इतरयोः** प्रथमयो**रहस्तोमौ** । तद्यथा—प्रथमे त्रिवृत् षोडशी उत्तमेऽह्न्येकविंशः । एवं सति सर्वत्र तत्तत्स्तोमसंपत्तिः । एवं कल्पने संपद्विधिरेव प्रमाणमिति शौचिवृक्षेरभिप्रायः ॥२४॥

एवमेकस्तोमान् व्याख्याय द्विरात्रेषु वक्तव्याभावात् तानतिलङ्घ्य गर्गत्रिरात्रे ब्राह्मणमुपादाय व्याचष्टे—

**ब्राह्मणमाज्यदोहानामग्निमुपनिधाय स्तुवत इति ॥२५॥**

---

1. My[2] तथा for अथ

3. My[1] after संपत्तिर् ins. इति

6. My[4] om. संपत्ति⁰

7. My[4] संपद्यन्ते for भवन्ति; C. त्रिवृता for त्रिवृतो

10. C. एक⁰ for अह⁰

13. My[1] om. सर्वत्र

15. My[1] एव for एक⁰

इति । गर्गत्रिरात्रे **अग्निमुपनिधाय स्तुवते** (तां. ब्रा. २१.२.६) इति यद् **ब्राह्मणं तदाज्यदोहानां** तदङ्गत्वेनाग्निनिधानं विधत्त इत्यर्थः ॥२५॥

कः पुनरग्निः । कथं तस्य निधानम् । अत आह—

**होतुर्धिष्ण्येऽग्निं धारयेयुः । प्रथमेऽहनि यं मध्यंदिन आनयेयुः** ॥२६॥

इति । **प्रथमेऽहन्या**र्भवे पवमाने ऋतनिधनमाज्यदोहम् । तस्य गानकाले **होतुर्धिष्ण्येऽग्निं धारयेयुः** । तत्र स्थित्वाज्यदोहयोरिति **यमग्निं** माध्यंदिने सवने **अग्नीदग्नीन् विहरे**ति प्रैषकाले आनयन्ति तमग्निं तदाप्रभृति आज्यदोहकालं यावत् धारयेयुरित्यर्थः ॥२६॥

**प्रातः सवन उत्तरयोः** ॥२७॥

**उत्तरयो**रह्नोः **प्रातःसवने** यमग्निमानयन्ति तं माध्यंदिनपवमानं यावत् धारयेयुः । तत्र स्थित्वाज्यदोहयोरिति ॥२७॥

**स्तोत्रवेलायामेनं प्रज्वलयेयुः** ॥२८॥

स्तुतिकाले तमेवाग्निं प्रज्वलयेयुः ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले तृतीयः खण्डः ॥३॥**

---

1. My[2] om. यद्

2. My[1] अंगत्वेन for तदङ्गत्वेन

7. My[2] om. तत्र . . . °दोहयोरिति
My[1] वसने for सवने

8. My[1] आनयति for आनयन्ति

## चतुर्थः खण्डः

अथ **वाग्वै शबली** (तां. ब्रा. २१.३.१) त्यादि ब्राह्मणम् । शबलीहोमविधिः । तदनुसंधत्ते—

**सहस्रपोषकामः शबलीहोमं कुर्वीत ॥१॥**

इति । यः पशूनां सहस्रशः पोषं कामयते स शबलीहोमं कुर्वीत ॥१॥

किमविशेषेण यः कश्चिन्नेत्याह—

**नातिरात्रयाजीति धानंजय्यः ॥२॥**

यो गर्गत्रिरात्रयाजी तद्व्यतिरिक्तो न कुर्वीत ॥२॥

कुत इत्याह—

**त्रिरात्रो वा एतां प्रदापयतीति ह्याह ॥३॥**

इति । **वाग्वै शबली तस्यास्त्रिरात्रो वत्सः। त्रिरात्रो वा एतां प्रदापयति** (तां. ब्रा. २१.३.१) इति ब्राह्मणम् । तस्यायमर्थः । शबलीं कामधेनुं त्रिरात्रो वत्सस्थानीयः प्रस्तुतां करोतीति । तेन त्रिरात्रयाजिन एवायं होम इति गम्यते । आपस्तम्बस्तु त्रिरात्राङ्गमेव होममाह । न काम्यम् ॥३॥

**यः कश्च सहस्रपोषकाम इति शाण्डिल्यः ॥४॥**

गतम् ॥४॥

तस्य प्रमाणमाह—

**योऽलमन्नाद्याय सन्नथान्नं नाद्यादिति ह्याह ॥५॥**

**योऽलमन्नाद्याये**ति श्रुतेरयमर्थः । यो विद्यातपोभ्यां सहस्रपोषार्होऽपि सहस्रं नाप्नोति स जुहुयादिति । तेन अधिकारवाक्ये विशेषाश्रवणादनिष्टत्रिरात्रस्यापि

---

4. My[4] शबलि⁰ for शबली⁰

5. My[4] शबलि⁰ for शबली⁰

7. C. शाण्डिल्यः for धानंजय्यः

10. M. प्रतापयति for प्रदापयति

12. My[4] शबलिं My[1] शबली कार्यं⁰ for शबली⁰

होमेऽधिकार इति । अन्नाद्यं नाम पश्वाद्युप भोग इति । यत् पुनरुक्तं **त्रिरात्रो वा एतां प्रदापयतीति** वाक्यं तत्त्रिरात्रस्य माता शबलीति ज्ञानप्रशंसार्थम् । **प्रजापतिर्वा इदमेक आसीत् । तस्य वागेव स्वमासीद्** (तां. ब्रा. २०.१४.२) इत्यादिना त्रिरात्रस्य वत्सत्वं मातृत्वं च शबल्याः पूर्वमेव दर्शितम् ॥५॥

अथ प्रयोगमाह—

**वसन्ते प्रथमायां पूर्वपक्षस्य केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय तप्तं क्षीरं पिबेद् द्वादशरात्रीरधः शयीतानन्तर्हिते स्थण्डिले ॥६॥**

इति । **वरासीं वसानः** (तां. ब्रा. २१.३.४) इति ब्राह्मणोक्तमहतं वसनमिति । खट्वादिभिरनन्तर्हिते **स्थण्डिले** केवले भूतल इत्यर्थः ॥६॥

**नित्याभ्याहितोऽस्याग्निरावसथे स्यात् ॥७॥**

अग्नीनां पञ्चमो यो हि श्रौत आवसथ्यः सोऽजस्रमिध्मकाष्ठैराधेयः । औपासन एवाग्निरित्येके ॥७॥

**नैनमन्यः सुहृदः प्रैषकृतोऽनुविशेत् ॥८॥**

योऽस्य सुहृत् प्रेषितमर्थमनुतिष्ठति तदन्यो नानुप्रविशेदावसथे वसन्तम् ॥८॥

**अल्पव्याहारी च स्यात् ॥९॥**

यावदर्थं मितभाषीत्यर्थः ॥९॥

**अदूरगामी ॥१०॥**

स्पष्टम् ॥१०॥

**द्वादश्या उपव्युषं परिसमह्याग्निं परिस्तीर्यौदुम्बर इध्मः स्यात् स्रुक् स्रुवं च तथा चमसस्तस्मिन् दधिमधु सर्पींषि**

---

2. My[1] om. वाक्यं

9. C. वरासां My[1] वरासि for वरासीं;
My[2] ब्राह्मणं तद्व्याख्यात॰ for ब्राह्मणोक्तं

15. My[2] मेह प्रेहितम् for सुहृत् प्रेषितम्

17. My[1] om. अर्थः

**समानीय स्रुवेण स्रुचि गृह्णीयाच्चतुर्गृहीतमष्टगृहीतं वात्र जुहुयाच्छबली समुद्रोऽसीति ॥११॥**

द्वादश्या रात्रेर्व्युष्टिकाले पूर्वोक्त आवसथ्येऽग्नौ शबलीहोमः ॥११॥

**स्वाहाकारेणोत्तराम् ॥१२॥**

गतम् ॥१२॥

**स्रुचि यः शेषः स्यात् तं चमस आनीय प्राश्नीयात् ॥१३॥**

स्रुचि किंचिच्छेषयित्वा तं चमस आनीय प्राश्नीयात् ॥१३॥

**प्रक्षाल्य स्रुक्स्रुवं चमसं निदध्यात् ॥१४॥**

**तत्रैवानुप्रहरेदिति शाण्डिल्यायनः ॥१५॥**

स्पष्टे ॥१४-१५॥

**प्राङ्वोदङ्वा ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशोर्नाभिशृणुयात् तदरण्यं परेत्य तत्र दर्भस्तम्बमालभ्य शबली शबलीति त्रिष्परमकण्ठेन क्रोशेत् ॥१६॥**

वयसां प्रवादात् पूर्वमेव **ग्रामान्निष्क्रम्य यत्र ग्राम्यस्य पशो**र्गवादेः शब्दं न शृणुयात् तदरण्यं गत्वा तत्रस्थं **दर्भस्तम्बं** स्पृष्ट्वा **शबली शबली**त्युच्चैस्तरां **क्रोशेत्** ॥१६॥

---

1. My[1] इध्मानि यः for समानीय
2. My[2] My[4] ⁰च्छवलि for ⁰च्छबली; C. वा तज्जुहुयात् for वात्र जुहुयात्
3. My[2] ⁰होमं कुर्यात् for होमः
5. My[2] स्पष्टम् for गतम्
7. My[1] प्रश्नामि C. प्राशनम् for प्राश्नीयात्
8. C. ⁰स्रुवौ for ⁰स्रुवं
11. My[2] यथा for यत्र
12. M तत्रस्थं for तत्र M स्तम्भम् for स्तम्बम्; My[2] My[4] शवलि शवला⁰ for शबली शबली⁰
14. My[1] यावयासां My[4] यावयसी for वयसां
15. My[2-4] शवलि शवली⁰ for शबली शबली⁰

**यदन्यः शुनो गर्दभाद्वा प्रतिवाश्येत समृद्धं कर्मेति विद्यात् ॥१७॥**

यदि कश्चित् श्वगर्दभव्यतिरिक्तः पक्षी वा क्रोशानन्तरं प्रतिवाश्येत तदा **समृद्धं कर्म** शबलीहोम इति विद्यात् । तदा सकृदेवानुष्ठानम् ॥१७॥

अथ यदि न कश्चित् प्रतिवाश्येत तदा कथम् । अत आह--

**एवमातृतीयं संवत्सराभ्यासमप्रतिवाश्यमाने कुर्वीत ॥१८॥**

इति । **संवत्सराभ्यासमि**ति णमुल्प्रत्ययः । प्रतिसंवत्सरं शबलीहोममभ्यस्य कुर्यात् । अभिविधावाकारः । आतृतीयात् संवत्सरादित्यर्थः ॥१८॥

**प्रथमतश्चेत्तु श्वा गर्दभो वा प्रतिवाश्येत न पशूनामाशास्तीति विद्यात् ॥१९॥**

यदि प्रथम एव संवत्सरे **श्वा गर्दभो वा** शब्दं कुर्यात् तदा पशूनामाशासिद्धिर्नास्तीति **विद्यात्** ॥१९॥

**आतृतीयं चाप्रतिवाश्यमान आशा पशूनाम् ॥२०॥**

यदि त्रिष्वपि संवत्सरेषु न कश्चिदपि शब्दं कुर्यात् तदापि पशूनां सिद्धिरस्त्येवेति विद्यात् । दैवतम् । प्रतिषेधाभावात् ॥२०॥

अथ श्वगर्दभशब्दे जाते शान्तिं विधत्ते--

**शान्तिर्वामदेव्यं शान्तिर्वामदेव्यम् ॥२१॥**

इति । तदानीं **वामदेव्यं** गेयमित्यर्थः ॥२१॥

**इति द्राह्यायणश्रौतसूत्रे षड्विंशे पटले चतुर्थः खण्डः ॥४॥**

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीये दशके षष्ठः पटलो व्याकृतोऽधुना ॥२६॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे षड्विंशः पटलः समाप्तः ॥२६॥**

---

1. M My[2] C. अन्यत् for अन्यः; My[2] °वारयेत for °वाश्येत
3. My[1] किंचित् for कश्चित्
5. My[2] वारयेत for वाश्येत; My[1] किंचत् for कश्चित्
11. My[1-4] प्रथमम् for प्रथमे
14. My[2]तथा for तदा
16. C. अथवा for अथ श्व

## सप्तविंशः पटलः

## प्रथमः खण्डः

**राजाप्रतिघोऽश्वमेधेन यजेत ॥१॥**

यो न कुत्रचिदपि देशे प्रतिहन्यते सोऽप्रतिघः । सार्वभौम इत्यर्थः ॥१॥

**पौर्णमासी दीक्षा मासापवर्गाः** (द्रा. श्री. २६.१.१) इति सामान्यस्यापवादमाह—

**तस्योपायो यथा महाव्रते गौतमीयम् ॥२॥**

इति । **यथा महाव्रते** गौतमस्य मतत् । तद्वदश्वमेधे दीक्षाद्यनुष्ठानमित्यर्थः । **तत्र व्रतवत्सु सर्वेषु अमावास्यायां दीक्षित्वोखामाबध्नीत सांवत्सरिकेभ्योऽन्यत्रेति गौतमः । सह सुत्याभिः षडहानि संवत्सरादधिकानि कृत्वे** (द्रा. श्रौ. २२.२.१५-१६) ति गौतमस्य मतम् । तद्वदत्रापि कार्यम् ॥२॥

किमविशेषेणात्र गौतमीयं मतम् । नेत्याह—

**उपसदस्त्वस्याहीनिक्यः ॥३॥**

अहीनप्रयुक्ता एवात्र द्वादशोपसदः स्युः । न पुनस्तिस्र उपसदः । व्रतस्यैकाहिकस्य गौतमीयेनेत्युक्तम् अत्र न कार्यमित्यर्थः ॥३॥

**दीक्षित्वाश्वमुत्सृजेच्छ्वेतम् ॥४॥**

दीक्षायाः पूर्वमेवाश्वोत्सर्ग इति सूत्रकृद्भिः कैश्चिदुक्तम् । इहापि धानंजय्यादिमते वक्ष्यति । तन्निवृत्त्यर्थं दीक्षित्वेति वचनम् ॥४॥

---

5. My[2] अस्य for सामान्यस्य
8. My[1] तच्च for तद्वद्
9. My[2] तस्य for तत्र C. My[2] om. सांवत्सरिकेभ्योऽन्यत्रेति गौतमः (L. 10)
15. My[2] ऐकाहिकेऽस्य for ऐकाहिकस्य
    My[1] अकार्यम् for न कार्यम्
17. My[2] उत्सर्गः for अश्वोत्सर्गः; My[2] after इति adds : आपस्तम्बादिभिः
18. My[1] °मतेन for °मते

**कृष्णमण्डलमक्षणो रूपम् ॥५॥**

कृष्णं च मण्डलाकारं चाश्वचक्षुषो रूपं स्यात् ॥५॥

**यो जवेन संपन्नः ॥६॥**

योऽश्वो वेगेन संपन्नस्तमुत्सृजेदिति संबन्धः ॥६॥

**तमनावर्तयन्तो दिग्भ्यः संवत्सरं रक्षित्वा राजक्रये बध्नीयुः ॥७॥**

तमुत्सृष्टमश्वं यथाकामं संचारिणमनुधावेयुः । न पुनस्ततस्ततो देशादावर्तयेयुः । एवं रक्षित्वा संवत्सरस्य नवरात्रे शिष्टे राजक्रयदिवसे बध्नीयुः ॥७॥

मतान्तरमाह—

**ग्रीष्म उपक्रमेतेति धानंजय्यः वसन्त इति शाण्डिल्यः ॥८॥**

इति । स्पष्टम् ॥८॥

तदेव दर्शयति—

**चैत्रवैशाखयोरन्यतरस्य सप्तम्यामष्टम्यां वा मध्यतःकारिण ऋत्विजो ब्रह्मौदनं भोजयित्वा तेभ्यः पृथक् सहस्राणि दद्यादिति ॥९॥**

इति । दीक्षामकृत्वैव प्रथमं ब्रह्मौदनं कार्यम् ॥९॥

**पौष्ण्यामिष्टौ विततायां संस्थितायां वाश्वमुत्सृजेत् ॥१०॥**

कैश्चिदध्वर्युभिर्वाजसनेयिप्रभृतिभिरश्वोत्सर्जनार्थं पूषदैवत्येष्टिर्विहिता । तत्समाप्तावश्वोत्सर्गः ॥१०॥

**तं तयैवावृता रक्षयेयुः ॥११॥**

तत्रापि मते पूर्वोक्तेन प्रकारेणाश्वरक्षणम् ॥११॥

---

7. $My^{1,4}$ om. अश्वम्

14. $My^1$ $My^4$ C. ब्रह्मोदनं for ब्रह्मौदनं
M. दद्यामिति for दद्यात्

18. $My^{1,4}$ om. वाजसनेयिप्रभृतिभिः; $My^1$ °देवत्ये° for °दैवत्ये°

20. $My^2$ रक्षेयुः for रक्षयेयुः

21. C. संक्षणम् for रक्षणम्

**तत्र तिस्र इष्टयः सावित्र्यो भवन्ति ॥१२॥**

अश्वोत्सर्गानन्तरं संवत्सरमन्वहं तिस्र इष्टय इति तैत्तिरीयकम् ॥१२॥

**तासु संस्थितासु दक्षिणात आह्वनीयस्य हिरण्मये कूर्च्चे प्राङ्मुख आसीनो यजमानस्तथा होता ॥१३॥**

भवेदिति शेषः ॥१३॥

**संवत्सरमहरहर्होतुः पारिप्लवमाचक्षाणस्य शृणुयात् ॥१४॥**

पारिप्लवं नामाख्यानविशेषः प्रथमेऽहनि मनुर्वैवस्वत इत्यादिनाश्वलायने कथितस्तं कथयेत् । होतुर्मुखाच्छृणुयाद् यजमान इति ॥१४॥

**पुरस्तादध्वर्युः प्रत्यङ्मुखो हैरण्ये फलके ॥१५॥**

आसीतेति शेषः ॥१५॥

**हिरण्यकशिपुन्यासीनो ब्रह्मोद्गाता चोदङ्मुखौ ॥१६॥**

हिरण्यकशिपुर्नाम शय्याविशेषः ॥१६॥

**शतं होत्रे दद्यादृशाध्वर्यवे सहस्रं वा होत्रे शतमध्वर्यवे ॥१७॥**

स्पष्टम् ॥१७॥

**किंचिच्चेतराभ्याम् ॥१८॥**

इतराभ्यां ब्रह्मोद्गातृभ्यां किंचिच्च देयम् ॥१८॥

**तस्य देवव्रतानि यथा राजसूये ॥१९॥**

राजसूये इदमुक्तम् —उन्मृद्रोतानाप्लवमानो धावेत दन्तानि (द्रा. श्रौ. २५.२.१८-९) त्यादि ॥१९॥

**संवत्सरादूर्ध्वमश्वं बध्वा दीक्षेत ॥२०॥**

संवत्सरं देवव्रतानुष्ठानेन सह होतुराख्यानं श्रुत्वा तदनन्तरमश्वं बध्वा दीक्षेत ॥२०॥

---

7. My[1] आश्वलायनेन कथितं for आश्वलायने कथितः (L. 8)

18. My[4] उन्मृत C. उन्मृनीत My[2] उन्मृत्नीत, My[1] उत्तंत All Mss have wrong reading.

**तदहरेतान्यृत्विज आसनानि यथास्वं हरेरन् ॥२१॥**

आसनानि हिरण्यकुर्चादीनि ॥२१॥

**तस्य द्वादश दीक्षास्तथोपसदः ॥२२॥**

पौर्णमासी दीक्षा मासापवर्गाः (द्रा. श्रौ. २६.१.१) इत्यस्यापवादोऽयम्। तथोपसद् इति वचनं धानंजय्यमतेन पडुपसत्त्वनिवृत्त्यर्थम् ॥२२॥

**सर्वेषामह्नां बहिर्बहिष्पवमानैः स्तुवीरन् ॥२३॥**

अहीनबहिष्पवमानैः सदसि स्तुवीरन्नि (द्रा. श्रौ. ४.१.१३) त्यस्यापवादोऽयम् ॥२३॥

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले प्रथमः खण्डः ॥१॥

1. My[1] अहनि एतान् for अहरेतानि

5. My[1] ⁰सद for ⁰सत्त्व⁰

## द्वितीयः खण्डः

**मध्यमेऽहन्यश्वस्य बालधिमालभ्य बहिष्पवमानं सर्पेयुः ॥१॥**

अश्वमेधस्य मध्यमेऽहन्यश्वस्य पुच्छमन्वार (?ल)भ्य सर्पेयुः ॥१॥

**सर्पत्सु यजमान उद्गातारं ब्रूयादुद्गातरुप त्वा वृणे शतेन निष्केण चाश्वो ममोद्गास्यतीति ॥२॥**

अयं मन्त्रार्थः। अश्व एवाभिक्रन्दनं कुर्वन् ममोद्गानं करिष्यति। त्वां पुनस्तत्साहाय्यार्थं गवां शतेन निष्केण च वृणे ॥२॥

**अश्वमास्तावमाक्रमय्य बडवां दर्शयेयुः ॥३॥**

बहिष्पवमानस्तुतिदेशं प्रत्यश्वं स्थापयित्वा तस्मै बडवां दर्शयेयुः ॥३॥

**तां यदाभिक्रन्देदथ यजमान उद्गातारं ब्रूयादुद्गातरुप त्वा वृणे शतेन चैव निष्केण च त्वमेव ममोद्गास्यसीति ॥४॥**

यदा बडवामश्वो दृष्ट्वा ह्रेषाशब्दं करोति तदोद्गातारं ब्रूयात्। गवां शतेन च सुवर्णेन च दक्षिणया त्वां वृणे त्वमेव बहिष्पवमान स्तुहीति ॥४॥

**उदञ्चमश्वमुत्क्रमय्यास्ताव उपविश्योद्गाताश्वव्रतेन स्तुयादभिवाजी विश्वरूप इति तृचेन ॥५॥**

स्पष्टम् ॥५॥

**हिरण्यकशिपुन्यासीनो बहिष्पवमानेन स्तुत्वा स एव तद्धरेत् ॥६॥**

हिरण्मये कशिपुनि आस्तरणविशेषे ॥६॥

**या पत्नीनां प्रियतमा यजमानस्य सा वावता ॥७॥**

---

5. C. मे for मम

10. My[1] °क्रन्देत for क्रन्देत्; My[4] My[1] om. अथ

11. C. मा for मम

15. C. एतासु for तृचेन

17. My[2] हरेत for हरेत्

20. My[2] after यजमानस्य adds : स्यात्

यजमानस्य या प्रेयसी भार्या सा वावता नाम ॥७॥

**राजपुत्र्यनपचिता परिवृक्ती ॥८॥**

राजकन्यकैव सती सत्काररहिता यजमानस्य परिवृक्तीत्युक्ता परिवर्जनादेव ॥८॥

**संज्ञप्तेषु पशुषु होत्राभिमेथिते ब्रह्मा वावतामभिमेथेत् ॥९॥**

अभिमेथनं नाम मैथुनप्रोत्साहनमित्याहुः। होता महिषीं प्रत्यभिमेथेदित्याश्वलायनः। होत्राभिमेथने कृते ब्रह्मा वावतां प्रत्यभिमेथेत् ॥९॥

कथमित्याह—

**ऊर्ध्वामेनामुच्छ्रापय गिरौ भारं हरन्निवाथास्यै मध्यमेधतां शीते वाते पुनन्निवेति निर्दिशेत् ॥१०॥**

निर्देशनं पार्श्वस्थस्य कस्यचित् प्रेरणम् ॥१०॥

**शतमस्या राजन्यानां दुहितरोऽनुचर्यः स्युः। तास्तं प्रत्यभिमेथेयुरूर्ध्वमेनमुच्छ्रयतात् गिरौ भारं हरन्निवाथास्य मध्यमे जतु शीते वाते निर्दिशेयुः ॥११॥**

अस्या वावताया अनुचर्यः शतं राजकन्यका ब्रह्माणमभिमेथेयुः ॥११॥

**उद्गाता परिवृक्तीमभिमेथेद्यदस्या अंशुभेद्याः कृधुस्थूलमुपात-**

---

2. My[4] °वृक्तिः for °वृक्ती
5. My[4] मेथिते for मेथिते My[4] °मेत्रेत् for °मेथेत्
6. My[4] °मेधनं for °मेथनं
7. My[4] °मेधने for °मेथने
9. M. ऊर्ध्वम् for ऊर्ध्वाम्; My[1] उज्जापय C. उच्छ्रयतात् for उच्छ्रापय M. अस्य for अस्यै C. जतु for धतां;
10. C. ञ्निवैत्ति M न्निवेतेति for निवेति
16. My[1] कृथु° for कृधु; M. °पादनसन्धुष्का My[1] °पातसमुक्षणा My[4] °पासनसमुक्षणा for °पातमन्मुष्का (p. 573. L. 1)

**सम्मुष्काविवस्या एजतो गोशफेशकुलाविवेति निर्दिशेत् ॥१२॥**

स्पष्टम् ॥१२॥

**शतमस्याः सूतग्रामणीनां दुहितरोऽनुचर्यंरतास्तं प्रत्यभिमेथेयु-र्यद्देवासो ललामगुं प्रविष्टिमिनमाविषुरिति निर्दिशेयुः ॥१३॥**

**सक्थ्ना देदिश्यते नारी सत्यस्याक्षिभुवो यथेति ॥१४॥**

अभिमेथनशेषोऽयम् ॥१३-१४॥

**अप उपस्पृश्य वामदेव्यं गीत्वा तस्यर्चोऽनुजपेयुः ॥१५॥**

अपूतवचननिमित्तदोषपरिहारार्थमपामुपस्पर्शनादि ॥१५॥

**इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले द्वितीयः खण्डः ॥२॥**

---

1. My[1] गोपेशशकुला° My[4] गोपेशशकुला My[2] गोश फेश कुला for गोशफेशकुला°

4. M. ललामगुः for ललामगुं
   M. इव न माविष्टिः for इनमाविषुः;
   C. प्रसंहृष्टिनामजिषु for प्रवि · · · · °षुः; My[1] इव° for इन°

6. My[2] विशेषो° for शेषो°

8. C. अनृत° for अपूत°; My[2] °स्पर्शनं गानं च for स्पर्शनादि

## तृतीयः खण्डः

**स्वाहाकृतिभिश्चरिते पूर्वेण सद उपविश्य ब्रह्मोद्यं वदेयुः ॥१॥**

स्वाहाकृतिशब्देनोत्तमप्रयाजस्याभिधानम् । उत्तमप्रायाजे कृते **ब्रह्मोद्यं** प्रश्नप्रतिवचनरूपो वादः, तं कथयेयुर्महर्त्विजो यजमानश्च ॥१॥

कथमित्याह—

**होत्राध्वर्युणा चोक्ते ब्रह्मा पृच्छेदुद्गातारं पृच्छामि त्वा चितये देवसख यदि त्वमत्र मनसानुवेत्थ येषु विष्णुस्त्रिषु पदेष्वस्थात्तेषु विश्वं भुवनमाविवेशाऽऽइति ॥२॥**

**आविवेशा** इति प्रश्नार्थे प्लुतिः । **येषु पदेषु** विक्रमणकाले भगवान् **विष्णु**रतिष्ठत् **तेषु** सर्वं **भुवनं** कथमहिंसितं प्रविष्टमासीदिति प्रश्नार्थः ॥२॥

**तं प्रतिब्रूयादपि तेषु त्रिषु पदेष्वस्मिन् येषु विश्वं भुवनमाविवेश सद्यः पर्येमि पृथिवीमुत द्यामेकेनाङ्गेन दिवो अस्य पृष्ठमिति ॥३॥**

**त्रिषु पादेषु** अहमप्यहिंसितोऽभूवम् । तस्य देवस्य भगवतो विष्णोर्माहात्म्यादहिंसयैव विक्रमणात् । स हि **सद्यः** एव त्रीनपि लोका**नेकेनैव** पादेनाहिंसन् पर्येति । तथा च भगवान् व्यासः—

तस्य गात्रे जगत्सर्वमासीनमधिपश्यति ।
न किंचिदस्ति लोकेषु यदनाप्तं महात्मना ॥
एवं विधानि कर्माणि कृत्वा गरुडवाहनः ।
न विस्मयमुपागच्छत् पारमेष्ठ्येन तेजसा ॥

इति ॥३॥

**उद्गाता पृच्छेद्ब्रह्माणं किंस्विदन्तः पुरुष आविवेश । कान्यन्तः**

---

11. C. before विश्वं adds :—विष्णुस्त्रिषु पादेषु;

12 My[2] पर्येति for पर्येमि

14. My[2] after माहात्म्यात् adds अपि

22. My[4] केषु for किंस्वित्; M. om. पुरुष · · पञ्चस्वन्तः (P. 575 L. 4)

**पुरुषे अर्पितानि । एतद् ब्रह्मन्नुपवह्लामसि । त्वा किंस्विन्नः प्रतिवोचास्यत्रेति ॥४॥**

स्पष्टम् ॥४॥

**तं प्रतिब्रूयात् पञ्चस्वन्तः पुरुष आविवेश । तान्यन्तः पुरुषे अर्पितान्येतत्त्वात्र प्रतिमन्वानो अस्मिन्न मायया भवस्युत्तरोमदिति ॥५॥**

अत्रैतरेयकम्—चक्षुः श्रोत्रं मनो वाक् प्राणस्ता एता पञ्च देवताः इमं विष्टाः पुरुषं पञ्चोहे वैता देवता अयं विष्टः पुरुषः (ऐ. आ. १.३.८) इति ॥५॥

**सर्वे यजमानं पृच्छेयुः । पृच्छामस्त्वा परमन्तं पृथिव्याः । पृच्छामो यत्र भुवनस्य नाभिः । पृच्छामस्त्वा वृष्णोऽश्वस्य रेतः । पृच्छामो वाचः परमं व्योमेति ॥६॥**

स्पष्टम् ॥६॥

**तान् प्रति ब्रूयादियं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः । अयं सोमो वृष्णो अश्वस्य रेतः ब्रह्मायं वाचः परमं व्योमेति ॥७॥**

स्पष्टम् ॥७॥

**तस्य दक्षिणाः सहस्रं प्रथमेऽहनि दद्यात्तथोत्तमे ॥८॥**

इति । स्पष्टम् ॥८॥

**मध्यमेऽहन्येकजनपदे यदब्राह्मणानां वित्तं तद् दद्यात् ॥९॥**

अश्वमेधस्य मध्यमेऽहन्येकस्मिन् जनपदे यदब्राह्मणानां वित्तं तदादाय दद्यात् । एकजनपद इति वचनात् एकस्मादेव जनपदाद् वित्तमादेयं न बहुभ्यः ॥९॥

**विजितस्य वा मध्ये यजेत ॥१०॥**

अथवा शत्रोर्जनपदं जित्वा तस्य मध्ये अश्वमेधेन यजेत । न स्वकीयस्य ॥१०॥

---

5. My[1] °मन्वानेऽत्र for °मन्वानो; C. °स्वान्न for °स्वात्र

**प्राचीं होत्रे दिशं दद्याद्-दक्षिणां ब्रह्मणेऽध्वर्यवे प्रतीचीमुदीचीमुद्गात्रे ॥११॥**

विजितस्य शत्रुजनपदस्य ये प्राच्यादिदिग्भागास्ते होत्रादिभ्यो देयाः ॥११॥

**यदन्यत्क्षेत्राच्च पुरुषेभ्यश्चेत्युभयोर्विचारयोः ॥१२॥**

स्वकीयजनपदे शत्रुजनपदे वा देयमित्युभयोरपि पक्षयोः क्षेत्रपुरुषव्यतिरिक्तमेव देयम् ॥१२॥

**यावद्वा ब्रूयुर्नेतो भूय इच्छाम इति ॥१३॥**

यद्वा यावदृत्विजो ब्रूयुरेतावतैव द्रव्येण तृप्ता वयम् इतो भूयो नेच्छाम इति तदा तावदेव जनपदादाय देयम् ॥१३॥

पक्षान्तरमाह—

**अष्टाचत्वारिंशं शतं वा सहस्राणि मध्यतः कारिभ्यो दद्यादेकैकस्मै चतुर्विंशतिमर्द्धिनीभ्यो द्वादश तृतीयिनीभ्यः षट् पादिनीभ्यः ॥१४॥**

मध्यतः कारिणो महर्त्विजः। अर्द्धिन्यादयो राजसूये व्याख्याताः। अस्मिन् पक्षे त्रीणि शतानि षष्टिश्च सहस्राणि गावो देयाः ॥१४॥

**अवराध्यां एताः कामं तु भूयसीर्दद्यात् ॥१५॥**

एताश्च गावोऽवराध्यां इतो भूयसीरपि श्रद्धानुगुणं दद्यात् ॥१५॥

अथाश्वमेधस्य विकल्पानाह—

**तस्य विकल्पाः ॥१६॥**

वक्ष्यन्ते इति शेषः ॥१६॥

**एतान्येव पञ्चदशस्तोमान्यहानि कल्पयेत् ॥१७॥**

इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले तृतीयः खण्डः ॥३॥

# चतुर्थः खण्डः

**स पतन्तकोऽश्वमेधः ॥१॥**

यानि कल्पकारेण क्लृप्तान्यहानि एतान्येव गृहीत्वा स्तोममात्रमन्यथा कुर्यात् **स पतन्तको** नाम **अश्वमेधः** ॥१॥

**तस्याद्यबहिष्पवमाने वैष्णवीरनुष्टुभस्तिस्रश्चतुर्धाकारमावपेत् ॥२॥**

**तस्य** पतन्तकस्य प्रथमेऽहनि बहिष्पवमाने चतुरस्तृचान् वैष्णवानानुष्टुभाना-हृत्य प्रत्येकं चतुर्धा कृत्वा षोडश गायत्रीः कुर्यात् । तासामेकां त्यजेत् । पञ्चदश-स्तोमत्वात् । अत्र तिस्रस्तिस्र इति वीप्साभिप्रेता ॥२॥

कुत इत्याह—

**पूर्वस्मिन् दृष्टान्ताद्यद् वैष्णव्यस्तिस्रश्चतस्र इति ह्याह ॥३॥**

**पूर्वस्मिन्** प्रकृताश्वमेधे दृष्टान्तदर्शनादित्यर्थः । तथा हि **यद् वैष्णव्योऽनुष्टुभः प्रतिपदो भवन्ति तिस्रोऽनुष्टुभश्चतस्रो** गायत्रीः करोती--(तां. ब्रा. २१.४.६-५) ति प्रकृतौ ब्राह्मणम् ॥३॥

तदेतन्निराकरोति—

**अयुक्ष्वसंभवात्तु गायत्रीः पवमानीरावपेत् ॥४॥**

इति । **अयुक्षु** स्तोमेषु पञ्चदशादिषु तृचानां चतुर्धाकरणे साम्यासंभवात् षोडशी गायत्री परित्यक्तव्या । तच्चायुक्तम् । प्रकृतौ न्यायादर्शनात् । तस्मादकृत्रिमा एव गायत्रीराहरेत् ॥४॥

---

2. My[1,4] प्रतन्तको for पतन्तको

4. My[1] प्तन्तन्तको My[4] प्ततन्तको for पतन्तको;
My[2] ०अश्वमेध इति व्याख्यातः for नाम (अश्वमेधः)

5. My[2] ०आज्य० for ०आद्य०

7. My[1] पातकस्य My[4] प्रकृतस्य for पतन्तकस्य

12. My[1] मेधाद् for ०मेधे०

17. My[2] सामान्या० for साम्या०

हेतुमाह—

**प्रकृतौ दृष्टान्तात्तद्धि कारणम् ।।५।।**

इति । सर्वप्रकृतौ ज्योतिष्टोमे शुद्धानामेव गायत्रीणां दर्शनात् । **तदेव हि** सर्वं **कारणम्** ।।५।।

एवं तर्हि **यद्वैष्णव्यस्तिस्रश्चतस्र** इति ब्राह्मणं त्यक्तमेव । नेत्याह—

**समर्थं च यद्वैष्णव्यस्तिस्रश्चतस्र इत्यादौ करणात् ।।६।।**

**समर्थ**मुपपन्नमेव ब्राह्मणम् । कुतः । आदौ बहिष्पवमानोपक्रमे **पवस्व वाजसातये** (सा. १०१६-६) इत्येकस्य तृचस्य प्रकृतिवदेव करणात्तत ऊर्ध्वं शुद्धा एव गायत्रीः (? त्र्यः) ।।६।।

**सर्वं वा बहिष्पवमानं गायत्रीषु ।।७।।**

अथवा **सर्वं**मेव **बहिष्पवमान**मकृत्रिमास्वेव **गायत्रीषु** कार्यम् । त्यजेदेव वैष्णवं तृचम् ।।७।।

हेतुमाह—

**चतुष्टोम कारितो हि व्यूहः ।।८।।**

इति । प्रकृतावश्वमेधे बहिष्पवमानस्य चतुष्टोमत्वात् तदनुरूपस्तत्प्रयुक्तो वैष्णवतृचस्य चतुर्धा व्यूहः । इह तु पञ्चदशस्तोमत्वादयुक्त एव ।।८।।

**अर्द्धमासमश्वं चारयित्वैतेन त्यजेत ।।९।।**

एतेन पतन्तकेन यक्ष्यमाणोऽर्द्धमासमेवाश्वं चारयेत् न संवत्सरम् ।।९।।

**ज्योतिष्टोमो वै तस्यातिरात्रस्तृतीयमहः स्यात्तेन मासम् ।।१०।।**

**अश्वं चारयित्वे**त्यनुषङ्गः । अथ चैतस्य पतन्तकस्य **ज्योतिष्टोमो वा अतिरात्रस्तृतीयमहः स्यात्** । तदानीं **मास**मेवाश्वं चारयेत् ।।१०।।

---

3. My[2] C. सर्वस्य for सर्वं[0]

5. My[2] om. एव

6. C. कारणात् for करणात्

18. My[1] पन्तन्तकेन for पतन्तकेन

**गौर्वा तेन त्रीन् ॥११॥**

मासमित्यस्य विपरिणामेनानुषङ्गः । गौर्वा तृतीयमहः स्यात् । तेन त्रीन् मासानश्वं चारयित्वा यजेत ॥११॥

**आयुर्वा तेन षट् ॥१२॥**

**आयुर्वा** तृतीयमहः स्यात् । तेन षण्मासानवश्यं चारयित्वा यजेत ॥१२॥

**प्राकृतस्य वैतेषामह्नां किंचित्तृतीयमहः स्यात् ॥१३॥**

यद्वा प्रकृतिभूतस्याश्वमेधस्यैतेषां ज्योतिर्गौरायुरिति त्रयाणामेकं तृतीयमहः स्यात् । तदानीं प्रतिपदेव चर्या ॥१३॥

**विश्वजिदभिजिद्व्रताप्तोर्यामाणां वातिरात्राणामेव ॥१४॥**

अथवा विश्वजिदादीनामतिरात्राणामन्यतमत् प्रकृतस्याश्वमेधस्य तृतीयमहः ॥१४॥

एवं विकल्पा उक्ताः । अत्र विचार्यते । किमेषां ज्योतिष्टोमादीनां तृतीयत्वेन चोदितानां गर्गत्रिरात्रस्य तृतीयमहः प्रकृतिः । किं वा स्वतन्त्रा एते एकाहक्लृप्ता इति । तत्र प्रथमं पक्षमुपपादयति—

**तेषां स्तोमचोदनैव स्याद्यथा चतुष्टोमसर्वस्तोमयोः ॥१५॥**

इति । तेषां तृतीयत्वेन चोदितानामह्नां गर्गत्रिरात्रस्य तृतीयमहः प्रकृतिः । अहर्गणमध्यपातात् तृतीयस्थानपाताच्च । ननु च विश्वजिदादिनामधेयैः पूर्वोत्पन्नैकाहानां प्रत्यभिज्ञानादविकृता एव ते ग्राह्याः । तत्रेदमुक्तं **स्तोमचोदनेति** । नामधेयैः स्तोममात्रस्य चोदना न पुनरेकाहतन्त्रस्य । तथा प्राकृतेऽश्वमेधे प्रथमोत्तम-

---

1. My[1] M. त्रिर् for त्रीन्
6. M. My[4] प्रकृतस्य for प्राकृतस्य
8. My[2] अश्वचर्या C. यजेत for चर्या
14. My[2] अत्र for तत्र
17. My[1] C. °मध्यम° for °मध्य°
18. My[2] मे for ते
19. My[1,4] प्रकृते for प्राकृते

**योरह्नोश्चतुष्टोमसर्वस्तोमयोः** स्तोममात्रमेव नामधेयाच्चोद्यते । न पुनरेकाहं तन्त्रे । तथा च तयोः कल्पकारः **समानमितरं प्रथमेनाह्ना गर्गत्रिरात्रस्य** (आ. क. ६.१९.३) **समानमितरमुत्तमेनाह्ना** गर्गत्रिरात्रस्ये (आ. क. ६.११.३) त्याह ॥१५॥

ननु च प्रत्यक्षं नामधेयं चोदकाद् बलीय इति न्यायविदः । तेन गर्गत्रिरात्रतन्त्रविलोपो युक्तः । नेत्याह—

**द्विरात्रत्रिरात्रेषु च तन्त्रविलोपो न विद्यते । ब्राह्मणशब्दसामर्थ्यात् ॥१६॥**

इति । विकृतिषु अश्वमेधप्रकृतिषु त्रिरात्रेषु गर्गत्रिरात्रस्य तन्त्रविलोपो न विद्यत इत्यर्थः । **द्विरात्र**ग्रहणं दृष्टान्तार्थम् । यथा अङ्गिरसो द्विरात्रस्य उक्थ्योत्तरेषु द्विरात्रेषु प्रवृत्तिस्तद्वत् ॥१६॥

तान्येव ब्राह्मणवाक्यानि प्रतीकेनोदाहरति—

**तेनैव जगती कृता ताभ्यां द्विरात्रमतन्वतां तमेतैः सामभिरभिषज्यन्नित्येतद्वै त्रिरात्रमकर्यदेतानि रूपाण्यन्वहमाज्यदोहानि ॥१७॥**

इति । मध्ये पठित इति करणो (? कारो)ऽन्ते द्रष्टव्यः । षडेतानि प्रतीकानि प्रथमं तावद् व्युष्टिद्विरात्रमधिकृत्य ब्राह्मणम् **अपशव्यो द्विरात्र** (तां. ब्रा. १८.११.९) इत्यादि **तेनैव जगती कृते** (तां. ब्रा. १८.११.१०) त्यन्तम् । तस्यायमर्थः । द्विरात्रे तृतीयस्याह्नो लोपाज्जागतो भागो लुप्तः । तल्लिप्सया द्वितीयेऽहनि जगतीषु ब्रह्मसाम कार्यम् इति । एवं वदन् सर्वेषु द्विरात्रेषु हेतुसाम्यात् ब्रह्मसाम्नः

---

6. My[2] लोपो for विलोपो

M. before ब्राह्मण⁰ adds :—तथा

10. My[1,4] वृत्तिः for प्रवृत्तिः

12. My[1] My[4] कृताभ्यां for कृता ताभ्यां

13. My[1] ⁰षज्यन् M. ⁰षिच्यन् for ⁰षज्यन्

18. My[1] तृतीये for द्वितीये;

19. My[2] ⁰साम्नां for ⁰साम्नः

प्रवृत्तिरित्याह । तथा आङ्गिरसद्विरात्रे **ताभ्यां द्विरात्रमतन्वताम्** (तां. ब्रा. २०.११.३) ति ब्राह्मणमविशेषेण द्विरात्रेषु हाविष्मत हाविष्कृतयोः प्रवृत्तिमाह । तथा दशरात्रस्याष्टमेऽहनि प्रसङ्गात् ब्राह्मणम्—**त्रिरात्रो यद्वचशीर्यत तमेतैः साममिरभिषज्यन् गायत्रपार्श्वेनोपायच्छन् सन्तनिना समतन्वन् । संकृतिना संस्कुर्वन्** (तां. ब्रा. १४.९.२७) इति । तत् सर्वेषु त्रिरात्रेषु सामत्रयं कार्यमित्याह । तथा च कल्पकारः सर्वेष्वपि त्रिरात्रेषु तथैवाकल्पयत् । तथा साहस्रं नामैकाहमधिकृत्य ब्राह्मणम्—**उपास्मै गायता नर-उपोषु जातमप्तुरम्—पवस्व वाचो अग्रिय** (सा. ६५१-३; १३३५-७; ७७५-७) इति **प्रतिपदो भवन्ति । एतद्वै त्रिरात्रमकः** (तां. ब्रा. १६.११.२) इति । एवं वदन् सर्वेषु त्रिरात्रेषु नूनमेताः प्रतिपदोऽन्वहं क्रमेणेति दर्शयति । कल्पकारोऽपि तथैव क्लृप्तवान् । तथा गर्गत्रिरात्रे **यदेतानि रूपाण्यन्वहं व्यज्यन्ते** (तां. ब्रा. २०.१४.४) इति ब्राह्मणम् । तत् सर्वेषु त्रिरात्रेष्वन्वहमाज्यस्तोत्रेषु अकारककारहोकाराः क्रमेण कार्याः इति दर्शयति । तथा च कल्पकारः—**अग्न आयाहि वीतये-कया ते अग्ने अङ्गिरो-होता देवो अमर्त्यः** (सा. ६६०-२; १५४९-५१; १४७७-९) इत्याज्योपक्रमं कल्पयति । तथा वैदत्रिरात्रमधिकृत्या**न्वहमाज्यदोहानी** (तां. ब्रा. २१.५.५) ति ब्राह्मणं गर्गत्रिरात्रोक्तान्यनुवदति । तेन तत्प्रवृत्तिः सर्वेषु त्रिरात्रेष्विति दर्शयति । एवं ब्राह्मणषट्कं तन्त्राविलोपे ब्राह्मणम् । अत एव कल्पकारोऽपि सर्वेषु त्रिरात्रेषु गर्गत्रिरात्रस्य तन्त्रमकल्पयत् ॥१७॥

---

2. My[1] द्विरात्रे for द्विरात्रेषु
3. My[1] My[4] यद्वचवर्यक (My[4] °र्धुक्) for ब्राह्मणम्—त्रिरात्रो यद्वचशीर्यन्त
4. My[1] °विज्यन् for °षज्यन्
8. My[1] द्विरात्रम् for त्रिरात्रम्;
9. My[2] अहर् for अकर्
   My[1] द्विरात्रेषु for त्रिरात्रेषु
17. My[1] °लोपो न विद्यत न विद्यत इति ब्राह्मणम् for °लोपे ब्राह्मणम्
   My[1] om. त्रिरात्रेषु

हेत्वन्तरं चाह—

**असंचारान्निकायित्वाच्च ॥१८॥**

इति । **तन्त्रविलोपो न विद्यत** इत्यनुषङ्गः । अयमर्थः । अश्वमेधस्य तृतीयाहः स्थाने चोदिता विश्वजिदादयो यद्येकाहतन्त्राः स्युस्तदा महानाम्नीनां मध्यमेऽहनि कृतानां विश्वजिदप्तोर्यामियोः पुनः करणात् संचारदोषः स्यात् । पक्षान्तरे त्व-संचारः । तथा निकायित्वादपि प्रथमस्य गर्गत्रिरात्रस्योत्तरेषु त्रिरात्रेषु प्रवृत्तिः ॥१८॥

पुनरपि ब्राह्मणान्तरेण समर्थयति—

**अस्तीव त्रिरात्रस्य प्रथममहरस्तीवोत्तमं च्छिद्रमिव मध्यत इति चान्वयदर्शनात् ॥१९॥**

इति । अन्तर्वत्सु त्रिरात्रमधिकृत्य ब्राह्मणम् —**अस्तीव त्रिरात्रस्य प्रथममह-रस्तीवोत्तमं छिद्रमिव मध्यत** (तां. ब्रा. २१.७.४) इति त्रिरात्रस्य लोकत्रय-साम्यादेवं वादः साम्यं च गर्गत्रिरात्रे दर्शितम् । तद्धर्मान्वयात् अत्रापि तथैव वादो नान्यथोपपद्यते ॥१९॥

सिद्धान्तमाह—

**प्राकृतास्त्वेव स्युः । कृतलक्षणा हि पुरस्ताच्चोद्यन्ते ॥२०॥**

**प्राकृतास्त्वेव** ज्योतिष्टोमादयः **स्युः**। कुतः । यस्मान्नामधेयैः कृतचिह्नाः **पुरस्तादेव** निर्द्धारितरूपाश्**चोद्यन्ते** ॥२०॥

अत्र दृष्टान्तमाह—

**यथा व्रतवति पञ्चरात्रे षडहनवाहयोरायुष्कामस्यैन्द्रे च सप्तरात्रे ॥२१॥**

**आयुष्कमस्ये**ति षडहनावाहयोर्विशेषणम् । एतेष्वहीनेषु कल्पकारेणोक्तम्—**ज्योतिर्गौरायुरभिजिद्विश्वजित्सर्वजित्सर्वतोमोऽतिरात्र एकाहक्लृप्ताः** (आ. क. ७.३१.१) इति ॥२१॥

---

6. My[1] om. त्रिरात्रेषु

9. My[2] छिद्रः for छिद्रम्

13. My[1], My[4] अत्र for अपि

16. My[2] after प्राकृताः ins. स्वतन्त्राः; C. om. तु

अथ यदुक्तं नामधेयात् स्तोमचोदनामात्रम् । चतुष्टोमवदिति तत्राह—

**प्रत्यक्षविकारात् स्तोमचोदना यथा चतुष्टोमसर्वस्तोमयोः ॥२२॥**

इति । यद् **वैष्णव्यः प्रतिपदो भवन्ती** (तां. ब्रा. २१.४.६) त्यादि प्रत्यक्षेण विकारविधानादृक्सामाम्नायाच्चतुष्टोममात्रमेवचतुष्टोमसाम्नातिदिश्यते । न पुनर्गौतमचतुष्टोमतन्त्रमिति युक्तम् । इह पुनः प्रत्यक्षविधिर्नास्तीति नामधेयात् सर्वदिशः ॥२२॥

यत् पुनरुक्तम् अहीनमध्यपाताद् विश्वजिदादेः गर्गत्रिरात्रतन्त्रं न लोपनीयमिति तत्राह—

**वचनात्तन्त्रलोपो यथाजामि कल्पः सर्वस्वारे ॥२३॥**

वचनमत्र नामधेयम् । तद्बलात् मन्त्रविलोपो युक्त एव । यथा सर्वस्वारे क्रतौ सर्वस्वारमिति नामधेयबलात् सर्वाण्यपि सामानि स्वाराण्येव भवन्ति जामिदोषमनादृत्यैव ॥२३॥

एवं समाप्तो विचारः । अथाश्वमेधस्य विकल्पमेव दर्शयति—

**चतुष्कप्रभृतयश्चतुरुत्तरा अष्टाचत्वारिंशान्ताः प्रथमस्याह्नः स्तोमाः स्युरिति लामकायनः ॥२४॥**

इति । स्पष्टम् ॥२४॥

**इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले चतुर्थः खण्डः ॥४॥**

---

1. My[1] इत्यादीति My[2] इत्यादीनीति for इति
2. My[1-2] चोदन⁰ for चोदना⁰
6. My[2] My[4] C. च स्तोम for चतुष्टोम
   My[1], My[4] C. विधानादेशः for विधिर् · · · सर्वदिशः (L. 7)
11. My[1] My[4] C. तन्त्र⁰ for मन्त्र⁰
16. M. लोम⁰ for लाम⁰ My[2] after लामकायनः adds : —स गोविनेतोऽश्वमेधः
17. My[2] after स्पष्टम् adds : इति । प्रथमस्याह्नः स्तोमाः स्युरिति लामकायन इति । खण्डस्यावसान इति

## पंचमः खण्डः

**स गोविनतोऽश्वमेधः ॥१॥**

स्पष्टम् ॥१॥

एवं स्तोमकरणे को लाभः । अत आह—

**एवं सर्वच्छन्दोमं प्रथममहः सर्वपशुमध्यमं सर्वस्तोममुत्तमम् ॥२॥**

इति । **एवं** सति त्रयाणाम् अह्नां साम्यसिद्धिः । कथम् । प्रथमेऽहनि सर्वे छन्दोमाः कृता भवन्ति । युग्मस्तोमाच्छन्दोमा इत्युच्यन्ते । तथा मध्यमेऽहनि सर्वे पशव आलभ्यन्ते । तृतीये सर्वे स्तोमाः । इति साम्यसिद्धिः ॥२॥

**षडधिका विराट् ॥३॥**

अस्मिन् गोविनते सर्वस्तोत्रीयाणां दशदशधा विभागे कृते षडतिरिच्यन्ते । तदिदमुक्तम् **षडधिका विराड्** जायत इति । कथम् । प्रथमेऽहनि स्तोत्रीयाद्वयं विराजोऽतिरिच्यते । द्वितीये पञ्च । तृतीये नव । ताः षोडश । इत्येवं षडधिका विराट् ॥३॥

**तां चेच्चिकीर्षेत्त्रिणवमुक्थमेकविंशं कुर्यात् ॥४॥**

यदि विराजमेव कर्तुमिच्छेत् तदा तृतीयेऽहनि **त्रिणवमुक्थं** तदेकविंशं कुर्यात् तदा षण्णामभावात् शुद्धैव विराट्संपत्तिः ॥४॥

---

3. My[2] व्याख्यातम् for स्पष्टम्
8. My[4] C, om. इति
11. My[1] ⁰विदश for ⁰दशधा; My[4] C. om. दशधा
13. My[1] C. ⁰रिच्यन्ते for ⁰रिच्यते

My[2] नवती: for नव । ता:; My[4] तानि for ता:

15. My[1] उक्तम् My[2] उत्तमम् My[2] उक्त्वा for उक्थम्; M. om. उक्थम
16. My[1] My[4] C. om. यदि . . . कुर्यात्

My[2] उक्थ्यम् for उक्थम्

**स्तोमप्रत्यवरोहान्नैवं शाण्डिल्यः ।।५।।**

सर्वस्तोमे **प्रत्यवरोहीण्युक्थानी** (द्रा. श्रौ. २७.६.५) ति वचनात् अवश्यंभावी प्रत्यवरोहः । स (? तस्य) चात्र त्रयस्त्रिंशानन्तरं क्रमेणावरोहणम् । ततश्च त्रिणवमेव प्रथमं कार्यम् । नैकविंशम् । तस्मात् षडधिकैव विराट् कार्येति **शाण्डिल्यः** ।।५।।

**अश्वमेधेनेष्ट्वा संवत्सरमृतावृतौ षड्भिः षड्भिः पशुबन्धैर्यजेता-ग्नेयैरैन्द्रैर्मारुतैः पार्जन्यैर्वा मैत्रावरुणैरैन्द्राबार्हस्पत्यैरैन्द्रावैष्ण-वैरिति ।।६।।**

आग्नेयैः षड्भिः पशुभिः समानतन्त्रैर्वसन्ते यजेत ग्रीष्मे षड्भिरैन्द्रैरित्यादि द्रष्टव्यम् ।।६।।

**त्रयोदश्यां त्वपरपक्षस्य दीक्षेत जामदग्न्याय तस्य विंशतिर्दक्षिणा द्वादशोपसदः ।।७।।**

**पौर्णमासी दीक्षामासापवर्गाः** (द्रा. श्रौ. २६.१.१) इत्यस्यापवादोऽयं वाचनिकः ।।७।।

**तत्रोपसत्सु पृथग्घोमानध्वर्युर्जुहुयात् पुरोडाशांस्तु उक्ता ब्राह्मणेन ।।८।।**

तत्र जामदग्न्यचतूरात्रे **पुरोडाशिन्य उपसदो भवन्ती** (तां. ब्रा. २१.१०.१०) ति ब्राह्मणम् । तत् प्राकृताज्यस्थाने पुरोडाशविधिरिति प्रतीतम् । तन्निवृत्त्यर्थमिदं सूत्रम् । पृथगेव होमा येषां ते पृथग्घोमाः पुरोडाशाः **आग्नेय एककपाल** (तां. ब्रा. २१.१०.२३) इत्यादि ब्राह्मणेन विहिताः । एतदुक्तं भवति । उपसत्सु प्रत्यहं सायंप्रातरुपसदन्ते पृथगेवाग्नेयादीन् पुरोडाशान् जुहुयात् इति ।।८।।

ननु प्रत्यहं सायंप्रातरनुष्ठानाच्चतुर्विंशतिरिष्टयो भवन्ति । पुरोडाशास्तु द्वादशैव ब्राह्मणे विहिताः । तत्र कथं होमाः । अत आह—

3. My[1] तच्च for ततश्च

9. My[4] C. My[4] आग्नेयादिभिः My[1] आग्नेयाभिः for आग्नेयैः

13. My[1] C. °वर्गः for °वर्गाः

**समानदेवतौ पूर्वाह्णापराह्णयोः ॥९॥**

इति । सायंप्रातः पुरोडाशौ **समानदेवतौ** ॥९॥

अथ ब्राह्मणे अग्नेर्वैर्होत्रमित्यादिमन्त्रपाठः किमर्थः । अत आह—

**अग्नेर्वैर्होत्रमित्येतत्प्रभृतय एषां होमाः ॥१०॥**

**एषां** पुरोडाशानां होमार्थाः एते मन्त्राः । अत्रापस्तम्बो दर्विहोमाः पुरोडाशा न पुनरैष्टिकतन्त्रा इत्याह ॥१०॥

**तस्यावभृथादुदेत्य द्वादशाहमिष्टिभिर्यजेत ॥११॥**

स्पष्टम् ॥११॥

**तास्वेत एव प्रतिलोमाः पुरोडाशाः ॥१२॥**

उपसत्सु ये पुरोडाशाः त **एव प्रतिलोमाः** इष्टितन्त्राः कार्याः । इष्टिभिरिति श्रवणात् ॥१२॥

अथ वसिष्ठः **पुत्रहतोहीन इवामन्यते** (तां. ब्रा. २१.११.२) त्यादि ब्राह्मणेन वासिष्ठं चतूरात्रं विधाय तत्रोक्तम्—**वसिष्ठस्य जनित्रे भवतः** (तां.ब्रा.२१.११.३) इति । तदनुभाष्य व्याचष्टे –

**वसिष्ठस्य जनित्रे भवत इति संसर्पत्सु चतुर्थेऽहनि बृहत्यनुष्टुभोः पृथगनुपूर्वमनुकल्पयेत् ॥१३॥**

इति । वसिष्ठचतूरात्रस्यैव संसर्प इति नामधेयम् । तथा च तलवकारिब्राह्मणम्—**वसिष्ठो वा अकामयत । स इमान् लोकान् सर्पेयमिति । स एव तच्चतूरात्रमाहरत् । स इमान् लोकान् समसर्पत् । तत् संसर्पस्य संसर्पत्वम्** (जै. ब्रा.        ) इति । तस्य **चतुर्थेऽहनि** माध्यंदिने पवमाने बृहत्यां जनित्रं प्रथमं कुर्यात् । आर्भवेऽनुष्टुभि द्वितीयम् इति । उभयोरपि तुल्यान्तत्वेन जामिदोषापत्तेः पृथक् कल्पनम् ॥१३॥

---

3. C: किमर्थम for किमर्थः;

12. My[1] ब्राह्मणे for ब्राह्मणेन

17. My[2] तलविकारि॰ for तलवकारि॰

22. My[1] My[4] ॰दोषात् for ॰दोषापत्तेः

ननु विशेषविहितयोर्जनित्रयोः कथं चतुर्थेऽहनि नियमः । अत आह—

**चतुर्थं हि जनित्रस्थानम् ॥१४॥**

इति । चतुर्थमहर्जनित्रस्य स्थाने दृष्टम् । समूढे षडहे **सोमः पवते जनिता मतीनाम्** (सा. ६४३-५) इति जनित्रमन्त्यं माध्यंदिनस्ये (आ. क. १.११.१) निकल्पकारवचनात् । तद्वदत्रापि युक्तम् ॥१४॥

**राथन्तरबृहत्योर्वा सच्छन्दस्त्वात् ॥१५॥**

अथवा रथन्तरपृष्ठयोः प्रथमतृतीययोरह्नोः पवमाने ये बृहत्यौ तयोर्जनित्रे कुर्यात् । न पुनरनुष्टुभि । छन्दःसाम्यात् । बृहत्यां जनित्रयोरुत्पत्तिः ॥१५॥

हेत्वन्तरमाह—

**वासिष्ठं प्रजननोक्तं च रथन्तरम् ॥१६॥**

इति । प्रजननत्वेन संस्तुतं रथन्तरम् । वसिष्ठश्च रथन्तरस्य द्रष्टा । तादृशे च जनित्रे इति सादृश्यात् तयोरेवाह्नोः करणम् ॥१६॥

**बार्हतयोरित्येके ॥१७॥**

बृहत्पृष्ठयोर्द्वितीयचतुर्थयोरह्नोर्ये बृहत्यौ तयोः कुर्यादित्येके ॥१७॥

ननु च कल्पकारस्तु क्वचिदपि जनित्रे न कल्पयति । अत आह—

**तयोर्विकल्पः स्यादार्षेयकल्पेन ॥१८॥**

ब्राह्मणे प्रत्यक्षविधानात् कल्पोक्तेन सह तयोर्विकल्पः । अत्र निदानकारो **वसिष्ठस्य जनित्रे** इति बृहद्रथन्तरयोरेव ब्राह्मणमित्याह । तन्नातीव मनोहरम् ॥१८॥

---

2. My[1] जनक॰ for जनित्र॰; My[2] C. ॰स्थाने for ॰स्थानम्
5. My[1] तद् for तद्वद
7. My[1] om. अथवा
8. My[1] after बृहत्यां adds : हि
10. C. वसिष्ठं for वासिष्ठं
11. My[1] वसिष्ठं for वसिष्ठः; My[4] वासिष्ठं च रथन्तरम् । अस्य द्रष्टा वसिष्ठ इति for वसिष्ठश्च रथन्तरस्य द्रष्टा
18. My[4] My[2] इव for एव

**पञ्चशारदीये पशुबन्धैर्यजेत । त उक्ता ब्राह्मणेन ॥१९॥**

पञ्चशारदीयो नाम कश्चित् पञ्चरात्रः। यः पञ्चसु शरत्स्वङ्गभूतैः पशुबन्धैरिष्ट्वा पश्चादारभ्यते स पञ्चशारदीयः। तत्र **सप्तदश पृश्नीरुक्षणश्च पञ्चवर्षान् सप्तदश । पृश्नीस् त्रिवर्षवत्सा अप्रवीतास्तान् पर्यग्निकृतान् प्रोक्षितान्नेतरानालभन्ते । प्रेतरान् सृजन्ति** (तां. ब्रा. २१.१४.७) इत्यादिना ब्राह्मणेन पञ्चसु संवत्सरेषु प्रतिसंवत्सरं पशुबन्धा उक्ताः। अनुभाषणं कालविधानार्थम् ॥१९॥

तमेव कालमाह—

**सप्तम्यामष्टम्यां वाश्वयुजि पक्षस्य ॥२०॥**

पशुबन्धाः कार्या इति शेषः ॥२०॥

**अत्र ब्राह्मणम्—तान् पर्यग्निकृतान् प्रोक्षितानेतरालभन्ते। प्रेतरान्त्सृजन्ती** (तां. ब्रा. २१.१४.८) इति। तस्यार्थमाह—

**वत्सतरीरालभेरन्नुक्षणो विसृजेयुः ॥२१॥**

इति। ब्राह्मणस्य चायमर्थः। सप्तदशोक्षणस्तत्संख्याश्च वत्सतरीरानीय सहोपाकृत्य तानुभयानपि प्रोक्षितान् पर्यग्निकृतान् कृत्वा इतरान्वत्सतरीरालभेरन् संज्ञपेयुः। इतरानुक्षणो **विसृजेयुरिति**। एवं पञ्चसु संवत्सरेषु प्रतिशरदं कुर्यात्। उक्षाणस्तु त एव रक्षणीयाः। पुनः पुनरदृष्टार्थमुपाकरणीया इति मन्तव्यम् ॥२१॥

**तेषां यावन्तो भ्रेषमापद्येरंस्तावतोऽन्यानयजुष्कृतानपि सृजेत् तथारूपांस्तद्वर्षान् ॥२२॥**

---

4. My[1] अप्रविता⁰ My[2] अप्रवीता⁰ for अप्रवीता⁰;
   My[1] पर्यग्नी' for पर्यग्नि in all places.
12. My[2] after वत्सतरीर् ins. एव
13. My[1] om. च
14. My[1] om. वत्सतरीर्
15. C. सृजेत् for सृजेयुः;
18. My[2] तावद् for तथा

उक्ष्णां मध्ये यावन्तो दैवाद्विनष्टाः स्युस्तावतोऽन्यांस्तद्रूपांस्तद्वयस उपाकरणादिसंस्काररहितान् अप्यानीय संसृजेत् । यदि रुद्रोऽभिमन्येते ( तां. ब्रा. २१.१४.१३) त्यादि ब्राह्मणोक्तानां ज्वरादीनामुपलक्षणं श्रेयम् ॥२२॥

**षष्ठ्यां शरदि कार्तिके मासि यजेत । तस्य द्वादशोपसदः ॥२३॥**

स्पष्टम् । अत्रापस्तम्बेन पञ्चम्यामेव शरदि कार्तिके मासि पश्वन्तरयाग उक्तः । **उस्रामामालभ्य दीक्षन्ते** (आप. श्रौ. ) इति । तन्निवृत्त्यर्थं षष्ठ्यामित्युक्तम् । तत्र किं प्रमाणमिति चेत् ततः **संवत्सरे सोमा भवन्ती** (तां. ब्रा. २१.१४.६) ति ब्राह्मणमिति ब्रूमः । द्वादशेति वचनं षण्णिवृत्त्यर्थम् इति ॥२३॥

**इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले पञ्चमः खण्डः ॥५॥**

---

2. My[2] °हीनान् for °रहितान्; My[4] °सृजेत for सृजेत्
3. My[1] भुवरा° C. क्षरा° for ज्वरा°
5. My[1-2] My[4] om. कार्तिके मासि
   My[1] पश्वन्तरं C. पश्वनन्तरं for पश्वन्तर°

# षष्ठः खण्डः

अथ त्रयस्तावत् षडहाः । ऋतूनां षडहः प्रथमः । तत्र कल्पकारः **पृष्ठ्यः षडहः । समूढो व्यूढ वे** (आ. क. १.८.१) ति पक्षद्वयमुक्त्वा समूढपक्षे द्वितीयस्याह्नः पार्थमन्त्यं माध्यंदिनस्य (आ. क. १.९.१) । षष्ठस्याह्नो **वासिष्ठमन्त्यम्** (आ. क. १.१३.१) इत्याह । सांवत्सरिकः समूढ इत्यतिदेशात् स एव पुनरुत्तरयोः षडहयोः समूढत्वमेव नियम्य द्वितीयेऽहनि पार्थं नेच्छति । प्रत्युत तत्स्थाने वासिष्ठं कल्पयति । तदयुक्तमिति गौतमस्य पक्षः । तदेतदाह—

**परयोः षड् रात्रयोर्द्वितीयेऽहनि पार्थं गौतमः समूहात् ॥१॥**

इति । **परयोः** समूढत्वात् समूढप्रयुक्तं **पार्थमेव** युक्तम् ॥१॥

**संचारप्रसङ्गाच्च पौण्डरीके ॥२॥**

किं च तृतीयः षडहः पृष्ठ्यावलम्बसंज्ञकः कल्पकारेण पौण्डरीकेऽतिदिश्यते । तद्यथा—**पृष्ठ्यावलम्बस्य पञ्चाहः ॥ पृष्ठ्यस्तोमस्य षष्ठमहः** (आ. क. ८.३४.१-२) इत्यादि । तत्र वासिष्ठान्त्यत्वपक्षे षष्ठेऽहनि वासिष्ठस्य करणात् संचारप्रसङ्गः । पक्षान्तरे तु नास्ति ॥२॥

तस्मादपि पार्थमेव द्वितीयेऽहनि युक्तम्—

**वासिष्ठं शाण्डिल्योऽप्रयोगात् षष्ठे ॥३॥**

---

6. My[4] समूहत्वम् for समूढत्वम्; C. om. षडहयोः

9. My[2] after युक्तम् adds : इति । तत्र तावत् तृतीये षडहे समूढः पञ्च इति कल्पकारेणैवोक्तम् । [द्विती] ये तु ब्राह्मणेन समूढषडहात् पूर्वस्य विच्छिद्य क्लृप्तः । कुत एतत् । समूढस्यैव क्लृप्तत्वादिति ।

12. My[2] om. तद्यथा

13. My[1] C. My[4] om. करणात्

15. My[1] C. My[4] om. तस्मादपि · · · युक्तम्

कल्पोक्तं **वासिष्ठमेव** साध्विति **शाण्डिल्यः**। कुतः। परयोः षड्रात्रयोः षष्ठस्याह्नः एकाहतन्त्रत्वात्। तत्र वासिष्ठं न प्रयोक्तुं शक्यते। **तत्राप्रयोगात्।** द्वितीय एव प्रयोज्यम् इति। ननु च समूढप्रयुक्तं पार्थं नेति ब्रूमः। उभयमपि षडहप्रयुक्तम्। स्थानभेदस्तु समूहकृतः। न चेह वासिष्ठस्य स्थानं पाष्ठिकं षष्ठम [ा] हरन्ती (?ती) ति यथास्थानमेवोभयं युक्तम्। द्वितीये वासिष्ठम्। पञ्चमे पार्थम् ॥३॥

अथ यदुक्तं पौण्डरीके संचारः स्यादिति तत्राह—

**संचाराच्च समूढरूपिणि ॥४॥**

इति। **समूढरूपिणि** द्वादशाहप्रभेदे वासिष्ठस्य षष्ठेऽहनि संचारो दृष्ट एवेति न दोषः। **अथातः समूढस्य रूपेण समूढ** (क्षु. क. ३.१२.१) इत्यादिना क्षुद्रकल्पे समूढरूपी द्वादशाह उक्तः ॥४॥

**तृतीये षड्रात्रे पञ्चमस्याह्नः प्रत्यवरोहीण्युक्थानि स्युरित्याचार्याः ॥५॥**

त्रिणवं प्रथममुक्थं ततो द्वे एकविंशे इत्येवं **प्रत्यवरोहीणि** स्युः ॥५॥

कुत इत्याह—

**अभ्यासङ्गो ह्यत्र यथा देवानां पञ्चरात्रे ॥६॥**

अत्र ब्राह्मणम्—**अभ्यासङ्ग्यः पञ्चाहः** (तां. ब्रा.२२.३.१) इति। तद् देवानां पञ्चरात्रवद् अभ्यासङ्गमाह। तद्दर्शनात् तत्रोक्तः प्रत्यवरोहोऽत्रापि कल्प्यताम् ॥६॥

---

1. My[2] · · · तये वासिष्ठं स्वस्थानादुत्कृष्य पक्षे प्रयुज्यते। न परयोः षडहयोः सामूहिकं षष्ठमस्तीति तदत्रानपेक्षितत्वात्तत्राप्रयुज्यमानं वासिष्ठं स्वस्थान एव युक्तमिति for शाण्डिल्य · · · प्रयोज्यमिति (L. 3)
2. C. प्रोक्तं for प्रयोक्तुं
4. My[1] पार्ष्ठीकं My[2] पार्थिकं for पाष्ठिकम्;
5. C. My[2] अहरस्तीति for आहरतीति
16. My[1] My[4] C. °सङ्गच: for °सङ्गः
17. C. om. तद्
18. My[1] °रात्रः for रात्रवद्; My[1] °सङ्गचम् for °सङ्गम्
My[4] अप्यत्र for अत्रापि

**त्रिणवानि वानुक्तत्वात् ॥७॥**

यद्वा त्रिणवान्येव स्युः । प्रत्यवरोहस्यानुक्तत्वात् । त्रिणवस्य पञ्चमाह स्तोमत्वाच्च ॥७॥

नन्वभ्यासङ्गदर्शनात् प्रत्यवरोहः कल्प्यताम् । नेत्याह—

**रात्रिकारितः स्तोमः प्रत्यवरोह इति गौतमः ॥८॥**

इति । क्वचिदपि रात्र्यभावे प्रत्यवरोहादर्शनात् रात्रिकृतोऽयं प्रत्यवरोहः । न चेह षड्रात्रे पञ्चमेऽहनि रात्रिरस्ति ॥८॥

किमेवं त्रिणवान्येव । नेत्याह—

**सवनशेषत्वादुक्थानि त्रयस्त्रिंशान्येव स्युरिति ॥९॥**

इति । तृतीयसवनशेषत्वादुक्थानि स्तोत्राणि त्रयस्त्रिंशस्तोमान्येव स्युः । **त्रयस्त्रिंशमेकं** (तां. ब्रा. २१.१३.१) तृतीयसवनम् इति देवानां पञ्चरात्रे विधानात् ॥९॥

अथ प्रथमस्य सप्तरात्रस्य ब्राह्मणम्—**पृष्ठ्यः षडहो महाव्रतमतिरात्रः** (तां. ब्रा. २२.४.१) इति । तस्यायमर्थः । यन्महाव्रतमहरग्निष्टोमसंस्थमुक्तं तदिदानीमतिरात्रसंस्थं सप्तममहरिति । तत्रोक्थानि किं स्तोमानीति संशयः । तत्राह—

**सप्तरात्राणां प्रथमस्यातिरात्रे पञ्चविंशान्यहस्तोमत्वात् ॥१०॥**

इति । उक्थानीत्यनुवर्तते । पञ्चविंशस्य महाव्रतस्तोमत्वात् ॥१०॥

**एकविंशानि तु ज्योतिष्टोमप्रदेशात् ॥११॥**

यद्वा एकविंशान्येव स्युः । कुतः । कल्पकारेण ज्योतिष्टोमसंबन्धिनाम् ऋक्-

---

2. My[1] पञ्चाह[0] for पञ्चमाह'
9. My[2] उक्थ्यानि for उक्थानि
18. My[2] उक्थ्यानि for उक्थानि
19. C. स्युः for तु

सामस्तोमानामतिदेशात् । तद्यथा—**ऐकाहिकं महाव्रतम् । तस्य ज्योतिष्टोमोऽतिरात्रः षोडशिमान्** (आ. क. ७.२७.३) इति। तस्यायमर्थः । अग्निष्टोमान्तमविकृतं महाव्रतं कार्यम् । तस्योक्थप्रभृति रात्रिपर्यन्तोंऽशः प्रकृतिभूतज्योतिष्टोमसंबन्धी ग्राह्यः इति । ज्योतिष्टोम इति तद्धितान्तं पदम् ॥११॥

अथ द्वितीये सप्तरात्रे ब्राह्मणम्—**सप्तदशं महाव्रतमतिरात्रः** (तां. ब्रा. २२.५.१) इति । तत्र कल्पकार आह—**सप्तदशं महाव्रतम् । तस्य स्तोमान्वयीन्युक्थानि** (आ. क. ७.२८.३) इति तदनुभाष्य व्याचष्टे—

**स्तोमान्वयीनीति सप्तदशानि स्युरधिकारात् ॥१२॥**

इति । सप्तदशस्तोममन्वीयुः व्रजेयुरिति कल्पार्थः । तस्यैव प्रकृतत्वात् ॥१२॥ अत्र दृष्टान्तमाह—

**यथा च स्तोमान्वयी षोडशीत्येकविंशः ॥१३॥**

इति । कुसुरुबिन्ददशरात्रे कल्पग्रन्थः—**एकविंशोऽतिरात्रो य एकस्तोमानामुत्तमस्तस्य स्तोमान्वयी षोडशी** (आ. क. ८.२०.१) इति । अत्रैकविंशस्य प्रकृतत्वात् तदन्वयी षोडशीत्युक्तं भवति । तद्वदत्रापि सप्तदशं व्रतमिति । प्रकृतत्वात् तदन्वयीन्युक्थानीत्यर्थः । ननु च कुसुरुबिन्ददशरात्रे किमर्थः कल्पः ।

---

1. My[2] एका° for ऐका°

3. My[1] om. महाव्रतं
 My[1] My[4] पर्यन्नंशः for पर्यन्तोंशः

8. My[1] °न्वयानि for °न्वयीनि

9. My[4] यजेयुः for व्रजेयुः;

11. C. यथार्थस्तोमान्वयात् for यथा च स्तोमान्वयी

14. My[1-2] अर्थः for उक्तं; My[1] My[4] अस्य for अत्र
 My[1] प्रकृत्या for प्रकृतत्वात्;

15. My[1] °न्वयानि for °न्वयीनि;

अतिदेशादेव षोडशिनः सिद्धमेवैकविंशत्वम् । तदुच्यते । एकस्तोमेषु **षोडशाः षोडशिनोऽनुब्राह्मणं वे** (आ. क. ६.११.३) ति विकल्प उक्तः । तन्निवृत्त्यर्थम् इति ॥१३॥

व्याख्यानान्तरमाह—

**एकविंशानि प्रकृतिस्तोमान्वयात्** ॥१४॥

इति । प्रकृतमेव स्तोममन्वीयुरित्यर्थः ॥१४॥

नन्वयुक्तमेतद् व्याख्यानम् । कुतः । स्तोमान्वयीन्युक्थान्येकविंशः षोडशीति षोडशिनः पृथगेकविंशत्वविधानादिति मत्वा व्याख्यानान्तरमाह—

**पञ्चविंशानि शौचिवृक्षिस्त्रिणवं वाद्यं षोडशिना च स्तोमान्वय इति** ॥१५॥

इति । सप्तदशस्तोमे महाव्रते क्रियमाणे सति प्रकृतेः पञ्चविंशो महाव्रतवानंशो लुप्यते । तावन्तं स्तोममुक्थान्यन्वीयुर्भजेयुः प्रकृतानां लुप्तानामनुग्रहायेति कल्पार्थः । ननु एवं षण्णवतिस्तोत्रीया लुप्ता । तासां पञ्चसप्ततिरेवोक्थैर्लभ्यते । शिष्टाया एकविंशतेः कथं लाभः । तत्रेदमुक्तम्—**षोडशिना च स्तोमान्वय** इति । सहैव लुप्तस्तोमस्यान्वयो लाभ इत्यर्थः । नन्वेवमपि **पञ्चदशौ पक्षौ** (तां. ब्रा.

1. C. °स्तोमे for °स्तोमेषु

2. My[2] न for वा

6. My[1] एकविंश° for एव

7. C. ननु च for नन्व°; My[1] °न्वयानि for °न्वयीनि
My[1] उक्थ्यानि for उक्थानि

11. My[1] om. सति प्रकृतेः; My[4] विहिते for सति प्रकृतेः; C. om. प्रकृतेः

12. My[1] प्राकृतानां for प्रकृतानां; My[1] My[4] उक्थ्यानि for उक्थानि

13. My[2] लभ्यन्ते for लभ्यते

14. My[2] शिष्टानां for शिष्टायाः; My[1] My[4] om. तत्रेदमुक्तम्

15. My[1] My[4] om. सहैव; My[1] My[4] क्लृप्त° for लुप्त°

२२.५.२) इत्यत्र सप्तदशरात्रे ब्राह्मणादेकस्मिन् पक्षे स्तोत्रीयाद्वयं प्राकृतं लुप्तमेव। प्रकृतौ पक्षयोरन्यतरस्य सप्तदशत्वात् तस्य कथं लाभः। तत्रेदमुक्तम्—त्रिणवं वाद्यमिति। प्रथममुक्थं त्रिणवं कुर्यात्। तेन तयोरपि लुप्तयोरनुग्रहः इति। पक्षगतं स्तोत्रीयाद्वयमप्राधान्यान्नावश्यं संपाद्यमिति। वा-शब्दः इति करणं शौचिवृक्षिमतसमाप्त्यर्थम्। अत्र निदानकारः—**एवं तासां स्तोत्रीयाणामनुग्रहो भवति। याः पञ्चविंशाद् व्रतात् सप्तदशे क्रियमाणेऽयन्ती** (नि. सू. ८.१३) त्यादि। तदनुसंधेयम् ॥१५॥

अतः परं पौण्डरीकविषयो विचारः। तत्र ब्राह्मणम्—**अभ्यासङ्ग्यः षडहः** (तां. ब्रा. २२.१८.१) इत्यादि तद्व्याख्यातम्। कल्पकारेण पृष्ठ्यावलम्बस्य पञ्चाहः पृष्ठ्यस्तोमस्य पञ्चममहरिति। तत्र चतुर्थेऽहनि षोडशी कर्तव्यो न वेति संशयः। ननु च पृष्ठ्यावलम्बो नाम तृतीयः षड्रात्रः। तत्र नास्त्येव षोडशी। **उद्धरति षोडशिनम्** (आ. क. ७.२६.४) इति तत्र कल्पकारवचनात्। अत आह—

**पौण्डरीकचतुर्थे षोडशिषष्ठाभावाद्यथा क्षुल्लकजामदग्न्ये ।।१६।।**

इति। पृष्ठ्यावलम्बे षष्ठमहस्त्रयस्त्रिंशं नास्ति। तत्स्थाने विश्वजितो विधानात्। तेन तत्रोद्धृतः षोडशी। इह तु षष्ठमहर्विद्यते इति षडहस्य पूर्णत्वात् कर्तव्य एव षोडशीति मन्यते। यथा क्षुल्लकजामदग्न्ये चतुर्थे सप्तरात्रे स एव

---

1. My[1] My[4] om. सप्तदशरात्रे ··· उक्तम् (L. 2)
 C. एतस्मिन् for एकस्मिन्; C. प्रकृति⁰ for प्राकृतं

3. C. पञ्चमम् for प्रथमम्
 My[1] My[4] उक्थ्यं for उक्थं

4. My[2] ⁰करणः My[1] ⁰कारणं for ⁰करणम्;

5. My[2] ⁰अर्थः for ⁰अर्थम्

6. My[1] My[4] ⁰विंश⁰ for ⁰विंशाद्

8. My[2] अत्र for तत्र

10. My[2] after संशयः—adds :— ·· इति पूर्वः पक्षः

पृष्ठ्यावलम्बः पञ्चाहः षोडशिमान् कल्पकारेण क्लृप्तः । षष्ठस्याह्नः त्रयस्त्रिंशस्य तत्राभावात् ॥१६॥

हेत्वन्तरं चाह—

**क्रियमाणे चैकविंशे स्वाराज्योक्तानां बृहतीनामेकविंशं शतं क्रतुः ॥१७॥**

इति । संपद्यत इति शेषः । **एकविंशे** षोडशिनि **क्रियमाण** एव पौण्डरीकक्रतु **बृहतीनामेकविंशत्यधिकं शतं** संपद्यते । नान्यथेत्यर्थः । ननु बृहती संपद्यते इति नास्ति वचनम् । येन तत्संपत्तये षोडशी स्यादिति । अत उक्तम्—**स्वाराज्योक्तानामिति । स्वाराज्यो वा एष यज्ञः** (तां. ब्रा. २२.१८.२) इति वचनं तावदस्ति । तस्यायमर्थः । बृहती वा एष पौण्डरीक इति । बृहतीसंपन्न इत्यर्थः । कुत एतत् । **स्वाराज्यं बृहती छन्दसामिति** प्रदेशान्तरे बृहत्याः स्वाराज्यत्वसंस्तवात् । तेनात्र स्वाराज्यपदेन बृहत्य एवोक्ताः । तत्र षट्त्रिंशत्स्तोत्रीयासंघ एका बृहती । तासां शतमेकविंशत्यधिकं पौण्डरीके विद्यत इति ब्राह्मणार्थः ॥१७॥

अथ सिद्धान्तमाह—

**अषोडशिकेन तु प्रदेशो न स्यात् ॥१८॥**

इति । यद्यत्र षोडशी स्यात् तदानीमषोडशिकेन पृष्ठ्यावलम्बेनातिदेशो न स्यात् । तस्मान्नास्ति षोडशी ॥१८॥

हेत्वन्तरं चाह—

**विराडपाये चापैत्यन्यासु वा ॥१९॥**

इति । चतुर्थेऽहनि **पिबा सोममिन्द्र मन्दतु त्वे** (सा. ९२७-९) ति विराजामभावे षोडश्यपैति । यदि स्वयं नापेयात् तदानीं स्वकीयाः स्तोत्रीयाः अपि तावदपेयुः । अन्यास्वेवेन्द्र **जुषस्व प्रवहे** (सा. ६५२-४) त्येतद्व्यतिरिक्तास्वेव भवेत् । यथा

---

11. My² My⁴ स्वराज्य for स्वाराज्यं

17. C. before स्यात् adds:—न

21. My² स्वा: for स्वकीयाः

पृष्ठ्यस्तोमे षडहे **प्रत्यस्मै पिपीषते** (सा.१४४०-३) **इति । गौरीवितं षोडशि सामे** (आ. क. ७.३३.१) ति कल्पकारः । इह पुनर्विराजो न सन्ति । चतुर्थस्याह्नो बृहत्पृष्ठत्वात् । न चान्या ऋच उपदिष्टाः । तेन नास्त्येव षोडशीति । निदानकारोऽप्याह—**विराजामपायात् स्वराजोऽप्यन्ती** (नि. सू. ८.१) ति । **इन्द्र जुषस्व प्रवहे** (सा. १९५२.४) त्येताः स्वराजः । तदेतदनैकान्तिकमित्युपग्रन्थकारेणोक्तम् । तद्यथा—**यदि संप्रयुक्ता विराजः स्वराजश्चाभविष्यन् नान्यत्र वैराजात् स्वराजोऽभविष्यन् । न च वैराजपृष्ठ्येऽन्यं स्वराड्भ्यः स्तोत्रीयमाम्नातः स्यात्** (उ. ग्र. ३.७) इति । तस्यायमर्थः । परोक्षपृष्ठ्ये षडहे वैराजाभावेऽपि स्वराजो दृश्यन्ते । तथा स्वराडभावेऽपि वैराजं दृश्यते । यथा षोडशिनः **काम्यकल्पेऽनुष्टुप्सु षोडशिना स्तुवीत ॥ विराट्सु षोडशिना स्तुवीते** (तां. ब्रा. १२.१३.१५-१८) ति । तेन परस्परनियमो नास्तीति । तदयुक्तम् । **विराडपाय** इति हि सूत्रम् । न पुनर्वैराजस्य साम्नोऽपाय इति । तेन परोक्षपृष्ठे षडहे सन्त्येव विराजः । न च सूत्रकारेण विराट्स्वराजां परस्परनियम उक्तः । किंतु विराडपाये स्वराडपाय इति । न चैतावता परस्परनियम उक्तो भवति । न हि वह्न्यभावे धूमो नास्तीति वदता वह्निधूमयोः वह्निधूमयोः परस्परनियम उक्तो भवति । ननु च ज्योतिष्टोमे विराडपायेऽपि स्वराजो दृश्यन्ते । सत्यम् । द्विविधः षोडशी रात्रिप्रयुक्तश्चतुर्थाहप्रयुक्तश्च । तत्र चतुर्थाहप्रयुक्तस्यायं नियमः । तेन सुष्ठूक्तम् । **विराडपाये चापैत्यन्यासु** वेति ॥१९॥

अथ यदुक्तं **यथा क्षुल्लकजामदग्न्य** इति तत्राह—

**अनपायात् क्षुल्लकजामदग्न्ये ॥२०॥**

---

8. C. °पृष्ठ्यः for °पृष्ठ्ये

9. My[2] स्वराजाम् for स्वराड्°; C. वैराजः for वैराजं

14. My[2] after इति ins. एतावत्; My[1] om. च

17. My[2] ज्योतिष्टोम° for रात्रि°; My[4] om. अयं; My[1] अनिमयः for अयं नियमः

**तत्र** विराजामनपायात् षोडशी युक्त एव । ननु च क्षुल्लकजामदग्न्ये **बृहद्रथन्तरपृष्ठः पञ्चाह** इति निदानकारवचनान्न सन्त्येव विराजः । तेन सूत्रनिदानकारयोर्विरोधः । सत्यम् । सूत्रकारस्तु ननापृष्ठ एवेति मन्यते । कल्पकारेणापि **बृहद्रथन्तरपृष्ठः** इति वचनात् । किं च निदानकारोऽपि **विराजामपाये स्वराजोऽप्येयुः** (नि. सू. ८.१) इति बहुशो वदति । तद्विरुद्धमेतत् । बृहद्रथन्तरपृष्ठत्वकथनं स्वस्तोत्रीये षोडश्यभ्युपगमश्च । तस्मात् सूत्रकारः समाहिततरः इति मन्तव्यम् ॥२०॥

यत्पुनरुक्तं बृहतीसंपत्तये षोडशीति तत्राह—

**संपदचोदिता ॥२१॥**

इति । न बृहतीसंपत्तिः शास्त्रचोदितेत्यर्थः । ननु च **स्वाराज्यो वा एष यज्ञः** (तां. ब्रा. २२.१८.२) इति शास्त्रमस्ति । नैवम् । न बृहतीसंपत्त्या स्वाराज्यत्वम् । प्रकारान्तरेणैवेति स्वयमेव ब्राह्मणं दर्शयति । कथम् । **उभे बृहद्रथन्तरे भवतः तद्धि स्वाराज्यमयुतं दक्षिणास्तद्धि स्वाराज्यम्** (तां. ब्रा २२.१८.६) इत्यादीनि (?दिना) ॥२१॥

यद्यपि संपत्तिश्चोदिता स्यात् तथाप्युपपन्नैवासौ विनापि षोडशिनमित्याह—

**उपपन्ना च दशरात्रे ॥२२॥**

इति । विश्वजिद्व्यतिरिक्ते **दशरात्रे** बृहतीसंपत्तिरुपपन्नेत्यर्थः ॥२२॥

तामेव दर्शयति—

**क्लृप्तश्च षट्त्रिंशःषट्शतं हि बृहत्यः ॥२३॥**

इति । षष्ठेऽहनि **षट्त्रिंशं तृतीयसवनं सोक्थम्** (आ. क. ८.३५.१) इति षट्त्रिंशो विहितः । स न विस्मरणीय इत्यर्थः । तेन सहगणने षडधिकं शतं बृहत्यो दशरात्रे संपद्यन्त इति ॥२३॥

---

3. My[1] आहत्य बृहद्रथन्तरं पृष्ठ इत्यवचनात् for अपि बृहद् · · · वचनात् (L. 4)
6. My[2] साधिहित⁰ for समाहित⁰
15. C. ⁰पन्नेऽपि शौचिवृक्षिनापि for ⁰पन्नैवासौ विनापि
19. My[4] कृ तः for क्लृप्तः
21. My[1] My[4] before विहितः add : अपि

तेन षोडशी नास्त्येवेति स्थितम् । तथात्रैव **चतुष्टोमोऽग्निष्टोमः** (तां. ब्रा. २१.४.१) इति ब्राह्मणम् । तत्र संशयः । किं चतुष्टोमपदेन ज्योतिष्टोमो विवक्षितः । किं वा गौतमचतुष्टोमयोः पूर्व इति । तत्र पूर्वपक्षमाह—

**चतुष्टोम इति ज्योतिष्टोमसंस्थानियमात् ॥२४॥**

इति । चत्वार एव स्तोमा यस्येति स चतुष्टोमः । तेन स्तोमनियमाज्ज्योतिष्टोम एव ग्राह्यः । गौतमचतुष्टोमे तु न चत्वार एव स्तोमाः । किं तु द्वयमधिकं विद्यत इति नासौ ग्राह्यः । किं च संस्थानियमात् **अग्निष्टोम** इत्यत्र वचनं भवति । गौतमचतुष्टोमस्तु नाग्निष्टोमः । तत्रोक्थ्यानन्तर्भावात् ॥२४॥

**प्रकृतिप्रत्ययाद्विशये ॥२५॥**

किं च सर्वत्र **विशये** संशये प्रकृतेरेव प्रत्ययो भवति । तस्या सर्वत्र प्रवृत्तेः ॥२५॥

सिद्धान्तमाह—

**गुणात्तु पूर्वं चातुष्टोम्यं तस्मिन्नपूर्वं पशुकामयज्ञे ॥२६॥**

इति । **तस्मिन्** प्रकृतौ ज्योतिष्टोमे गुणयोगात् **चातुष्टोम्यं पूर्ववत्** प्रमाणान्तरपूर्वकं पर्यालोच्य विलम्बेन प्रतीतिः । **पशुकामयज्ञे** तु गौतमचतुष्टोमे **अपूर्वं** प्रमाणान्तरपर्यालोचनारहितमेव शीघ्रं चातुष्टोम्यं रूढ्या प्रतीयते । रूढिश्च योगाद् बलीयसीति न्यायविदः ॥२६॥

अथ यदुक्तम्—प्रकृतिप्रत्ययादिति तत्राह—

**तत्प्रत्यये न्यायो विशये ॥२७॥**

---

1. My[1] My[4] C. om. स्थितम्

6. My[1] om. न; My[1] om. एव

8. My[1-2] My[4] उक्थ्यानामप्यन्तर्भावात् for उक्थ्यानन्तर्भावात्

9. C. विषये for विशये

13. MC. पूर्ववत् for पूर्वं

14. C. °ष्टोम्ये for °ष्टोम्यं; My[2] प्रकृत° for प्रकृतौ

19. C. विषये for विशये

इति। योऽयं प्रकृतिप्रत्यये **न्याय** उक्तः स **विशये** संशये सति भवति। न चेह संशयो भवति। रूढ्यैव गौतमयज्ञप्रतीतेरिति भावः ॥२७॥

एवं स्थिते तस्मिन्नहनि पुनरन्यो विचारः। किमग्निष्टोमसाम वारवन्तीयं प्रकृतिवच्चतुस्तृचे कार्यम्। किं वैकतृचे इति। तत्र पूर्वपक्षमाह—

**अग्निष्टोमसामैकतृचे संस्थानियमात् ॥२८॥**

**चतुष्टोमोऽग्निष्टोमः** (तां. ब्रा. २१.४.१) इति ब्राह्मणे संस्थानियमादेकस्मिन्नेव तृचे स्यात् ॥२८॥

किमन्यथा संस्थानियमो न सिद्ध्येत्। ओमित्याह—

**चतुर्षु नाग्निष्टोम इति वचनात् ॥२९॥**

इति। **चतुर्षु** तृचेषु गाने सति गौतमयज्ञमधिकृत्य **नाग्निष्टोमो नोक्थ्यः** (तां. ब्रा. २१.५.११) इति ब्राह्मणवचनात् तदानीमुक्थस्तोत्रीयानप्यन्तर्भाव्य गानान्न शुद्धोऽग्निष्टोम इति ब्राह्मणस्याभिप्रायः ॥२९॥

अत्र दृष्टान्तमाह—

**यथा चाश्वत्रिरात्रे ॥३०॥**

इति। **यथा** ह्यश्वमेधे तस्मिन्नेव गौतमचतुष्टोमेऽग्निष्टोम इति संस्थानियमात् एकस्मिन्नेव तृचे गानम्। तद्वदत्रापि ॥३०॥

सिद्धान्तमाह—

**सर्वेष्वत्यग्निष्टोमस्थानकल्पनादिति वचनादाचार्याः ॥३१॥**

इति। **सर्वेषु** चतुर्ष्वपि तृचेषु गेयम्। कुतः अत्यग्निष्टोमस्य स्थाने चतुष्टोमविधानात्। तथा हि प्रकृतौ दशममहरविवाक्यं मानसस्तोत्रेणाग्निष्टोममतीत्य वर्तत इत्यग्निष्टोमः। तत्स्थाने विहितत्वाच्चतुष्टोमोऽपि तद्वदग्निष्टोमगतमेकतृचमतिलङ्घ्य चतुष्तृचे समापनीयः इति। तथा कल्पकारवचनादपि। स ह्येवमाह—**गौतम चतुष्टोमयोः पूर्वः** (आ. क. ८.३७.१) इति ॥३१॥

---

2. My[2] अस्ति for भवति

18. My[2] ⁰संस्थान⁰ for ⁰स्थान⁰; M. कल्पवचनाद् for कल्पनादिति वचनात्

यस्तु दृष्टान्त उक्तस्तत्राह—

**न तथाऽश्वत्रिरात्रः ॥३२॥**

इति । अश्वमेधे तु न तथा वचनमस्ति । नापि दशमस्थानपात इति वैषम्यम् ॥३२॥

हेत्वन्तरं चाह--

**अनादेशे प्रकृतेः ॥३३॥**

इति । **अनादेशे प्रकृते**रेव धर्मान्वयात् यथाप्रकृति चतुर्ष्वपि तृचेषु गेयम् ॥३३॥

कथं तर्हि संस्थानियमः । अत आह—

**द्वादशस्तोत्रत्वादग्निष्टोमः इति ॥३४॥**

इति । चतुस्तृचेषु गानेऽपि द्वादशैव स्तोत्राणीति कृत्वाग्निष्टोम इति वचनमुपपन्नम् ॥३४॥

अथ सर्वाहीनसाधारणमाह--

**अहीनयाजनं न कार्यम् । बह्वृचतैत्तिरीयकब्राह्मणे हि निन्दा ॥३५॥**

इति । अहीनेष्वार्त्विज्यं न कार्यम् । ब्राह्मणे निन्दावचनात् ॥३५॥

तदेव ब्राह्मणमुदाहरति--

**अहिर्ह्येनमेष भूत्वा यज्ञक्रतुर्गिरति । योऽहीनेन याजयतीति ॥३६॥**

**एष यज्ञक्रतुरहिः** सर्पो भूत्वा याजकं **गिरती**त्यर्थः ॥३६॥

सिद्धान्तमाह—

3. My$^{2}$ दशसत्र for दशम$^{0}$

6. My$^{2}$ विशेषानादेशे for अनादेशे

8. My$^{1}$ संस्थान$^{0}$ for संस्था$^{0}$

12. My$^{1}$ My$^{4}$ om. अथ सर्वाहीनसाधारणमाह

13. My$^{1}$ $^{0}$हीननिन्दा for हि निन्दा

**विधेस्तु याजनम् ॥३७॥**

इति । अहीनविधिबलात् कार्यमेवार्त्विज्यम् । अन्यथा यागानिष्पत्तेः ॥३७॥

नन्वेवं श्राद्धविधिबलात् श्राद्धेऽपि भोजनप्रसङ्ग इत्याशङ्क्य साक्षादेव याजनविधिं शिष्टाचारं च दर्शयति--

**ज्येष्ठं ज्यैष्ठिनेयमभिचर्यमाणं चित्ररथं कापेया इति च ब्रुवन्न दोषमाह ॥३८॥**

इति । **विषुवतातिरात्रेण ज्येष्ठं ज्यैष्ठिनेयं याजयेत्** (तां. ब्रा. २०.५.२) इति ब्राह्मणं यजमानमेव विधत्ते । तथाभिचर्यमाणं याजयेत् । एतामेव देवपुरं प्रविशतीति । तथापि **चित्ररथं कापेया** अयाजयन्निति शिष्टाचारं दर्शयति ॥३८॥

कथं तर्हि निन्दा ब्राह्मण इत्याशङ्क्य तत्समर्थयते--

**यथा ये मृताय कुर्वन्तीति ॥३९॥**

इति । अत्र मध्ये कस्यचिन्मरणे सति तं दग्ध्वा संवत्सरे पर्यपेतेऽस्थीनि याजयेयुरित्युपक्रम्योक्तम् **प्राणापानैर्वा एते व्यृध्यन्त इत्याहु र्ये मृताय कुर्वन्तीति मैत्रावरुणाग्रान् ग्रहान् गृह्णते प्राणापानौ मित्रावरुणौ प्राणापानैरेवं समृध्यन्ते** (तां. ब्रा. ९.८.१६) इति । तत्र मृतस्य सत्रिणो याजनेऽस्थियज्ञे दोषकथनं न तन्निवृत्त्यर्थम् । किं तु मैत्रावरुणाग्रताविध्यर्थम् । एवमहीनेष्वपि याजने दोषकथनं गुणविध्यर्थम् । गुणश्च तत्तद्ब्राह्मणेभ्यः श्रोतव्यः ॥३९॥

**उभयोरार्ध्नुवनृत्विग्यजमाना इति ब्राह्मणम् इति ब्राह्मणम् ॥४०॥**

---

3. My[2] before श्राद्धे ins. नव⁰

13. My[1] एतैर्व्युध्यन्ते for एते व्युध्यन्ते

14. My[1] एव for एवं

16. My[4] ⁰सिद्ध्यर्थम् for ⁰विध्यर्थम्
My[2] याजन⁰ for याजने

18. My[2] उभयेऽपि for उभयोर

उभये ऋत्विजश्च यजमानश्च द्वादशाहं कृत्वा समृद्धा अभूवन् इति ब्राह्मणम् । तेन याजकस्यापि समृद्धिश्रवणाद् दोषशङ्कापि न कार्या ॥४०॥

**इति द्राह्यायणश्रौतसूत्रे सप्तविंशे पटले षष्ठः खण्डः ॥६॥**

इति काश्यपगोत्रेण धन्विना प्रीतये हरेः ।
तृतीये दशके व्याख्या सप्तमे पटले कृता ॥

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
उक्ता अहीनाः सर्वेऽस्मिन्नथ सत्राणि वक्ष्यति ॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे सप्तविंशः पटलः समाप्तः ॥२७॥**

अहीनाः समाप्ताः

---

4. My² धन्विनारोपिते दीपे सप्तमे पटलेऽधुना । उक्ता अहीनाः सर्वेस्मिन्नथ सत्राणि वक्ष्यति ॥ for इति काश्यप° · · · वक्ष्यति ॥ (L. 7)

अष्टाविंशः पटलः

# प्रथमः खण्डः

## सत्राणि

अथ सत्राण्यारभते—

**दीक्षाक्रयप्रसवोत्थानानि सर्वसत्रेषु पूर्वपक्ष उपपादयेयुः ॥१॥**

इति । प्रसवो नाम प्रथमसुत्या । उत्थानं सत्रसमाप्तिः । यथा दीक्षादिचतुष्टयं पूर्वपक्ष एव संपद्यते तथा यतितव्यं सत्रेषु ॥१॥

**तेषामेकस्यानुपपत्तौ क्रयोऽपरपक्षे स्यात् ॥२॥**

दीक्षादीनां मध्ये कस्यचिदेकस्य पूर्वपक्षेऽनुपपत्तौ क्रय एवापरपक्षे स्यात् । तेन राध्नोति ॥२॥

**प्रसवश्च । यदि द्वे ॥३॥**

यदि द्वे पूर्वपक्षेऽनुपपन्ने तदा क्रयश्च प्रथमसुत्या च कृष्णपक्षे स्यात् ॥३॥

**त्रिषूत्थानमेव पूर्वपक्षे स्यात् ॥४॥**

पूर्वपक्षे त्रिष्वनुपपन्नेषु सत्सूत्थानमेव समाप्तिरत्र शुक्लपक्षे सम्पादनीयम् । नान्यत् ॥४॥

**तेषां द्वादश दीक्षास्तथोपसदोऽनादेशे ॥५॥**

अहर्गणानां द्वादशाहप्रकृतित्वादेव सिद्धे पुनर्वचनमहीनवन्मासापवर्गत्वशङ्कानिवृत्त्यर्थम् ॥५॥

**सांवत्सरिकेभ्यश्च ॥६॥**

संवत्सरसत्रेभ्यो गवामयनादिभ्योऽपि द्वादशैव दीक्षोपसदः । सत्रत्वादेव सिद्धे पुनर्वचनं रात्रिसत्रेभ्यः सांवत्सरिकाणां विशेषशङ्कानिवृत्त्यर्थम् । अन्यथा रात्रिसत्रेषु त्रयोदशरात्रिप्रभृतिशतरात्रपर्यन्तेषु संख्याशब्देन चोदनादवान्तरसाम्येन तेषामेव प्रकृतिः न सांवत्सरिकाणामिति शङ्का स्यादिति ॥६॥

---

4. $My^{1-2}$ $My^{4}$ अत्र for अथ

6. $My^{1}$ $My^{4}$ सर्वत्र for रात्र⁰

20. $My^{1}$ $My^{4}$ om. अपि

22. $My^{2}$ अनन्तर⁰ for अवान्तर⁰

ननु च यदुक्तं दीक्षादिचतुष्टयं पूर्वपक्ष एवेति तदशक्यमेव सर्वथेत्याशङ्क्याह—

**ऊर्ध्वं दीक्षाणां यथाकामी ॥७॥**

इति । द्वादशदिवसेभ्य ऊर्ध्वं दीक्षादिवसानां याथाकाम्यं स्यात् । तेन यथा पूर्वपक्ष एव चतुष्टयमपि संभवेत् तथा दीक्षापरिमाणं कार्यम् । तस्य द्वयमेवोदाहरणं वक्ष्यति **त्रिंशद्रात्रान्तान्यष्टादश दीक्षणी** (द्रा. श्रौ. २८.१.१२) ति ॥७॥

अथ ब्राह्मणे प्रथमे पञ्चदशरात्रे सुत्यानां कृष्णपक्षे नियमात् तस्य पुरस्ताच्चतुर्विंशतितमे दिवसे दीक्षारम्भोऽपि कृष्णपक्ष एव स्यात् । ततश्च देवानां **सत्र**-काले कृष्णपक्षे स्वयमत्यन्तनिहीनो मनुष्यः सन् तैस्तुल्यवत् सत्रारम्भसुत्याकरणाच्च देवैः प्रतिनुद्येतेत्याशङ्क्य ब्राह्मणेनोक्तम्—**प्रतिनोदात्तु भय्यमितरमनुपक्षो दीक्षेरन्नप्रतिनोदाये** (तां. ब्रा. २३.६.६) ति । पूर्वपक्षे दीक्षेरन्नित्यर्थः । तत्र दीक्षाह्रासप्रसङ्गानन्तरं पूर्वपक्षमतिलङ्घ्य ततः पूर्वस्मिन् पक्षे पौर्णमास्यां दीक्षारम्भः । **पर्वणि दीक्षेते**ति सामान्यवचनानुरोधात् । एवं स्थिते संदेहः । कियत्यो दीक्षा इति । तत्र प्रतिपद्यते—

**प्रथमे पञ्चदशरात्र एकान्नविंशतिर्दीक्षा इति धानंजय्यः ॥८॥**

इति । स्पष्टम् ॥८॥

कुत इत्याह—

**एकाष्टका महाव्रतममावास्यातिरात्र इति ह्याह ॥९॥**

इति । अपरपक्षाष्टम्येकाष्टका तस्यां **महाव्रतम्** । **अमावास्यायामुदयनीयोऽतिरात्र** इति वचनात् । तदनुरूपं कृष्णपक्षस्य प्रतिपदि प्रायणीयः । ततः पूर्वं द्वादशोपसदः । ततः पूर्वमेकान्नविंशतिर्दीक्षाः । पौर्णमास्या सहेति सामर्थ्यात् सिद्धम् ॥९॥

---

6. My[2] ब्राह्मण° for ब्राह्मणे
17. My[2] अमावास्यायाम् for अमावास्या°
18. My[1] C. °पक्षे for °पक्ष°
20. My[1] My[4] C. सामर्थ्यसिद्धम् for सामर्थ्यात् सिद्धम् (L. 21)

**अष्टादशेति गौतमः पौर्णमास्यातिरात्र इति ह्याह ॥१०॥**

**पौर्णमास्यां प्रायणीयोऽतिरात्र** इति वचनात् पञ्चदश्यामेव सुत्यारम्भो न प्रतिपदि। तथा सति पौर्णमासीशब्दः प्रतिपल्लक्षणः स्यात्। तच्चायुक्तम्। तेन पञ्चदश्याः पूर्वमुपसद्व्यतिरिक्तान्यष्टा**दशैवेति गौतमः**। नन्वेवमेकाष्टकाशब्दः सप्तमीलक्षणार्थः स्यात्। अमावास्या शब्दश्चतुर्दशीं लक्षयेदिति पदद्वयस्य श्रौतार्थभङ्गः स्यात्। सत्यम्। पक्षद्वयेऽपि तावल्लक्षणा दुर्वारा। तत्र पौर्णमासी शब्दः प्रथमश्रुतत्वात् असंजातविरोधी मुख्य इति गौतमः। धानंजय्यस्तु भूयसां न्यायेन पदद्वयं मुख्यार्थ **इत्याहेति**। अत सूत्रकारेण सुत्यारम्भ एव मतभेदे दर्शयितव्ये दीक्षायां मतभेदप्रदर्शनं तत्राविशेषं फलतीति दर्शयितुम् ॥१०॥

**जातिकल्पो वा ॥११॥**

सत्रत्वसामान्यं जातिः। तत्प्रयुक्तः कल्पो **जातिकल्पः**। **तेषां द्वादश दीक्षाः। तथोपसद** (द्रा.श्रौ. २८.१.५.) इत्युक्तः स एव स्यात्। नन्वेव**मितरमनुपक्षे दीक्षन्निति** वचनविरोधः। नैवम्। प्रथमं कृष्णपक्षे दीक्षामभ्युपगम्य देवैः प्रतिनोदशङ्कया पक्षान्तरत्वेन विधानात्। तेन विकल्प एव युक्तः ॥११॥

**षोडशरात्रप्रभृतीनि त्रिंशद्रात्रान्तानि अष्टादशदीक्षाण्येकान्नपञ्चाशद्रात्राणि च ॥१२॥**

दीक्षादिचतुष्टयस्यापि पूर्वपक्षे संपत्त्यर्थं वचनम्। तथा हि पौर्णमास्यां दीक्षित्वा तत आरभ्य अष्टादश दीक्षाः शुक्लपक्षस्य। तृतीयायां राजक्रयः। पुनश्च पौर्णमास्यां दीक्षित्वा प्रथमसुत्या। त उत्तरं पूर्वपक्षस्य सतसमाप्तिर्यज्ञपुच्छम् ॥१२॥

---

1. My[2] °मास्याम् for °मास्या°
4. C. अष्टका for एकाष्टका
7. C. अविसंजात° for असंजात°
9. C. तत्राविशेषणफलमिति निदर्शयितुम् for तत्राविशेषं फलतीति दर्शयितुम्
11. C. सत्र° for सत्रत्व°
13. My[1] सुगम्य My[2] C. अप्युपगम्य for अभ्युपगम्य
14. C. विरोधात्। एतेन for विधानात्। तेन
18. My[1] द्वादश for अष्टादश

अथ कानि पुनस्तानि सत्त्राणीत्याह—

**द्वादशप्रभृतीनि सत्राणि ॥१३॥**

इति । येष्वहर्गणेषु दक्षिणामदत्वा स्वामिन एवार्त्विज्यं कुर्वते तानि सत्राणि । तद्विपरीतान्यहीनानि ॥१३॥

द्वादशाहस्त्वहीनश्च सत्त्रं चेत्याह—

**तेन यजेताप्यहीनभूतेन ॥१४॥**

इति । स्पष्टम् ॥१४॥

कुत इत्याह—

**अहीनलिङ्गानि ह्यस्मिन् ब्राह्मणं दर्शयतीति ॥१५॥**

इति । स्पष्टम् ॥१५॥

तान्येवोदाहरन्ति—

**यथैकदीक्षणं द्वादशाहेन यजेत । यद् गौरीवितेनाहीनान् यजमानं वा अनुप्रतितिष्ठन्तं यजमानमेवैतया वर्द्धयन्ति । सहस्राण्यदित्सतामिति ॥१६॥**

इति । एको दीक्षेतेति द्वादशाह एकस्यैव दीक्षणमुक्तम् । तेनाहीनः । सत्रस्य सप्तदशावराद्ध्र्यस्वामिकत्वात् । तथा **द्वादशाहेन यजेतेति** यजति चोदितत्वादप्यहीनत्वम् । अहर्गणेषु यजतिशब्दस्याहीनेष्वेव दर्शनात् । सत्रेषु क्वचिदपि प्रयोगाभावाच्च । आसत उपयन्तीत्येव हि सत्रचोदनेति ।

---

3. C. दक्षिणा न दत्ता for दक्षिणामदत्वा

5. My[1] द्वादशः for द्वादशाहः

12. M. यद् for यथा; M My[1] °दक्षिणां for °दीक्षणं; My[1] यजते for यजेत

15. My[2] द्वादश° for द्वादशाह°

16. C. °वरार्द्ध° for °वरार्द्ध्य°

18. My[1] आसन for आसत

तथा द्वादशाहे गौरीवितं विधायोक्तम् **अतिरिक्तं वा एददतिरिक्तेन स्तुवते यद् गौरीवितेनाहीनानि** (तां. ब्रा. ११.५.१५) ति। तस्यायमर्थः। अहीनाः खलु एकाहेभ्यः सुत्यादिवसैरतिरिक्ताः। गौरीवितमपि ब्रह्मणोऽतिरिक्तमिति। सदृशयोर्योगो युक्तः इति। एवं वदन्नहीनत्वं दर्शयति। इदं शत्रावाधेयम्। ब्राह्मणविहिते व्यूढे द्वादशाहे गौरीवितमेवेति। तथा **यजमानं वा अनुप्रतितिष्ठन्तमुद्गाता प्रतितिष्ठती** (तां. ब्रां. १२.४.६) ति स्वामिकर्तृभेदेन दर्शयति। स चाहीन एवोपपद्यत इति। तथा **यजमानमेवैतया वर्द्धयन्ति** (तां. ब्रा. ११.११.४) इति। तथा **ध्वस्रे वै पुरुषन्ती तरन्तपुरुमीढाभ्यां वैतदश्विभ्यां सहस्राण्यादित्सताम्** (तां. ब्रा. १३.७.१२) इति दक्षिणाप्रवादो भवति। दक्षिणाश्चाहीन एव भवन्ति। ननु चादित्सतामिति नावश्य [ ो ] द्वादशाहीयदक्षिणावादः। दानमात्रकथनात्। सत्यम्। यागाधिकारात् दक्षिणादिरूपं दानमुक्तमिति मन्यत इति शेषः ॥१६॥

**अपरिमितानि सत्रलिङ्गानि ॥१७**

**स्तोमो युज्यते। सत्रियेभ्योऽहर्भ्यः** (तां. ब्रा. ११.१.१) इत्यादीनि इति ॥१७॥

तदेवं सत्रं चाहीनश्च द्वादशाहः। तत्र पृष्ठ्यः षडहस्य प्रथमेऽहन्यार्भवे आक्षारमुष्णिक्षु विधायोक्तम्। यः पुरा पुण्यो भूत्वा पश्चात् पापीयान् स्यात् स आक्षारं

---

4. My[1] My[4] before इति ins. च

8. My[1] परीषन्ति° My[4] पुरुषति for पुरुषन्ती°; My[2] C. om. वैतदश्विभ्यां

9. C. दीक्षिणां for दक्षिणा°

10. My[1] My[4] C. om. द्वादशाहीय°; My[2] °पात्र° for °मात्र°

11. My[1] My[4] C. दक्षिणा° for दक्षिणादि° My[1-4] om. शेषः

14. My[2] om. इति after इत्यादीनि

16. My[1] उष्णिभिः C. My[4] उष्णिहि for उष्णिक्षु

तत् कस्मिन् स्तोत्रीये ब्रह्मसाम कुर्यादिति ।

अत आह—

**प्रथमेऽह्न्याक्षारं ब्रह्म साम कुर्वन्नौधसस्तोत्रीये कुयात् ।१८।।**

इति । स्पष्टम् ।।१८।।

**तस्यौष्णिहमेकाक्षरनिधनं स्थाने स्यात् ।। १९।।**

आभावे तस्याक्षारस्य स्थाने यत्किंचिदुष्णिक्षूत्पन्नमेकाक्षरनिधनमिति । आ [क्षार] सादृश्यं संपत्त्यर्थम् ।।१९।।

**नौधसं वा ।।२०।।**

अथवा नौधसमेव कुर्यात् । सोऽयं नौधसाक्षरयोरन्योन्यं व्यतिहारः ।।२०।।

**अनाचारस्तूष्णिक्षु बार्हतानाम् ।।२१।।**

**बार्हतानामिति** बृहत्यामुत्पन्नानां नौधसादीनामुष्णिक्ष्वनाचारः प्रवृत्तिर्न दृष्टा ।।२१।।

तस्मान्न व्यतिहारः । किंतु औष्णिहमेव किंचित् प्रतिनिधेयम् । तत्र नावश्यमेकाक्षरं निधनमित्याह—

**अनेकाक्षरणिधनानि चात्र भूयिष्ठानि सामानि ।।२२।।**

तत्रोष्णिक्षु बहूनि सामानि **अनेकाक्षरणिधनानि** दृश्यन्ते ।।२२।।

---

1. My[1] तस्मिन् for तत् कस्मिन्
3. My[2] एकाक्षरम् for आक्षारं
6. My[1] My[4] उष्णिगक्षर$^0$ for उष्णिक्षु
7. My[1] My[4] C. om. आक्षार$^0$
13. My[2] एकं for एव
14. My[2] एकाक्षर$^0$ for एकाक्षरं
16. My[1] अत्र for तत्र; C. उष्णिगृक्षु for उष्णिक्षु; My[2] एका$^0$ for अनेका$^0$

किं तर्हि प्रतिनिधेयमत आह

**तत्र पौष्कलं कुर्यात् ॥२३॥**

स्पष्टम् ॥२३॥

**ज्योतिष्टोमप्रायाणि ह्यत्र सामानि ॥२४॥**

प्रायेणात्र पवमाने ज्योतिष्टोमसंबन्धीन्येव सामानि भवन्ति ॥२४॥

**एतच्चैषामकृतं दशरात्रे भवतीति ॥२५॥**

एषां ज्योतिष्टोमसंबन्धिनां साम्नां मध्ये एतत् पौष्कलं दशरात्रे क्वचिदपि न प्रयुक्तम् । तस्मादाक्षारस्य ब्रह्मसामत्वे सति तत्स्थाने पौष्कलमेव कार्यम् अकृतस्यानुग्रहाय. ॥२५॥

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले प्रथमः खण्डः ॥१॥

---

1. My[2] कथं for किं; My[2] अत्र for अतः

## द्वितीयः खण्डः

अथ चतुर्थेऽहनि ब्राह्मणे षोडशिनं प्रकृत्येन्द्र जुषस्व प्रवहे (सा. ६५२-४) ति स्तोत्रीयं गौरीवितं च साम नित्यत्वेनोक्त्वा पुनः काम्याः कल्पा उक्ताः। तत्र **शक्वरीषु षोडशिना स्तुवीत**। यः कामयेत् वज्री स्यामि (तां. ब्रा. १२.१३.१३) ति ब्राह्मणम्। तदर्थं दर्शयितुं पूर्वपक्षं तावदाह--

**शक्वरीषु षोडशिना स्तुवीतेति गौरीवितं महानाम्नीषु स्यात् ॥१॥**

**विदा मघवन्विदा** (सा. ६४१-३) इत्येता महानाम्न्यः शक्वर्यः। तासु गौरीवितं षोडशिसाम कुर्यात् इति ब्राह्मणार्थः ॥१॥

कुत इत्याह—

**ऋक्चोदना हि तत्प्रकरणे ॥२॥**

इति। तस्य गौरीवितस्य प्रकरणे काम्यत्वेनर्चामिव चोदना। न सामान्तरस्येत्यर्थः। यथा **विराट्सु षोडशिना स्तुवीते** (तां. ब्रा. १२.१३.१८) त्युत्तरेषु वाक्येषु ॥२॥

ननु च एवं तद्वदेव **विदामघवन्नित्येतासु** स्तोतव्यमिति विशेषनिर्देशः कार्यः। अत आह--

**रहस्यत्वाच्चानिर्देशः ॥३॥**

इति। महानाम्नीनां परमरहस्यत्वात् ब्राह्मणे स्वरूपनिर्देशो न कृतः ॥३॥

पक्षान्तरमाह—

**प्रयवो वा निर्देशात् ॥४॥**

4. My[1] My[4] C. om. यः . . . ब्राह्मणम्; (L. 5)

5. C. after तदर्थं adds. तद्

15. My[2] यथा तेषु वाक्येषु चानिर्देश for तद्वदेव

18. My[1] My[4] C. om. ब्राह्मणे

इति। प्रयवः सामान्यम्। यथोक्तमुपग्रन्थे—**समानस्यादेशस्यान्येषु क्रतुषु नियोगो भविष्यति। अन्येषु प्रयव** (उ. ग्र.) इति। शक्वरीशब्देनानियमेन प्रयवः सामान्यं विवक्षितम्। न पुनर्महानाम्नीविशेषः। तस्यानिर्देशादित्यर्थः ॥४॥

पक्षान्तरमाह—

**इन्द्र जुषस्वेति वाधिकारशक्वरीप्रवादाभ्याम् ॥५॥**

इति। **इन्द्र जुषस्व प्रवह** (सा. ६५२-४) इत्येता एव शक्वर्यः। तासामेवाधिकारात्। नित्यतया प्रस्तुतत्वादित्यर्थः। तासु शक्वरीप्रवादाच्च। **अथ वा एता एकपदस्त्र्यक्षराः विष्णोश्छन्दो भुरिजः शक्वर्यः** (तां. ब्रा. १२.१३.२२) इति ब्राह्मणात्। तस्यायमर्थः। **इन्द्र जुषस्वे** (सा. ६५२-४) ति स्तोत्रीये प्रत्यृचमादितोऽष्टाक्षरास्त्रयः पादाः। तत्र प्रतिपादमन्ते त्रीणि त्रीण्यक्षराणि। एकपदास्तिस्रः शक्वर्यो भूरिक्संज्ञकाः ऋगन्तर्भूता उपसृज्यास्माभिरधीताः। ताभिर्विना पञ्चाक्षरास्त्रयः पादाः। ऋक् शरीरभूताः। उत्तमो दशाक्षरश्च। तेन पञ्चविंशत्यक्षरेयमृगाथर्वणिकैः पृथगेवाधीता। सा तिसृभिः पूर्वोक्ताभिः शक्वरीभिः सह चतुस्त्रिंशदक्षरा संपद्यते। एवमेव निदानकारेणोक्तम्- **तस्यैता ऋचः पञ्चविंशत्यक्षराः** (नि. सू. २.१२) इत्यादिना। तदेवं शक्वरीणामुपसर्गादिन्द्र **जुषस्वेति** शक्वर्य उच्यन्ते ॥५॥

---

2. My[1] My[4] C. °शब्दे तु नियमने for °शब्देनानियमेन प्रयवः (L. 3)

3. My[1] My[4] C. after विवक्षितम् add: इत्यर्थः

8. My[1] My[4] C. om. नित्यतया; My[1] °प्रवादश्च for प्रवादाच्च

9. My[1] My[4] om. त्र्यक्षराः My[1] My[4] C. द्व्यक्षराः for छन्दो भुरिजः

11. My[1] om. त्रयः

12. My[1] °संज्ञिताः for संज्ञकाः

13. My[1-4] ऋचः शक्वरीशरीरभूताः for ऋक्शरीरभूताः; My[1] om. इयमृ;

14. My[2] om. शक्वरीभिः

15. My[1] C. om. तस्यैताः . . . अक्षराः;

16. C. om. तदेवं

सिद्धान्तमाह—

**महानाम्न्यस्त्वेव षोडशिसाम स्युः ॥६॥**

इति । **विदा मघवन्नि** (सा. ६४१-) त्येता एव शक्वर्यो ग्राह्याः । प्रसिद्धेः । तासु मन्महानाम्नीसंज्ञकं साम तदेव **षोडशिसाम** स्यात् । **महानाम्न्य** इति बहुवचनस्त्रीलिङ्गे आपो दारा इतिवद् द्रष्टव्ये इति च ॥६॥

ननु चोक्तं गौरीवितप्रकरणे ऋचां चोदनेयं न सामान्तरस्येति । अत आह—

**न ह्येतास्वन्यत्सामापद्यते ॥७॥**

इति । **एतासु** शक्वरीषु कदाचिदपि महानाम्नीव्यतिरिक्तं साम न दृश्यते । तस्मान्न गौरीवितं गेयम् । तेन **शक्वरीषु षोडशिने** (तां. ब्रा. १२.१३.१३) ति सामविशेषाश्रवणेऽपि सामर्थ्यान्महानाम्न्य एव षोडशिसाम स्युः ॥७॥

हेत्वन्तरं चाह—

**अपि ह वा पृष्ठस्तोत्रीयेषु परोक्षाणि कुर्वन्नैतासु नित्यवत्साः करोति ॥८॥**

**अथातः परोक्षपृष्ठ्यः षडहः** (क्षु. क. २.१०.१०) इत्युपक्रम्य कल्पकारः पृष्ठस्तोत्रीयेषु **अभित्वा शूर नोनुमः** (सा. ६८०-१) इत्यादिषु **परोक्षाणि** कण्वरथन्तरादीनि कल्पयन् **एतासु** शक्वरीषु परोक्षं नित्यवत्साख्यं न कल्पयति । किंतु **त्रिकद्रुकेषु महिषो गवाशिरम्** (सा. १४८६-८) इति नित्यवत्सा इत्याह । अतोऽप्यनुगम्यते **विदा मघवन्निति** शक्वरीषु महानाम्नीभ्यो नास्त्येव सामान्तरम् ॥८॥

---

3. My$^{1}$ My$^{4}$ om. प्रसिद्धेः

5. My$^{4}$ द्रष्टव्यम् for द्रष्टव्ये My$^{2}$ om. च

10. My$^{4}$ om न C. $^{0}$वितप्रकरणे for $^{0}$वितं$^{0}$; My$^{2}$ येन for तेन

15. C. om. अथ; My$^{2}$ broken पृष्टय . . . पृष्ठ$^{0}$

16. My$^{4}$ $^{0}$रथन्तराणि for $^{0}$रथन्तरादीनि (L. 17)

17. My$^{1}$ वा तासु My$^{4}$ नैतासु for एतासु;
C. परोक्षपष्ठीत्यवश्यं for परोक्षं नित्यवत्साख्यं

ननु च शक्वर्योऽपि साम्ना सह पृष्ठस्थानादन्यत्र न दृष्टाः। नेत्याह—

**कृता ह्येतस्मिन् स्थाने पञ्चस्य ॥९॥**

इति। पञ्चो नामैकाहः। तस्यैतस्मिन् षोडशिस्थाने महानाम्न्यः **कृताः** कल्पकारेण। तेन युक्ता एव महानाम्न्यः षोडशिस्थाने इति ब्राह्मणस्यायमर्थः। **विदा मघवन्नित्येतासु** शक्वरीषु महानाम्नीभिः षोडशिसाम्ना स्तुवीतेति। शक्वरीशब्दश्च सामान्यवचनोऽपि तास्वेव प्रयोगप्राचुर्याद्रूढितुल्यः॥९॥

यद्येवं पञ्चमेऽहनि महानाम्नीनां पृष्ठत्वेन पुनः करणात् संचारदोषः। अत आह—

**तासां स्थाने परोक्षदर्शनात्तदुद्धारः ॥१०॥**

इति। पञ्चमेऽहनि तासां महानाम्नीनां स्थाने परोक्षं कुर्यात्। नित्यवत्सा इत्यर्थः। कुतः परोक्षपृष्ठ्ये षडहे तासां महानाम्नीनामुद्धारे परोक्षस्य दर्शनात् ॥१०॥

ननु च गौरीवितमहानाम्नीनां व्यतिहार एव युक्तः। न परोक्षकल्पनम्। अत आह—

**व्यतिहारे तु जामिसंचारौ स्याताम् ॥११॥**

इति। व्यतिहारेऽपि संचारदोषः स्यादेव। महानाम्नीनां स्थाने आर्भवे च पवमाने गौरीवितस्य करणात्। तथा वामदेव्यगौरीवितयोः संनिपाते जामिदोषः स्यात्। उभयोरपि स्वारत्वात् ॥११॥

पक्षान्तरमाह—

**स्याद्वोभयत्र विधेः संचारस्तासां नानाहत्वाच्च ॥१२॥**

**उभयत्र** षोडशिस्थाने पृष्ठस्थाने च विधिबलान्महानाम्नीनां संचार एव युक्तः। अहर्भेदाच्च न दोषः ॥१२॥

---

1. My[2] om. च
   My[1] My[4] C. om. साम्ना सह

16. My[1] om. आर्भवे and trans. च after पवमाने (L. 17)

22. My[1] न दोषः for एव युक्तः

**एतेनोपाया व्याख्याता बृहतः ॥१३॥**

एतेनैव प्रकारेण **बृहता षोडशिना स्तुवीते** (तां. ब्रा. १३.१३.२) ति बृहत्साम्नः षोडशित्वे **चोपायाः** प्रयोगप्रकाराः **व्याख्याताः**। तस्यापि विधिबलात् द्वितीयेऽहनि पृष्ठत्वेन प्रयोगः। चतुर्थेऽहनि षोडशित्वेनेति युक्त एव संचारः। अथवा द्वितीयेऽहनि कण्वबृहत् परोक्षं कुर्यादिति प्रकारद्वयं मन्तव्यम्। तथा बृहद्गौरीवितयोर्व्यतिहारपक्षोऽपि जामिसंचारदोषदुष्ट इति मन्तव्यम् ॥१३॥

**अपि च तत्संचारधर्मितरम् ॥१४॥**

विशेषतो बृहत्साम संचारधर्मकं दृष्टम् ॥१४॥

**विराट्स्वनुष्टुप्सु च गौरीवितमेव स्यात् ॥१५॥**

**विराट्स्वन्नकामस्तुवीतानुष्टुप्सु षोडशिना स्तुवीते** (तां. ब्रा. १३.१३.१८-१५) ति कल्पद्वयेऽपि **गौरीवितमेव** साम। तस्य प्रकृतत्वात् ॥१५॥

ननु च बृहच्च महानाम्न्यश्च प्रकृतावेव। अत आह—

**स्वारप्रायाणि हि षोडशसामानि ॥१६॥**

इति। सर्वत्र हि स्वाराण्येव प्रायेण **षोडशिसामानि** दृष्टानि। तेनात्र विशेषाश्रवणेऽपि स्वारं गौरीवितमेव युक्तम्। न बृहत्। तस्य निधनत्वात् ॥१६॥

ननु च अत्र ब्राह्मणे **असावि सोम इन्द्र ते** (सा. १०२८-३०) इत्यनुष्टुभो दर्शिताः। तासां पञ्चमेऽहनि वैश्वामित्रस्तोत्रीयत्वात् संचारः स्यात्। अत आह—

**अनुष्टुप्सु गौरीवितं कुर्वन् पुरांभिन्दुरिति कुर्यात् ॥१७॥**

इति। **अनुष्टुप्सु गौरीवितं कुर्वन्** पञ्चमेऽहनि तासां स्थाने तत्सामस्थाने **पुरां भिन्दुरि** (सा. १२५०-२) त्यस्यां कुर्यादित्यर्थः। तदुक्तं निदानकारेण—**वैश्वामित्रस्तोत्रीये षोडशिना स्तूयमाने आष्टमिकमुक्थ्यस्तोत्रीयं प्रतिनिदध्यात्। असंचाराय** (नि. सू. ८-३) इति ॥१७॥

---

4. My बृहत्त्वेन My[4] बृहतः पृष्ठत्वेन for पृष्ठत्वेन

6. C. om. अपि and °संचार°

7. My[2] धर्मकं My[1] धर्मितरं for धर्मितरम्

15. My[4] निधनवत्त्वात् for निधनत्वात्

**तदनुष्टुभि नानदे षोडशि साम्नि वृत्य (?त्य) संचाराभ्याम् ॥१८॥**

यदा नानदं षोडशिसाम करोति तदानीं **पुरोजितीवो अन्धसः** (सा: ६९७-९) इत्यनुष्टुभि नानदस्थाने तद् गौरीवितं कार्यम् । तस्य तत्र बहुशः प्रवृत्तेः । अन्यथा नानदस्य संचारप्रसङ्गाच्च । ननु च नैवात्र ब्राह्मणे नानदं षोडशिसामत्वेन विहितम् । सत्यम् । शाखान्तरे विधानात्तदिदमुक्तम् ॥१८॥

अथ पञ्चमेऽहनि शक्वरीः प्रकृत्य काम्यानि निधनानि उक्तानि । **गायत्रमयनं भवति । स्वर्णिधनं ब्रह्मवर्चसकामस्ये** (तां. ब्रा. १३.४.१०) त्यादि ब्राह्मणेन । तत्र मतभेदमाह—

**शक्वरीषु काम्यानि निधनानीडास्थानेषु सर्वत्र स्युरित्याचार्याः तद्धि भूयिष्ठम् ॥१९॥**

इति । ब्राह्मणस्यायमर्थः । **शक्वरीषु** गाने क्रियमाणे यद् बहुभिरिडानिधनैरास्तोत्रसमाप्तेर्गमनं तदयनमित्युच्यते । तद् गमनं स्वर्णिधनयुक्तं भवेत् ब्रह्मवर्चसकामस्य । तदिदं गमनं गायत्रमित्युच्यते । गायत्रीभिर्ब्रह्मवर्चससाधनत्वात् । गायत्री हि ब्रह्मवर्चससाधनम् । ब्राह्मणेनैकयोनित्वात् । एवमुत्तरयोरपि ब्राह्मणयोरर्थो द्रष्टव्यः । तेन सर्वासामिडानां स्थाने स्वरित्यादीनि काम्यानि निधनानि कुर्यात् । तदेव **हि भूयिष्ठम्** । सर्वत्र करणात् । भूयिष्ठं फलाय पर्याप्तमिति भावः ॥१९॥

---

1. M. षोडशिसाम्ने C. षोडशिसामा" My[1] षोडशी for षोडशिसाम्नि; My[4] बृहत्य⁰ M व्रत्य⁰ My[1-4] C. वृत्य⁰ for वृत्य⁰

6. My[1] om. तद्

8. My[2] om. स्वर्णिधनं

13. My ⁰सत्र⁰ for ⁰स्तोत्र⁰
C. गायत्रमयनं स्वर्णिधनतायुक्तम् for गमनं स्वर्णिधनयुक्तम् My[1] अयुक्तं My[2] उक्तं for ⁰युक्तं⁰; My[2] after भवेत् adds: स्वर्णिधनेनैव गच्छेत्

14. My[1] तदिरागमनं for तदिदं गमनं

15. My[2] ब्राह्मणवाक्योः for ब्राह्मणयोः

**ऊधस्येवेति गौतमधानंजय्यौ ॥२०॥**

ऊधःसंज्ञके शक्वर्याश्चतुर्थे पादे इन्द्रद्युम्नायेत्यस्मिन् इडाद्वयम् अस्ति। तत्स्थान एव नान्यत्रेत्यर्थः ॥२०॥

कुतः इत्याह—

**अत्र हि निधनवादं वदति ॥२१॥**

इति । ऊधसि **निधनवादं वदति** ब्राह्मणम् । **इडेऽभितोऽथकारं तस्माच्छृङ्गे तीक्ष्णीयसी स्तूपात्** (तां. ब्रा. १३.४.४) इति । ऊधस्य थकारस्य पुरस्तादुपरिष्टाच्चेडाद्वयं शृङ्गस्थानीयमिति । एवम् इडान्तरेभ्यो विशेषेण निधनद्वयकीर्तनात् तत्स्थान एव स्वर्निधनम् ॥२१॥

**अथकारस्थान इति शौचिवृक्षिरेवमल्पीयान्विकारः ॥२२॥**

**एवं सत्यल्पीयानेव विकारः**। अन्यासामिडानां यथाम्नायमविकारेण प्रयोगादिति । ननु अथकारस्य स्थाने त्रैष्टुभायनविधिर्व्यर्थः । पूर्वमेवाथकारसत्त्वात् । सत्यम् । अनुवाद एवायम् । ओजस्कारस्याथकार एवेति भावः । किंच इडास्थानपक्षेऽपि जागतविधिरनुवाद एवेति तुल्योऽयमनुयोगः ॥२२॥

**अनियमात् सर्वेषु निधनस्थानेष्विति शाण्डिल्यायनः । तथा कौत्सः ॥२३॥**

ब्राह्मणे नियमाभावात् सर्वेषामथकारस्येडानां स्थाने च इत्यर्थः । एवं सति वाक्यत्रयस्यापि विधित्वसिद्धिः । अयनशब्दश्चोपपन्नः । अन्यथा एकस्य स्थाने करणे गमनवादानुपपत्तेः ॥२३॥

---

1. M. अधः सु for ऊधसि

8. C. °विषत्रं कीर्तयति for °द्वयकीर्तनात्

10. My[1] एव for इति

12. C. कार्यः for व्यर्थः; My[1] अधिकार° for अथकार°

13. My[2] om. किंच

17. My[1] om. च

**उत्तमया स्तोत्रीयया पुरीषं संयुक्तमानन्तर्यादिति धानंजय्यो यथा द्वितीयोऽध्यासः ॥२४॥**

**एवाह्येव एवाह्यग्न** इत्यादि पदसमूहः पुरीषम्। तत्तृतीयमहानाम्नीशेषभूतम्। तस्या अनन्तराम्नानात्। **यथा सखासु शेवो अद्वयुरिति**। द्वितीयोऽध्यासो व्यतिरिक्तोऽप्यानन्तर्यात् तृतीयायाः शेषः। तद्वत् ॥२४॥

तेन पुरीषस्याप्यध्यासवत् नवकृत्वोऽभ्यासः कार्यः इति दूषयति—

**शक्वरीभिः स्तुत्वा पुरीषेणेत्यपवृज्य पुरीषेणेति त्वाह। तस्मादसंयुक्तं स्यात् ॥२५॥**

इति। **अपवृज्येति**। अपवर्ग समाप्तिं कृत्वेत्यर्थः। **शक्वरीभिः** स्तुतिं समाप्य **पुरीषेण स्तुवते** (तां. ब्रा. १३.४.१२) इत्याह ब्राह्मणम्। तेन पुरीषात् पूर्वमेव स्तुतिसमाप्त्यवगमात् तदन्ते स्तुतिशेषतया पुरीषपदं सकृदेव गेयम्। न पुनरुत्तमया संयुक्तम् ॥२५॥

अत्र ब्राह्मणे बार्हद्गिररायोवाजीये क्रमेण ब्रह्मसामाच्छावाकसामनी नित्यत्वेन विधाय पुनर्नैमित्तिकतया रायोवाजीयं वैश्यस्य ब्रह्मसामत्वेन विहितम्। तदानीं नित्यस्थाने किं प्रयोज्यम्। अत आह—

**पञ्चमेऽहनि रायोवाजीयं ब्रह्मसाम कुर्वंस्तस्य स्थाने कुर्यात्कल्पवृत्तेनोपपन्नम् ॥२६॥**

इति। रायोवाजीयस्य कल्पने यद्वृत्तं यो धर्मस्तेनोपपन्नं साम तत्स्थाने कल्पयेत् ॥२६॥

किं पुनस्तत्। अत आह—

**बार्हद्गिरं कुर्यात् ॥२७॥**

इति। स्पष्टम् ॥२७॥

---

10. C. पुरीषपदेन for पुरीषेण
11. My[1] om. न पुनर्
14. C. om. वैश्यस्य
16. My[1] My[4] om. पञ्चमे ... आह (L. 20)

कुत इत्याह—

**अरण्येगेयं हि सच्छन्दस्यं च समाने चाहनि दृष्टम् ॥२८॥**

इति । उभयमप्यरण्येगेयं पाङ्क्तमेकस्मिन्नहनि प्रयुक्तं च ॥२८॥

**पार्थरश्मं राजन्याय ब्रह्मसाम कुर्यादिति** ब्राह्मणम् । तदानीं पार्थुरश्मरायो-
वाजीययोरेकयोनित्वात् स्तोत्रीयासंचारः स्यात् । अत आह— ५

**पार्थुरश्मं कुर्वन् बार्हद्गिरस्यर्क्षु कुर्यादृचामसंचाराय ॥२९॥**

इति । **स्वादोरित्था विषूवत** इति स्वयोनिं विहाय **इन्द्रो मदाय वावृध** इत्येतासु कुर्यादसंचारार्थम् ॥२९॥

इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले द्वितीयः खण्डः ॥२॥ ६

## तृतीयः खण्डः

अथ दशमेऽहनि किं मानसस्तोत्रं दशमस्यैवाङ्गम् उत कृत्स्नस्य दशरात्रस्याङ्गमिति विचारः। दशरात्राङ्गत्वे सति तद्विकारेषु द्विरात्रादिषु प्रवर्तते। दशमाङ्गत्वे तु यदा विकृतिषु दशममहः प्रवर्तते तदा तदङ्गत्वेन प्रवर्तते। नान्यथेति विचारस्य फलम्। तत्र पूर्वपक्षमाह—

**दशमस्याह्नोऽनङ्गमेके मानसं ब्रुवते बहिष्पत्नीसंयाजत्वात् ॥१॥**

इति। पत्नीसंयाजोत्तरकालभावित्वादनङ्गम् ॥१॥

कथमित्याह—

**अस्तोत्रस्थानं हि ॥२॥**

इति। अहरङ्गभूतानां स्तोत्राणामिदं स्थानं न भवतीत्यर्थः। प्रागेव पत्नीसंयाजेभ्यः स्तोत्राणां दर्शनात्। किंच **पत्नीसंयाजान्तान्यहानि संतिष्ठन्त** इति श्रुतेरप्यनङ्गम्। कथं तर्हि संस्थितस्याह्नोऽङ्गं नामेति ॥२॥

**अग्निष्टोमावभित इति चाह ॥३॥**

दशरात्रमधिकृत्य ब्राह्मणम्—**अष्टौ मध्य उक्थ्याः। अग्निष्टोमावभितः** (तां. ब्रा. १८.४.५) इति। ततोऽप्यवगम्यते दशममहरग्निष्टोमान्तम्। न पुनर्मानसान्तमिति ॥३॥

**अवयवेन चास्य सर्गं वदति ॥४॥**

---

6. My[2] My[4] om. अह्नो

8. My[4] बहिष्पत्नी⁰ for पत्नी⁰

10. My[2] My[4] after हि add: तत्

11. My[1] om. इति; My[1] My[4] om. स्थानं

13. My[2] हि for तर्हि

C. अङ्गत्वं for अङ्गं

18. M. वर्गं My[1] सर्व्यं for सर्गं

अवयवः पृथग्भावः। स्तोत्रान्तरात् पृथग्भावेन वैलक्षण्येनास्य प्रयोगमाह। यथा मनसा स्तुवत इति। स्तोत्रधर्माश्च निषिद्धाः। यथोक्तम्— **अस्तोमयोगयजमानवाचनकुशाविधानेने** (द्रा. श्रौ. ९.४.७) ति। किं च दशमस्याह्नः प्रकरणं विहाय पृथगेव प्रदेशान्तरे मानसस्य सृष्टिमाह। तथा हि **पत्नीः संयाज्य प्राञ्च उदेत्ये**त्यादिना प्रदेशान्तरे मानसस्य विधिः ततोऽन्यश्च दशमस्य स्तोत्रक्लृप्तिर्वामदेव्यपर्यन्ता ॥४॥

सिद्धान्तमाह—

**अङ्गं तु स्यादधिकृत्याम्नानात् ॥५॥**

इति। यद्यपि दशमस्य स्तोत्रक्लृप्तिप्रकरणात् बहिरेव प्रदेशान्तरे मानसक्लृप्तिस्तथाप्यङ्गमेव। कुतः। अथैतद् दशममहराप्तस्तोममाप्तच्छन्द इति प्रस्तुत्य मानसविधानात् ॥५॥

अथ यदुक्तम् **अस्तोत्रस्थान**मिति तदनुभाष्य परिहरति—

**अस्तोत्रमित्येकस्तोत्रस्यापि स्वातन्त्र्यं न विद्यते ॥६॥**

इति। अस्तोत्रस्थानमिति कृत्वा केवलमसहायस्य मानसस्य स्वातन्त्र्यमपि न सिद्ध्यति। निष्फलत्वात्। एवं सत्यधिकारात् दशमस्यैवाङ्गम् ॥६॥

**अग्निष्टोमावभित इति वादमात्रम् ॥७॥**

मानसान्तमेव दशममहः। तदन्तर्भूतस्याग्निष्टोमस्यावयुत्य [नु] वादोऽयमग्निष्टोमावभित इति ॥७॥

---

2. My[1] My[4] साम्ना for मनसा

My[2] स्तोम° for अस्तोम°; My[1] °योगा . . . °वाचना for °योग° . . . °वाचन°; My[2] om. यथोक्तम्

3 C. °विधानि for विधानेन;

4. C. देशा° for प्रदेशा°

5. My[1] अभिप्रपद्य° for उदेत्य

My[1] My[4] C. अन्यत्र for अन्यश्च

14. C. केवलस्य for केवलम्

तत्र दृष्टान्तमाह—

**यथा यदुक्थ्यो यज्ञक्रतोरनन्तरायायेत्यतिरात्रस्य गवामयने ॥८॥**

इति **यथा गवामयने** प्रायणीयातिरात्रे अन्तर्भूतोक्थ्यस्यावयुत्यानुवादस्तद्वत् ॥८॥

अथ यदुक्तम**वयवेन चास्य सर्गं वदती** (द्रा. श्रौ. २८.३.४) ति तत्राह—

**न च सर्गावयवादधिकृत्याम्नातमनङ्गं स्याद्यथा रथन्तरं ज्योतिष्टोमस्य ॥९॥**

इति । **न च** मानसप्रयोगस्यासृष्टेः पृथग्भागमात्रादनङ्गत्वम् । तथापि दशममहरधिकृत्याम्नातत्वात् । यथा रथन्तरे प्रस्तूयमाने संमीलेत् क्षिप्रं गेयम् । महिम्नः संभृत्योद्गेयमित्यादिप्रयोगभेदाद्रथन्तरमनङ्गं न भवति । तद्वत् । किं च स्तोत्रक्लृप्तिप्रकरणं विहाय प्रदेशान्तरे वर्ण्यमानं नाङ्गं भवति । तथा हि तैत्तरीयकब्राह्मणे—स **मुखतस्त्रिवृतं निरमिमीत । तमग्निर्देवतान्वसृजत । गायत्री छन्दो रथन्तरं साम** (तै. ब्रा. ) ति स्तोत्रक्लृप्तेः पृथगेव रथन्तरसृष्टिर्वर्ण्यते । न च तावतानङ्गम् ॥९॥

अथात्र कल्पकारेणोक्तम्—**द्वादशाहस्य षोडशिमन्तावतिरात्रावि** (आ. क. ६.१.१) ति । तथा पूर्वस्मिन्नेकविंशतिरात्रे अषोडशिकावित्युक्तम् । त्रयोदश रात्रादिषु षोडशी न विहितो न च प्रसिद्धः । तत्र कथं षोडशीति विचारः । तत्रैकं पक्षमाह—

**अतिरात्रयोः षोडशिन्यनादिष्टेऽप्रतिषिद्धे वा क्रियमाणे यत्र विराडुपपद्यते कुर्यादेनं तत्रेत्याचार्याः ॥१०॥**

इति । **यत्र** षोडशी न विहितो न प्रतिषिद्धस्तत्र **क्रियमाणे** षोडशिनि यदि विराट्संपत्तिस्तदा षोडशिनं कुर्यात् । विराडभावे न कार्यम् ॥१०॥

---

2. M. रथन्तरायाय for अनन्तरायाय
9. My[1] My[4] C. ⁰भाव⁰ for ⁰भाग⁰
12. C. om वर्ण्यमाणं
14. My[1] om. रथन्तरसृष्टिः

कुत इत्याह—

**द्वादशाहे हि क्रियते न गवामयने तत्र तथोपपद्यते ॥११॥**

इति। **द्वादशाहे** षोडशी **क्रियते**। तत्र विराट् संपद्यत इति हेतोर्गवामयने निषिध्यते कल्पकारेण। तत्र विराडभावात् ॥११॥

एतन्मतं दूषयति—

**अकारणं तु संपद् बहवो ह्यविराट्संपन्नाः ॥१२॥**

इति। न विराट्संपत्तिः कारणम्। अविराट्संपन्ना अपि षोडशिमन्तो दृष्टाः ॥१२॥

हेत्वन्तरं चाह—

**कारणं चापूर्वस्य विधेर्न विद्यते ॥१३॥**

इति। अपूर्वो विधिः **षोडशिमन्तावतिरात्रावि**त्येवमादिः। तस्य कारणं मृग्यम्। तथा सति बहिष्पवमानादिक्लृप्तेरपि कारणान्वेषणप्रसङ्गात्। यस्तु पूर्ववान् विधिः। यथा विकृतिषु साम्नामावापोद्धारविधिः, तस्य कारणमस्त्येव। यथा स्तोमस्य वृद्धिह्रासौ ब्राह्मणं विहितौ। तदुक्तं निदानकारेण—**स्तोमकारित आवापः। स्तोमकारित उद्धार** इति च (नि. सू. ८.१०) इति ॥१३॥

मतान्तरमाह—

**सर्वत्र वाषोडशिकौ प्रकृतावन्तरयात् ॥१४॥**

इति। **प्रकृतावतिरात्रे** षोडशिन्यनाम्नानात् **सर्वत्र** त्रयोदशरात्रादिषु षोडशिरहितौ स्याताम् ॥१४॥

हेत्वन्तरं चाह—

**न च ज्ञात्वाषोडशिकमाहान्यत्र व्याहृतातिरात्राभ्यां बहुलं षोडशिमन्तम् ॥१५॥**

---

2. My[1] om. तत्र

17. My[1] अन्तरायात् for अन्तरयात्

18. My[1] षोडश्यनाम्नानात् for षोडशिन्यनाम्नानात्

इति । कदाचिदपि कल्पकारः स्वबुध्या षोडशिरहित**मषोडशिक**मिति **कंचिन्नाह** । प्रकृतिसिद्धत्वादेव । यथा गो आयुषोरतिरात्रयोः । यत्र तु षोडशिनमिच्छति कण्ठेनैव तं **बहुलं** कथयतीत्यर्थः । ननु च अहीनोपक्रमे त्रयोदशातिरात्राणां मध्ये नवसप्तदशो विषुवानिति च द्वौ व्याहतातिरात्रौ षोडशिरहिताविति कण्ठेनैवोक्तमित्याशङ्कयोक्तम् **व्याहतातिरात्राभ्यामन्यत्रे**ति । व्याहतिर्नाम स्तोमसंनिवेशस्य क्रत्वन्तराद् विसदृशत्वमिति । तयोरेव केवलं सिद्धिरस्यैव यदृच्छया **कण्ठेनोक्तिः न बहुलम्** ॥१५॥

सिद्धान्तमाह—

**यथाकामी त्वतिरात्रस्य प्रकृतौ यदि वा षोडशिमानिति ॥१६॥**

इति । प्रकृतावतिरात्रे षोडशिनो याथाकाम्यं विकल्प इत्यर्थः । **यदि वा षोडशिमानिति** कल्पकारवचनात् । तस्य च मूलं शाखान्तरम् ॥१६॥

ततः किमित्याह—

**तस्मादिहापि तथैव स्यात् ॥१७॥**

इति । **इह** त्रयोदशरात्रादिष्वपि **तथैव** विकल्पः ॥१७॥

यद्येवं विकृतिषु किमर्थौ विधिनिषेधौ । अत आह—

**नियमार्थौ तु विधिप्रतिषेधौ ॥१८॥**

इति । विकल्पं विहाय नियमेन प्रवृत्तये विधिः । नियमेन निवृत्तये च निषेध इति निरवद्यम् ॥१८॥

---

1. My[2] before कदा[0] adds: न; C. शिकं तेनाह My[1] [0]शिकइति कंचिन्नाह for [0]शिकमिति कंचिन्नाह (L. 2)

3. My[1] My[4] om. तं

5. C. संनिधानादेशस्य for संनिवेशस्य;

6. C. क्रत्वरादि[0] for क्रत्वन्तराद् वि[0]

16. My[4] om. विकृतिषु

अत्रैव त्रयोदशरात्रे **पृष्ठ्यः षडहः सर्वस्तोमोऽतिरात्रश्चत्वारश्छन्दोमा** (तां. ब्रा. २३.१.१) इति ब्राह्मणम् । तत्र व्यूहसमूहयोर्विकल्पो विशेषाश्रवणादिति प्राप्ते आह—

**पूर्वस्मिंस्त्रयोदशरात्रे व्यूढाश्छन्दोमाः सोमसामातिदेशात् गौरीवितस्य चानादेशात् ॥१९॥**

इति । यदि समूढश्छन्दोमाः स्युस्तदानीं प्रथमस्य छन्दोमस्य कण्वरथन्तरस्य लोके सोमसामे (आ. क. ६.२.१) ति कल्पकारो नावक्ष्यत् । पूर्वमेव छन्दोमदशरात्रे छन्दोमानां समूहक्लृप्तौ तथैवोक्तत्वात् । तथा समूहपक्षे गौरीवितलोके सामान्तरमात्रेयादिकं पूर्वमुक्तम् । तदिदानीं निर्वर्त्य गौरीवितं पुनरादेष्टव्यम् । सर्वसत्रेष्वार्भवे गौरीवितनियमात् । न च तदादिष्टम् । यदिदं व्यूहपक्ष एवोपपद्यते । तदानीं यथा ब्राह्मणम् । गौरीवितस्य सिद्धत्वात् ॥१९॥

भवत्वेवम् । पृष्ठ्यस्तु कथम् । अत आह—

**गवामयनन्यायेन तु पृष्ठ्यः ॥२०॥**

इति । यथा गवामयने प्रतिमासं समूढः पृष्ठ्यस्तद्वत् ॥२०॥

कुत इत्याह—

**अवच्छिन्नो हि तथा प्रवर्तते ॥२१॥**

छन्दोमेभ्योऽवच्छिन्नः पृथक्कृतः पृष्ठ्यः समूहेनैव सर्वत्र प्रवर्तते । अत्र च सर्वस्तोमेन व्यवायात् पृथक्कृतः ॥२१॥

---

1. My[2] om. एव
 My[4] after छन्दोमाः adds: अतिरात्रः;
2. My[4] व्यूढसमूढयोः for व्यूहसमूहयोः
8. C. समूढ for समूह[0] My[1] My[4] om. तथा;
9. My[2] आत्रेयादि किं for आत्रेयादिकं
 My[2] निवर्त्य for निर्वर्त्य
10. My[2] My[4] यदीदं for तदिदं; C. न तत् for न च तदादिष्टम्
17. My[4] भूतः for कृतः; My[2] after सर्वत्र adds: च

सिद्धान्तमाह—

**दशरात्रवत्तु सच्छन्दोमत्वात् ॥२२॥**

इति । यथा दशरात्रे पृष्ठ्यो व्यूढः तद्वदत्रापि स्यात् । छन्दोमसहितत्वात् । छन्दोमाभावे हि केवलषडहे व्यूहस्यापूर्णत्वात् समूहो भवति । तथा च ब्राह्मणम् निदाकारेणोदाहृतम्—**न वै छन्दोमेभ्यः पृष्ठ्यो व्यूहमानश** इति ॥२२॥

हेत्वन्तरं चाह—

**व्यूहसमाध्यव्यतिरेकात् ॥२३॥**

इति । समाधिः साम्यम् । व्यतिरेको विपर्ययः । व्यूहसाम्यस्य क्वचिदपि विपर्ययाभावात् । एतदुक्तं भवति । यदि छन्दोमेषु व्यूहः स्यात् तदा पृष्ठ्येऽपि व्यूहः कार्यः । यदि न स्यात्तदा [पृष्ठ्ये ऽ] पि न कार्य इति । तदिदं व्यूहसाम्यम् । अत्र सर्वस्तोमेन व्यवायो नादरणीय इति भावः ॥२३॥

**प्रत्नवच्चाद्यबहिष्पवमानम् ॥२४॥**

आद्यस्य प्रथमस्याह्नो बहिष्पवमानं **प्रत्नपदयुक्तं** स्यात् । **अस्य प्रत्नामनुद्युतम्** (सा. ७५५-६३) इति । यथाप्रकृति नवर्चमित्यर्थः ॥२४॥

ननु च कल्पविरुद्धमेतत् । **यत्रातिरात्रात् पृष्ठ्यमुपयन्ति । प्रथमस्याह्नोऽस्य प्रत्नानुरूपः** (आ. क. ६.४.१) इति वचनात् । अत आह—

**परेण ह्येतदस्य प्रत्नानुरूप इत्याह ॥२५॥**

इति । **परेणेति** परस्तादित्यर्थः । एतस्य त्रयोदशरात्रस्य परस्ताच्चतुर्दशरात्रादिष्वेतत् वचनमुपपन्नमित्यर्थः ॥२५॥

---

4. C. छन्दोगाव्यूढेति for छन्दोमाभावे हि;
C. व्यूहः स्यात् ।पूर्णत्वात् for व्यूहस्यापूर्णत्वात्
5. My[1] My[4] C. om. निदानकारेणोदाहृतम्
9. My[1] My[4] व्यतिरेका° for विपर्यया°
10. C. व्यूढः for व्यूहः
11. C. om भावः
15. My[4] °सिद्धम् for °विरुद्धम्

हेत्वन्तरं चाह—

**दृष्टं च दशमार्थमन्यवच्छेदे ॥२६॥**

इति। अवच्छेदो लोपः। नवानामह्नामेकस्यावच्छेदे लोपेऽपि प्रत्नवद् बहिष्पवमानं छन्दोमदशाहे दशमार्थं दृष्टम्। यथोक्तं कल्पकारेण—**पृष्ठ्यावलम्बस्य पञ्चाहः प्रथमस्याह्नः प्रत्नवत् बहिष्पवमानम्** (आ. क. ८.२१.१) इति। तत्र षष्ठमहर्लुप्तम्। तथापि दशमस्य विवाक्यस्य बहिष्पवमानं कर्तुं प्रथमेऽहनि कृतः। तेन प्रथमेऽहनि नवर्चः कार्यः। न हि प्रथमेऽहन्यकृतस्य नवर्चस्य दशमेऽहनि करणं युक्तम्। तथा च दशममहरधिकृत्य ब्राह्मणम्—**नवर्च्चो भवति। या एवामूः प्रयच्छन् या अवदधाति ता एता उदस्यती** (तां. ब्रा' १५.७.६) ति। तस्यायमर्थः। प्रथमेऽहनि प्रयुक्तस्य नवर्चस्य दशमेऽहनि बहिष्पवमाने करणमयुक्तानामनडुहां विमोकस्थाने शम्याविमोकस्थानीयमिति ॥२६॥

तेन कस्यचिदह्नो लोपेऽपि दशमार्थमादौ कार्यम्। किं पुनः पूर्णे नवाहस्य युक्त्या। [अत] आह—

**नवाहयोगश्च ॥२७॥**

नवाहयोगोऽप्यत्र भवति। तन्निमित्तश्च नवर्चः। **नव भवन्ति। नवाहस्य युक्त्या** (तां. ब्रा. ११.१.६) इति ब्राह्मणादिति। अत्राष्टादश रात्रप्रभृतीन्यधिकृत्य कल्पः—**यत्राभिप्लवो रात्रिसत्रेषु तत्र श्यैतनौधस ब्रह्मसामपौष्कल श्रुध्यौष्णिह** (आ. क. ९.१२.१) इति। तस्यायमर्थः। अभिप्लवस्य प्रथमोत्पत्तौ प्रत्यहमभीवर्तो ब्रह्मसाम। तथा प्रत्यहमुष्णिक्षु सुज्ञानम्। तत्र रात्रिसत्रेष्वभीवर्तस्थाने श्यैतनौधसे व्यत्यासं कुर्यात्। आर्भवेषु पवमानेषूष्णिहि सुज्ञानस्थाने पौष्कलश्रुध्ये औष्णिहं व्यत्यासम् ॥२७॥

---

4. My[1] om. छन्दोम०

6. C. My[4] कृतं for कर्तुम्

7. My[4] नवर्चं कार्यम् for नवर्चः कार्यः

9. C. प्रयत्सम्या My[1] पयच्छिम्या for प्रयच्छन् या; C. अपि for अव०

10. C. युक्तानां for अयुक्तानां

15. My[2] न for तन्०; after नवर्चः adds: अवश्यंभावी

16. C. after ०रात्र० adds: ०संपत्ति०

तत्र श्यैतनौधसयोः संशयः। किमभीवर्तस्तोत्रीये किं वा स्वस्तोत्रीये इति। पूर्वपक्षमाह—

**अभीवर्तस्थाने श्यैतनौधसे च तास्वेव ॥२८॥**

इति। तास्वभीवर्तस्तोत्रीयास्वेव भवतः ॥२८॥

दृष्टान्तमाह—

**यथौष्णिहे यासु सुज्ञानम् ॥२९॥**

इति। यथा सुज्ञानस्थानविहिते पौष्कलश्रुध्ये यासु सुज्ञानं तास्वेव भवतः। तद्वत् ॥२९॥

सिद्धान्तमाह—

**स्वासु त्वावर्तीनि ॥३०॥**

इति। आवर्तीनि सामानि कस्यचित् स्थाने विहितानि स्वकीयास्वेव स्तोत्रीयासु भवन्ति ॥३०॥

दृष्टान्तमाह—

**यथा बृहतो वषट्कारणिधनं बृहद्रथन्तरे च तत्पृष्ठे षडहे ॥३१॥**

इषुर्नामैकाहः कल्पकारेण श्येनसधर्मा क्लृप्तः। तत्र श्यैनिकस्य बृहतः स्थाने वषट्कारणिधनं विहितं स्वकीयास्वेव स्तोत्रीयासु भवति। तथा बृहद्रथन्तरपृष्ठ्यः षडह इत्युक्ते वैरूपवैराजादेः स्थाने स्वास्वेव बृहद्रथन्तरे भवतः। तद्वदत्रापि श्यैतं नौधसं चेति। यदि परकीयासु स्यातां तदा विशेषतस्ता निर्दिशेदेव। यथा **नौधसस्यर्क्षु जनित्रं ब्रह्मसामेत्यादि**। पवमानेषु तु परकीयास्वपि बहूनां साम्नां सहप्रवृत्तिर्द्वादशाहे प्रत्यक्षदृष्टेति वैषम्यम् ॥३१॥

---

3. My$^{1-2}$ My$^{4}$ C. om. च

16. C. धर्मा for $^{0}$सधर्मा; My$^{2}$ श्यैतिकस्य for श्यैनिकस्य

17. C. om. विहितं

18. My$^{1}$ वैराजादेव C. $^{0}$वैराजो देव$^{0}$ for $^{0}$वैराजादेः

19. My$^{1}$ My$^{4}$ C. स्युः for स्यातां

हेत्वन्तरं चाह—

**अभीवर्तकारिताश्च प्रगाथाः ॥३२॥**

इति । गवामयने अभीवर्तो ब्रह्मसामेति प्रकृत्य प्रत्यहमन्योन्यः प्रगाथ इति विहितास्तत्प्रयुक्ता एव । न तेषु श्यैतनौधसे युक्ते इति ॥३२॥

**इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले तृतीयः खण्डः ॥३॥** ५

4. My[2] om. श्यैतनौधसे

## चतुर्थः खण्डः

**पूर्वस्मिन्नेकविंशतिरात्रेऽभिप्लवं तृतीयमनुलोमं चाह शौचिवृक्षिः ॥१॥**

**अनुलोममेव** । न प्रतिलोममिति शङ्कनीयमित्यर्थः ॥१॥

कुत इत्याह—

**न ह्यावृत्तिर्विज्ञायते ॥२॥**

इति । आवृत्तस्तृतीयोऽभिप्लव इति । नास्ति वचनमित्यर्थः ॥२॥

**प्रतिलोमं शाण्डिल्यो द्वावभिप्लवावित्यवचनात् ॥३॥**

द्वितीयतृतीययोरभिप्लवयोर्व्यवधानाभावाद् द्वावभिप्लवावित्येकशेषं कृत्वा वक्तव्यम् । न च तथा कृतं ब्राह्मणे । किंत्वभिप्लवोऽभिप्लव इति पृथगेवविनिर्दिष्टौ । तेन नूनं पृथग्धर्मा तृतीयः प्रतिलोमः । यथा प्रथमे चतुर्दशरात्रे द्वयोः पृष्ठ्ययोः सहवक्तव्ययोः प्रातिलोम्याभिप्रायादेव पृथङ्निर्देशः । तद्यथा **पृष्ठ्यः षडहस्त्रयस्त्रिशारम्भणः** (तां ब्रा. १३.३.१) इति । तद्वदत्रापि ॥३॥

ननु च एवं प्रथमः षडहोऽनुलोमः पूर्वपक्षः । तृतीय उत्तरपक्षः । मध्ये सप्ताहो विषुवत्स्थाने स्यात् । तच्चायुक्तम् । गवामयने अदर्शनात् । अत आह—

**उच्चावचानि विषुवत्स्थाने ॥४॥**

इति । नावश्यमेकमेवाहो विषुवत्स्थाने । किंतु नानारूपाणि **विषुवत्स्थाने** दृश्यन्ते । यथा द्वितीये चतुर्दशरात्रे पृष्ठ्यः षडह आत्मा तमभितस्त्रिकद्रुकस्त्र्यहौ प्रतिलोमानुलोमौ पक्षौ । तथा संसदां चतुर्विंशतिरात्रे सप्ताहो विषुवान् विशालपृष्ठ्यो निरुक्तं चाहः ॥४॥

---

2. My⁴ इति for चाह; My¹ C. om. चाह

4. My¹ C. My⁴ om. शङ्कनीयमित्यर्थः

10. My¹ C. My⁴ om. ब्राह्मणे

My¹ My⁴ निर्दिष्टौ for विनिर्दिष्टौ

17. My² after किंतु adds: उच्चावचानि

19. My² संपदां My⁴ संसतां for संसदां

My² विषुवतः स्थाने भवति for विषुवान्;

20. My⁴ अतिरिक्तं for निरुक्तं

**एतेनोक्ते विधृत्यादीनां तृतीयषष्ठे त्रयस्त्रिंशद्रात्रे च ॥५॥**

सप्तैकान्नपञ्चाशद्रात्राणि सन्ति। तेषां प्रथमं विधृतिसंज्ञकं विधृत्यादीनां सप्तानां मध्ये तृतीयषष्ठे अपि सत्रे एतेन व्याख्याते। तयोरपि सर्वस्तोमं महाव्रतं च विषुवत्स्थाने। तत उत्तरेषामभिप्लवानामावृत्तिः। **त्रयस्त्रिंशद्रात्रे** इति द्विवचनमेतत्। तयोरपि विषुवत्स्थाने विश्वजित्। तत उत्तरेषां पञ्चाहानामावृत्तिः ॥५॥

ननु एतेष्वावृत्तिर्न श्रूयते। अत आह—

**अभिनिवृत्तिमुत्तरेषां दर्शयतीत्येके ॥६॥**

इति। अभिनिवृत्तिरावृत्तिः प्रतिलोममिति पर्यायाः। त्रयस्त्रिंशद्रात्रे विश्वजित उत्तरेषां प्रातिलोम्यं कण्ठेनैव कथयति ब्राह्मणमित्येक आहुरिति। अस्ति हि तत्र ब्राह्मणम्—**पक्षिण्यो वा एता रात्रयः** (तां. ब्रा. २३.२.७) इति। पक्षिणीत्वं च गवामयनात् प्रातिलोम्येनैवेति। केचित्तु **त्रयस्त्रिंशद्रात्रे चाभिनिवृत्तिमित्येकं** सूत्रमित्याहुः। तदानीं त्रयस्त्रिंशद्रात्र इति सप्तम्यन्तं पदम् ॥६॥

अथ यत्राभिप्लवगणाः श्रूयन्ते त्रयश्चत्वारोऽभिप्लवा इति तत्र किं प्रथमक्लृप्तस्यैवाभ्यासः किं वा अस्ति विशेषः। तत्राह—

**संवत्सरादेशाद्रात्रिसत्रेषु तथैवाभिप्लवानामभ्यासः स्यादिति गौतमः ॥७॥**

इति। त्रयोदशरात्रप्रभृतिशतरात्रपर्यन्तानि रात्रिशब्देन चोदितत्वात् रात्रिसत्राणीत्युच्यन्ते। तेषु रात्रिसत्रेषु कल्पकारः संवत्सरमतिदिशति। तद्यथा **सांवत्सरिकं व्रतं सत्रेषु। सांवत्सरिकौ विश्वजिदभिजितावि** (आ. क- ९.३.१४. १४.१) ति। तथा क्वचित् **संवत्सरसंमिता** (तां. ब्रा. २४.१४.१) इति ब्राह्मणम्। तद्दर्शनादभिप्लवानामपि तथैवाभ्यासः। ततश्च प्रथमेऽभिप्लवे यण्वं द्वितीयेऽपत्यं तृतीये संतनि चतुर्थे शाक्वरवर्णमिति ॥७॥

---

9. My[4] पर्यायः for पर्यायाः

13. My[1] My[4] C. om. त्रयस्त्रिंशद्रात्र इति सप्तम्यन्तं पदम्

18. My[1] C. °दशरात्रि° for °दशरात्र°; My[2] °शतरात्रि° for °शतरात्र°

22. My[1] after एव ins. अस्य

23. My[2] संतनि for संतनि

यद्येवमभिप्लवपञ्चाहेष्वपि तथैवाभ्यासः स्यात्। ततः को दोषः। अत आह—

**आवृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नो मानवादिबृहती तज्जामि स्यात्संतनिना ।।८।।**

इति। उत्तमे त्रयस्त्रिंशद्रात्रे विश्वजित उत्तरस्य पञ्चाहस्यावृत्तस्य प्रथमेऽहनि माध्यंदिने पवमाने **अभिसोमास आयवः** (सा. ८५६-८) इति बृहत्यां मानवं प्रथमं साम कल्पकारेणोक्तम्। तस्य ततः पूर्वेण **संतनिना** सह जामिदोषप्रसङ्गः ।।८।।

**वैकृतत्वात्तु निवृत्तिः। पञ्चाहेष्वभिप्लवान् न प्रसृजेत् ।।९।।**

निवृत्तिरभावः। क्वचिन्निवृत्त इति निष्ठान्तः पाठः। पञ्चाहानां वैकृतत्वात्तेष्वभ्यासो निवृत्तः **अभिप्लवांस्तु न प्रसृजे**दभ्यासः। न जहात्येव। तेषु संवत्सरवदभ्यासः प्रवर्तत एवेति। यावत्तेनावृत्तः पञ्चाहो यन्वयुक्त एवेति न जामिदोषः ।।९।।

अथ तेषु पञ्चाहेषु संदेहः। किमेते पृष्ठ्यस्तोमस्य पञ्चाहाः किं वाभिप्लवपञ्चाहा इति। किं प्राप्तम्। तत्राह—

**तान् पृष्ठ्यस्तोमपञ्चाहानेकेऽनादेशे प्रकृतेः ।।१०।।**

इति। विशेषानिर्देशे प्रकृतेरेव ग्रहणम्। प्रकृतिश्च पृष्ठ्यस्तोम इति। ननु पृष्ठ्य एव प्रकृतिः। सत्यम्। स एव वैरूपादिपृष्ठ्यचतुष्टयाभावे पृष्ठ्यस्तोम इत्युच्यते। तत् पञ्चाह एवात्र युक्तः। कुतः। पृष्ठ्यस्याह्नो लोपे तस्यैवाहीनेषु प्रवृत्तिदर्शनात् ।।१०।।

हेत्वन्तरं चाह—

**नाना ब्रह्मसामत्वात् ।।११।।**

इति। पञ्चाहमधिकृत्य **नाना ब्रह्मसामान्युपयन्ती** (तां. ब्रा. २४.१.१४) ति

---

4. M. मानवादिति बृहति for मानवादि बृहती

11. My[1] My[4] C. om. अभ्यासः

14. M. °स्तोम for °स्तोमस्य

17. C. after ननु adds :– न My[2] च°

19. C. om. तत्

My[2] लोके for लोपे

प्रशंसति ब्राह्मणम् । तेनापि पृष्ठ्यपञ्चाहः स एव हि नानाब्रह्मसाम । प्रत्यक्षाध्ययनात् । अभिप्लवस्तु श्यैतनौधसब्रह्मसामेति ॥११॥

**विश्वजिदन्वयात् ॥१२॥**

अत्र मध्ये विश्वजिदन्वेति । स हि षडहे लुप्तानां वैरूपादीनामनुग्रहार्थः सर्वपृष्ठ्यः क्रियते । न चाभिप्लवपञ्चाहपक्षे वैरूपाद्यनुग्रहो युक्तः । स्वत एव तत्र वैरूपाद्यभावात् । तथा च निदानकारः—**विश्वजिद्धि पृष्ठ्यलोपानन्ववैतीति** (नि. सू. ९-१३) ॥१२॥

**पृष्ठतः षष्ठस्यालोपवचनात् ॥१३॥**

ब्राह्मणे पञ्चाहे पष्ठमहर्लुप्तमिति दोषमुक्त्वा तत्परिहाराय दाशरात्रिकस्य पृष्ठस्य पूर्णत्वात्तेनैव पञ्चाहे पष्ठमहरलुप्तमेवेति वदति । **लुप्यते वा एतत् षष्ठमहरि** (तां. ब्रा. २४.१.४) त्यादिना ॥१३॥

**ज्योतिर्गौरायुरित्यवचनात् ॥१४॥**

यद्यभिप्लवपञ्चाहः स्यात् तदानीं **ज्योतिर्गौरायुर्गौरायुरित्येवं** स्वरूपेणैवावक्ष्यत् । यथान्यत्र ॥१४॥

**त्रिवृता प्रयन्ति त्रिवृतोद्यन्तीति चाह ॥१५॥**

पृष्ठ्यपञ्चाहस्य प्रथममहस्त्रिवृत् स्यात्तस्यावृत्तस्योत्तममहस्तदेव त्रिवृद्भवति । अभिप्लवस्य तु प्रथममहर्ज्योतिष्टोमः । तत्र नैतद्ब्राह्मणमुपपन्नम् ॥१५॥

एवं षड्भिर्हेतुभिः पृष्ठ्यपञ्चाह एवेत्येकं मतम् । तदिदानीं दूषयति—

**समास्त्वेते ॥१६॥**

इति । **एते** षडपि हेतवस्तुल्याः पक्षद्वयसाधारणा इत्यर्थः । कथम् । अन्येषु

---

1. My$^2$ after हि adds:–प्रत्यक्षं; My$^2$ $^0$सामा for $^0$साम

3. My$^1$ om. अन्वयात् My$^2$ अन्ववायात् for अन्वयात्

5. My$^2$ $^0$पृष्ठः for $^0$पृष्ठ्यः

8. My$^{1-2}$ My$^4$ C. पृष्ठ्यतः for पृष्ठतः

10. My$^1$ My$^4$ C. पृष्ठ्यस्य for पृष्ठस्य
My$^1$ My$^4$ C. om. लुप्यते . . . इत्यादिना (L. 11)

रात्रिसत्रेषु पञ्चाहस्याभिप्लवप्रकृतिर्दृष्टा । तथा नानाब्रह्मसामत्वं तु विधीयते । नानुद्यते । तथा विश्वजिदन्वये विषुवदर्थे (?र्थो) न भवति । न पुनः पृष्ठ्यविलोपसंधानार्थः । तथा च निदानकारः—**विषुवदर्थेनैष आगच्छती** (नि. सू. ९-१३) ति । तथा पृष्ठ्येन पृष्ठ्यस्याह्नो लोपवचनं साधारणमेव । तथा पृष्ठ्यस्तोमपञ्चाहस्यापि न स्वरूपेण निर्देशोऽस्ति । तथा **त्रिवृता प्रयन्ती** (तां. ब्रा. २४.३.४) ति ब्राह्मणमप्युपपन्नम् । कथम् । त्रिवृता त्रिभिरित्यर्थः । विश्वजितः पुरस्तात् त्रिभिः पञ्चाहैस्तथोपरिष्टादित्यर्थः । तथैव निदानकारेण व्याख्यातम्--**त्रयः पञ्चाहाः पुरस्तात् त्रयः उपरिष्टादित्यस्यैतद् ब्राह्मणम्** (नि. सू. ९-१३) इति ॥१६॥

किमेवं संशय एव । नेत्याह—

**अभिप्लवपञ्चाहा एवेति गौतमः अधिकृतो हि सः सत्रेषु ॥१७॥**

इति । **स** एवाभिप्लवो रात्रिसत्रेष्वधिकृतः ॥१७॥

**इतरश्चादृष्टः ॥१८॥**

**इतरः** पृष्ठ्यस्तोमः सत्रेषु न क्वचिदपि दृष्टः ॥१८॥

**अभ्यासश्चास्य न प्राकृतस्यापि कृतः पञ्चाहस्य ॥१९॥**

प्रकृतिभूतस्यापि पृष्ठ्यस्तोमषडहस्य सत्रेष्वभ्यासः क्वचिदपि न दृष्टः । किं पुनस्तत् **पञ्चाहस्य** ॥१९॥

**गौरीविताभ्यासङ्गयोरनादेशात् ॥२०॥**

यदि पृष्ठ्यस्तोमपञ्चाहः स्यात् तदानीं तस्य नानास्वरत्वात् आर्भवेषु तत्स्थाने सत्रत्वात् गौरीवितमादेष्टव्यम् । तथाभ्यासङ्गोऽपि वक्तव्यः । अहीनेषु तत्पञ्चाहस्य षष्ठाहर्लोपात् तत्स्तोमलिप्सया सर्वत्राभ्यासङ्गदर्शनात् तच्चोभयमपि कल्पकारेण न कृतम् ॥२०॥

---

3. C. विश्वजिद् for विषुवद्

4. C. अभिप्लव° for पृष्ठ्यस्तोम°

7. My[2] after तथा ins. एव

21. My[1] My[4] C. om. षष्ठाहर्लोपात् तत्स्तोमलिप्सया

My[4] om. च

**पञ्चमेऽभिषोमाग्रहणात् ॥२१॥**

अत्रावृत्तानां पञ्चाहानां प्रथमस्य पञ्चाहस्य प्रथमस्याह्नोऽभिसोमास आयवः इति **मानवमेकस्याम्** (आ. क. ६.३५.६) इति कल्पकारोऽभिसोमां बृहतीमाह। तेनाप्यवगम्यतेऽभिप्लवपञ्चाह इति। पक्षान्तरे तु सोम उ ष्वाणः सोतृभिर् (सा. ६६७-८) इति बृहतीमग्रहीष्यत् ॥२१॥

**अतिरात्रो ज्योतिर्गौरायुर्गौरायुः पञ्चाहः ॥२२॥**

**स द्वितीयः स तृतीयः इति चात्र परब्राह्मणम् ॥२३॥**

परेषां शाखिनां कालबविनां ब्राह्मणम् अभिप्लवपञ्चाहानेव विस्पष्टं कथयतीत्यर्थः ॥२३॥

अत्र कल्पकारेण पक्षद्वयमुक्तम्। यथालोकं बृहद्रथन्तराश्चेति। यथा वा नाना-**ब्रह्मसामस्वि** (आ. क. ६.३५.२-३) ति। तस्यार्थः। षडपि पञ्चाहाः प्रकृतिवदेव यथा लोकबृहद्रथन्तराः स्युः। अथवा प्रथमः पञ्चाहः प्रकृतिवत्। द्वितीयस्तु अन्योन्यलोकबृहद्रथन्तरः। एवमेव तृतीयचतुर्थौ। पञ्चमषष्ठौ तु यथालोकबृहद्रथन्तरावेव। कुतः नाना ब्रह्मसाम। कथम्। प्रथमत्रयस्त्रिंशद्रात्रे तयोरभावात्। तथावृत्तानां प्रथमे पञ्चाहे कल्पकारेण वार्कजम्भं क्लृप्तम्। तत्रेदं सूत्रम्—

**एष प्रत्ना वार्कजम्भे प्रतिपञ्चाहं यथा लोकं बृहद्रथन्तराश्च ॥२४॥**

इति। स्पष्टम् ॥२४॥

---

7. C. चापर⁰ for चात्र पर⁰
8. C. स्पष्टं for विस्पष्टं
10. My[2] तथा लोक⁰ for यथा लोकं⁰; My[1] My[4] C. चेत् for च; My[2] om. वा
12. My[1] My[4] C. पर्यायः for पञ्चाहः
13. My[1] ⁰लोप⁰ for ⁰लोक⁰; C. om. अन्योन्य⁰
14. My[2] के प्रथमे [त्रयः] for कथं प्रथम⁰
15. My[2] यूक्तम्। तद् व्यवस्थापयति for तत्रेदं सूत्रम्
17. My[1] om. स्पष्टम्

कथमित्याह—

**एष प्रत्ना पूर्वे पक्षसि वार्कजम्भमुत्तरे ॥२५॥**

इति । विश्वजितः पूर्वस्मिन् पक्षसि प्रतिपच्चाहं प्रथमेषु दिवसेषु बहिष्पवमाने प्रतिपदनन्तरमेष प्रत्नेत्यनुरूपं स्यादजाम्यर्थं इति निदानकारः । एष प्रत्नेति प्रत्न-शब्दो बार्हतं रूपम् । तेन रथन्तरयोरह्नोर्मध्ये बृहत्कृतं भवतीति जामिपरिहारः । उत्तरस्मिन् पक्षसि वार्कजम्भं प्रतिपच्चाहम् । न केवलमेकस्मिन् । कल्पोक्तमुप-लक्षणमिति भावः । तत्रापि वार्कजम्भस्य बृहन्निधनत्वान्मध्ये बृहत् कृतं भव-तीति जामिपरिहार इति । अन्योन्यलोकबृहद्रथन्तरत्वपक्षे **एषप्रत्ना** प्रथम एव पञ्चाहे । वार्कजम्भमपि षष्ठ एव नान्यत्र । जामिदोषाभावादिति निदानकारे-णोक्तम् ॥२५॥

अत्र ब्राह्मणम् **विश्वजिति छन्दोमानुपयन्ती** (तां ब्रा. २४.३.२) ति विश्व-जिति चतुर्विंशादिस्तोमत्रयं विधत्ते । तेषां कथं प्रयोगः । अत आह—

**यद् विश्वजिति छन्दोमानुपयन्तीति षष्ठेषु स्युर्यथापचितौ ॥२६॥**

इति । अपचितिर्नामैकाहविशेषः । तत्र यथा पृष्ठस्तोत्रेषु छन्दोमा भवन्ति तद्वदत्रापि भवन्ति ॥२६॥

पक्षान्तरमाह—

**प्रणयस्थानेषु वाविशेषात् ॥२७॥**

इति । एकाहकाण्डे विश्वजितमधिकृत्य ब्राह्मणम्—**चतुरस्त्रिवृद्विश्वजितः प्रणयति** । चतुरः पञ्चदशश्चतुरः सप्तदश (तां. ब्रा. १६.४.१३) इति । तस्यार्थः ।

---

4. My[2]. after निदानकारः adds : कल्पकारोऽप्याह-यत्रापि (?ति) रात्रावभिप्लवमुपयन्ति प्रथमस्याह्न एष प्रत्नानुरूप इति । राथन्तरयोरह्नोः संनिपाते जामिदोषनिवृत्त्यर्थम् एतद्वचनं सार्वत्रिकमिति सूत्रकारस्याभिप्रायः

7. My[2] om. इति भावः....उक्तम् (L. 10)

16. My[1] My[4]. om. तद्वद्.... आह (L. 17)

बहिष्पवमानमुपक्रम्य स्तोत्रचतुष्टये चतुरः स्तोमान् त्रिवृत् प्रणयेत्। प्रणयनमुपक्रमः। त्रिवृतमुपक्रम्य त्रिवृत्पञ्चदशसप्तदशैकविंशान् कुर्यादित्यर्थः। तदनन्तरं पञ्चदशमुपक्रम्य चतुरः स्तोमान् कुर्यात्। तदनन्तरं सप्तदशमुपक्रम्य त्रयस्त्रिंशान् कुर्यादिति। तत्र बहिष्पवमानं चतुर्थमाज्यं तृतीयं पृष्ठ्यमिति त्रीणि प्रणयनस्थानानि। तेषु क्रमेण त्रयश्छन्दोमाः स्युः। पृष्ठ्ये कुर्युरिति विशेषानिर्देशात् ॥२७॥

पक्षान्तरमाह—

**पवमानेषु वावापस्थानत्वात् ॥२८॥**

इति। सर्वेषामृक्सामान्यावापस्थानानि। तेन तेष्वेव स्युः ॥२८॥

सिद्धान्तमाह—

**पार्ष्ठिकास्त्वेव स्तोमाः स्युः ॥२९॥**

इति। यथा प्रकृति विश्वजिति **पार्ष्ठिका एव** स्तोमाः स्युः ॥२९॥
त्रिवृदादिषट्कमेवेति। कथं तर्हि ब्राह्मणम्। अत आह—

**पृष्ठ्याश्छन्दोमा निर्मिताः ॥३०॥**

इति। पृष्ठ्यादेव हि षडहाश्छन्दोमा निर्मिताः। ब्राह्मणेनेत्यर्थः। कथम्। **ये महावृक्षस्याग्रं गच्छन्ति क्व ते ततो भवन्तीत्युपक्रम्य त्रिवृत्पञ्चदशावेव स्तोमौ पक्षौ कृत्वा स्वर्गं लोकं प्रयन्तीति चतुर्विंश एव स्तोमो भवती** (तां. ब्रा. १४.१.१२-१४) ति ब्राह्मणेनोक्तत्वात्। तेन पार्ष्ठिकयोस्त्रिवृत्पञ्चदशयोरेव

---

4. My[4]. प्रणयन⁰ for स्थानानि
5. My ⁰स्नानानि for स्थानानि
   My[4] पृष्ठे for पृष्ठ्ये
7. My[1] My[4] C. om. पक्षान्तरमाह
10. My[1] My[4]. om. सिद्धान्तमाह
12. My[1] om. यथा⁰....स्युः
15. My[2]. from ब्राह्मणेन to गच्छन्ति (L. 16) dmaged.
16. My[4]. षडहस्यान्तं for महावृक्षस्याग्रं

समासश्चतुर्विंशः । तथा सप्तदशत्रिणवयोः समासश्चत्वारिंशः । तथा एकविंशत्रिणवयोः समासोऽष्टाचत्वारिंशः । दशमेऽह्न्यविवाक्ये स्वयमेव त्रयस्त्रिंशोऽग्निष्टोमसाम्नि क्रियते । एवं पृष्ठनिर्मिताश्छन्दोमाः । अत्र निदानकारः पुनरपरं प्रकारद्वयमुक्तवान् **पृष्ठ्यांश्छन्दोमान् ब्रूहीत्यादिना** । तत्तत एव श्रोतव्यम् । तेनायं ब्राह्मणार्थः । छन्दोमाभावादपशव्यमेतत् सत्रमिति न शङ्कनीयम् । यतो विश्वजिति पार्ष्ठिकैरेव स्तोमैश्छन्दोमानुपयन्ति । तत्समासरूपत्वात्तेषाम् । अतः पशव्यमेवैतत् सत्रम् ॥३०॥

**इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले चतुर्थः खण्डः ॥४॥**

---

3. My[1]. अपृष्ठ्य⁰ for पृष्ठ⁰; C. om. पृष्ठ⁰

4. ⁰आदिजातमत⁰ for ⁰आदिना । तत्तत

7. My[2]. अपशव्यम् for पशव्यम्

## पंचमः खण्डः

**आञ्जनाभ्यञ्जनासु गार्हपत्य उपसत्सु सर्पींषि फाणयेयुः । पृथग्देवसुरभीणि यान्युक्तानि ब्राह्मणेन ॥१॥**

आञ्जानाभ्यञ्जना इति तृतीय एकान्नपञ्चाशद्रात्र उच्यन्ते। स्त्रीलिङ्गं रात्र्यभिप्रायम्। तस्मिन् सत्रे तस्य यन्मांसमासीत्तत् गुल्गुल्वभवदित्यादिब्राह्मणे यानि देवसुरभीण्युक्तानि गुल्गुलु सुगन्धिते जनं पिन्वन्त दार्विति तानि पृथगेव पेषयित्वा कल्कीकृत्य तैः सर्पींषि पचेयुः ॥१॥

**तैः सुत्यासूपकरणवेलायां सवनानां पूर्वेण हविर्धाने आसीना आञ्जीरन्नभ्यञ्जीरंश्च ॥२॥**

सुत्यासु प्रतिसवनमारम्भवेलायां तेन तेन सर्पिषा चक्षुषोराञ्जनं कुर्युः। गात्राभ्यञ्जनं च ॥२॥

**भुक्त्वाग्नीध्रीय एवेति गौतमः ॥३॥**

यद्वा प्रतिसवनं भोजनानन्तरम् ॥३॥

**अहरहरेतत् कुर्युरिति धानंजय्यशाण्डिल्यौ ॥४॥**

**सर्वस्तोम एवेति गौतमः ॥५॥**

**पृष्ठ्य एके ॥६॥**

**अभिप्लवेष्वेके ॥७॥**

स्पष्टानि ॥४-७॥

**संवत्सरसंमितासु प्रथमं दाशरात्रिकं प्रायणीयं स्यादित्येके । त्रिवृदेव कार्यमित्याह ॥८॥**

---

3. My[1] om. यानि

5. My[2] गुद्गुलु⁰ my[1] गुल्वलु for गुल्गुलु:

6. My[1] जनयितुं C. जनयिष्यन्त for जनं पिन्वन्त

20. My[2] C. ह्याह for आह

संवत्सरसंमिता नाम चतुर्थ एकान्नपञ्चाशद्रात्रः। रात्र्यभिप्रायं स्त्रीलिङ्गम्। अत एव नामधेयात् संवत्सरवत्तस्य क्लृप्तिः। **तत्रातिरात्रश्चतुर्विंशं प्रायणीयमहरि** (तां ब्रा. २४.१४.१) ति ब्राह्मणम्। गवामयनवद् द्वितीयं प्रायणीयमहश्चोदयित्वा पुनस्तस्य निन्दां कृत्वा **त्रिवृदेव कार्यमि** (तां. ब्रा. २४.१४.२) त्याह। **तदेतदेके दाशरात्रिकं प्रथमम**हरिति वदन्ति। त्रिवृदेव कार्यमित्युक्ते तस्यैव प्रतीतेः ॥८॥

तद् दूषयति—

**प्रायणीयं नु चोदयित्वा तस्य स्तोमविकारं गृह्णाति ॥९॥**

इति। गवामयनक्लृप्तं यच्चतुर्विंशमहस्तदेव प्रथमं चोदयित्वा तस्य स्तोमविकार एव त्रिवृदेव कार्यमित्यनेन क्रियते। ऋक्सामानि तु चातुर्विंशिकान्येव ॥९॥

हेत्वन्तरं चाह—

**दाशरात्रिकाणां चावयवप्रयोगो न विद्यते ॥१०॥**

इति। **दाशरात्रिकाणा**मह्नामवयवेन पृथग्भावेन कस्यचित् प्रयोगो नास्ति ॥१०॥

अथ तस्मिन् संवत्सरसंमिते सत्रे पूर्वस्मिन् पक्षसि त्रयोऽभिप्लवास्तेषु क्रमेण यण्वमपत्यं संतनीति सामत्रयं संवत्सरधर्मातिदेशात् कर्तव्यमित्युक्तम्। **संवत्सरातिदेशाद्रात्रिसत्रेष्वि** (द्रा. श्रौ. २८.४.७) ति सूत्रेण तत्रोत्तरस्मिन् पक्षसि एक एवाभिप्लवो विद्यते। तत्र संदेहः। यण्वादीनां मध्ये कतमत् तत्र कार्यमिति। तत्र मतभेदं दर्शयति—

---

1. My[1] My[4] C. om. रात्र्यभिप्रायं स्त्रीलिङ्गम्
2. MΛ[4] C. °सत्रस्य for °वत्तस्य
3. My[1] My[4] C. आरम्भणीयम् for द्वितीयं प्रायणीयम्
5. My[1] My[4] एकादश रात्रि° (My[4] °रात्रं) for एके दाशरात्रिकं; My[2] om. एतद्;
10. My[2], चतुर्विंशकानि for चातुर्विंशकानि
14. My[1] My[4] C. om. पृथग्भावेन

**आवृत्तेऽभिप्लवे शाक्वरवर्णं स्यादित्याचार्याः सांवत्सरिकस्य द्रव्यस्यानुग्रहायेति ॥११॥**

इति। ऋक्सामवाची द्रव्यशब्दः। अस्मिन् सत्रे सांवत्सरिकाणि सर्वाण्यृक्सामानि कृतानि। शाक्वरवर्णं त्वेकमेव न कृतम्। पूर्वस्मिन् पक्षसि चतुर्थाभिप्लवात् तदत्र कार्यम् ॥११॥

तद् दूषयति--

**चतुर्थस्त्वभिप्लवो लुप्तस्तेन सहोपेयाद्यथा पृष्ठ्येन जनित्रम् ॥१२॥**

इति। शाक्वरवर्णस्य स्थानं चतुर्थोऽभिप्लवः। स चात्र पूर्वस्मिन् पक्षसि न विद्यते। तल्लोपात्तेन सहैव शाक्वरवर्णमिति लुप्तम्। यथा सांवत्सरिकमपि जनित्रं समूढषडहस्य पृष्ठ्यस्य लोपात् तेन सहैव लुप्तम्। नानुगृह्यते। तद्वच्छाक्वरवर्णमिति नानुग्राह्यम् ॥१२॥

**संतनि पूर्वप्रयुक्तमावृत्तिसामत्वात् ॥१३॥**

एवं स्थिते पूर्वस्मिन् पक्षसि चरमप्रयुक्तं **संतन्येव** भवेत्। **आवृत्तिसामत्वात्**। प्रतिलोमकरणमावृत्तिः। तेन हि कुशलमुत्तरं पक्षः ॥१३॥

**अपत्यं संप्रयोगात् ॥१४॥**

अथवा **अपत्यं** भवेत्। एवं सति त्रयाणां साम्नां संप्रयोगः कृतो भवति। अन्यथा यत्रसंतनिनोः पूर्वस्मिन् पक्षसि कृतयोर्दशरात्रस्य पञ्चमेऽहनि पुनः करणात् द्विः प्रयोगः। अपत्यस्य तु पूर्वस्मिन् पक्षसि सकृदेव प्रयोग इति वैषम्यं स्यात्। तथा च निदानकारः—**एवं पुरस्ताच्छन्दोमानां द्विः प्रयुक्तानि भवन्ती** (नि. सू.            ) ति ॥१४॥

---

3. My[4]. सांवसराणि for सांवत्सरिकाणि

4· सांवत्सरिकं for शाक्वरवर्णं

7. My[1] My[4] C. सहापेयात् for सहोपेयात्

10. My[2] after लुप्तम् ins इति; My[1] अपि

11. My[1] My[4] C. लुप्ते for लुप्तं

नन्वेवमपि प्रथमे छन्दोमे संतनिनः पुनः करणात् त्रिः प्रयोग इति वैषम्यं स्यादेवेति मत्वा पक्षान्तरमाह—

**यण्वं तु स्यात् ॥१५॥**

इति। स्पष्टम् ॥१५॥

कुत इत्याह—

**उपरिष्टाद्यदभिप्लवानां लोपस्थानं पूर्वस्मिन् पक्षसि तत्पुरस्तादावृत्तानाम् ॥१६॥**

इति। **पूर्वस्मिन् पक्षस्युपरिष्टाल्लोपस्थानम्**। उत्तरस्मिन् पक्षसि उपक्रमो लोपस्थानम्। तेन पूर्वस्मिन् पक्षसि ये चरमास्त उत्तरत्र लुप्ता इति मन्तव्यम् ॥१६॥

**एकस्मिंश्चैतदेव दृष्टम् ॥१७॥**

किं च। केवलमेकस्मिन् अभिप्लवे यण्वमेव दृष्टम्। यथा अष्टादशरात्रादिषु ॥१७॥

**एतेनोक्तमेकषष्टिरात्रे ॥१८॥**

एकषष्टिरात्रेऽपि उत्तरस्मिन् पक्षस्यैतेनैव न्यायेन यण्वम् एव कार्यम् ॥१८॥

अथ शतरात्रे ब्राह्मणमुपादाय व्याचष्टे—

**शतरात्रेऽभिप्रायमभिषुण्वन्ति। समानत्रभिषुण्वन्तीति सविकल्पः स्यात् ॥१९॥**

इति। अभिप्रायमिति णमुल्प्रत्ययः। गत्वा गत्वेत्यर्थः। **समानत्रे**ति। एकस्मिन् एव देश इत्यर्थः। द्वयोरपि विरोधाद् विकल्पः ॥१९॥

तमेव दर्शयति—

**यावन्तः सुनुयुर्यथा सारस्वतेषु यत्र क्वच समाने देशे वा यथान्येषाम् ॥२०॥**

---

8. My$^{2}$. after °स्थानम्। ins अन्तर्लोपो विवृद्धिर्वेति न्यायात्।

15. My$^{1}$ My$^{4}$. om. अपि

22. My$^{1}$ समान° for समाने

इति । यथा सारस्वतसत्रे सरस्वतीतीरेण प्रत्यहं प्राञ्चो गत्वा सुन्वन्ति । एवं कुर्युः । अथवा यत्र क्वाप्येकस्मिन्नेव देशे यथा सत्रान्तराणाम् ॥२०॥

अथ मतान्तरेण ब्राह्मणार्थमाह—

**अयान्त एव चक्रीभवन्ति सदोहविर्धानानि कारयित्वाहः-संस्थासु चक्राणि विपरिवर्तयेयुरित्याचार्यास्तदभिप्रायात्तद्रूपम् ॥२१॥**

इति । प्रत्यक्षेण यानमकुर्वन्तः सदोहविर्धानानि चक्रीभवन्ति । कारयित्वा शकट आरोप्येत्यर्थः । तानि शकटानि अहः संस्थासु परिवर्तयेयुः । तदभिप्रायातस्य प्रयाणस्य रूपम् । न साक्षात् प्रयाणं कार्यमित्यर्थः ॥२१॥

**अप्रायाणात् समानत्राभिषवः ॥२२॥**

गमनमकृत्वैकस्मिन्नेव देशे अभिषवः कार्यः ॥२२॥

**अहरहरेतत् कुर्युरिति धानंजय्यशाण्डिल्यौ ॥२३॥**

अहरहः शकटविवर्तनम् ॥२३॥

**अभिप्लव एवेति गौतमः ॥२४॥**

**पृष्ठ्य एके ॥२५॥**

**त्रिकद्रुकेष्वेके ॥२६॥**

ज्योतिर्गौरायुरिति त्रिकद्रुकाः । स्पष्टमन्यत् ॥२४-२६॥

अथ गवामयनं संवत्सरसत्रं प्रस्तौति—

**उक्तकाला दीक्षा ब्राह्मणेन गवामयनस्य ॥२७॥**

इति एकाष्टकायां दीक्षेरन्नि (तां. ब्रा. ५.९.१) त्यादिना ब्राह्मणेन गवामयनस्य दीक्षाकाल उक्तः । तत्र त्रीन् पक्षान् उपक्षिप्य **चित्रापौर्णमासे दीक्षेरन्नि** (तां. ब्रा. ५.९.१०) त्ययं पक्षो निर्दोषः स्थापितः । तत्रापि चतुरहे पुरस्तात् पौर्णमास्ये दीक्षेरन्निति निर्दोषतरश्चतुर्थः पक्ष उक्तः ॥२७॥

---

11. My[1] before देशे adds. यथासुते

13. My[1]. विवर्तम् C. परिवर्तनम् for विवर्तनम्

21. My[1]. ॰मास्यै fr ॰मासे

तत्र शाखान्तरीयं विशेषमाह—

**वैशाखज्येष्ठौ तु विकल्प्येते । चैत्रीपक्षेणाषाढश्च ॥२८॥**

इति । अस्मिन् ब्राह्मणोक्ते चैत्रीपक्षे त्रयः पक्षा विकल्पन्ते । त्रिष्वपि वैशाखादिमासेषु तत्तत् पौर्णमास्यां ततः पूर्वस्मिंश्चतुरहे वा दीक्षा कार्येत्यर्थः ॥२८॥

**षष्ठ्यां वा दीक्षित्वा सप्तदश दीक्षाः कुर्वीरन् ॥२९॥**

यथोक्तेषु पूर्वपक्षेषु षष्ठ्यां वा दीक्षेत्यर्थः ॥२९॥

**एतेनोक्तमनादेशे सांवत्सरिकाणां सांवत्सरिकाणाम् ॥३०॥**

संवत्सरशब्दचोदितानां सर्वसत्राणामेतेनैव दीक्षणं व्याख्यातम् ॥३०॥

**इति द्राह्यायणश्रौतसूत्रे अष्टाविंशे पटले पञ्चमः खण्डः ॥५॥**

इति च्छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
अष्टमः पटलो वृत्तस्तृतीये दशकेऽधुना ॥२८॥

**इति श्रीधन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे अष्टाविंशः पटलः समाप्तः ॥२८॥**

---

3. My[1]. °क्तेन चैत्रीपक्षेण for °क्ते चैत्रीपक्षे

## एकोनत्रिंशः पटलः

## प्रथमः खण्डः

अथ गवामयने **पञ्चसु माःसु बार्हताः प्रगाथा आप्यन्ते** (तां. ब्रा. ४.४.१) इत्येतमनुवाकमवयवशो व्याख्यास्यन् समुदायार्थं (?) तावदाह—

**पञ्चसु माःसु बार्हताः प्रगाथाः आप्यन्त इत्यभीवर्तस्तोत्रीयाः ॥१॥**

इति । अनेनानुवाकेन **अभीवर्तस्तोत्रीयाः** कथ्यन्त इत्यर्थः ॥१॥

ननु च अभीवर्तस्येति न श्रूयते । अत आह—

**ब्रह्मसामभूतस्य तस्य हि प्रकरणे श्रूयन्ते ॥२॥**

इति । **अभीवर्तो ब्रह्मसाम भवती** (तां. ब्रा. ४.३.१) ति पूर्वं विहितस्य ब्रह्मसाम्नोऽभीवर्तस्य **प्रकरणे** संनिधावेते श्रूयन्ते । तस्मात् तदीया एवैते स्तोत्रीयाः कथ्यन्ते ॥२॥

ननु च रथन्तरादिवत्तस्यैक एव स्तोत्रीयो युक्तः । कथमेते बहवो युज्यन्ते । अत आह—

**अन्योन्यः प्रगाथ इति च नानाप्रगाथस्तं दर्शयति ॥३॥**

इति । **समानं साम भवतीत्यन्योन्यः प्रगाथः** (तां. ब्रा. ४.३.७) इति ब्राह्मणेन गवामयनस्य कृत्स्नेऽपि पूर्वस्मिन् पक्षसि एकमेवाभीवर्तं विधाय तस्य प्रत्यहं भेदेन प्रगाथा विहिताः । तेषां क्लृप्तिप्रकारोऽत्र कीर्त्यत इति न विरोधः । तत्र तावत् पञ्चसु मासु बार्हताः प्रगाथाः इत्यस्यायमर्थः । **अन्योन्यः प्रगाथ** इति विहिता ये प्रगाथास्ते सर्वे पञ्चस्वेव मासेषु समाप्यन्ते ॥३॥

---

3. C. om. गवामयने; My[1] My[4]. om. अथ....तावदाह (L. 4);
My[2] समुदायार्थ [—] तावदाह;

11. My[1] साम्नि यवेते for संनिधावेते°

15. My[1]. अन्योन्यप्रगाथाः for अन्योन्यः प्रगाथः;
My[1] °प्रगाथतान् M °प्रगाथ° for प्रगाथस्तं (?) See ला. श्रौ.

17. My[1] पक्षेसि for पक्षसि

तत्र कियन्तस्ते प्रगाथाः । कुत्र वा तेषामध्ययनम् । कथं च क्लृप्तिरिति न विद्मः । अत आह—

**चतुःशतमैन्द्रा बार्हताः प्रगाथा दशतयीषु ॥४॥**

इति । **अन्योन्यः प्रगाथ** इत्यत्र विशेषाश्रवणेऽपि प्रकृतिवदतिदेशादिन्द्रदेवत्या **बार्हताश्च प्रगाथाः** । ते चास्माकमध्ययनाद् **दशतयीषु** बह्वृचसंहितायां द्रष्टव्याः । तत्र बृहती विष्टारपङ्क्तिश्चेति च एकः प्रगाथः । एवं चतुरुत्तरं शतमेव प्रगाथाः कृत्स्नायामपि बह्वृचसंहितायाम् इति ॥४॥

**तेषां बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुश्चान्यत्र स्थाने ॥५॥**

इति । **तेषां** मध्ये चत्वारोऽभीवर्तादन्यत्रैव भवन्ति । के पुनस्ते । **बृहद्रथन्तरकालेयस्तोत्रीया इन्द्रक्रतुं न आभरे** (सा. १४५६-७) ति प्रगाथश्च । स हि गवामयनस्योत्तरस्मिन् पक्षसि सर्वेषां ब्रह्मसाम्नां स्तोत्रीयो भवति । **इन्द्र क्रतुं न आभरे** (सा. १४५६-७) ति **प्रगाथो भवतीति** श्रुतेः । इतरे तु त्रयः स्तोत्रीयाः संचारदोषप्रसङ्गादभीवर्तेन न ग्राह्याः ॥५॥

एवं सति शतमवशिष्यन्ते । तस्य क्लृप्तिं दर्शयति—

**शतस्यैकं चतुर्विंशे कुर्यादितरानभिप्लवेषु ॥६॥**

इति । स्पष्टम् । अत्र पृष्ठ्यातिरात्रयोरभीवर्त एव नास्ति । तयोः स्थानान्तरे ब्राह्मणे पुष्कलोपदेशात् । तेनाविकृतावेव तौ ग्राह्यौ । किं च यदि पृष्ठ्योऽभीवर्तः स्यात् तदानीं **पदनिधनं प्रथमस्याह्नो रूपमि** (तां ब्रा. १०.१०.१) त्यादि ब्राह्मणेन पृथक् पृथक् ब्रह्मसामभिः पृष्ठ्ये षडहे विभक्तिक्लृप्तेर्भङ्गः स्यात् ॥६॥

ननु च पञ्चसु मासेषु विंशतिश्च शतं चाभिप्लवाहानि सन्ति । तेषामपर्याप्ताः प्रगाथाः । अत आह—

---

18. My[1]. पुष्करो° for पुष्कलो°

20. C. पृथगेव for पृथक् पृथक्

21. My[1] C. पर्याप्तः for अपर्याप्ताः

**एकोनत्रिंशत्सातोबार्हतास्तृचास्तेषामेकैकं तृतीये तृतीयेऽहनि कुर्यात् ॥७॥**

इति । शुद्धा एव तिस्रो बार्हतस्तृच इति व्यपदिश्यते । तथा च निदानकारेणोक्तम्—**बार्हतमपि तृचं सतोबृहत्य इत्येवाचक्षते । यथा वयं घ त्वा सुतावन्तः** (सा. ८६४-६) इति (नि. सू. १-२) । तदयमर्थः । **एकोनत्रिंशत् सातोबार्हताश्च तृचा** दशतयीष्वधीयन्ते । **तेषामेकैकम्** अभिप्लवानां तृतीयेऽहनि कुर्यात् इति ॥७॥

कुत इत्याह—

**कृता ह्येतस्मिन् स्थान आर्षेयकल्पेन ॥८॥**

इति । **षड्भिरेतव्यमि** (तां ब्रा. ४.४.११) ति ब्राह्मणोक्तषट्प्रगाथपक्षमाश्रित्य कल्पकारेणाभिप्लवस्य तृतीयेऽहनि सतोबृहतीनां कल्पनात्—**आत्वा सहस्रमाशतम्** (सा. १३६१-३) **इत्यभीवर्त** इति तस्यैव किं मूल्यमिति चेदुच्यते । पृष्ठ्यः षड्हो ह्यभिप्लवस्य प्रकृतिः । तत्र च तृतीयेऽहनि बृहत्साम्नः सातोबार्हतः स्तोत्रीयः । **वयं घ त्वा सुतावन्त इति सतोबृहत्योवर्षीयश्छन्द आक्रमत** (तां ब्रा. १४.४.१) इति श्रुतेः । तथा **सतोबृहतीषु स्तुवन्ति पूर्वयोरह्नोः प्रत्युद्यमाये** (तां. ब्रा. १२.४.२२) ति च । तेनाभिप्लवेऽप्यतिदेशात् तृतीयेऽहनि सतो बृहत्य एव ग्राह्याः ॥८॥

**पञ्चमस्य मासस्योत्तमेऽभिप्लवे पञ्चमेऽहनि सतोबृहतीः कुर्यात् । प्रगाथाप्रभावात् ॥९॥**

प्रगाथानामपर्याप्तत्वात् ॥९॥

ननु च आगन्तूनामन्ते निवेश इति न्यायात् षष्ठेऽहनीति वक्तव्यम् । नैवम् । राथन्तरेऽहनि सतोबृहतीनां दर्शनात् । पञ्चमस्याप्यह्नो राथन्तरत्वात् तत्रैव करणं न षष्ठेऽहनीत्यभिप्रायः ॥९॥

अथोत्तरं ब्राह्मणमनुभाष्य व्याचष्टे—

---

4. My[2] तथा for यथा

24. My[1] भाष्यम् for ब्राह्मणम्; C. अनुष्टुभा for अनुभाष्य

**तेष्वाप्तेषु छन्दसी संयुज्यैतव्यमिति षष्ठे मासे ॥१०॥**

इति । प्रगाथेषु समाप्तेषु षष्ठे मासे द्वे छन्दसी संयुज्य गन्तव्यम् इति ब्राह्मणार्थः ॥१०॥

तत्र संयोगप्रकारमाह—

**गायत्रीपादमेकैकमुष्णिहामुपरिष्टात् कुर्यात् ॥११॥**

इति । ऐन्द्रयाः कस्याश्चित् गायत्र्याः एकैकं पदं पृथक्कृत्य तिसृणामैन्द्रीणामुष्णिहामन्ते क्रमेण निदध्यात् ॥११॥

ननु च चतुर्ऋचे एव गीयतां किमिति पृथक्कृत्य तृचे करणम् । अत आह—

**विष्टावानुपपत्तिर्ह्यन्यथा ॥१२॥**

इति । अन्यथा चतुर्ऋचे गीयमाने विष्टावोऽनुपपन्नः स्यात् । तृचाश्रयो हि विष्टावो न चतुर्थीमवलम्बते । तद्यथा पञ्चभ्यो हिंकरोति स तिसृभिः स एकया स एकयेति ॥१२॥

**सातोबार्हतशेषोऽष्टौ तान् कृत्वा संयोग इति गौतमः ॥१३॥**

अष्टौ सातोबार्हतास्तृचा अवशिष्टाः सन्ति । तान् षष्ठे मासे प्रथमं कृत्वा पश्चाच्छन्दःसंयोगः कार्यः इति गौतमः ॥१३॥

कुत इत्याह—

**बृहतीक्षयाद्ध्येवमामनतीति ॥१४॥**

अभावाद्धि बृहतीनां छन्दःसंयोगः । श्रुतिरामनति । सन्ति चाष्टौ सातो बार्हतास्तृचा इति तान् कृत्वैव संयोगः ॥१४॥

---

2. My[1] My[4] C. प्रगाथे समाप्ते; for प्रगाथेषु सामाप्तेषु My[1]. om मासे
8. My[1] चतुर्थतृच for चतुर्ऋच; My[1]. om. च; My C. om °कृत्य°
10. My[2]. विष्टावे for विष्टावो; My[2] तृतीया for तृचा°
11. C. चतुर्थम् for चतुर्थीम्
13. My[2]. सतो° for सातो; M. °बाहते शेषे for °बार्हतशेषो
16. My[1] My[4] C. om. कुत इत्याह
17. My[2] आमनन्ति for आमनति

अथोत्तरं ब्राह्मणं व्याचष्टे—

**चतुरुत्तरैरेव छन्दोभिरेतव्यमिति गायत्रीं चतुर्विंशे कुर्यात्त्रिणिहं प्रथम आभिप्लविकेऽनुष्टुभं द्वितीये बृहतीतरेषु ॥१५॥**

**उद्धरेत्तु पञ्चमादह्नः सतोबृहतीः प्रभवन्ति हि प्रगाथाः ॥१६॥**

इति । अस्मिन् पक्षेऽभिप्लवपञ्चमादह्नः सतो बृहतीरुद्धरेत् । कुतः । यस्मात् प्रगाथा एव प्रभवन्ति प्रर्याप्ता इत्यर्थः ॥१६॥

**तत्र पङ्क्तिः कृत्वा षष्ठे वा त्रिष्टुभा षष्ठं मासमीयुर्जगतीं तृतीये स्वरसाम्नि ॥१७॥**

तत्र पञ्चमेऽहनि षष्ठे वा पङ्क्तिं कृत्वा कृत्स्नमेव षष्ठं मासं त्रिष्टुभा गच्छेयुः । जगतीं तु तृतीये स्वरसाम्नीति । अनेन श्वो विषुवान् भवतीति जगतीमुपेयुरिति श्रुतिव्याख्याता ॥१७॥

**नवसातोबार्हतशेषो द्वौ च प्रगाथौ तान् कृत्वा पङ्क्तिमुपेयुस्तेषां वोत्तमस्य स्थाने तं षष्ठे तत ऊर्ध्वं त्रिष्टुभेति गौतमः ॥१८॥**

नव सातो बार्हतास्तृचा द्वौ च प्रगाथौ शिष्टौ । तान् षष्ठे मासि प्रथममेकादशदिवसेषु कृत्वा द्वादशेऽहनि पङ्क्तिं कुर्यात् । अथवा तेषामिति शिष्टानामुत्तमस्य स्थाने द्वितीयस्याभिप्लवस्य पञ्चमेऽहनीत्यर्थः । तत्र पङ्क्तीः कुर्यात् । तमुत्तमं प्रगाथं द्वितीयस्याभिप्लवस्य षष्ठेऽहनि कुर्यात् । तत ऊर्ध्वमेव त्रिष्टुभा गन्तव्यम् । न पुनः कृत्स्नं मासमिति गौतमस्य पक्षः ॥१८॥

---

3. My. प्रथमम् for प्रथमे

7. M. पङ्क्तीः for पङ्क्तिं

12. M. befor नव adds : सः; M. °बार्हतः for °बार्हत°; My[1] पङ्क्तीर् for पङ्क्तिम्.

13. My[2] च for वा; My[1] तद् for ततः

15. My. C. पङ्क्तीः for पङ्क्तिं
My[2] My[1] C. अति° for इति

18. My[1] पुरः for पुनः

**बृहत्या चैव त्रिष्टुभा चैतव्यमिति ।।१९।।**

ब्राह्मणं व्याचष्टे--बृहत्या चैव त्रिष्टुभा चैतव्य (तां. ब्रा. ४.४.८) मिति ।।१९।।

**त्रिष्टुभं चतुर्विंशे कुर्यात् । बृहतीं प्रथम आभिप्लविके ।।२०।।**

राथन्तरे अहनि बृहती कार्या । बार्हतेऽहनि त्रिष्टुप् कार्ये (तां. ब्रा. ४.४.१०) ति वाक्यशेषात् ।।२०।।

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले प्रथमः खण्डः ।।१।।

---

2. C. om. ब्राह्मणं व्याचष्टे; My[1]. om. बृहत्या··चैतव्यमिति

## द्वितीयः खण्डः

**एष विपर्यासः सर्वस्मिन्नयने ॥१॥**

एष विपर्यासः कृत्स्नेऽपि गवामयनस्य पूर्वस्य पक्षसोऽयने कार्यः ॥१॥

**एतानि महानानात्वानि ॥२॥**

एवं त्रीणि प्रगाथायनान्युक्तानि । एतानि महानानात्वानि स्युः । महदत्यन्तं स्तोत्रीयनानात्वं यस्मिन्नयने तन्महानानात्वमिति बहुव्रीहिः । त्रिष्वपि पक्षेपु प्रत्यहमन्योन्यः स्तोत्रीय इत्युक्तं भवति । तथा च निदानकारः—**अन्योन्यः प्रगाथ इत्यन्तं** नानात्वम् (नि. सू. ) इति । ननु सिद्धमेवैतत् । किमर्थमुच्यते । **बृहत्या चैव त्रिष्टुभा चैतव्यमि** (तां ब्रा. ४.४.८) त्युक्ते द्वयोरेव तृचयोः पुनर्विपर्यासिशङ्का स्यात् । तन्निवृत्त्यर्थमिदं सूत्रम् ॥२॥

**चतुरुत्तरप्रयोगो बृहतीत्रिष्टुभोश्च विपर्यासः षष्ठ एव मासे स्यादिति शौचिवृक्षिः ॥३॥**

**चतुरुत्तरैरेव छन्दोभिरेतव्यम् बृहत्या चैव त्रिष्टुभा चैतव्यम्** (तां ब्रा. ४.४.५-८) इति पक्षद्वयं षष्ठ एव मासे स्यात् । न पुनरन्यत्रेति **शौचिवृक्षिः** ॥३॥

कुत इत्याह—

**संशर इव वा एष छन्दसामिति हि तस्मिन्नुपोद्य विदधाति ॥४॥**

इति । उपवाददोषकथनम् । षष्ठे मासि **संशर इव वा एष छन्दसामिति** छन्दःसंयोगस्य दोषमुक्त्वा तत्परिहाराय चतुरुत्तरप्रयोगं विधित्सन् षष्ठ एव मासे विदधाति । न पूर्वमिति गम्यते । यत्र दोषस्तत्रैव परिहारो युक्तः । तस्मात् षष्ठ एव मासे चतुरुत्तरप्रयोग इति तावन्निश्चितम् । पुनस्तत्रापि दोषं दर्शयित्वा विधीयमानो विपर्यासपक्षोऽपि तत्रैव ॥४॥

---

2. My[1] after एष adds: एव

7. My[1] after भवति ins इति

19. My[4] दोषः for दोषकथनं

20. My[2] C. विधिना for विधित्सन्

23. My[2] विपर्यासे for विपर्यास

तदिदं निराकरोति—

**सर्वत्रैवेत्याचार्याः ॥५॥**

इति । चतुर्विंशमहरारभ्य **सर्वत्रै**व षट्स्वपि मासेषु पूर्वोक्तप्रकारेणैवेदं पक्षद्वयमित्याचार्याः ॥५॥

तत्र पूर्वपक्षस्य सार्वत्रिकत्वे हेतुमाह—

**चतुरुत्तराणि ह्यानुपूर्वं प्रयुञ्जानो बृहतीं मध्य आमनति ॥६॥**

इति । क्रमेण **चतुरुत्तराणि** च्छन्दांसि विकल्पयन् **मध्ये बृहतीं** कल्पयत्याम्नायः । बृहत्या पञ्चमासा इति न च षष्ठमासमध्ये पञ्चमासाः संभवन्ति । तस्मान्मासशब्दवैयर्थ्यप्रसङ्गादित आरभ्य सर्वत्रैव चतुरुत्तरप्रयोगः ॥६॥

हेत्वन्तरं चाह—

**त्रिष्टुभा षष्ठं मासमिति चाह ॥७॥**

इति । **त्रिष्टुभा षष्ठं मास**मिति ब्रुवन् त्रिष्टुभः पूर्वाणि छन्दांसि पङ्क्तिपर्यन्तानि षष्ठमासात् पूर्वमेव प्रयोज्यानीति ज्ञापयति । तस्मात् पूर्वत्रेति सिद्धम् ॥७॥

अथ विपर्यासपक्षस्य सार्वत्रिकत्वमुपपादयति—

**बृहतीक्षयात्पुनर्विपर्यासस्तस्मिन्नोपपद्यते ॥८॥**

इति । पञ्चस्वेव मासेषु बृहतीनां क्षयात् तस्मिन् षष्ठे मासे बृहतीभिः **पुनर्विपर्यासो नोपपद्यते** । तस्मात् विपर्यासोऽपि चतुर्विंशमहरारभ्य सर्वत्रैव कार्यः ॥८॥

---

3. My[2] after एव adds:—च
5. तत् for तत्र
6. My[2]. आमनन्ति for आमनति
8. My. कल्पयन् for विकल्पयन्
   My[1] कल्पयन्त्याम्नाताः for कल्पयत्याम्नायः
9. My[4] अम्नायः for आम्नायः My[1] मासम्; for मासाः
   My[1] ननु for न
10. My[2]. इति तत for इत;
16. My[1]. om अथ. . .उपपादयति

एवं निराकृतोऽपि शौचिवृक्षिः पुनरपि स्वमतं समर्थयते—

**साप्राय्येण बृहतीग्रहणमिति शौचिवृक्षिः ॥९॥**

इति । **बृहत्या पञ्चमास इयुरि** (तां ब्रा, ४.४.७) त्येतावद् वचनं पूर्वमासप्रयुक्ता बृहतीश्चतुरुत्तरत्वसाम्येन मध्ये पठति । न पुनः षष्ठे मासे कर्तव्यत्वेन विदधाति । येन मासशब्दवैयर्थ्यं स्यात् । तस्मात् **बृहत्या पञ्चमास** इति पूर्वक्तानामनुवादः । एकां गायत्रीमेकाहमुपेयुरित्यादिना गायत्र्यादिच्छन्दःषट्कमेव षष्ठे मासे विधेयमिति सप्रायभावः साप्राय्यम् । सादृश्यम् । चतुरुत्तरत्वसाम्यमिति यावत् ॥९॥

**पञ्च मास इति वा रात्रयः ॥१०॥**

अथवा **बृहत्या पञ्च मासः** (तां ब्रा. ४.४.७) इति मास (?स्) शब्दो रात्रिवचनः । तेन बृहत्या पञ्च दिवसान् गच्छेयुरिति । षष्ठ एव मासे विधिरयम् । नानुवादः ॥१०॥

**त्रिष्टुभेति यथा भूयसवादः ॥११॥**

**त्रिष्टुभा षष्ठं मासमि** (तां ब्रा. ४.४.७) ति च षष्ठे त्रिष्टुभां भूयस्त्वादुक्तम् । न पुनः पङ्क्तिपर्यन्तानाम् । तत्राभावात् । यथाभूयसमिति भूयस्त्वानुसारेणेत्यर्थः ॥११॥

---

1. My². ⁰कृतेऽपि for ⁰कृतोऽपि
2. C. त्वस्य प्रायेण My¹ साप्रार्येण for सा प्राय्येण
3. My² मासम् for मास
4. C. पठन्ति for पठति
5. My¹ मसम् for मास
9. My¹ मासम् for मासः
10. My² after अथवा adds: बृहत्या; My¹ मासम् for मासः
14. M. ⁰भूयासो My¹ ⁰मूयसो for ⁰भूयस्

अथ विपर्यासपक्षमपि शोचिवृक्षीयं समर्थयते—

**अक्षीणाश्च बृहत्यः ॥१२॥**

स्पष्टम् ॥१२॥

कथमित्याह —

**सातो बार्हतशेषो ह्युष्टौ बृहद्रथन्तरकालेयस्तोत्रीयाश्च ॥१३॥**

इति। एवमेकादशबार्हताः स्तोत्रीयाः सन्ति ॥१३॥

ततः किमित्याह—

**नैस्त्रिष्टुभो व्यत्यस्येत् ॥१४॥**

इति। षष्ठे मासे तावदष्टाविंशतिरहानि तेषु पृष्ठेऽभीवर्तो नास्त्येवेति पूर्वमेवोक्तम्। शिष्टानि द्वाविंशतिरहानि। तत्रैकादशभिर्बार्हतैः स्तोत्रीयैरेकादश त्रैष्टुभान् स्तोत्रीयान् आहृत्य व्यत्यस्येत् ॥१४॥

ननु च बृहद्रथन्तरकालेयस्तोत्रीयमादायाभीवर्ते करणे कृतानामेव तेषामभीवर्तार्थं पुनः करणादेकस्मिन्नेवाहनि स्तोत्रीयसंचारदोषः स्यात्। अत आह—

**तरणिरित्सिषसतीति कालेयं स्याद्यदहस्तस्य स्तोत्रीयेऽभीवर्तः ॥१५॥**

इति। यस्मिन्नहनि कालेयस्तोत्रीये तरोभिर्वो विदद्वसुम् (सा. ६८७-८) इत्यस्मिन्नभीवर्तः क्रियते तस्मिन्नहनि तरणिरित्सिषासती (सा. ८६७-८) ति कालेयं कुर्यात्। तेन चासंचारदोषः ॥१५॥

**त्वामिद्धीति रथन्तरं यदहस्तस्य ॥१६॥**

यस्मिन्नहनि रथन्तरस्य स्तोत्रीयेऽभीवर्तस्तस्मिन्नहनि **त्वामिद्धि हवामहे** (सा. ८०९-१०) इति रथन्तरं कुर्यात् ॥१६॥

**स्वरसाम्नोर्वान्यतरस्मिन् रथन्तरस्य स्तोत्रीयं कुर्यात् ॥१७॥**

---

5. My[2] $^0$कालेये for $^0$कालेय$^0$

10. My[1] C. विंशतिर् for द्वाविंशतिर्

18. My[1] om. चा$^0$; My[2]. च for चा$^0$.

22. My[1] रथत्तर$^0$ for रथन्तरस्य

अथवा प्रथमोत्तमयोः स्वरसाम्नोरन्यतरस्मिन् अहनि रथन्तरस्य स्तोत्रीयमभीवर्तस्य कुर्यात् ।।१७।।

किमर्थमित्याह—

**कृता हि तत्रान्या रथन्तरस्य ।।१८।।**

इति । तयोरह्नोरन्या एव रथन्तरस्य स्तोत्रीयाः कल्पकारेण कृताः । यज्जा-यथा अपूर्व्येति रथन्तरम् (आ. क. २.२.४) प्रत्यस्मै पिपीषतेति रथन्तरम् (आ. क. २.४.४) इति । एवं कल्पकारेणैव तयोरह्नोरन्यासां कल्पनेन संचारशङ्काभावात् तयोरेव रथन्तरस्तोत्रीयमभीवर्तस्य कुर्यात् । नन्वत्र बृहतोऽपि स्तोत्रीयान्तरमसंचाराय वक्तव्यम् नैवम् । व्यत्यासविधेः बार्हतेऽहनि त्रिष्टुप् कार्ये (तां. ब्रा. ४.४.१०) ति वचनाद् बृहतीनां प्रयोग एव नास्तीति न संचारदोषः ।।१८।।

एवं शौचिवृक्षिमतं समर्थितम् । तदेव मतमाचार्याः प्रकारान्तरेण व्याचक्षत इत्याह—

**एवं व्याचक्षत आचार्याः ।।१९।।**

इति । एवमिति वक्ष्यमाणपरामर्शः ।।१९।।

तदेवाह—

**विंशतिशतं त्वपि प्रगाथानधीयते । तेभ्य एव प्रयुञ्जीत ।।२०।।**

इति । केचिद् बह्वृचा विंशत्यधिकं शतमधीयते । तेभ्य एव गृहीत्वा षष्ठे मासे विपर्यासः कार्यः ।।२०।।

---

1. My[2] °उत्तरयो for उत्तमयोः
5. My[1] after कृताः । adds:– यथा.
8. My[1,2] C. °स्तोत्रीयस्य for °स्तोत्रीयमभीवर्तस्य
9. My[1]. विधौ for °विधेः
10. My[1] वचनम् C. वचनानां for वचनाद्
19. My[2]. अष्टमे for षष्ठे.

कुत इत्याह—

**संरोधो हि चतुःशते ॥२१॥**

इति । चतुःशतात् प्रगाथग्रहणे संरोधः स्यात् । कृतानामेव बृहद्रथन्तरकालेयस्तोत्रीयाणां पुनः करणात् ॥२१॥

**तत्र तथैव सतो बृहतीः कुर्यात् ॥२२॥**

तत्र विंशतिशतात् प्रगाथाहरणपक्षेऽपि चतुःशतपक्षवदभिप्लवानां तृतीयेऽह्नि सतो बृहतीः कुर्यादेवातिदेशबलात् ॥२२॥

**उद्धरेत्तु पञ्चमादह्नः ॥२३॥**

सतो बृहतीः पञ्चमे मासे चतुर्थाभिप्लवस्य पञ्चमादह्नः उद्धरेत् । प्रगाथानामेव विद्यमानत्वात् ॥२३॥

**शौचिवृक्षेः पुनर्विपर्यासोऽन्याय्येन ॥२४॥**

यः पुनः शौचिवृक्षेरभिमतो विपर्यासः स त्वन्याय्येनैवोक्तः ॥२४॥

कथमित्याह—

**अकृतक्रिया हि विधानम् । कृताः पुनर्बृहद्रथन्तरकालेयस्तोत्रीयाः ॥२५॥**

अकृतस्य स्तोत्रीयस्य करणं विधानं सम्यक् प्रयोगो भवति । कृतस्य करणं दुष्प्रयोग एव । बृहद्रथन्तरादिस्तोत्रीयास्तु कृता एवेति तैर्व्यत्यासो नान्याय्य एव ॥२५॥

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले द्वितीयः खण्डः ॥२॥

---

11. My[1] अन्यायेन for अन्याय्येन

14. C. °क्रियो for °क्रिया; My[4] °क्रियाभि for क्रिया हि

## तृतीयः खण्डः

तस्मादेवं कार्यमित्याह—

**विंशतिशतस्य तु शेषो विद्यते । तेषां सप्तभिः सातो बार्हतैश्च चतुर्भिर्व्यत्यस्येत् ॥१॥**

इति । **विंशतिशतस्य तु** यः **शेषः** एकान्नविंशतिः प्रगाथाः ततः सप्ताहृत्य चतुरश्च सातोबार्हतानाहृत्य तैरेकादशभिरेकादशत्रैष्टुभान् व्यत्यस्येत् । एवमकृतक्रिया भवतीति न्यायोऽयं निर्वाहः । ननु च प्रगाथेषु पर्याप्तेषु किमर्थं चतुर्भिः सातोबार्हतैर्व्यत्यासः । तदुच्यते । षष्ठे मासे त्रयाणामभिप्लवानां तृतीयेषु दिवसेषु त्रयः सातोबार्हता प्रकृतिवत् प्राप्ताः । तृतीये च स्वरसाम्न्यभिप्लवविकारत्वात् सातोबार्हतः प्राप्त एव । तथा च कल्पकारेण तृतीये स्वरसाम्नि **वयं घ त्वा सुतावन्तः** (सा. ८६४.६) इति सतोबृहत्यः क्लृप्ताः । तेन साधूक्तं **चतुर्भिरिति** ॥१॥

अथ **त्रयस्त्रिंशता प्रगाथैरेतव्यमि** (तां ब्रा. ४.४.११) त्यादिब्राह्मणेन पुनः सप्त पक्षा दर्शिताः । तेषु प्रयुक्तस्यैव प्रगाथसंघस्य पुनः पुनः करणमिति स्थितिः । तत्र कुत्रारम्भः कुत्रावसानमत आह—

**त्रयस्त्रिंशत्प्रभृतीन् सह चतुर्विंशेषु कुर्यादुत्तमे च स्वरसाम्नीत्याचार्याः ॥२॥**

इति । **सह चतुर्विंशेष्विति** बहुव्रीहिः । चतुर्विंशमहरारभ्य उत्तमस्वरसामपर्यन्तं पुनः पुनरभ्यास इत्याचार्याः ॥२॥

कुत इत्याह—

**अभीवर्तप्रकरणे हि श्रूयन्ते । सोऽत्राप्यभीवर्त इति ॥३॥**

इति । **अभीवर्तप्रकरणे हि** प्रगाथाः श्रुताः । स चाभीवर्तोऽत्रापि चतुर्विंशस्वरसाम्नोर्विद्यत एवेति तयोरपि प्रगाथप्रवृत्तिः ॥३॥

अतः स्वमतमाह—

**अन्तरेण त्वेतावार्षेयकल्पेन कृतं षट्प्रगाथमिहापि तथैव स्यात् ॥४॥**

24. My[2] तस्यैव for तथैव

एतौ चतुर्विंशस्वरसामानावन्तरेण वर्जयित्वैव षट्प्रगाथपक्षः कल्पकारेण कृतः। तद्वत् त्रयस्त्रिंशत्प्रभृतिष्वपि स्यात्। अभिप्लवेष्वेवाभ्यासः इत्युक्तं भवति ॥४॥

**तेषां यत्र समप्रयोगे तृतीये तृतीयेऽहनि सतोबृहत्य उपपद्येरन् कुर्यादेतास्तत्र ॥५॥**

**तेषां** त्रयस्त्रिंशप्रभृतिकल्पानां मध्ये **यत्र** कल्पे अभिप्लवानां **तृतीयेऽहन्येव सतोबृहत्य उपपद्येरन्**। तत्रैव कल्पे ताः कुर्यात्। कस्मिन् पुनः कल्पे तदुपपत्तिरिति। तत्रोक्तम्। **समप्रयोग** इति। षडहसमप्रयोगे कल्प इत्यर्थः ॥५॥

यथा षड्द्वादशचतुर्विंशतिप्रगाथपक्षेषु इतरस्मिन् पक्षचतुष्टये तु पुनः पुनरभ्यासे क्रियमाणे कदाचित् तृतीयादह्नोऽन्यत्रापि सतो बृहत्यः स्युः। अतस्तेषु पक्षेषु न कदाचिदपि सतोबृहत्यः कार्या इत्याह—

**अनुपपद्यमानासु प्रगाथा एव स्युः ॥६॥**

इति। स्पष्टम् ॥६॥

**अनाचारो हि षडहेऽन्यत्र तृतीयादह्नः सतोबृहतीनाम् ॥७॥**

**षडहे तृतीयादह्नोऽन्यत्र सतोबृहतीनामाचारो** वृत्तिर्न क्वचिदपि दृष्टः ॥७॥

तदेवं **पञ्चसु मासु बार्हताः** (तां ब्रा. ४.४.१) इत्यनुवाको व्याख्यातः। अथ विषुवत ऊर्ध्वं यद्वक्तव्यं तदाह—

**स यथैव पुरस्तादभीवर्तस्तोत्रीयान् कुर्यात् तथोपरिष्टादिन्द्रक्रतौ ब्रह्मसामानि निधनवन्ति तच्छन्दस्यानि ॥८॥**

इति। विषुवतः पुरस्ताद् यावतो**ऽभीवर्तस्तोत्रीयान् कुर्यात्** तावन्ति **ब्रह्मसामानि** विषुवत उपरिष्टाद् **इन्द्र क्रतुं न आभरे** (सा. १४५६-७) ति प्रगाथे कुर्यात् पक्षयोः साम्यसिद्ध्यर्थम्। तद्यथा पुरस्तात् षट्प्रगाथपक्षे विषुवत ऊर्ध्वमपि

---

4. My[1] संप्र⁰ for समप्र⁰

8. My. संप्र for समप्र⁰

कार्त्स्न्येन षडेव ब्रह्मसामानि। एवं पक्षान्तरेष्वपि तत्तत्संख्यानि च तानि सर्वाणि अभीवर्तवन्निधनवन्ति स्युः। वागिडास्वरव्यतिरिक्तं निधनम्। तच्छन्दस्यानीत्ययमर्थः। यदि पूर्वस्मिन् पक्षसि चतुरुत्तरयोगो बृहती त्रिष्टुभोर्विपर्यासो वा स्यात् तदा तच्छन्दस्युत्पन्नानि सामान्युपरिष्टात् कार्याणीति ॥८॥

**तच्छन्दस्याभावेऽप्यन्यानि गीतिनिधनोपेतानि ॥९॥**

यदि तच्छन्दस्यानि न लभ्यन्ते तदानीम् अभीवर्तस्य यो गीतिप्रकारः यत् निधनं तद्युक्तान्येवाहरेत्।

अत्र कल्पकारेणोत्तरस्मिन् पक्षसि विश्वजित्पृष्ठ्यदशरात्रमहाव्रतेष्विन्द्रक्रतुरिति प्रगाथो न क्लृप्तः। दशरात्रे तावत् षडहविभक्तीनां नाशप्रसङ्गात् ऊहोपदेशाच्च महाव्रतेऽप्यतिच्छन्दःसु ब्रह्मसाम कार्यमिति विधेर्विश्वजिति सर्वपृष्ठो भवतीति वचनात् स्वस्तोत्रीयं वैरूपमेव ब्रह्मसाम ॥९॥

**एवमुपेक्षितमिन्द्रक्रतुप्रगाथमनुगृह्णन्नाहलमस्तूयमानमनुशंसयन् सामानि प्रतिकल्पयेत् ॥१०॥**

इति। तमिन्द्रक्रतुप्रगाथं विश्वजित्पृष्ठ्यादस्तूयमानमपि ब्राह्मणाच्छंसिनानुशंसयन् वक्ष्यमाणानि **सामानि प्रतिकल्पयेत्** तदनुग्रहार्थम् उद्गाता। एवमिन्द्रक्रतोः सामद्वारेण स्वरूपतश्चानुग्रहः कृतो भवति। न च नावश्यकः। तथा च ब्राह्मणम्—**यदृचमनुसृजेयुर्नश्येयुरस्मात् लोकात्** (तां. ब्रा. ४.३.६) इति ॥१०॥

**न वा शंसयेदिति गौतमः ॥११॥**

अथवा नानुशंसयेत्। न ह्यस्तूयमानस्यानुशंसनं युक्तम्। तेन सामभिरेवेन्द्रक्रतोरनुग्रहः ॥११॥

---

1. My[1] My[4] C. om. तानि;
2. My[1] सत्राणि My[4] सामानि for सर्वाणि
3. My[1] My[4] C. °प्रयोगो for °योगो; My[1] बृहतः for बृहती°
9. My[1,2] My[4]. विभक्ति° for विभक्तीनां; My[2]. पूर्णो° for ऊह्यो°
13. C. प्र° for प्रति°
15. My[4] °ग्राहस्य for °ग्रहार्थम्
18. My[1] ताः for वा

तान्येव सामानि दर्शयति—

**जनित्रं विश्वजिति ॥१२॥**

इति । माध्यंदिने **परीतो षिञ्चता सुतमि** (सा॰ १३१३-५) ति बृहत्यां जनित्रं कल्पयेत् । तद्धीन्द्रक्रतुप्रगाथे गीतम् । तत्र गीतेन साम्ना साक्षादक्रियमाणोऽपि प्रगाथः सामद्वारेण कृत एवेति भावः । एवमुत्तरेष्वपि सामसु मन्तव्यम् ॥१२॥

**यानि पृष्ठ्ये तानि दाशरात्रिके पृष्ठ्ये ॥१३॥**

**यान्यावृत्ते पृष्ठ्ये**ऽभीवर्तस्य लोके कल्पकारेणेन्द्रक्रतोरनुग्रहार्थं कृतानि— **पौरुमीढं मानवं जनित्रं भारद्वाजं वासिष्ठं गौङ्गवमित्येत एकर्च्चा आवृत्तस्य पृष्ठस्याभीवर्तलोके** (आ. क. २.८.१) इति **तानि** दाशरात्रिकेऽपि पृष्ठ्ये माध्यंदिने **पवमाने** बृहतीषु कुर्यात् । अत्र पृष्ठस्यावृत्त्यभावात् गौङ्गवप्रभृतीनि पौरुमीढान्तानि क्रमेण स्युः ॥१३॥

**चत्वार्येषां छन्दोमेषु यथाभागं यथापृष्ठं वा ॥१४॥**

चतुर्षु **छन्दोमेष्वपि एषां** पौरुमीढादीनां मध्ये **चत्वारि** सामानि बृहतीषु प्रतिकल्पयेत् । **यथाभागमिति** गौङ्गवोपक्रमाणि चत्वारि यथाक्रममित्यर्थः । अथवा **यथापृष्ठं** प्रथमे छन्दोमे बृहत्पृष्ठे वासिष्ठं द्वितीये छन्दोमे रथन्तरपृष्ठे गौङ्गवम् । एवं तृतीयचतुर्थयोरपि छन्दोमयोः ॥१४॥

**पौरुमीढं व्रते श्यैतं वा ॥१५॥**

---

3. C. om. बृहत्यां
6. M. °रात्रिके पृष्ठे for °रात्रिके पृष्ठ्ये
9. My$^{2}$ आवर्तस्य for अभीवर्त°
   My$^{4}$ My$^{1}$. om. अपि
10. My$^{1}$ °तत्र for अत्र°
12. C. °दृष्टम् for °पृष्ठम्
14. My$^{1}$ My$^{4}$ °प्र for प्रति°
17. My$^{2}$. व्रतं for व्रते

महाव्रते पौरुमीढं बृहत्यां कल्पयेत् । श्यैतं वा सर्वत्र । एवमुत्तरस्मिन् पक्षसि इन्द्रक्रतोस्तत्र तत्र क्रियमाणस्य सामभिरेवानुग्रहः कार्यः ॥१५॥

एवं ब्रह्मसामकथा समाप्ता । अथ कथं षष्ठमासस्य मासत्वम् । द्वे ह्यहनी न स्तः । अत आह—

**अतिरात्रचतुर्विंशाभ्यां सह षष्ठो मासः पूर्वस्मिन् पक्षसि ॥१६॥**

इति । आदित एव कृताभ्यामतिरात्रचतुर्विंशाभ्यां षष्ठो मासः पूरणीयः ॥१६॥

एवमेवोत्तरस्मिन् पक्षसि महाव्रतोदयनीयातिरात्राभ्यां प्रथमो मासः पूरणीयः इत्याह—

**व्रतातिरात्राभ्यां प्रथम उत्तरस्मिन् ॥१७॥**

इति । गतम् ॥१७॥

अथ गवामयनमधिकृत्य ब्राह्मणम्—**गौरीवितं श्यावाश्वन्निह्नव एतानि वै सामानि वाचोऽन्नमेतेषां वागन्नम् यदेतानि सामानि न च्यवन्ते** (ता. ब्रा. ५.८.२) इत्यादि ।

तदनुभाष्य व्याचष्टे—

**यदेतानि सामानि न च्यवन्त इति गौरीवितस्योत्तरयोर्निह्नवश्यावाश्वे स्यातां सर्वत्र गवामयने १८॥**

इति । गवामयने सर्वेष्वहःसु गौरीवितस्योत्तरयोः स्तोत्रीययोः निह्नवश्यावाश्वे एकर्च्चे स्याताम् ॥१८॥

कुत इत्याह—

**अनारभ्याच्यवनं विदधातीति ॥१९॥**

इति । अहर्विशेषमनारभ्याच्यवनं विदधाति । तेन प्रत्यहं त्रीण्यपि तान्येव कर्माणि ॥१९॥

---

1. My[1] सर्वत्रैव for सर्वत्र । एवम्

11. My[1] तथा° for व्रता°

22. My[1] ह्यच्यवनं for अच्यवनं, My[4] च्यावनं for च्यवनं

कल्पकारस्तु नैवं कृतवानित्याह—

**अन्ववेत्यविधिस्त्वार्षेयकल्पेन कृतो गौरीवितश्यावाश्वयोर्निह्नवस्य च ॥२०॥**

इति । अन्ववायः पृथक्करणम् । गौरीवितात् पृथक्कृत्य निह्नवश्यावाश्वयोः क्वचिदेव विधिः कल्पकारेण क्लृप्तः । तद्यथा महाव्रते श्यावाश्वं क्लृप्तम् । निह्नवस्तु दशरात्रस्य नवमेऽहनि तृतीये छन्दोमे ब्राह्मणक्लृप्त एवानुज्ञातः । ननु च दशरात्रे स विधिः । सत्यम् । द्वादशाहस्य दशाहानि भवन्ती (तां. ब्रा. ४.८.५) ति गवामयने स एवादिष्टः । तेन गवामयनेऽपि निह्नवो ब्राह्मणविहित एवेति कल्पकारस्याभिप्रायः । सर्वत्रैवानुष्टुभि गौरीवितं कल्पे च ब्राह्मणे च क्लृप्तम् ॥२०॥

**ब्राह्मणे न तथा सत्यच्यवनं स्यात् ॥२१॥**

ब्राह्मणे यदुक्तमच्यवनमन्वहकरणरूपं तत् कल्पकारपक्षे न स्यादित्यर्थः । गौरीवितं तुल्यत्वेनाच्यवनविधानाच्छाखान्तरदर्शनात् कल्पकारेणान्यथाक्लृप्तमिति भावः ॥२१॥

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले तृतीयः खण्डः ॥३॥

---

6. My[2] ⁰ज्ञानः for ज्ञातः; My[1]. om. एव

## चतुर्थः खण्डः

अथ सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन् । अध्वर्युः शिरसोद्गायेत् (तां ब्रा. ५.६.१-२) इत्यादि ब्राह्मणम् । तत्रोद्गाने कर्त्रन्तरविधानादुद्गातुस्तन्निवृत्तिः । तत्र संदेहः । किं प्रस्तोतृप्रतिहर्त्रोरपि स्वे स्वे कार्ये प्रस्तावादौ निवृत्तिः । किं वा नवेति । तत्रेदमाह—

**सर्वे सहर्त्विजो महाव्रतेन स्तुवीरन्नित्युद्गातृविकार एव स्यात् ॥१॥**

इति । उद्गातुरेव निवृत्तिः । नेतरयोरित्यर्थः ॥१॥

कुत इत्याह—

**अश्रुतिभूता ह्यन्ये ॥२॥**

इति । अन्ये अध्वर्य्वादिव्यतिरिक्ताः केचित् तयोरपि कार्ये न श्रूयन्ते । येन तयोरपि निवृत्तिः स्यात् ॥२॥

ननु च सर्वे सहर्त्विज इति सर्वशब्दादन्येऽपि स्तुताः श्रुता एव । अत आह—

**अवाप्यन्ते च सर्वशब्दस्तेष्वेव ॥३॥**

इति । तेषु अध्वर्य्वादिषु कीर्तितेष्वेव सर्वशब्द उपपद्यते इति । नासौ सर्वशब्दः स्तोत्रे पुरुषान्तरमनुप्रवेशयितुं क्षमः ॥३॥

ननु च सह स्तुवीरन्निति सहशब्देन यौगपद्यचोदनाद् युगपदेव अध्वर्य्वादिभिः पञ्चभिरपि गेयम् । तत्र प्रस्तोतृप्रतिहर्त्रोर्युगपदेव सामपञ्चकेऽपि .प्रस्तावादिकरणाशक्तेरवश्यं सामचतुष्टये तयोः कार्ये । तत्र कर्त्रन्तरं प्रवेशनीयमिति गम्यते । अत आह—

**सह स्तुवीरन्निति कर्मसमवायात् ॥४॥**

इति । एकस्मिन् स्तोत्रकर्मणि पञ्चानामन्वयमात्रात् सह स्तुवीरन्निति सहशब्दः न पुनर्यौगपद्यमभिधत्ते ॥४॥

---

3. My[1] C. कन्नितर° for कर्त्रन्तर°

10. My[1] M. अन्यश्रुति° for अश्रुति°

13. My[2] श्रुतौ My[4]. स्तुतौ for स्तुताः

कुत इत्याह—

**पौर्वापर्यदर्शनादनुपूर्वं स्तवनं स्यात् ॥५॥**

इति । **अध्वर्युः शिरसोद्गायेत् मैत्रावरुणो दक्षिणेन पक्षेणे** (तां. ब्रा. ५.६.२) ति पाठक्रमात् शिरः प्रभृतिभिरनुपूर्वमेव स्तुतिः कार्या । न युगपदित्यर्थः ॥५॥

हेत्वन्तरं चाह—

**तिसृभिरुद्गातात्मन उद्गीयेति चात्मना जघन्यस्तवनं दर्शयति ॥६॥**

इति । **तिसृभिरुद्गातात्मन उद्गीयाथ या शिरसः स्तोत्रीया तां दध्यादि** (तां. ब्रा. ५.६.४) ति वदन्नात्मना राजनसाम्ना जघन्यस्तवनं दर्शयतीति कथम् **एकैकया स्तोत्रीयया स्तुतयोद्गातारमभिसमेयुरि** (तां. ब्रा. ५.६.३) ति पूर्वमुक्तम् । तस्यायमर्थः अध्वर्य्वादयश्चत्वारोऽपि यथास्वं शिरःप्रभृतिष्वेकैकामन्त्यां स्तोत्रीयामस्तुतां कृत्वा अवशेषयित्वे (!) त्यर्थः । तथोद्गातारमभिगच्छेयुर्यथा तां तामुद्गातैव गायेत्तथास्मै दद्युरित्यर्थः । अथ या शिरसः स्तोत्रीया शिष्टा तामुद्गाता आत्मनः प्रति दध्यादिति वदन् शिरसः पूर्वमेव स्तुतिः । न युगपदिति दर्शयति ॥६॥

---

4. My[2] C. My[1] My[4] उच्छिन्न (My[4] [0]क्तम्) अध्वर्युप्रभृतिभि for शिरःप्रभृतिभिः

9. My[1] आत्मा for आत्मना[0], My[1-2] [0]साम्नो for साम्ना
My[1] My[4] C. कर्म for कथम्.

10. My[1] [0]समीयु: for :समेयु:

12. My[2] after अभि adds : समेयु :

13. My[2] शिरः[0] for शिरसः

14. My[1] before न adds इति हि विधिर्न शिरसा स्तुत्वेयादि ब्राह्मणोक्तम् ननादेशस्तवनं छन्दोगानाम ....त्.
My[1] आत्मना for आत्मनः

**ननादेशस्तवनं छन्दोगानामेव स्यात् ॥७॥**

न पुनरध्वर्युबह्वृचानां गानपक्षः ॥७॥

कुत इत्याह—

**उद्गातैव सर्वेणोद्गायेदिति ह्युक्त्वा तस्य देशान् विदधाति ॥८॥**

इति । **उद्गातैव सर्वेणोद्गायेदिति** ह्युद्गातारं प्रस्तुत्य तदनन्तरं देशविधानम् उद्गातृवर्गस्यैवेति गम्यते ॥८॥

हेत्वन्तरं चाह—

**हविर्धाने शिरसा स्तुत्वा संरब्धाः प्रत्यञ्चमेयुस्ते दक्षिणेन धिष्ण्यान् परीत्य पश्चान्मैत्रावरुणस्य धिष्ण्यस्योपविश्येति च शिरसा स्तुवते तेषामेवेतरैः स्तवनं दर्शयति ॥९॥**

इति । **ते दक्षिणेन धिष्ण्यान् परीत्ये** (तां. ब्रा. ५.६.७) ति ब्राह्मणे तच्छब्देन ये शिरसा स्तुवते तेषां परामर्शाच्छिरःपक्षादिषु कर्त्रैक्यं गम्यते । तत्र यदाध्वर्युबह्वृचानां गानपक्षेऽपि देशविधिः स्यात् तदा तेषां पृथगेव गानात् तच्छब्देन प्रकृतकर्तृपरामर्शो न स्यात् ॥९॥

**इलान्दमग्निष्टोमसामेति** ब्राह्मणमनुसंधत्ते—

**इलान्दमग्निष्टोमसाम कार्यमित्यग्ने तवश्रवोवय इत्येतासां पूर्वासु तिसृषु दशाक्षरेष्वार्चिकान्यनुगानानि ॥१०॥**

इति । इलान्दं पञ्चानुगानमेकं साम । तस्य प्रथममनुगानं केवलस्तौभिकम् ।

---

4. My[1] आदधाति for विदधाति
9. My[1-4] प्रत्यञ्च ईयुः for प्रत्यञ्चमेयुः
13. My[1] यद् My[2] यथा for यदा
15. My[1] प्राकृत$^0$ for प्रकृत$^0$
19. My[1] My[4] C, केवलं for केवल$^0$

उत्तराणि चत्वार्यनुगानानि **अग्निरस्मि जन्मने** (सा. ६१३) ति चतुर्ऋचे योन्यां क्रमेणोत्पन्नानि । तदिदमिलान्दं महाव्रतेऽहन्य**ग्ने तव श्रवो वयः** (सा. १८१६-२१) इति षड्ऋचोऽधीत्य तासु गीतम् । तत्र कथं गानमित्यपेक्षायामिदमुच्यते । एतासां षण्णामृचां पूर्वासु तिसृष्वेव गायेत् । अवशिष्टा विकल्पार्थाः । तत्र **अग्ने तव श्रवः** (सा. १८१६) इति प्रथमामृचं चत्वारिंशदक्षरां चतुर्धा विभज्य प्रथमे दशाक्षरे प्रथममार्चिकमनुगानं समापनीयम् । द्वितीये दशाक्षरे द्वितीयमनुगानं तृतीये तृतीयं चतुर्थे चतुर्थम् । एवमनुगानचतुष्टयमेकस्यामेवर्चि समापनीयम् । सैका स्तोत्रीया । एवं द्वितीयतृतीययोरपि ॥१०॥

तत्र हेतुमाह—

**एवं च तृचे भवति ॥११॥**

इति । **एवं तृचे** साम कृतं **भवति** । प्रायेण स्तुतिवेलायां तृचवृत्तीन्येव हि सामानि भवन्ति ॥११॥

मतान्तरमाह—

**षड्ऋच इत्याचार्या अर्धर्चेष्वनुगानानि ॥१२॥**

इति । विकल्पस्यान्याय्यत्वात् षड्ऋचेऽपि गेयम् । तत्रैकर्चतुल्योऽर्धर्चः । तस्यार्द्धर्चेषु चतुर्ष्वनुगानचतुष्टयम् । तथैव वयमधीमहे ॥१२॥

**द्वादशर्च इति शाण्डिल्यः ॥१३॥**

इलान्दस्य चतुर्ऋचोत्पन्नत्वात् एकर्चतुल्यश्चतुर्ऋचः । एवं त्रयश्चतुर्ऋचा ग्राह्याः ॥१३॥

ननु षड्ऋचमेवाधीमहे । अत आह—

**तत्रापरावाग्नेयौ तृचावाहरेदाते अग्नेऽग्निं तं मन्य इति ॥१४॥**

इति । अनधीतमपि तृचद्वयमाहर्तव्यम् । चतुर्ऋचोत्पत्तिबलात् ॥१४॥

---

12. My[1] My[4]. om. भवन्ति

15. My[4] ⁰तुल्यो दृचः for ⁰तुल्योऽर्धर्चः;
My[2] एकर्चे तुल्यो ऋचः My[1] एकर्चतुलोतृचः for एकर्चतुल्योऽर्धर्चः

मतान्तरमाह—

**चतुर्थमेवानुगानं तृच इति वार्षगण्यः ॥१५॥**

इति । चतुर्थमेवानुगानं तृचे कार्यम् । इतराणि त्रीण्येकर्चान्येव ॥१५॥

कुत इत्याह —

**अत्र हि निधनवादं वदति । व्रतमिति भवति । स्वरिति भवति । शकुन इति भवतीति ॥१६॥**

इति । पञ्चस्वप्यनुगानेषु निधनानि सन्ति । तथाप्यत्रैव चतुर्थेऽनुगाने ब्राह्मणवन्निधनवादं करोति । व्रतमिति भवतीत्यादि । तच्चतुर्थस्यानुगानस्य प्राधान्ये सत्युपपद्यते । प्राधान्यं च तस्य तृचे करणात् । इतरेषां चैकर्चकरणात् ॥१६॥

**भक्तयश्च कल्पान्ते ॥१७॥**

इलान्दस्योत्तमेऽनुगाने षड्विभाग्यानीतराणीति सूत्रदर्शिताः भक्तयस्ता अस्मिन्नेव पक्षे उपपद्यन्ते । नान्यथा । कथम् । दशाक्षरस्य चतुर्धा समविभागानुपपत्तेर्विभाग्यत्वं न सिद्ध्यति । अर्द्धर्चानुगानपक्षेऽपि योनिवदक्षरपरिमाणं न सिद्ध्यति । उभयत्रापि पदशो विभागाभावात् पदविभाग्यत्वं न सिद्ध्यति ॥१७॥

ननु च रथन्तरादिवदेकमिलान्दं साम चतुर्ऋचे व्यासक्तम् । तस्यैकदेशश्चतुर्थमनुगानम् । कथं तस्य तृचे करणम् । अत आह—

---

5. My[1] तत्र for अत्र

7. My[1-4] ब्राह्मणवत् for ब्राह्मण

8. My[1]. om. तच्

12. My[1] My[4]. om. नान्यथा.

13. My[2]. °पक्षेषु for °पक्षेऽपि

17. My[4]. तृच° for तृचे.

**नानासामवच्चैनान्येकेऽधीयतेऽधीयते ॥१८॥**

इति । एतानि चत्वार्यप्यनुगानानि नानाभूतान्येव सामानि केचिच्छाखिनोऽ**धीयते** । तत्र निधनवादश्रुतेश्चतुर्थस्य प्राधान्यमिति तस्यैव तृचे करणम् । इतरेषां तु स्तोभवदनुषङ्गमात्रमिति सामनानात्वेऽपि सामसंघस्यैकत्र विनियोगात् स्वातन्त्र्याभावान्नानासामवदिति करणम् । तथा च निदानकारः—**अपि चैतान्येके सामसूक्तानीत्याचक्षते** (नि. सू. ३.२ ) इति ॥१८॥

इति द्राह्यायणश्रौतसूत्रे एकोनत्रिंशे पटले चतुर्थः खण्डः ॥४॥

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीये दशके वृत्तो नवमः पटलोऽधुना ॥२९॥

**इति श्री द्राह्यायणश्रौतसूत्रदीपे धन्विविनिर्मिते एकोनत्रिंशः पटलः समाप्तः ॥२९॥**

---

1. My[1-2] My[4] C. एतानि for एनानि

3. C. अप्राधान्यम् for प्राधान्यम्;

4. My[1] My[4] C. स्तोम एव for स्तोभवत्

9. C. व्याख्या न त्रिंशः for वृत्तो नवमः; My[2] after अधुना ॥
adds :—गण्डस्थलगलद्दानभ्रमद्भ्रमरशोभितम् ॥
विघ्नराजमहं वन्दे मन्मनोरथसिद्धिदम् ॥

## त्रिंश: पटल:

### प्रथम: खण्ड:

**छन्दोमदशाहयोर्दशमस्य त्रयस्त्रिंशमग्निष्टोमसाम स्यादित्येके त्रिकं सार्पराज्ञं दशमप्रदेशात् ॥१॥**

आदित्यानामयनेऽङ्गिरसामयने च छन्दोमदशाहयोर्दशममहश्चतुर्विंशस्तोमं ब्राह्मणे विहितम् । तस्याग्निष्टोमसाम त्रयस्त्रिंशस्तोमं च सार्पराज्ञं मानसस्तोत्रं **स्यादित्येके** । कुत: । कल्पकारेण दशमस्याह्नो विवाक्यस्य प्रदेशात् । अतिदेशादित्यर्थ: । यथोक्तं कल्पकारेण **यदेव छन्दोमवतो दशरात्रस्याहीनस्य नवममहस्तत्र दशमम्** (आ. क. १०.९.७) इति । अविवाक्येन दशमेऽहनि प्रकृतौ त्रयस्त्रिंशमग्निष्टोमसामत्रिकं च मानसम् तद्वदपि स्यात् ॥१॥

कथं तर्हि अविशेषेण चतुर्विंशमिति ब्राह्मणम् । अत आह—

**यथाभूयसवादश्चतुर्विंशमिति ॥२॥**

अग्निष्टोमसामव्यतिरिक्तानां सर्वेषां च चतुर्विंशत्वेन भूयस्तया चतुर्विंशमिति ब्राह्मणवाद: ॥२॥

तदेतन्निराकरोति—

**ऋक्सामानि तु प्रतिदिश्यन्ते दशमात् सर्वं ह्यहरधिकृत्य चोद्यते चतुर्विंशमेव ॥३॥**

---

3. My[1]. after °त्रिंश° ins : मिति ब्राह्मणे प्रत्यक्षविधानाद्यथाभूयसवादकल्पकारवाक्यमिति, भूयस्त्वानुसारेण कल्पकारेण कल्पकारवाक्ये नेतव्यमिति । हेत्वन्तरं चाह-स्तोमे स्यात् त्रिकय

9. My[1] °वाक्ये च for °वाक्येन

10. My[1] °त्रिके for °त्रिकं

My[1] after तद्वद् ins. अत्र.

12. M. भूयसो for °भूयस°

16. My[2] बृहत्° for ऋक्; My[2] प्रदर्श्यन्ते C प्रदिश्यन्ते for प्रतिदिश्यन्ते

ऋक्सामान्येव कल्पकारेणातिदिश्यन्ते न स्तोमः। कुतः। कृत्स्नमेवाहरधिकृत्य ब्राह्मणेन चतुर्विंशस्तोमश्चोद्यते। विशेषानिर्देशात्। तेनाग्निष्टोमस्तोत्रं मानसस्तोत्रं च चतुर्विंशमेव ॥३॥

हेत्वन्तरं चाह—

**न चावक्ष्यत् ॥४॥**

इति। यद्यग्निष्टोम मानसस्तोत्रयोरपि चतुर्विंशो न स्यात् तदा ब्राह्मणं च चतुर्विंशं नैवावक्ष्यत्। कथं छन्दोमदशाहे अष्टाचत्वारिंशं प्रथममहरिति प्रस्तुत्य केवलं नवाहान्युक्त्वा विरामः स्यात्। दशमस्याह्नः स्वयमेव स्थानपातेन सिद्धत्वात्। एवं स्थितेऽपि चतुर्विंशमिति वचनं मानसाग्निष्टोमस्तोत्रयोरपि चतुर्विंशत्वार्थमिति गम्यते ॥४॥

कथं तर्हि कल्पकारो विशेषेणातिदिशति। अत आह—

**प्रत्यक्षविधानाच्च यथाभूयसवादः ॥५॥**

इति। **चतुर्विंशमि** (तां. ब्रा. २५.१. १–२) ति ब्राह्मणे **प्रत्यक्षविधानाद्यथाभूयसवादः** कल्पकारवाक्यमिति भूयस्त्वानुसारेण कल्पकारवाक्यं नेतव्यमित्यर्थः ॥५॥

हेत्वन्तरं चाह—

**ब्राह्मणविहिते च स्तोमे कल्पप्रदेश ऋक्साम्नां भवति ॥६॥**

यत्र यत्र ब्राह्मणेनैव स्तोमो न विहितः तत्र सर्वत्र कल्पकारेण **ऋक्साम्ना**मेवातिदेशः क्रियते। न स्तोमस्य ॥६॥

**त्रिंशिनः सुत्यामासाः सर्वत्र संचक्षीरन् ॥७॥**

अथ दृतिवातवतोरयनादिषु त्रिवृता मासं पञ्चदशेन मासमित्यादिमासचोदनायां **सर्वत्र** त्रिंशद्दिवसपरिभाषितान् मासान् गणयेत्। न पुनः सौरचान्द्रमसान् मासान् गृह्णीयादित्यर्थः ॥७॥

---

1. My[2]. om. कुतः

8. My[2] उक्तानि for उक्त्वा विरामः स्यात्
C. दशरात्रस्य for दशमस्य; My[1] अव[0] for एव

9. My[1] सिद्धे for स्थिते

**कौण्डपायिनामयने च हविर्यज्ञिकान् ॥८॥**

कुण्डपायिनामयने **मासमग्निहोत्रमि** (तां॰ ब्रा॰ २५.४.१) त्यादि हविर्यज्ञमासानपि त्रिंशिन एव गणयेयुः ॥८॥

**तापश्चिते च दैक्षोपसदान् ॥९॥**

तापश्चितामयने संवत्सरदीक्षाः संवत्सरमुपसद इत्यत्रापि **दैक्षोपसदान्** मासान् त्रिंशिन एव गणयेत् ॥९॥

**दृतिवातवतोरयने द्वावेकोनौ मासौ सुनुयुः ॥१०॥**

दृतिश्चवातवांश्चेति द्वौ ब्राह्मणोक्तावृषी। तयोरयनं दृतिवातवतोरयनम्। तस्मिन् **द्वौ** मासौ **एकोनौ सुनुयुः**। अतिरात्राभ्यामेव संवत्सरपूरणात् ॥१०॥

कौ पुनस्तावित्याह—

**त्रिवृताविति गौतमः ॥११॥**

**त्रयस्त्रिंशाविति धानंजय्यः ॥१२॥**

इति। द्वयमपि स्पष्टम् ॥११-१२॥

**उभौ वा त्रिंशिनौ स्याताम्। यथैतद् ब्राह्मणम् ॥१३॥**

अथवा द्वावपि **त्रिंशिनौ स्याताम्। यथैतद्** ब्राह्मणं दृश्यते। त्रिवृता मासमि (तां. ब्रा. २५.३.१) त्युक्ते यथाश्रुति पूर्ण एव मास इति भावः ॥१३॥

**तथा सत्यष्टम्यां पूर्वपक्षस्य दीक्षित्वा पञ्चदशदीक्षाः कुर्वीरन् ॥१४॥**

**तथा सति** पूर्वग्रहणपक्षे पञ्चदश दीक्षाः स्युः। तदानीं दीक्षोपसद्भिरतिरात्राभ्यां महाव्रतेन च मास एकः संपन्नो भवतीति लाभः। **चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन्नि** (तां ब्रा. ५.९.१२) ति वचनात्। अकृतावेकादश्यां दीक्षाः। अत्र तु त्रयोदशमासपूरणायाष्टम्यामित्युक्तम्। अथवा निदानान्तरमन्वेषणीयम् ॥१४॥

---

8. My[1] °वातश्चेति for °वांश्चेति

14. M. M. त्रयस्त्रिंशिनौ for त्रिंशिनौ

20. C. °मास्यां for °मास्यै.

21. C. प्रकृतौ for अकृतौ

22. My[1]. My[4]. om. अथवा; My[1] om. नि°

**एतेनोक्तं सर्पसत्रे ॥१५॥**

**एतेनैव सर्पसत्रे**ऽपि द्वावेकोनौ मासौ सुनुयुरित्याद्यनुसंधेयम्—

अत्र कल्पकारेणोक्तम्—**विधृतिभिः क्लृप्तं दृतिवातवतोरयनमात्रिणवेभ्यस्त्रिवृद्भ्यः उद्धरत्युक्थानि पञ्चदशेभ्यः षोडशिनम्** (आ. क. ११.७.१-२) इति। प्रथम एकान्नपञ्चाशद्रात्रो विधृतयो नाम। तत्र त्रिवृत्स्तोमं त्र्यहमधिकृत्य कल्पकारः—**हाविष्मतस्य लोके गौरीवितमनुष्टुभि। साकमश्वं सौभरमाष्टादंष्ट्रमित्युक्थानी** (अ. क. ९.३८.३) ति। तथा तत्रैव पञ्चस्तोमं दशाहमधिकृत्योक्तम्—**दशमस्याह्नः आष्टादंष्ट्रस्य लोके नार्मेधम् प्रत्यस्मै पिपीषत इति नानदम् षोडशिसामे** (आ. क. ९.४०.४) ति ॥१५॥

एवं स्थिते सूत्रकार आह—

**पञ्चदशानां दशमस्याह्नः आष्टादंष्ट्रान्तान्युक्थानि स्युरित्याचार्याः। षोडशापायाद्धि निवृत्तं नार्मेधम् ॥१६॥**

इति। दृतिवातवतोरयने **पञ्चदशेन मासमि** (तां. ब्रा. २५.३.१) ति चोदितानामह्नां **दशमस्याह्नः उक्थान्यष्टादंष्ट्रान्तानि** स्युः। न पुनर्नार्मेधान्तानि। कुतः कल्पकारेण षोडशिन उद्धारवचनात् तदपाये नार्मेधान्निवर्तते। तस्य षोडशिप्रयुक्तत्वात् ॥१६॥

अत्र दृष्टान्तमाह—

**यथा त्रिवृत्सु मौक्षमुक्थापायादिति ॥१७॥**

इति। **यथा त्रिवृतामासमि** (तां. ब्रा. २५.३.१) ति चोदितेषु **त्रिवृत्सु** हविष्मतस्य स्थाने विहितं **मौक्षं** निवर्तते उक्थानामभावात्। **उद्धरत्युक्थानी** (आ. क. ११.७.२) ति वचनात् तन्निवृत्तौ तत्प्रयुक्तमपि मौक्षं निवर्तते। तद्वत् ॥१७॥

तदिदं निराकरोति—

**अवचनात्तु निवृत्तिर्न स्याद्यथान्येषां साम्नाम् ॥१८॥**

इति। नार्मेधस्य निवृत्तिवचनाभावात् प्रवर्तत एव नार्मेधम् सामान्तरवत् ॥१८॥

---

12. My[1.2] My[4] C. निवृत्तिः for निवृत्तिं

ननु षोडशिप्रयुक्तं नार्मेधं नेत्याह—

**वचनं च कारणं नार्मेधस्य न षोडशी दृश्यते चाभीक्ष्णमषोडशिकेषु ॥१९॥**

इति । किं च अषोडशिकेष्वपि क्रतुषु नार्मेधं बहुलं दृश्यते । तस्मान्न षोडशिप्रयुक्तं नार्मेधम् ॥१९॥

**तस्यायनविचारः ॥२०॥**

कल्पभेदो वक्ष्यते इति ॥२०॥

**पृष्ठ्येनैकैको मासो वर्तेतेत्येके ॥२१॥**

एकेनैव पृष्ठ्येन पुनः पुनरभ्यस्तेन एकैको मासो वर्तेत । ननु च त्रिवृता मासं पञ्चदशेन मासमि (तां. ब्रा. २५.३.१) त्येवं प्रत्यक्षे ब्राह्मणे कथं पृष्ठ्यः स्यात् । तदुच्यते । त्रिवृदादिस्तोम एव प्रत्यक्षश्रुतिः । ऋक्सामानि तु प्रकृतिवदतिदेशात् प्रकृतौ च गवामयने प्रतिमासं पृष्ठ्य इति स एव स्यात् ॥२१॥

**पृष्ठ्यस्तोमेनेति शाण्डिल्यः २२॥**

स्पष्टम् ॥२२॥

**अभिप्लवपृष्ठ्याभ्यामिति शौचिवृक्षिः ॥२३॥**

चत्वारोऽभिप्लवाः पृष्ठ्यपञ्चमा इत्यर्थः ॥२३॥

**पृष्ठ्यस्याह्नैकैकेनेति शाण्डिल्यायनधानंजय्यौ २४॥**

पृष्ठ्यस्य प्रथमेनाह्ना प्रथमो मासः । द्वितीयेन द्वीतीय इत्येवं विहितः पृष्ठ्यः स्यात् ॥२४॥

**ज्योतिष्टोमेनेति लामकायनः ॥२५॥**

अनादेशे सर्वप्रकृतिभूतेन ज्योतिष्टोमेनैव मासानुपेयुः ॥२५॥

**तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् ॥२६॥**

स्पष्टम् ॥२६॥

**यथार्षेयकल्पसमाम्नाय इति क्षैरकलाम्भिः ॥२७॥**

आर्षेयकल्पे विधृतिभिः क्लृप्तं दृतिवातवतोरयनम् (आ. क. ११.७.१) इत्युक्तम् । तथैव स्यादिति क्षैरकलाम्भिराचार्यः ॥२७॥

इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले प्रथमः खण्डः ॥१॥

---

6. My[2]. अयं My[1] अयने for अयन$^{0}$ ; M. विचाराः for विचारः

17. M. प्रष्ठस्य, My[1-2] पृष्ठस्य for पृष्ठ्यस्य

20. M. लोम$^{0}$ for लाम$^{0}$

## द्वितीयः खण्डः

गवामयनब्राह्मणे **चित्रापौर्णमासे दीक्षेरंश्चतुरहे पुरस्तात् पौर्णमास्यै दीक्षेरन् । तेषामेकाष्टकायां क्रयः संपद्यते** (तां. ब्रा. ५.९.१०-१३) इति पक्षद्वयमुक्तम् । तत्र प्रथमः पक्षः कौण्डपायिने । न द्वितीय इत्याह—

**पौर्णमासीप्रभृतयो दीक्षाः कौण्डपायिनस्य ॥१॥**

इति । एकाष्टकायां क्रयसंपादनार्थो हि द्वितीयः पक्षः । न चैकाष्टकायां क्रयसंपादयितुं शक्यते । **मासं दीक्षिता भवन्ती** (तां. ब्रा. २५.४.१) ति दीक्षा वृद्धिश्रुतेः । तस्मात् पौर्णमास्युपक्रमाः एव दीक्षा इति । अत्र ब्राह्मणम्—**द्वादशभिरुपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वती** (तां. ब्रा. २५.४.१) ति ॥१॥

तत्र विचारः । किमुपसदामन्ते सौमिकमग्निप्रणयनाद्यौपसभ्यं पाशुकं कर्म प्रकृतिवत् कार्यम् । किं वा हविर्यज्ञमासेभ्यः ऊर्ध्वमुत्कृष्य सुत्याभ्यः पूर्वं कार्यमिति । तथा प्रायणीयोऽतिरात्रः कर्तव्यो न वेत्यपि विचारः । तत्रैकं मतमाह—

**तस्योपसदन्त उपवसथवत् कर्म कृत्वातिरात्रमुपेयुरिति शाण्डिल्यः एवं हि गृह्यते वृत्तिः ॥२॥**

इति । उपसदनान्तरमेव औपवसथस्यानुष्ठानम् । नोत्कर्षः । तथाप्यतिरात्रोऽप्यग्निहोत्रमासस्य पुरस्तात् कार्यः । उभयोरपि सर्वसत्रेषु तथैव प्रवृत्तिदर्शनात् ॥२॥

---

2. My[2] ⁰मास्याः My[1] ⁰मासें for ⁰मास्यै⁰

6. My[2] ⁰नार्थेति for ⁰नार्थो हि; My[1·2] My[4] C. क्रयः we have corrected this as क्रय⁰

12. My[1] तत्कैर्मतम My[4] तत्कथमतः C. तकैर्म्मतम् for तत्रैकं मतम्. (L. 13)

14. My[2] ⁰वसथ्यं for वसथवत्

16. My[2]. ⁰रात्रे for ⁰रात्रो⁰

तत ऊर्ध्वं प्रातराहुत्युपक्रमाः सायमाह—

**हुतिसंस्था एकान्नत्रिंशतमह्नान्यग्निहोत्रं जुहुयुः ॥३॥**

यद्यपि **मासमग्निहोत्रमि** (तां ब्रा. २५.४.१) ति श्रुतिः तथाप्येकान्नत्रिंशतमेव जुहुयुः। अतिरात्रेणैव संवत्सरपूरणात्। तथा यद्यप्यग्निहोत्राहुतयः सायमुपक्रमास्तथाप्यत्र प्रातरुपक्रमा एव। अन्यथा मासातिरेकप्रसङ्गात् ॥३॥

**मासमेवेति गौतमः ॥४॥**

**मासमिति** श्रुतेर्**मासमेव**। नैकान्नत्रिंशतमित्यर्थः ॥४॥

किमन्यच्छाण्डिल्येन समानम् नेत्याह—

**सुत्यानां तु पुरस्तादुपवसथकर्म स्यादतिरात्रश्चैवं च गृह्यते वृत्तिः ॥५॥**

इति। **एवं** **चे**त्यस्यायमर्थः। यथा सत्रेषु पुरस्तादतिरात्रो दृश्यते एवं सुत्यानामपि पुरस्ताद् दृश्यते। तथौपसथिकं च ॥५॥

**अव्यवायश्च हविर्यज्ञैः सुत्यानाम् ॥६॥**

एवं च कृते त्रिवृदादिसुत्यानामतिरात्रस्य च हविर्यज्ञैरव्यवायः सिद्धो भवति ॥६॥

मतान्तरमाह—

**अश्रवणादतिरात्रो न स्यादिति धानंजय्यः ॥७॥**

इति। स्पष्टम् ॥७॥

**प्रत्यन्ताद्ध्यन्येषु चोदयन्नेह विदधातीति ॥८॥**

**प्रत्यन्तादि**ति। अन्तमन्तं प्रति [अन्तम्] सर्वत्रेत्यर्थः। **अन्येषु** सत्रेषु सर्वत्रातिरात्रं **चोदयत्** ब्राह्मणमिह **न विदधातीति** ॥८॥

---

5. My[1] My[2] C. om. अन्यथा

10. My[2] प्रवृत्तिः for वृत्तिः

14. My[2] om. एवं च कृते; My[2]. om. [2]नामति. . .सिद्धो

20. My[1] इत्यन्तमन्त्रं प्रति सत्रेत्यर्थः, My[3] सर्वत्रेत्यर्थः, My[4]. इत्यन्त (My[1] अन्तं) प्रति सर्वत्रेत्यर्थ; we corected this passage as above.

21. My[1-2] C. चोदयति for विदधाति, C [0]रात्रे My[2] [0]रात्राणां for [0]रात्र; My[2]चोदयन् for चोदयत्.

**तस्योपसदन्त एवोपवसथकर्म कुर्युरष्टादशभ्यो वोर्ध्वं शौनासीर्येभ्यो राजानं क्रीणीयुरेवमनन्तरं सुत्याभ्यो भवतीति ॥९॥**

इति—शब्दो धानंजय्यमतसमाप्त्यर्थः । तस्योपसदन्त एवौपसथ्यम् । अथवा शुनासीर्यमासेऽष्टादशदिवसेभ्य ऊर्ध्वं राजक्रयं कृत्वा द्वादशोपसदः कुर्युः । तेषु दिवसेषु शुनासीर्यं च न त्यजेयुः । चोदितत्वात् । एवं सुत्यानन्तर्यसिद्धिः ॥९॥

पक्षान्तरमाह—

**दीक्षोपसदां व्यवायोऽन्याय्य इति शाण्डिल्यायनः ॥१०॥**

इति । धानंजय्योक्तः उपसदामुत्कर्षो न्यायरहितः तथा श्रुतिविरुद्धश्चेत्याह ॥१०॥

**ते मासि सोमं क्रीणन्तीति चानन्तरं दीक्षाभ्यः दर्शयति ॥११॥**

किं च द्वादशभिरुपसद्भिश्चरित्वा मासमग्निहोत्रं जुह्वती (तां. ब्रा. २५.४.१) त्युक्त्वा प्रत्ययश्रवणादुपसदां पूर्वकालत्वावगमात् तासामुत्कर्षशङ्कैव नास्ति ॥११॥

तस्मादेवं कार्यमित्याह—

**उपवसथकर्मैवानन्तरं सुत्याभ्यः स्यादिति ॥१२॥**

इति । अथ चतुर्थ एव पक्षः श्रेयान् । यद्युपसदन्तेऽग्निप्रणयनं स्यात्तदानीमौत्तरवेदिकेऽग्नौ दर्शपूर्णमासाद्यनुष्ठानवैगुण्यं स्यात् । तदुक्तमाश्वलायनेन अभिप्रणीतचर्यायां च वैगुण्यं दर्शपूर्णमासयोरि (आ. श्रौ.        ) ति ॥१२॥

पुरस्तादग्निप्रणयनपक्षे कंचिद्विशेषमाह—

---

7. My$^{2}$: शाण्डिल्यः for शाण्डिल्यायनः

8. My$^{1-4}$ C, aftef इति adds: स्पष्टमिति.

13. C· प्रत्यक्ष$^{0}$ for प्रत्यय$^{0}$

17. My$^{1}$ अथं for अथ could it be कथं.

18. My$^{1}$ $^{0}$व्ठाने for $^{0}$ष्ठान$^{0}$ 33· My$^{1}$ अति$^{0}$ C प्रति$^{0}$ for अभि

**आग्नीध्रीयादङ्गारान्मार्जालीयं हृत्वा पृथक्स्थालीपाकांश्च श्रपयित्वा पितृयज्ञान् कुर्वीरन् ॥१३॥**

इति। मार्जालीये धिष्ण्येऽग्निं विधाय सत्रिणां पृथक् पृथक् दर्शाङ्गभूताः पिण्डपितृयज्ञाः स्युरिति। ननु च पिण्डपितृयज्ञो नैव ब्राह्मणचोदितः। सत्यम्। दर्शाङ्गत्वादेव कर्तव्यः। ननु च पितृयज्ञः स्वकालविधानात् अनङ्गं स्यादिति न्यायविद्भिरुक्तम्। सत्यम्। अङ्गं वा समभिव्याहारादि (का० श्रौ.          ) ति कात्यायनेनोक्तम्। तत्पक्ष एव सूत्रम् ॥१३॥

**ततो दक्षिणातिप्रणयेयुः पैतृयज्ञिकायाम् ॥१४॥**

चातुर्मास्याङ्गभूतायां पित्र्यायामिष्टौ मार्जालीयस्य दक्षिणतस्तत एवातिप्रणयेयुः ॥१४॥

**आहवनीयाद् दक्षिणतो वरुणप्रघासेषु ॥१५॥**

औत्तरवेदिकाग्नेर्**दक्षिणतो वरुणप्रघासेषु** अग्निमतिप्रणयेयुः ॥१५॥

**तस्मिन् कुर्युर्यद्दक्षिणत आहवनीये कृत्यम् ॥१६॥**

वरुणप्रघासेषु विहारद्वयमस्ति। तत्र दक्षिणविहारे **यदाहवनीये कृत्यं** तत्तत्र कुर्युः ॥१६॥

**उपवसथकर्म चेत् कृतं स्यात् ॥१७॥**

औपवसथिकं कर्म यदि पुरस्तात् **कृतं स्यात्** तदा यथोक्तं सर्वं कुर्युः ॥१७॥

**यथाप्रकृत्यकृते ॥१८॥**

पुरस्तादकृते औपवसथ्ये **यथाप्रकृत्येव** तेष्वग्निप्रणयनम् ॥१८॥

---

3. My[1] निधाय for विधाय My[1] My[2] दशा⁰ for दर्शा⁰;

4. My[2] पितृयज्ञे for पिण्डपितृयज्ञो. My[2] चोदिताः for चोदितः;

5. My[4] दश;⁰ for दर्शा⁰
My[1] अनङ्गः for अनङ्गं

9. My[4] अभि⁰ for अति⁰

13. My[1]. om. यद्

14. My[2]. om. तद्

**अग्निहोत्रमासे दीक्षितान्नस्याध्वर्युर्जुहुयादन्वारब्धा इतरे स्युः ॥१९॥**

सर्वेषां दीक्षितानां साधारणमन्नमादायाग्निहोत्र**मध्वर्युर्जुहुयात्** । इतरैस्त्रिभिस्तदन्वारम्भः कार्यः इति । अध्वर्योरेव होमे कर्तृत्वात् तस्य स्वामित्वेन दक्षिणाभावात् इतरेषां फलं न स्यादित्याशङ्क्य दीक्षितान्नसाधारण्यमन्वारम्भश्च विहितः । तथापि पिण्डपितृयज्ञेषु पृथक् पृथगेवानुष्ठानात्तत्रापि तच्छङ्का स्यादिति तन्निवृत्त्यर्थं चोक्तम् ॥१९॥

**हवींष्येवेष्ट्ययनेषूपालभेरन् ॥२०॥**

**इष्ट्ययनेषु** नाध्वर्योरन्वारम्भः । किंतु हवींष्येवावदानकालेऽध्वर्युणा सहो**पालभेरन्** ॥२०॥

**अग्निहोत्रोपस्थानं विष्णुक्रमाः समिष्टयजूंषीति न क्रियेरन् ॥२१॥**

एषां कर्मसमाप्तौ कार्यत्वात् सर्वस्य चेदसमाप्तत्वात् ॥२१॥

**अवभृथन्यङ्गं चेति शाण्डिल्यायनः ॥२२॥**

सौमिकस्थावभृथस्याङ्गस्पर्शो यस्मिन् कर्मणि तदवभृथन्यङ्गम् । तच्च वरुणप्रघासेषु तुषनिष्कासनप्रतिपादनम् । **तुषैश्च निष्कासैश्चावभृथमवैतीति** श्रुतेः । तथा **प्रणीतासु मार्जलमप्येष वै दर्शपूर्णमासयोरवभृथ इत्युक्त** इति ॥२२॥

---

3. My[1] मानम् My[2] अङ्गम् for अन्नम्

6. My[1]. om. अपि before पिण्ड My[1]. अन्यत्र C. अत्र foa तत्र

8. My[2]. उपपद्येरन् for उपालभेरन्

10. My[2] °पद्येरन् for लभेरन्

14. My[1] °भृथं न्यङ्गचे° My[2] भृश्चे, for °भृथन्यङ्गं चे°

16. My[4] °निष्कास° for °निष्कासन°
My[1] इति । नष्कासोनुवा° C. निष्कासेन चाव° for निष्कासैश्च;
My[1]. before श्रुतेः adds: तत्र

17. My[1]. om. वै. My[2] °भृथमध्वर्युभिरुक्तम् for °भृथ इत्युक्तः;
C. उक्तम् for उक्तः

**समिधस्त्वादध्युस्तत्र पुरस्तादुक्ताः स्युः ॥२३॥**

अवभृथन्यङ्गस्याकरणेऽपि तत्कालोक्ताः समिध आदध्युरेव । यथोक्तं ब्राह्मणप्रकरणे **विमुक्तासु प्रणीतासु समिध आदध्यादवभृथादुदेत्ये** (द्रा. श्रौ. १२.४.३) ति ॥२३॥

**सर्वं क्रियेतेति धानंजय्यः ॥२४॥**

सर्वस्याप्यतिदेशादिति भावः ॥२४॥

**मासं दर्शपूर्णमासाभ्यामित्यामावास्येन** (तां ब्रा. २५.१) ति ब्राह्मणमुपादाय व्याचष्टे—

**मासं दर्शपौर्णमासाभ्यामित्यामावास्येन पूर्वपक्षमुत्तरं पौर्णमास्येन ॥२५॥**

इति । प्रतिदिवसमुभयोरपि दर्शपूर्णमासयोरनुष्ठानशानिवृत्यर्थमिदं सूत्रम् ॥२५॥

**अमावास्ये पितृयज्ञः सकृद्भूत्वा न स्यादिति गौतमः ॥२६॥**

सकृदेवामावास्यायामनुष्ठितः पितृयज्ञस्तन्त्रेणोपकारक इति मन्यते ॥२६॥

**सकृच्च न स्यादिति शाण्डिल्यः ॥२७॥**

सकृदपि न कुर्यात् । अनङ्गत्वादिति भावः ॥२७॥

**अहरहः स्यादिति धानंजय्यः ॥२८॥**

प्रतिदर्शं प्रयाजवत् कर्तव्यम् । तदुक्तं कात्यायनेन—**अङ्गं वासमभिव्याहारात्** (का. श्रौ.        ) इति ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले द्वितीयः खण्डः ॥२॥**

---

1. M. तावनदध्यु: My[1]. तादध्वर्युर्या: My[4] ता अध्वर्युया: for त्वादध्यु:
3. My[4] My[1] C. om. प्रणीतासु
   My[1]. after आदध्याद् ins. यथा.
9. My[1-2] My[4] C. इतरं for उत्तरं
14. My[1] सदृशे वामावास्याम् for सकृदेवामावास्यायाम्
16. My[2] affer भावः adds:—तदुक्तं न्यायवादिभिः पितृयज्ञः स्वकालविधानादनङ्गं स्यादिति ।

# तृतीयः खण्डः

**मासं साकमेधैरि(तां. ब्रा. २५.४.१) ति ब्राह्मणमनुसंधत्ते मासं साकमेधैरिति गृहमेधीयेनेष्ट्वा तदैव शेषं संस्थापयेयुः ॥१॥**

सहकालीनाः साकमेधाः प्रकृतौ । इदानीमुत्तरेद्युः कृत्यमपि पूर्वस्मिन्नेव दिवसे गृहमेधीयानन्तरं समापयेयुः ॥१॥

कुत इत्याह—

**एवं त्रिंशत्कृत्व उपेता भवन्तीति ॥२॥**

इति । वरुणप्रघासादिपर्वान्तिरवत् त्रिंशत्कृत्य उपेता भवन्तीति ॥२॥

तदिदं निराकरोति—

**द्व्यहापवर्गस्त्वेषां प्रकृतौ पञ्चकृत्व एवाभ्यस्येयुः स मासः ॥३॥**

इति । पञ्चदशकृत्वोऽभ्यासे यावान् कालः स एव साकमेधमासः संपद्यते ॥३॥

तत्राग्निहोत्रं दशहोते (तां. ब्रा. २५.४.२) त्यादि ब्राह्मणं प्रतीकेनानुभाष्य व्याचष्टे—

**अग्निहोत्रं दशहोतेति दशहोतारं नामाध्वर्यवोऽग्निहोत्रोपस्थानमधीयत ऋत्विज उत्तरैरभिप्रेता वषट्कारिणोऽध्वरे ॥४॥**

इति । **चित्तिःस्त्रुक्चित्तमित्यनुवाको** [क्तो] दशहोता । तत्सृष्टत्वादग्निहोत्रे तच्छब्दः प्रशंसार्थः । एवं नामाभिजनसंपन्नमग्निहोत्रम् । उत्तरैश्चतुर्होत्रादिशब्दैस्तत्तदृत्विजोऽभिप्रेताः । चत्वार ऋत्विजोऽस्येति । चतुर्होता यज्ञक्रतुविशेषः । तथा

---

4. C. अन्तरे द्युः for उत्तरेद्युः; C. क्षयम् for कृत्यम्

10. एतेषां for एषां

11. My[4]. यावत् for यावान्
My[1] सम° for सं°

17. My[1]. स्रुत् for स्रुक्

21. My[1] यज्ञक्रतुर्विशेष्यः My[2] यज्ञः क्रतुर्विशेषः for यज्ञक्रतुविशेषः

तैत्तिरीयं ब्राह्मणम्—तस्मात् दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः (तै. ब्रा. ) इत्यादि। तथा **तस्मात्सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तहोत्राः प्राचीर्वषट्कुर्वन्तीति**। यद्यपि षोडशर्त्विजः सोमयागे तथापि वषट्कारिणः सप्तैवेति। **सप्तहोता सौम्योऽध्वर** इत्युक्तम्। ननु च चतुर्होत्रादिशब्दैरप्यनुवाकत्रयमभिधीयत इत्यध्वर्युभिरुक्तम्। तत्सृष्टत्वात् तत्क्रतुष्वग्निहोत्रवत् शब्दः प्रशंसार्थो युक्तः। एवमाभिजात्यसंपन्ना एते क्रतव इति। तथा चोक्तम्—**ब्रह्म वै चतुर्होतारश्चतुर्होतृभ्योऽधियज्ञो निर्मितः** (तै. ब्रा. ) इति। सत्यम्। एतदेवाभिप्रेतं सूत्रकारस्य। ऋत्विजामभिधानामिति तेषु संभवतीति तथोक्तम् ॥४॥

**अत्सरुकैश्चमसैर्भक्षयेयुः कुण्डप्रतिरूपैः ॥५॥**

त्सरुवर्जितैश्चमसैः कुण्डसदृशैरित्यर्थः। तत एव कुण्डपायिनामयनमिति नाम वेयम् ॥५॥

**होत्रा समास उक्तो ब्राह्मणेन ॥६॥**

अत्र **यो होता सोऽध्वर्युः स पोते** (तां. ब्रा. २५.४.५) त्यादि ब्राह्मणेन होत्रा (?तॄ) णामृत्विजा **समास** उक्तः। एकैकेन त्रीणि त्रीणि आर्त्विज्यानि कार्याणीति ब्राह्मणार्थः। तेषां युगपदुपनिपाते किं प्रधानम्। को वा क्रम इति संशयः। तदर्थमिदं विचार्यते। किमत्र समासविधौ पश्चाद्भाविनः ऋत्विजः कार्ये प्रथमप्रवृत्तस्य विधिः। किं वा विपरीतमिति ॥६॥

तत्राद्यं पक्षं परिगृह्णाति—

**स्वादासनादुपसंचारं ब्रह्मेतरे होत्रे कुर्यात् ॥७॥**

इति। **उपसंचारमिति** णमुल्प्रत्ययः। **यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ते** (तां. ब्रा. २५.४.५) ति समासविधौ तावत् ब्रह्मा स्वकार्यं प्रथमं कृत्वा पश्चात्

---

2. My[4] सोम्यस्य C. असौम्यस्य for सौम्यस्य

15. My[1] कर्तव्यानि for कार्याणि;

16. My[2]. किंप्रधानकोऽयंसमासः for किं

17. My[2] °वृत्तस्य for प्रवृत्तस्य

19. My[1]. अन्यं for आद्यं

स्वासनादुपसंचर्योपसंचर्य द्वयमन्यत् कुर्यात् । कुतः ? मैत्रावरुणस्य भावित्वेन दीक्षणीयादिष्वभावात् । तेषु ब्रह्मकार्ये तस्य विधानानुपपत्तेः । ब्रह्मणस्तु पूर्वं प्रवृत्तत्वात् भाविकार्य विधानोपपत्तिः । तेनायमर्थः । यो मैत्रावरुणः कर्तृत्वेन ग्रहीतुमिष्यते स ब्रह्मैव स्याद् । न तस्मादन्यः स्वीकरणीयः प्रतिहर्तापि स एव ब्रह्मा नान्य इति । तेन ब्रह्मत्वस्यैव प्राथम्यं प्राधान्यं चेति । किमुदाहरणम् । ब्रह्मन् स्तोष्यामः प्रशस्तरित्युक्ते प्रथमं ब्रह्मा भूत्वातिसृजेत् । पश्चान्मैत्रावरुणो भूत्वेति ॥७॥

**तथोद्गातृप्रस्तोतारावाग्नीध्रश्च ॥८॥**

एवमितरेष्वपि त्रिषु समासेषूद्गात्रादीनां प्रथमप्रवृत्तेः प्राधान्यं क्रमः नियमश्च तत एवेति सिद्धम् । **यो होता सोध्वर्युरि** (तां. ब्रा. २५.४.५) ति प्रथमे समासे नियमेनोभयोरपि होतुरध्वर्योश्च प्रथमप्रवृत्तेः । तुल्यत्वात् ॥८॥

**व्यतिक्रममेके शास्त्रसंभवात् ॥९॥**

**एके** पुनर्यथोक्तं क्रमविपर्ययमाहुः । कुतः ? तथा सत्येव समासशास्त्रसंभवात् । तथा हि **यो मैत्रावरुणः स ब्रह्मे** (तां. ब्रा. २५.४.५) ति मैत्रावरुणस्य ब्रह्मत्वविधिरयम् । न पुनर्ब्रह्मणो मैत्रावरुणत्वविधिः । यत्तच्छब्दाभ्यां तथैवावगमात् ।

---

1. My[1]. om. one. उपसंचर्य°

4. My[2] °कार्य for °करणीयः

6. My[2] प्रथमो for प्रथमं

9. My[1] एषु for एवमितरेषु
   My[1-2] My[4] क्रमनियतश्च C क्रम इति नियमश्च; I have corrected the passage as above.

11. My[1] after नियमेन ins. उक्तः

13. My[1] om. कुतः
    My[1] °शास्त्रस्य for °शास्त्र°

15. C °गम्यते for °गमात्

**स प्रतिहर्तेति** द्वितीयतच्छब्देन ब्रह्माणं परामृश्य प्रतिहर्तृकार्यविधिरिति साहसमेव। तेन मैत्रावरुणं प्रथमं बुध्वा तस्येतरद्वयं ब्रह्मत्वं प्रतिहर्तृत्वं च पश्चादवगम्यत इति प्रतीतिक्रमेण मैत्रावरुणस्यैव प्राथम्यं प्राधान्यं चेति। यदि भाविनः कार्ये भूतस्य विधिः स्यात् तदा मैत्रावरुणः स ब्रह्मेतिवत् यो नेष्टा स उद्गातेति तुल्यरूपं वाक्यमभविष्यत् ॥९॥

किं पुनस्तुल्यत्वम्। भाविनः कार्ये भूतस्योपादेयत्वकथनम्। तदिदमाह—

**यो नेष्टा स उद्गातेत्यभविष्यत् ॥१०॥**

इति। उपलक्षणं चैतत्। **यो ब्राह्मणाच्छंसी स प्रस्तोते**त्यपि वाक्यमभविष्यत्। न चैवमस्ति। तस्मात् प्रथमप्रवृत्तिरतन्त्रम्। यथाशास्त्रमुद्देश्यस्यैव प्राथम्यं प्राधान्यं चेति। यत्तु भाविनो विधिरयुक्त इति। उच्यते। भाविकार्यकरत्वेन कंचित् पुरुषं प्रतिसंधाय तस्यैव प्रथमकार्ये विधानमिति न किंचिद्व्यसननम् ॥१०॥

**गृहपतिर्गृहपतिः सुब्रह्मण्यः इति असमासं तयोर्दर्शयति ॥११॥**

**गृहपतिर्गृहपतिरिति** ब्राह्मणस्यायमर्थः। गृहपतिर्गृहपतिरेव। नान्येन तस्य समास इति। एवं सुब्रह्मण्यस्यापीति। तत्र निदानकारस्तु **गृहपतिर्गृहपतिरितीति** वाक्यमस्मिन् सत्रे गृहपतिद्वयविधानार्थमित्याह। द्वितीयस्तु गृहपतिरध्वर्युहोत्रोर्युगपत् कर्मानुष्ठानाशक्तौ तत्संपादनार्थ इति चाह। तद्यथा—**अथ खल्वत्र द्वौ गृहपती संनिपतितो होत्राध्वर्युमैकैकेन सुवर्ते इव स एव वृत्यर्थ एवं द्वितीय** इति। न तस्य ब्राह्मणमनुरूपम् इति ॥११॥

---

3. My[1] भाविन⁰ for भाविनः⁰
10. C. after अयुक्तः adds: एव; C. ⁰करण⁰ for ⁰कर⁰
15. My[1] अस्ति for इति.
17. My[1] ⁰पातनार्थः for पादनार्थः
18. My[1] होत्राध्वर्युना for होत्राध्वर्युं; My[1] एषः for एव.
    My[1] प्रत्यर्थ एव C. इत्यर्थ एव for वृत्यर्थ एवं

**एतेनोक्तस्तापश्चितस्य दीक्षादिः ॥१२॥**

**एतेन** कौण्डपायिने तापश्चितस्य दीक्षोपक्रम उक्तः। अत्रापि पौर्णमासीप्रभृतयो दीक्षाः इत्यर्थः ॥१२॥

**तस्यायनविचाराः ॥१३॥**

वक्ष्यन्त इति शेषः ॥१३॥

**ज्योतिष्टोमोऽतिरात्रः षोडशिमानहरहः स्यादिति धानंजय्यः ॥१४॥**

**संवत्सरं प्रसूतो** (तां. ब्रा. २५.५.१) **भवतीति** ब्राह्मणेऽहर्विशेषाश्रवणात् सर्वप्रकृतिभूतो ज्योतिष्टोमो एव युक्तः ॥१४॥

अथ शाखान्तरीयं पक्षमाह—

**चत्वारो ज्योतिष्टोमा अभिजिदेष पञ्चाहः षट्सु मासेष्वभ्यस्येत ॥१५॥**

इति। स्पष्टम् ॥१५॥

**महाव्रतं विषुवान् ॥१६॥**

**महाव्रतं विषुवान्**। तत्स्थाने स्यादित्यर्थः ॥१६॥

**अथैत एवावृत्तास्तैरावृत्तैरुत्तरान् षण्मासान् ॥१७॥**

**विश्वजिदभिजित्स्थाने ॥१८॥**

स्पष्टं सूत्रद्वयम् ॥१७-१८॥

**तत्पुरुषस्य नारायणस्यायनम् ॥१९॥**

---

2. My[1] °मासप्रवृत्तयो for मासीप्रभृतयो (L. 3)
5. My[2]. om. वक्ष्यन्त इति शेषः
8. My[1] प्रयुक्तो for प्रसूतो
14. My[4]. विपुवतः for विपुवान्
15. My[1]. विषुवतः for विषुवान्; C विपुवत्स्थाने for विषुवान् तत्स्थासे
18. My[2]. om. स्पष्टं सूत्रद्वयम्.
19. M. पुरीषस्य for पुरुषस्य

तदिति । नारायणस्यायनं शाखान्तरोक्तम् ॥१९॥

पक्षान्तरमाह—

**एष एव पञ्चाहः केवलः कृत्स्नं संवत्सरं मासान्तेषु विश्वजिदभिजित्स्थाने तद्यावज्जीवायनं ब्रुवते ॥२०॥**

केवल शब्दो महाव्रतनिवृत्त्यर्थः । केवलः पञ्चाह एव यावत्संवत्सरं पुनःपुनरावर्तनीयः तस्य यावज्जीवायनम् तत् नामधेयम् ॥२०॥

नामधेयप्रवृत्तौ हेतुमाह—

**स्तोत्रीया हि वर्षशतभक्ति समासे ॥२१॥**

इति । पञ्चाहे तावत्सहस्रं स्तोत्रीयाः संवत्सरे च द्वासप्ततिः पञ्चाहाः । ततश्च द्वासप्ततिसहस्राणि स्तोत्रीयाः । ताश्च वर्षशतस्य पुरुषायुषस्य भक्तिविभागभूतैरहोरात्रैः समानसंख्याः । तथा हि वर्षशते षट्त्रिंशत्सहस्राणि अहानि तावत्यश्च रात्रयः । तानि समस्य द्वासप्ततिसहस्राणि संपद्यन्ते ॥२१॥

पक्षान्तराण्याह—

**अभिजिदहरहस्तदग्नेः ॥२२॥**

एक एवाभिजित् कृत्स्नं संवत्सरं पुनः पुनरावर्तनीयः । तदग्नेरयनम् ॥२२॥

**ज्योतिष्टोमो वा रथन्तरपृष्ठः ॥२३॥**

अहरहस्तदग्नेरित्यनुवर्तते ॥२३॥

**बृहत्पृष्ठ इन्द्रस्य ॥२४॥**

बृहत्पृष्ठो ज्योतिष्टोम एव पुनः पुनः स्यात् तदिन्द्रस्यायनम् ॥२४॥

**व्यत्यासे बृहद्रथन्तरे षष्ठे स्यातां तदिन्द्राग्न्योः ॥२५॥**

ज्योतिष्टोम एव पुनः पुनरभ्यस्ते व्यत्यासं बृहद्रथन्तरे स्याताम् ॥२५॥

---

1. My[1], My[4] C. om. तदिति नारायणस्यायनम्

6. My[1] इति for तत्

19. My[1] om. स्यात्⋯अयनम्

20. My[1] om. व्यत्यासे⋯पुनर् (L. 21)

**तदिन्द्राग्न्योरयनम् ॥२६॥**

**उभयसाम ब्रह्मप्रजापत्योः ॥२७॥**

स्पष्टम् ॥२६-२७॥

**वायोर्वैरूपपृष्ठो व्रतं वा ॥२८॥**

वैरूपपृष्ठो ज्योतिष्टोमो महाव्रतं वा वायोरयनम् ॥२८॥

**आदित्यस्य वैराजपृष्ठो विश्वजिदा ॥२९॥**

**अपां शक्वरीपृष्ठः ॥३०॥**

**गवां रेवतीपृष्ठः ॥३१॥**

**प्रजापतेर्वामदेव्यपृष्ठः ॥३२॥**

**विश्वेषां देवानां स्वरपृष्ठः ॥३३॥**

**सूर्यस्य महादिवाकीर्त्यपृष्ठः ॥३४॥**

**महेन्द्रस्य महाव्रतपृष्ठः ॥३५॥**

एषु सर्वेषु ज्योतिष्टोमो विशेष्यते ॥२९-३५-३६॥

**इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले तृतीयः खण्डः ॥३॥**

---

2. My$^{1-2}$ Mc प्राजा° for प्रजा°

## चतुर्थः खण्डः

पुनरपि तापश्चितस्यैव प्रभेदमाह—

**क्षुल्लक तापश्चितमहातापश्चितयोर्दीक्षोपसत्सुत्यामासाः पृथक्-चतुर्वर्गाः संवत्सराः परस्य ॥१॥**

इति । क्षुल्लकं क्षुद्रमल्पम् । निर्द्धारणे षष्ठी । शाखान्तरोक्तयोः क्षुद्रतापश्चितमहातापश्चितयोर्यद्वक्तव्यं तद्वक्ष्याम इति शेषः । **दीक्षोपसत्सुत्यामासाः** [पृथक्] **चतुर्वर्गा** इति । दीक्षोपसत्सुत्याः प्रत्येकं चतुर्वर्गाश्चतुर्गुणिताः मासाः स्युः । मासचतुष्टयं दीक्षाः मासचतुष्टयमुपसदो मासचतुष्टयं सुत्या इत्यर्थः ॥१॥

किमुभयोरप्येवम् । नेत्याह—

**संवत्सराः परस्य ॥२॥**

इति । **परस्य** महातापश्चितस्य **संवत्सरा**श्चतुर्गुणिता दीक्षादयः स्युः ॥२॥

**अयनमासतो वृद्धिसंरोधौ गवामयने क्लृप्तौ ॥३॥**

**गवामयने** यो मासः पुनः पुनरभ्यस्यते सोऽयनमासः । यथोक्तं ब्राह्मणं—**चत्वारोऽभिप्लवाः षडहाः पृष्ठ्यः षडहः स मासः स द्वितीयः स तृतीयः स चतुर्थः स पञ्चमः** (तां. ब्रा. २४.२४.१) इति । तैरयनमासैर्वृद्धिह्रासौ तयोस्तापश्चितयोर्गवामयनवत् कल्पनीयौ । तद्यथा विषुवतः पूर्वं त्रयोविंशतिरयनमासाः संभार्य एकः विषुवतः ऊर्ध्वं प्रथमोत्तमौ संभार्यौ । तयोर्मध्ये द्वाविंशतिरयनमासा इत्येवं वृद्धिः । अथ संरोधः गवामयनस्य पृथक् एकोऽयनमासः । ततः षष्ठसप्तमोत्तमाख्यः संभार्याः इति मासचतुष्टयमिति । एवमेव निदानकारेणोक्तम् । अथैतत् क्षुल्लुकतापश्चिते (नि. सू. १०-६) त्यादिना । आश्वलायनश्चाह—

---

2. My[2] after प्रभेदम् ins. वक्तुम्

7. My[2] °गुणित° for °गुणिताः

12. My[2] विवृद्ध° for वृद्धि°

16. My[2] विवृद्धि° for वृद्धि°

19. My[2] विवृद्धिः for बृद्धि My[1] कथं for अथ

21. My My[4] c. om. अथैतत् ··आदिना

**उत्तरस्य पक्षसो द्वाविंशतिरयनमासा** भवेयुः । त्रयोविंशतिः पूर्वस्य (आ. श्रौ.        ) इति । प्रकृतौ संभार्यमासानां सकृदेव कृतत्वान्न तैर्विवृद्धिः कार्या । अत्र अयनमासैरेव विवृद्धिः । तेषामेव प्रकृतावभ्यासदर्शनादित्यभिप्रायः ॥३॥

**उत्तरस्यायनविचाराः ॥४॥**

**उत्तरस्य** महातापश्चितस्यायनप्रभेदा वक्ष्यन्ते ॥४॥

**गवामयनं चतुरुपेयुः ॥५॥**

स्पष्टम् ॥५॥

**पूर्वाणि वा त्रीणि दृतिवातवतोरयनचतुर्थान्युपेयुः ॥६॥**

**पूर्वाणि** ब्राह्मणे प्रथमोक्तानि त्रीणि गवामयनमादित्यानामयनमङ्गिरसामयनमित्येतानि दृतिवातवतोरयनेन सह चत्वारि कुर्युः । तथैव निदानकारेणोक्तम्—**यद्वा पूर्वाणि गवामयनानि स्युरि** (नि. सू.        ) ति व्याख्येयम् ॥६॥

**कौसुरुबिन्दं वायनं स्यात् ॥७॥**

कुसुरुबिन्ददशरात्रेण वा गच्छेयुः ॥७॥

**ज्योतिष्टोमेन वा ॥८॥**

**ज्योतिष्टोमेन वा** संवत्सरान् गच्छेयुः । एवं तापश्चितकथा समाप्ता ॥८॥

**तेन त्रीण्युत्तराणि ॥९॥**

तापश्चितादुत्तराणि **त्रीणि** सत्राणि द्वादशसंवत्सरं षट्त्रिंशत्संवत्सरं शतसंवत्सरमित्येतानि **तेन** ज्योतिष्टोमेनैव पुनः पुनरुपेयुः ॥९॥

**तस्य रथन्तरं पृष्ठं बृहच्च व्यत्यासम् ॥१०॥**

स्पष्टम् ॥१०॥

---

3. My[1] किंतु for अत्र

8. M. त्रिकाणि for त्रीणि

14. My[1] कौसुरु° for कुसुरु°

16. My[2] एव चतुरोऽपि for वा

**दृतिवातवतोरयनेनेति क्षैरकलाम्भिर्यथार्षेयकल्पसमाम्नाय इति ॥११॥**

दृतिवातवतोरयनेनैवार्षेयकल्पे क्लृप्तिनीति तथैवोपेयुर्न पुनर्ज्योतिष्टोमेन ॥११॥

**अग्निष्टोमास्त्रिवृत उक्थ्याः परे इति ॥१२॥**

तत्र ये त्रिवृतः संवत्सरास्तेऽग्निष्टोमाः । ततः परे सर्वे संवत्सरा उक्थ्याः ॥१२॥

**तत्रावचनादतिरात्रा न स्युर्विषुवन्तश्चेति शाण्डिल्यः ॥१३॥**

तेषु त्रिष्वपि सत्रेषु वचनाभावादतिरात्रा न स्युर्विषुवन्तश्च ॥१३॥

**इतरः सत्रन्याय इति धानंजय्यः ॥१४॥**

वचनाभावेऽपि सर्वसत्रेषु प्रवृत्तिदर्शनादितरः प्रवृत्तिपक्ष एव सत्रन्यायः ॥१४॥

तत्रैव विशेषमाह—

**अतिरात्रावभितः स्याताम् ॥१५॥**

इति । अभितः सत्रादौ सत्रान्ते च ॥१५॥

**मध्ये विषुवान् बृहत्पृष्ठो रथन्तरमध्यंदिनः पञ्चदशसप्तदशः ॥१६॥**

संवत्सरषट्कं पूर्वः पक्षः । तथैवोत्तरः । तयोर्मध्ये विषुवान् । तस्य चात्मत्वसंस्तुतेः पूर्वापरयोः संवत्सरयोः धर्मं भाग्भवतीति **पञ्चदश सप्तदश** इत्युक्तम् ।

---

6. My[1] om. सर्वे

8. M. om. न

9. My[4] om. न

10. M. उत्तरः for इतरः

13. My[1] विशेषान् for विशेषम्

18. My[1] उत्तरमपि पक्षः for उत्तरः
My[1] My[4] om. तस्य ... °वर्गे (L. 10 p. 690)

पञ्चदशसप्तदशौ स्तोमौ यस्य स तथोक्तः। रथन्तरं माध्यंदिनपवमाने यस्य स रथन्तरमध्यंदिनः ॥१६॥

मतान्तरमाह—

**एकैकस्मिन्वै तत्संवत्सरवर्गे स्यात् ॥१७॥**

इति। त्रयस्त्रिवृतः संवत्सराः एकस्तोमान्वयादेको वर्गः। एवमुत्तरेपि संवत्सरा एकैकस्तोमावच्छेदात् त्रयो वर्गाः। चतुर्ष्वपि वर्गेषु प्रत्येकं मध्ये मध्ये विषुवान् स्यात् ॥१७॥

मतान्तरमाह—

**उत्तमे वा वर्गाणाम् ॥१८॥**

इति। वर्गाणामुत्तम एव वर्गे एकविंशस्तोमके विषुवान् स्यात् ॥१८॥

**पृथग्वा संवत्सरेषु ॥१९॥**

अथवा प्रतिसंवत्सरं विषुवान् स्यात् ॥१९॥

**तेषां यथास्तोमं विषुवन्तः स्युः॥२०॥**

तेषां संवत्सराणां यो यः स्तोम तत्तत्स्तोमा विषुवन्तः स्युः। त्रिवृति संवत्सरे त्रिवृत्स्तोमः पञ्चदश संवत्सरे पञ्चदशस्तोम इति ॥२०॥

तत्र विशेषमाह—

**रथन्तरपृष्ठो बृहद्ब्रह्मसामा त्रिवृतां स्यात् ॥२१॥**

इति। त्रिवृतां संवत्सराणां संवन्धी यो विषुवान् स रथन्तरपृष्ठो बृहद्ब्रह्मसामा स्यात् ॥२१॥

**बृहत्पृष्ठो रथन्तरमध्यंदिनः परेषु ॥२२॥**

परेषु पञ्चदशस्तोमादिसंवत्सरेषु यो विषुवान् बृहत्पृष्ठो रथन्तरमध्यंदिनः स्यात्। यस्य मध्यंदिने पवमाने रथन्तरं स रथन्तरमध्यंदिनः ॥२२॥

---

8. My[1] My[4] C. om. मतान्तरम् . . . विषुवान् स्यात् (L. 10)

10. My[2] उत्तमोत्तमे for उत्तमे

14. My[1] सोऽयं C. योऽयं for यो यः

**यजनीयेऽहनि प्रसवः स्यात् । पूर्वपक्षे समार्द्धमासातिवर्तिषु ॥२३॥**

सुत्यामासप्रभृतिसमान् युग्मार्द्धमासानतीत्य वर्तन्ते यानि सत्राणि तानि समार्द्धमासातिवर्तीनि । तेषु शुक्लप्रतिपदि प्रसवः सुत्या स्यात् । एवं च सति प्रसवश्चोत्थानं च द्वयमपि पूर्वपक्षे सिध्यतीति भावः ॥२३॥

**अपरपक्षे विषमेषु ॥२४॥**

**विषमेष्वर्धमासेषु** अतीतेषु यत् सत्रं समाप्यते । सुत्यामासप्रभृतियुग्ममासे समाप्तिरिति । यावत्तत्रापरपक्षप्रतिपदि सुत्यारम्भस्तदानीं द्वयोरपि प्रसवोत्थानयोः पूर्वपक्षे संपादयितुमशक्यत्वात् उत्थानस्य च पूर्वपक्षे अवश्यकर्तव्यत्वात् एवमुक्तम् ॥२४॥

**सहस्रसाव्ये सहातिरात्राभ्यां सहस्रमहान्याचार्याः सहस्रसाव्यमिति ह्याह ॥२५॥**

अग्नेः **सहस्रसाव्ये** सत्रे अतिरात्राभ्यां सहैव **सहस्रमहानि** । नातिरेकः कार्यः । कुतः । **सहस्रसाव्यमिति** श्रुतेः । अन्यथा सहस्रातिरेकात् ॥२५॥

**अन्तरेणेति शौचिवृक्षिः ॥२६॥**

स्पष्टम् ॥२६॥

हेतुमाह—

---

1. C. after °पक्षे adds: यद्य विषुत्काः

3. My[1] My[4] C. युग्मान् for युग्मा°

4. My[1] सामा° for समा°

5. My[1] प्रथमः for प्रसवः
   My[2] °पक्षेषु for °पक्षे

7. My[1] °युग्मे° for °युग्म°

9. My[1] °कायवात् for कर्तव्यत्वात्°

**सहस्रमहानीत्यन्तरेणातिरात्रावाह ।।२७।।**

इति। अतिरातः सहस्रमहान्यतिरात्र इति ब्राह्मणम्। पृथगतिरात्राभ्यां सहस्रमाह ।।२७।।

**तस्यायनकल्पः ।।२८।।**

वक्ष्यते इति शेषः ।।२८।।

**अतिरात्रस्त्रिकद्रुकस्त्रिरात्राश्चतुःषष्टिशतमभिप्लवानां दशरात्रो व्रतमतिरात्र इति व्रतमतिरात्र इति ।।२९।।**

ज्योतिर्गौरायुरिति त्रिकद्रुकः। चतुःषाष्ट्यधिकं शतं चतुःषष्टिशतम्। स्पष्टमन्यत् ।।२९।।

**इति द्राह्यायणश्रौतसूत्रे त्रिंशे पटले चतुर्थः खण्डः ।।४।।**

इति छन्दोगसूत्रस्य दीपे धन्विविनिर्मिते ।
तृतीये दशके वृत्तो दशमः पटलोऽधुना ।।३०।।

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे त्रिंशः पटलः समाप्तः ।।३०।।**

---

4. My[1-2] C. My[4] °विकल्पः for कल्पः

5. My[1] वक्ष्यामः for वक्ष्यते

एकत्रिंशः पटलः

## प्रथमः खण्डः

**दक्षिणे तीरे सरस्वत्या विनशनस्य दीक्षेरन् सारस्वताय ॥१॥**

सरस्वती नाम नदी प्रत्यक्स्रोताः प्रवहति । तस्याः प्राग्भागापरभागौ सर्वलोकप्रत्यक्षौ । मध्यमस्तु भागो भूम्यामन्तर्निमग्नः प्रवहति । नासौ केनचिद् दृश्यते । तद्विनशनमित्युच्यते । तस्योपक्रमे दक्षिणे तीरे सारस्वतसत्राय दीक्षेरन् । अत्र ब्राह्मणम्—**द्वादश दीक्षा द्वादशोपसदो यदहरतिरात्रः स्यात् तदहर्वत्सानपाकुर्वन्ति । संस्थितेऽतिरात्रे सान्नाय्येन यजन्ते** (तां. ब्रा. २५.१०.२-३) इति ॥१॥

तत्र कस्मिन् दिवसे दीक्षारम्भः । कस्मिंश्चातिरात्र इति न विद्मः । अत आह—

**षष्ठ्यां पूर्वपक्षस्येति गौतमोऽमावास्यायामतिरात्रः स्यात् ॥२॥**

इति । **पूर्वपक्षस्य षष्ठ्यामित्यर्थः** ॥२॥

कुत इत्याह—

**एवं स्वस्थानमामावास्यं प्रयुज्यते ॥३॥**

इति । एवं सति स्वे स्थाने शुक्लपक्षस्य प्रथमायां सान्नाय्यं ब्राह्मणविहितं प्रयुक्तं भवति ॥३॥

**सप्तम्यां दीक्षित्वामावास्यायां यजनीयेऽहनि प्रसवः स्यादिति धानंजय्यः । समाधय उत्तराभ्यां सुत्याभ्याम् ॥४॥**

---

7. My[1] सर्ववत्सान् for वत्सान्

12. M. पूर्वपक्षस्य for पक्षस्य

16. My[4] अमा॰ for आमा॰

17. My[2] om. प्रथमायां . . . शुक्लपक्ष॰ (L. 1. p. 694)

अमावास्याया उत्तरेद्युर्यजनीयेऽह्नि शुक्लपक्षप्रथमायामेवातिरात्रः। कुतः। **उत्तराभ्यां** गोष्टोमायुष्टोमाभ्यां ब्राह्मणोक्ताभ्यां साम्यसिद्ध्यर्थं प्रथमायामेव हि तयोरनुष्ठानमिति धानंजय्यमतं वक्ष्यति ॥४॥

नन्वेवं सान्नाय्यस्य स्वस्थानभ्रंशः स्यात्। द्वितीयायां करणात्। नेत्याह—

**स्वस्थानं चैवामावास्यं प्रयुज्यते ॥५॥**

न सान्नाय्यस्य स्वस्थानभ्रंशः। किंतु **स्वस्थानमेव** ॥५॥

कुत इत्याह—

**पूर्वपक्षो ह्यामावास्यस्थानमिति ॥६॥**

**पूर्वपक्षो** हि कार्त्स्न्येन सान्नाय्यस्थानम्। न केवलं प्रथमैव। एवं वदन् दर्शानुष्ठानस्य नित्यभूतस्य कृष्णपक्षातिक्रम एव प्रायश्चित्तम्। नान्यथेति दर्शयति ॥६॥

**पुरा रात्रेः सायं दोहं दोहयेरन् ॥७॥**

रात्र्युपक्रमात् पूर्वं षोडश्यनन्तरमित्यर्थः ॥७॥

**संस्थितेऽतिरात्रे प्रातर्दोहम् ॥८॥**

स्पष्टम् ॥८॥

**तेन सान्नाय्येन यजेरन् ॥९॥**

अनेन ब्राह्मणगतः सन्नाय्यशब्दो दोहद्वयाभिप्राय इति व्याख्यातम् ॥९॥

अथ ब्राह्मणमुपादाय व्याचष्टे—

---

4. C. सान्नाज्यस्य for सान्नाय्यस्य; My$^{2}$ om. स्व$^{0}$

6. My$^{2}$ सान्नाय्यस्य$^{0}$ for सान्नाय्यस्य

8. M C. अमा$^{0}$ for आमा; C. $^{0}$वास्या$^{0}$ My$^{4}$ $^{0}$वास्यस्य for $^{0}$वास्य$^{0}$

9. My$^{1}$ om. वदन्

10. My$^{1}$ C. कृत्स्नपक्षान्तिमे for कृष्णपक्षातिक्रमे;
My$^{1}$ My$^{4}$ C. om. नित्यभूतस्य; My$^{4}$ कृत्स्न$^{0}$ for कृष्ण$^{0}$

11. My$^{1}$ om. दर्शयति

18. My$^{1}$ अथवा for अथ

**सान्नाय्येनेष्ट्वाध्वर्युः शम्यां परास्यतीत्याहवनीयन्यन्तेन तिष्ठन् प्राङ्मुखो नित्येष्टिसंस्थानस्तु प्रास्येत् ॥१०॥**

इति । **न्यन्तेन** समीपेनेत्यर्थः ॥१०॥

किमर्थं शम्याप्रासनमिति चेत्तत्राह—

**तदुक्तं ब्राह्मणेन ॥११॥**

इति । **सा यत्र निपतति तद् गार्हपत्यमि** (तां ब्रा. २५.१०.४) त्यादि ब्राह्मणेन शम्याप्रासनस्य प्रयोजनमुक्तमित्यर्थः ॥११॥

**चक्रीवत्ता च ॥१२॥**

सदःप्रभृतीनां **चक्रीवत्ता च** ब्राह्मणेनोक्तैव । चक्रीवत् सदश्चक्रीवद्धविर्धानं **चक्रीवदाग्नीध्रम्** (तां ब्रा. २५.१०.५) इति । तस्यायमर्थः । चक्री रथः शकटो वा । तद्युक्तं सदःप्रभृति कार्यम् । पूर्वनिर्मितानि सदःप्रभृतीनि यजुःकृतत्वादा समाप्तेर्धार्याणि । शकटमारोप्य प्रस्थापयेदित्यर्थः ॥१२॥

**तथापि पत्नीशाला स्याच्छामित्रश्च ॥१३॥**

यद्यपि तानि चक्रीवन्ति **तथापि** पत्नीशालाशामित्रौ पृथगेव कार्यौ । तयोश्चक्रीवत्तानुपदेशात् । अयजुष्कृतत्वाच्च ॥१३॥

**तानि यथादेशं वर्तेरन् समश्चेद्भूमिभागः स्यात् ॥१४॥**

यदि गमनमार्गो निम्नोन्नतरहितः **समः स्यात्** तदा **तानि** सदःप्रभृतीनि **यथादेशं** येन येन संनिवेशनेन पूर्वस्थितानि तथैव गमयेयुः । हविर्धानं प्रवाहयन्तस्तस्योत्तरपार्श्वेनाग्नीध्रीयं गमयेयुः । पश्चात् पार्श्वेन सद इत्यर्थः ॥१४॥

---

1. My[2] शम्या for शम्यां; C. प्रास्य for परास्य
My[2] आहवनीयस्य for आहवनीय⁰

2. C. उदङ⁰ for प्राङ⁰

9. My[1] My[4] C. om. एव

11. My[1] My[4] C. om. सदः प्रभृतीनि

17. My[4] ⁰देशो for ⁰मार्गो

18. C. ⁰पर्यन्तस्तद्देशादुत्तर⁰ for प्रवाहयन्तस्तस्योत्तर⁰

**अनुपूर्वं विषमे ॥१५॥**

यदि मार्गो विषमः स्यात् तदानीं शकटप्रवाहणयोग्येन प्रदेशेन पृष्ठतः पृष्ठतो नयेयुः ॥१५॥

**वेदेः पांसून् हरेयुस्तथोत्तरवेदेर्धिष्ण्येभ्यश्च ॥१६॥**

पूर्वकृतेभ्यो वेद्यादिभ्यः कांश्चित् **पांसून्** यजुष्कृतत्वात् अपरित्याज्यत्वेना-**हरेयुः** ॥१६॥

**तान्निवेश्य यथायतनं निवपेयुः ॥१७॥**

**तान्** संस्कृतान् पांसून् परिजिघृक्षिते देवयजने सदःप्रभृतिषु निवेशितेषु पश्चाद् **यथायतनं निवपेयुः** । न तत्र मन्त्रतो वेद्यादेः करणम् । पूर्वमेव मन्त्रकृत-वेदिपांसुनिवपनात् । अन्ये तु मन्त्रतः करणमिच्छन्ति ॥१७॥

**उलूखलबुध्नो यूपः प्रकृष्य उपोप्तः** (तां. ब्रा. २५.१०.५) इति ब्राह्मण-मुपादाय व्याचष्टे—

**उलूखलबुध्नो यूपः इति पृथुबुध्नः स्यात् ॥१८॥**

इति । स्पष्टम् ॥१८॥

तत्र प्रकृष्यपदं व्याचष्टे—

**प्रकृष्य इति तं पूर्वं कर्षयेयुरेवानुद्यच्छन्तः ॥१९॥**

इति । भूमेर्यूपमनुद्यम्यैव भूमिस्पृष्टमेव कृत्वा सर्वस्य पुरस्तात् **कर्षयेयुः** ॥१९॥

उपोप्तपदमपि व्याचष्टे—

---

2. प्रवहण° My[2] प्रवाहन for प्रवाहण ; My[1] °योग्य° for योग्येन

5. My[2] परि° for अपरि°

8. My[1] om. संस्कृतान्

9. My[1] My[4] C. मन्त्रकृतत्वात् for मन्त्रकृ° . . . इच्छन्ति (L. 10)

15. My[2] om. प्रकृष्यपदं व्याचष्टे

19. My[1] om. अपि

**उपोप्त एवेत्यनिखातस्तिष्ठेत्पांसुभिः पर्युप्तः ॥२०॥**

पांसुभिरेव पर्युप्तो यूपस्तिष्ठेत् । न पूर्ववत् खनित्वा स्थापनीयः ॥२०॥

अथोत्तरं ब्राह्मणं व्याचष्टे—

**नोपखान् खनन्तीत्यधिषवणफलकयोरधस्तादुपरवा नाम श्वभ्रास्तेषां प्रतिषेधः ॥२१॥**

इति । स्पष्टम् ॥२१॥

**आलिखेयुरेवैनान्न खनेयुः ॥२२॥**

केवलं श्वभ्राणां परिलेखनमेव कार्यम् । न खननम् ॥२२॥

**तेषां पौर्णमास्यां गोष्टोमो भवतीति ॥२३॥**

ब्राह्मणोपादानमेतत् ॥२३॥

अथ व्याचष्टे—

**यजनीयेऽहनि स्यादित्याचार्याः ॥२४॥**

पौर्णमासीशब्दः प्रथमामाह । तत सुत्येति ब्राह्मणार्थः ॥२४॥

कुत इत्याह—

**संस्थिते गोष्टोमे पौर्णमासमिति संस्थानान्ताद्विदधाति ॥२५॥**

इति । **संस्थिते गोष्टोमे पौर्णमासं निर्वपन्ते** (तां ब्रा. २५.१०.८) । इति ब्राह्मणं संस्थानन्तरं तदानीमेव पौर्णमासस्य कर्तव्यतामाह । न च पञ्चदश्यां पौर्णमासो युक्तः । तस्यापरपक्षस्थानत्वात् । तेन पौर्णमासीशब्दः कृष्णप्रतिपल्लक्षणार्थः संस्थानान्तादित्यन्तशब्दः समीपवचनः । यथा **प्रादुर्भावान्तादेतयोरदोरि**

---

1. My[1] कनिखीतः M. निखातः for अनिखात
   My[1] पर्याप्तः for पर्युप्तः
2. My[1] पर्याप्तः for पर्युप्तः
7. My[1] M. निखनेयुः for न खनेयुः
8. My[1] निखननत् for खननम्
15. My[2] ⁰मासीम् for मासम्
16. My[1] निर्बर्तन्त⁰ My[4] निर्वर्तत⁰ for निर्वपन्त
17. My[1] स्थानान्तरं for संस्थानन्तरं
18. My[2] ⁰पक्षस्थान स्या (? त्वा) त् My[1] ⁰पक्षत्वात् for पक्षस्थानत्वात्

(द्रा. श्रौ. ३१.२.१७) त्यादौ ॥२५॥

हेत्वन्तरं चाह—

**ते तमापूर्यमाणं ते तमपक्षीयमाणमिति कृत्स्नवत् पक्षाभिधानम् ॥२६॥**

**ते तमापूर्यमाणमामावास्येन यजन्ती** (तां. ब्रा. २५.१०.६) ति वचनात् कृत्स्नमेव पूर्वपक्षं सान्नाय्येन यष्टव्यम् । तत्र यदि पञ्चदश्यां गोष्टोमः स्यात् तदा तस्यां सान्नाय्यलोपप्रसङ्गः । ते तमपक्षीयमाणमि (तां. ब्रा. २५.१०.८) ति श्रुत्युपादानं वक्ष्यमाणस्यायुष्टोमस्याप्येतत् समानमिति प्रदर्शनार्थम् ॥२६॥

अथ स्वमतमाह—

**पर्वणि त्वेव स्यात् ॥२७॥**

इति । **पर्वणि** पञ्चदश्यामेव गोष्टोमः ॥२७॥

कुत इत्याह—

**तेषां पौर्णमास्यां तेषाममावास्यायामिति हि प्रत्यक्षेण विदधाति ॥२८॥**

**प्रत्यक्षेण** श्रुत्यैव पञ्चदस्यां विदधाति । पौर्णमासीशब्दोऽपि पञ्चदशीवचनः ॥२८॥

ननु च एवं पञ्चदश्यामेव पौर्णमासप्रसङ्गः । नेत्याह—

**कर्मानन्तरीयमात्रं च संस्था दर्शपौर्णमासयोः ॥२९॥**

इति । **संस्थिते गोष्टोमे पौर्णमासमि** (तां. ब्रा. २५.१०.८) ति तयोः पौर्वापर्यमात्रमेव चोद्यते न पुनस्तदानीमेवानुष्ठानम् । तेन श्वोभूत एव पौर्णमासेष्टिः ॥२९॥

---

5. My[1] जयन्ति My[2] यन्ति for यजन्ति

13. My[2] च for हि

15. My[1] My[4] C. हि for अपि

17. My[1] °मासी° for °मास°

18. C. My[2] कर्मानन्तर्यं for कर्मानन्तरीय°; My[1] om. दर्श°

**ते तमापूर्यमाणं ते तमपक्षीयमाणमिति च यथाभूयसवादः ॥३०॥**

पञ्चदश्यामिष्ट्यभावेऽपि ते तमापूर्यमाणमि (तां. ब्रा. २५.१०.६) ति भूयस्त्वादुपपन्नम् ॥३०॥

**संस्थिते गोष्टोमे तदहरेव पौर्णमासेन हविषेष्ट्वोद्युञ्जेरन्निति धानंजय्यः ॥३१॥**

आचार्यमतवत् प्रथमायामेव गोष्टोमं तदहरेव पौर्णमासं च कृत्वा तदानीमेव शक्यां प्रास्य गमनोद्योगं कुर्युरिति धानंजय्यः । प्रायणीयसंस्थानान्तरमिष्टेरुद्योगस्य च पूर्वमपि कृतत्वात् । तत्साम्यसिद्ध्यर्थमिति भावः । तथा च धानंजय्यस्य साम्यनिर्बन्ध उक्तः । **समाधत्त उत्तराभ्यां सुत्याभ्यामिति** ॥३१॥

**अयजमानास्तत्रैव तां रात्रिं वसेयुरिति शाण्डिल्यः ॥३२॥**

सूत्रकारमतवत् पञ्चदश्यां गोष्टोमं कृत्वा इष्टिं गमनोद्योगं च द्वयमप्यकुर्वन्तस्तत्रैव **वसेयुरिति** ॥३२॥

**उद्युज्यैवेति गौतमः श्वोभूते तु यजेरन् ॥३३॥**

गमनं कृत्वैव वसेयुः । प्रायणीये तथा दर्शनात् । पौर्णमासं तु पञ्चदश्यामयोग्यत्वात् **श्वोभूत एवेति गौतमो** मन्यते ॥३३॥

**इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले प्रथमः खण्डः ॥१॥**

---

1. My[1] भूयसो for भूयस०

5. M. My[1] C. My[4] उद्युज्येरन् for उद्युञ्जेरन्

8. My[4] संस्थानन्तरम् for संस्थानान्तरम्

15. C. after वसेयुः adds: इति

# द्वितीयः खण्डः

**एतेनायुर्व्याख्यातः ॥१॥**

एतेन गोष्टोमन्यायेनामावास्यायामायुष्टोम इति ब्राह्मणं व्याख्यातम् ॥१॥

**तत्र धानंजय्येनामावास्यायां सायंदोहं दोहयेरन् पुरा प्रातरनुवाकात् प्रातर्दोहमिति ॥२॥**

धानंजय्येनेति धानंजय्यमतेनेत्यर्थः । तत्र पर्वणि सायं दोहं कृत्वा प्रथमायामायुष्टोमः स्यात् । तस्य प्रातरनुवाकात् पूर्वमेव प्रातर्दोहः । कर्ममध्ये कर्तुमयुक्तत्वात् ॥२॥

तन्मतं दूषयति—

**अतिचिरमेवं दुग्धं सान्नायं तिष्ठेदिति शाण्डिल्यायनः ॥३॥**

इति । दुग्धं प्रातर्दोहः । तदेवं सति चिरकालं तिष्ठेत् । सुत्यानन्तरं रात्रौ तन्मते सान्नाय्यस्य प्रचारः । ततश्च पयसोऽपि चिरकालावस्थानात् दधित्वापत्तिरिति दोषः ॥३॥

तस्मादेवं कार्यमित्याह—

**इतरयोरेवान्यतरत् कुर्युः ॥४॥**

इति । इतरयोर्गौतमशाण्डिल्योरन्यतरन्मतं कुर्यात् । एतदुक्तं भवति । आयुष्टोमे संस्थिते गमनमकृत्वा कृत्वा वा श्वोभूत एवेष्टिरिति । तदानीं सुत्यानन्तरं सायं दोहः । श्वोभूते प्रातर्दोहः । न दुग्धस्य चिरावस्थानम् ॥४॥

---

5. M. after अनुवाकात् adds: पूर्वमेव

7. $My^{1-2}$ $My^{4}$ om. स्यात्

12. $My^{2}$ सन्नाय्य$^{0}$ for सान्नाय्यस्य
$My^{1}$ कालमव for $^{0}$कालाव$^{0}$ $My^{2}$ दधित्वोपपतिरदोषः for दधित्वापत्तिरितिदोषः (L. 13)

16. $My^{1}$ अन्यतरं $My^{2}$ अन्यतर$^{0}$ for अन्यतरत्; $My^{4}$ कर्युः for कुर्यात्

18. $My^{1}$ चनावस्त्रानम् $My^{2}$ चिरस्थावम् for चिरावस्थानम्

**कौण्डपायिने भोजनमुक्तमिष्टचयनेषु ॥५॥**

अत्सरुकेश्चमसैरिष्ट्चयनेषु भोजनमित्यर्थः ॥५॥

**दर्शपूर्णमासधर्माश्च ॥६॥**

कौण्डपायिने **दर्शपूर्णमासधर्माश्च** व्याख्याताः। यथा पिण्डपितृयज्ञः सत्रिणामन्वारम्भ इत्यादयः ॥६॥

**चन्द्रप्रमाणास्त्वेव पर्वसु स्युः ॥७॥**

पर्वणि गोष्टोम इति सूत्रकारस्य पक्ष उक्तः। तत्र खण्डपर्वसु किं पूर्वमहः पर्वत्वेन स्वीकार्यम्। किं वोत्तरमहरिति संशये **चन्द्रप्रमाणा एव** सत्रिणः **स्युः**। यस्मिन्नहनि चन्द्रमाः पूर्यते न दृश्यते वा तदेव पर्व ग्राह्यमित्यर्थः। अथ **पूर्वेण पक्षसा यन्ति तद्धि प्रत्येकाप्येतीत्यादि** ब्राह्मणम्। तस्यायमर्थः। सरस्वत्याः पूर्वेण पक्षसा प्राग्भागेन गच्छेयुस्तं प्राग्भागं प्रत्येका नदी दृषद्वती नामाप्येति। तत्र गत्वापोनप्त्रीयेष्टिः कार्येति ॥७॥

तदुपादाय विशेषमाह—

**तद्धि प्रत्येकाप्येतीति दृषद्वत्या अप्यये अपोनप्त्रीयामिष्टिं निर्वपेरन् यदि सोदका स्यात् ॥८॥**

---

3. My[1] ⁰पौर्ण⁰ for ⁰पूर्ण⁰

4. My[2] after ⁰पायिने adds: न;
My[2] after ⁰यज्ञः adds:—विष्णुक्रमादिनिवृत्यः

6. My[1] पूर्वं for पर्वसु

8. My[1-2] C. My[4] पूर्वत्वेन for पर्वत्वेन

9. My[2] after अथ adds:—अथवायमर्थः। यद्यपि पूर्वपक्षापरपक्षयोः वृद्धिक्षयवशेन तद्गतयोरिष्टचयनयोर्दर्शपूर्णमासरूपयोरन्य . . . वृत्तिरन्यतरस्य त्रयोदशकृत्व इति वैषम्यं स्यात् तथापि तदनादृत्य यथोपस्थितं पर्व गृहीत्वा तत्र सुत्यैव कार्येति।

13. My[2] उपाय⁰ for उपादाय

14. M. om. इति

**यदि सोदका दृषद्वती स्यात्** तदानीं तदतिक्रमदोषशान्त्यर्थम् । अपोनप्त्रीयश्चरुः । उदकाभावे तदन्तरवस्थितस्यापांनप्तुरतिलङ्घनं नास्तीति न कर्तव्या ॥८॥

**अप्यनुदकायामिति धानंजय्यः ॥९॥**

उदकाभावेऽपि नद्यामवस्थितैव देवतापांनप्तेति भावः ॥९॥

अथ शते गोषु ऋषभमप्यृजन्ति । तदा सहस्रं संपद्यन्ते । अथोत्थानमित्यादि ब्राह्मणे सत्रोत्थानकालविकल्पा दर्शिताः । तत्र विशेषमाह—

**शते गोष्वृषभमप्यृजन्ती (तां. ब्रा. २५.१०.१९) ति वत्सतरीशतें अगर्भिणीषु ॥१०॥**

**अगर्भिणीष्विति** नयः सुप्रश्लेषः । स्वल्पावशिष्टवत्सभागा गर्भधारणयोग्या वत्सतर्यः । तासामगर्भिणीनां शते ऋषभमेकमपि सृजेयुरित्यर्थः ॥१०॥

**ता यत्र गवामभयं स्यात्तत्र रक्षेयुः ॥११॥**

यस्मिन् देशे गवां भयं न विद्यते तत्र ताः स्थापयित्वा रक्षेयुः ॥११॥

**पुङ्गवैस्तासां भुञ्जीरन् सर्पिषा च ॥१२॥**

**तासां** संबन्धिभिः पुंवत्सैः शकटवाहनादिकार्यं कुर्वीरन् । तत्सर्पिषा च यागः ॥१२॥

**तासु सहस्रं संपन्नासु पूर्वपक्षे गामतिरात्रं कृत्वा दत्वैना उत्तिष्ठेयुः ॥१३॥**

**तासु** सहस्रसंख्यासंपन्नासु **पूर्वपक्षे** गोष्टोमातिरात्रं कृत्वा सत्रादुत्थानम् । कल्पकारस्तु **अतिरात्रादुत्थानम्** (आ. क. ११.८.४) इति सामान्यमेवाह । तद्विशेषकथनमिदमिति । **यदा सर्वज्यानिं जीयन्ते** । अथोत्थानमि (तां. ब्रां. २५.१०.२०) ति ब्राह्मणम् ॥१३॥

---

2. My[1] कर्त्तव्यम् My[2] कर्तव्यः for कर्तव्या

9. M. गर्भिणीषु for अगर्भिणीषु

10. My[1-2] C. My[4] om. अगर्भिणीष्विति

12. M. गव्यममयं My[1] गव्यभयं for गवामभयं; M. आरक्षयेयु for रक्षेयु;

तत्र सर्वशब्दः किमवलम्बते । अत आह—

**यदा सर्वज्यानिं जीयन्त इति तासामेवाधिकारः । प्रकरणभूतत्वात् ॥१४॥**

इति । सर्वशब्देन गवामेवाभिधानम् । प्रकृतत्वात् तासां ज्यानिः क्षयः । तदोत्थानम् ॥१४॥

**तत्र विश्वजिदतिरात्रः ॥१५॥**

उत्थानाय कार्य इति शेषः ॥१५॥

यदा गृहपतिर्म्रियते अथोत्थानमि (तां. ब्रा. २५.१०.२०) ति ब्राह्मणे विशेषमाह—

**मृते गृहपतावायुः ॥१६॥**

इति । आयुरतिरात्रं कृत्वोत्थानम् ॥१६॥

**प्रादुर्भावान्तादेतयोरापदोरुत्तिष्ठेयुरप्यपरपक्षे ॥१७॥**

एतयोरापदोः सर्वज्यानिगृहपतिमरणयोः प्रादुर्भावकाले एवापरपक्षेऽप्युत्थानम् ॥१७॥

**न सकृच्च न सरस्वत्यामवभृथमभ्यवेयुर्देवयजनभूता ह्येषा भवति ॥१८॥**

न कदाचिदपि सरस्वत्यामवभृथः स्यात् । देवयजनं ह्येषा । न च देवयजनेऽवभृथोऽस्ति ॥१८॥

**अविद्यमाने सरस्वत्या एवोद्धारं पार्श्वतस्तु ॥१९॥**

अन्यत्र जलाभावे सरस्वत्या एव जलमुद्धृत्य तत्पार्श्वे अवभृथः कार्यः ॥१९॥

---

7. My[4] उत्थानार्थः for उत्थानाय कार्यः
8. My[1] om. ब्राह्मणे वि[0]
15. C. My[1] ह्येषां for ह्येषा
17. My[1] येषां My[2] ह्येषां for ह्येषा
19. My[1] उद्धारणं for उद्धारं
20. My[1] अन्य[0] for अन्यत्र

**यदा प्लक्षं प्रास्रवणमागच्छन्त्यथोत्थानम् (तां. ब्रा. १५.१०.२१) इति ॥२०॥**

ब्राह्मणोपादानमेतद् ॥२०॥

विशेषमाह—

**तथा प्रास्येयुर्यथैनं पूर्वपक्ष आगच्छेयुः ॥२१॥**

प्लक्षः प्रास्रवणो नाम सरस्वतीमूलम्। तं यथा पूर्वपक्ष आगच्छेयुस्तदनुगुणं शम्याप्रासनम्। वेगेन वा मृदु वा कार्यम् ॥२१॥

**तं प्राप्य प्रायणीयमतिरात्रमुपेत्योत्तिष्ठेयुरिति शाण्डिल्यः ॥२२॥**

स्पष्टम् ॥२२॥

**यदेनात् किंचिदुत्थानमागच्छेत् प्रायणीयमेवातिरात्रमुपेत्योत्तिष्ठेयुरिति धानंजय्यः ॥२३॥**

उक्तेषु चतुर्ष्वप्युत्थाननिमित्तेषु प्रायणीयमेव कृत्वोत्थानम्। न विश्वजिदादिकम्। कल्पकारेण विशेषावचनात् ॥२३॥

**प्लक्षं प्रास्रवणं प्राप्य पुरस्तादतिरात्रस्याग्नये कामायेष्टिः स्यादिति शाण्डिल्यः। उपरिष्टादिति धानंजय्यः ॥२४॥**

तत्र ब्राह्मणम्—प्लक्षं प्रास्रवणं प्राप्याग्नये कामायेष्टिं निर्वपन्त (तां. ब्रा. २५.१०.२२) इति। तत्रातिरात्रस्य पुरस्तादुपरिष्टाद्वेति विशेषाश्रवणेऽपि

---

1. My[1] प्रास्रवणं for प्रास्रवण
5. My[4] एतं for एनं; My[1] °पक्षं for °पक्ष
7. मृदुना for मृदु
8. My[2] शाण्डिल्यानः for शाण्डिल्यः
11. My[2] यदैनात् My[1] यदेनान् for यदेनात्
13. My[2] om. उत्थान° . . . कृत्वा; My[1] after °निमित्तेषु adds:—षट्
14. My[2] विशेष° for विशेषा°
15. My[0] My[1] प्रसस्रवाणं for प्रास्रवणं
16. M[2] om. धानंजय्यः
17. My[1] षड्मिवपिः for कामायेष्टिं निर्वपन्तः

इष्टेरनन्तरमवभृथविधानादुपरिष्टादित्येके। प्लक्षं प्रास्रवणं प्राप्येति श्रवणात् प्रास्रवणादागमनानन्तरमतिरात्रात् पूर्वमेवेष्टिरिति मतान्तरम् ॥२४॥

तस्यामश्वां च पुरुषीं च धेनुके दत्वे (तां. ब्रा. २५.१०.२२) ति ब्राह्मणस्य शेषमाह—

**तस्यामश्वां च पुरुषीं च धेनुके यज्ञोपकरणशेषांश्चाभिरूपायान्यस्मै दद्युः ॥२५॥**

इति। पुरुषीं दासीमश्वां च धेनुके अचिरात् संजातवत्से योग्याय कस्मैचिद् दद्युः ॥२५॥

अत्र निदानकारेणोक्तम्—कर्तृभिः संयुक्ताः क्रतुदक्षिणा भवन्ती (नि. सू. १०.१०. ) ति। अत आह—

**स्वामिनो हि सर्वे सत्रेषु तेषां प्रतिग्रहणं न विद्यते इति ॥२६॥**

सत्रिणां स्वामित्वात् अन्योन्यं प्रतिग्रहोऽयुक्तः ॥२६॥

**उक्तोऽवभृथो ब्राह्मणेन ॥२७॥**

इदं च तद् ब्राह्मणम्—कारपचवं प्रति यमुनामवभृथमभ्यवयन्ती (तां. ब्रा. २५.१०.२३) ति ॥२७॥

**अपृष्ठशमनीयमेतत् ॥२८॥**

यदेतत् सामान्येन सत्रसमाप्तौ पृष्ठशमनीयो ज्योतिष्टोम शाखान्तरविहितस्तस्य निषेधोऽयम्। सारस्वततन्त्रे कृते पृष्ठशमनीयो न कार्य इति ॥२८॥

**इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले द्वितीयः खण्डः ॥२॥**

---

1. My[2] एवमुक्ताम् for एकेMy[1] befor श्रवणात् adds कृत्वा;

2. My[1-4] C. ;om. स्रवणात्; C. इष्टम् for एवेष्टिः

9. My[1] om. क्रतुदक्षिणाMy[4] भवति for भवन्ति

13. My[2] न मुक्तः for अयुक्तः

19. My[1] My[4] C. सारस्वतः for सारस्वततन्त्रे . . . न कार्य इति

## तृतीयः खण्डः

**एतेनैवोत्तरे व्याख्याते ॥१॥**

**उत्तरे** इन्द्राग्न्योरयनमर्यम्णश्चायनम् ॥१॥

**तत्राग्नये कामायेष्टिरपोनप्त्रीया च स्रुवहोमौ स्याताम् ॥२॥**

उत्तरयोः सारस्वतयोरिष्टयनाभावात् तन्मध्ये इष्टिर्न कार्या। सुत्याव्यवायप्रसङ्गात्। किंतु तत्स्थाने केवलमपांनप्त्रे स्वाहाग्नये कामाय स्वाहेत्याज्येन स्रुवहोमावेव कार्याविति भावः ॥२॥

तदेव स्पष्टयन्नाह—

**इष्टिरेवाग्नये कामयोपरिष्टाच्चेदतिरात्रस्येति शाण्डिल्यः ॥३॥**

इति। यदा सत्रसमाप्तावतिरात्रस्योपरिष्टादग्नये कामायेष्टिरिति पक्षस्तदानीमसाविष्टिरेव। न स्रुवहोमः। तदानीमिष्ट्या सुत्यानां व्यवायाभावात्। अत्र ब्राह्मणम्—**अतिरात्रस्त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनम्। गो आयुषी इन्द्रकुक्षी अतिरात्रः** (तां. ब्रा. २५.११.१) इति। तस्यायमर्थः। अमावास्यायां प्रायणीयमतिरात्रं कृत्वा त्रिवृत्पञ्चदशस्तोमाभ्यां सुत्याभ्यां व्यत्यासं पूर्वपक्षे गच्छेयुः। ततो गो आयुषी कुर्युरिति। तथा तृतीये सारस्वते त्रिकद्रुकैः परिवृतैर्गमनमुक्त्वा विश्वजिदभिजिताविन्द्रकुक्षी इति ब्राह्मणम् ॥३॥

तत्रेन्द्रकुक्ष्योः कालनिर्णयमाह—

**पर्वणोरिन्द्रकुक्षी ॥४॥**

इति। गोआयुषोर्विश्वजिदभिजितोश्च नामधेयम् इन्द्रकुक्षी इति। कुक्षिस्थानीयत्वात् ॥४॥

---

4. My[2] ⁰नप्त्रिया for ⁰नप्त्रीया

6. My[2] कामायेत्यनेन for कामाय स्वाहेत्याज्येन

12. My[2] after एव ins. इति

14. My[2] om. अमावास्यायां

15. O. My[1] तथा for ततो

20. My[1] before गो⁰ adds: इन्द्रकुक्षी इति My[1] om. कुक्षी इति

तत्र गौः पौर्णमास्यामायुरमावास्यायाम् । तथैव विश्वजिदभिजितोरपि क्रमे प्राप्ते विशेषमाह—

**पौर्णमास्यामभिजित् ॥५॥**

इति । विश्वजित्त्वमावास्यायामिति परिशेषसिद्धम् ॥५॥

तत्र त्रिवृत्पञ्चदशमिन्द्राग्न्योरयनमि [(तां. ब्रा. २५.११.१) ति ब्राह्मणस्य गौतममतेनार्थमाह—

**पूर्वस्याग्निष्टोमौ त्रिवृती रथन्तरबार्हते पूर्वपक्ष उक्थ्ये पञ्चदशे राथन्तरबार्हते अपरपक्ष इति गौतमः ॥६॥**

इति । पूर्वस्य सारस्वतस्य **पूर्वपक्षे** सर्वत्र त्रिवृदग्निष्टोम एव कार्यः । अपरपक्षे पञ्चदश उक्थ्यः कार्यः । इति ब्राह्मणार्थः । तत्र राथन्तरं प्रथममहः । द्वितीयं बार्हतम् इति व्यत्यासमजामित्वार्थम् ॥६॥

**ते न पक्षयोः संचारयेत् ॥७॥**

**ते** त्रिवृत्पञ्चदशे **न** कदाचिदपि **पक्षयोः संचारयेत्** । तत्र नियतावेतौ स्तोमावित्यर्थः । यथा पूर्वस्मिन् पक्षे दर्शपूर्णमासौ नियतौ तद्वदत्र त्रिवृत्पञ्चदशाविति गौतमस्य भावः ॥७॥

अथ स्वमतमाह—

**सर्वत्र त्वेव त्रिवृत्पञ्चदशौ व्यत्यासं स्याताम् ॥८॥**

इति । प्रतिपक्षमुभावपि स्तोमौ साम्येन व्यत्यस्येदित्यर्थः ॥८॥

यदा वृद्धिक्षयवशादेकस्मिन् पक्षे समप्रयोगो न सिद्ध्यति तदा कथम् । अत स्तत्राह—

**तयोर्यस्मिन्ननुपेते पर्वागच्छेत्तेनोत्तरं पक्षमुपक्रमेत ॥ ॥९॥**

---

7. My[2] उक्थे for उक्थ्ये

13. My[2] तत्र तत्र for तत्र My[2] om. स्तोमौ;

14. C. तथा for यथा

17. My[1] M. C. My[4] देशे for °दशौ; My[1] before व्यत्यासं adds:— कदाचिदपि पक्षयोः

18. My[1] om. साम्येन

19. My[1] om. अतस्

**तयोरेवं** व्यत्यासकरणे **यस्मिन्नकृते पर्वागच्छेत्** तत्रैन्द्रकुक्षी कृत्वा तदनन्तरं पूर्वमकृत**मुपक्रमेत** । न पुनः प्रथमप्रवृत्तेन त्रिवृतैवेति नियमः ॥९॥

**एतेनोक्तमुत्तमस्य त्रिकद्रुकेषु ॥१०॥**

**उत्तमस्य** सारस्वतस्य त्रिकद्रुकेष्वेतेनैव न्यायेन पक्षान्तरे प्रारम्भः । न पुनस्त्रिकद्रुकाणां प्रथमेन ॥१०॥

अथ संवत्सरं ब्राह्मणस्य गा रक्षेदि (तां. ब्रा. २५.१३.१) त्यारभ्य दार्षद्वतमिष्ट्ययनं तुरायणं च ब्राह्मणेन विहितम् तयोर्नियममाह—

**दार्षद्वततौरयोर्व्रतानि ॥११॥**

इति । वक्ष्यन्त इति शेषः । तुरो नाम ऋषिः । तस्यायनं तौरम् ॥११॥

**तिष्ठेद्दिवासीत नक्तम् ॥१२॥**

**हविरुच्छिष्टभोजी स्यात् ॥१३॥**

**अमांसाशी ॥१४॥**

**अलवणाशी ॥१५॥**

**न स्त्रियमुपेयात् ॥१६॥**

स्पष्टानि ॥१२-१६॥

**यथा प्रकृत्याहिताग्निवृत्तिं वर्तयेत् ॥१७॥**

यथापूर्वमन्यामाहिताग्निवृत्तिं नानृतं वदेदित्यादिकामनुतिष्ठेत् ॥१७॥

अथ दार्षद्वते विशेषमाह—

**दार्षद्वते संवत्सरं ब्राह्मणस्य गा रक्षेदृत्विज आचार्यस्य वा ॥१८॥**

स्पष्टम् ॥१८॥

---

3. C. उत्तरस्य for उत्तमस्य

4. My[1] प्रक्रमान्तरे for न्यायेन पक्षान्तरे

7. My[1] My[4] C. नियमान् कर्तव्यान् for नियमम्

12. C. before अमांसा⁰ adds अधः संवेशी

17. My[2] अन्याहित⁰ for अन्यामाहित⁰; My[1] om. नानृतं वदेदित्यादिका

अथ **व्यर्णेनैतन्धवेऽग्निमिन्धीते** (तां. ब्रा. २५.१३.१) ति ब्राह्मणं व्याचष्टे—

**नैतन्धवानामार्म्माः सरस्वत्यां तेषामेको व्यर्णस्तस्मिन् संवत्सरमग्निमिन्धीतथैकाग्नेः परिचर्या तथा ॥१९॥**

इति। अर्मा नाम चिरंतनग्रामनिवासाः। तथा च मन्त्रः—तेषामिमे पूर्वे अर्म्मास आसन्नयूपाः समविभृताः पुरूणीति अर्म्मकपालैः संसृजती (तै. आ. ५.२.१३) ति चाध्वर्युब्राह्मणम्। सरस्वत्यास्तीरे नैतन्धवनामधेया बहवो ग्रामनिवासास्तेषामेको व्यर्णनामकस्तस्मिन्नेकाग्नेरौपासनस्य परिचर्यया संवत्सरमग्निं परिचरेत् ॥१९॥

**अग्निहोत्रमेव जुह्वत् पुरस्ताच्चेदाहिताग्निः ॥२०॥**

**आहिताग्निश्चेत्** तदानीं श्रौताग्नीनेवाग्निहोत्रेण परिचरन् वसेत् ॥२०॥

**परीणह्यग्नीनाधीते** (तां ब्रा· २५.१३.१) ब्राह्मणं व्याचष्टे—

**संवत्सरादूर्ध्वं परीणं नाम स्थली कुरुक्षेत्रे तस्यामग्नीनाधाय यथाकालमन्वारम्भणीयेष्टयेष्ट्वा प्रसृज्येतेति शाण्डिल्यः ॥२१॥**

आधानानन्तरं सर्वेष्ट्यङ्गत्वादन्वरम्भणीयां कृत्वा दर्शपूर्णमासावकृत्वैव तन्निवासं विसृज्य दार्षद्वतं कर्तुं गच्छेत्। कुतः। आधानानन्तरमेव दार्षद्वतविधानात् ॥२१॥

**दर्शपूर्णमासाभ्यां यजेतेति धानंजय्यः ॥२२॥**

दार्षद्वतानां गत्वापि तयोर्नित्यत्वादनुष्ठानमिति मन्यते ॥२२॥

**सायंप्रातराहुतीरेव हुत्वा पुरस्ताच्चेदाहिताग्निः ॥२३॥**

---

5. My[2] कलापैः for अर्म्मकपालैः

10. My[1] °होत्रे for °होत्रेण

12. My[1] परिणह्यं C. परिणह्यग्नि My[2] परिणं for परीणं

14. My[1] तं च वासं for तं निवासं

15. My[1] आगमन for आधान°

18. My[1] द्वतान for °द्वतानां

पूर्वमेवाहिताग्निश्चेत्तदानीं तानेवाग्नीनदृष्टार्थं परिणह्यानीयाग्निहोत्रमेव कृत्वा गच्छेत् ॥२३॥

**सरस्वतीदृषद्वत्योः संभेदं प्राप्याग्नेयेनाष्टाकपालेन यष्टुमुपक्रमेत ॥२४॥**

स्पष्टम् ॥२४॥

**अत्र शम्याप्रासनं यथा सारस्वतेषु ॥२५॥**

अत्रापि सारस्वतवत् प्रतीतापगमनमिष्टिसंस्थासु शम्याप्रासनं च ॥२५॥

**न तु प्रक्रमान् प्रक्रामेत् ॥२६॥**

नात्र षट्त्रिंशत्प्रक्रमाः कार्याः । ऐष्टिक एव विहारः ॥२६॥

**काममनेकामिष्टिमेकैकेनाह्ना संस्थापयेत् ॥२७॥**

एकस्मिन् दिवसे सकृदेवेष्टिरिति न नियमः ॥२७॥

**दृषद्वत्या दक्षिणेन तीरेणेयात् ॥२८॥**

स्पष्टम् ॥२८॥

**तस्याः प्रभव्यमर्मं प्राप्यैतयेष्टचेष्ट्वा त्रिप्लक्षापहरणं प्रति यमुनामवभृथमभ्यवेयात् ॥२९॥**

प्रभव्यमित्यभिहितः कश्चित् चिरन्तनो ग्रामनिवासः तीर्थविशेषः त्रिप्लक्षापहरणम् ॥२९॥

**यत्र क्व च ततो यमुनातीरे स्यादिति धानंजय्यः ॥३०॥**

नावश्यं त्रिप्लक्षे । यत्र क्वापि यमुनातीरे गत्वावभृथः स्यात् । तस्य समीपे यमुनाप्रवाहोऽवश्यंभावी ॥३०॥

**तत्रैतयेष्टचेष्ट्वा स्वयं साम गायन्नवभृथमभ्यवेयात् ॥३१॥**

प्रस्तोतुरभावात् स्वयमेवावभृथसाम गायेत् । तत्र सौमिकावभृथवत् स्नानम् । नात्र वारुणीष्टिः । तत्स्थाने एतयेष्ट्येष्ट्वेति वचनात् ॥३१॥

---

1, 20. My[1] आहिताग्नीन् for अग्नीन्

7. My[4] प्रति° for प्रती°

8. My[1-2] M. C. प्रक्रमात् for प्रक्रमान्; My[2] तं for तु; My[1] प्रक्रमेत् for प्रक्रामेत्

11. My[2] तन्नियमः for न नियमः

19. My[2] °तीरं for तीरे; My[2] °भृथं for °भृथः;

**अगायन्वा ॥३२॥**

स्पष्टम् ॥३२॥

**प्रव्रजिष्यतोऽयनमिदं मन्य इति शाण्डिल्यः ॥३३॥**

प्रव्रज्यामुत्तमाश्रमं प्रवेक्ष्यतो दार्पद्वतमिष्ट्ययनम् ॥३३॥

अत्र **यमुनामवभृथमभ्यवैति तदेव मनुष्येभ्यस्तिरोभवती** (तां. ब्रा. १५. १३.४) ति ब्राह्मणम् । तदुपादाय व्याख्याविकल्पानाह—

**तदैव मनुष्येभ्यस्तिरोभवतीति स्वर्गं लोकमाक्रमते ॥३४॥**

इति । कृतावभृथस्त**दैव तिरोभवति** । **स्वर्गं लोकमाक्रमते** । न संदेह इत्यर्थः ॥३४॥

**व्यावर्तते श्रेयान् भवतीति वा ॥३५॥**

अथवा मनुष्येभ्यस्तिरोभवति **व्यावर्तते** श्रेष्ठो भवतीत्यर्थः ॥३५॥

**न ग्रामं पुनरेयादिति वा ॥३६॥**

अथवा मनुष्येभ्यस्तिरोभवतीति विधिरयं नार्थवादः । तिरोभवेत् अरण्ये तिरोभूय वसेत् । न ग्रामं गच्छेदित्यर्थः ॥३६॥

**उदकान्तर्धानाद्वा ॥३७॥**

अवभृथोदकान्तर्धानाद्वा तिरोभवतीति वादः । योऽयमुदकान्तर्भावः स साक्षान्मनुष्यलोकादन्तर्भाव इत्यर्थः ॥३७॥

तत्र दृष्टान्तमाह—

---

1. My[1] अगापयनवा My[4] अगायित्वेति for अगायन्वा

3. My[2] ⁰व्रजिष्यता⁰ for ⁰जिष्यतो⁰; My[2]. मन्यत⁰ for मन्य⁰

6. My[2] व्याख्यान⁰ for व्याख्या⁰

7. My[1] M C तदेव My[2] देव for तदैव

16. My[2] यदिदंमुदकान्तर्भावं तत् for योऽयमुदकान्तर्भावः स

18. My[1] अत्र for तत्र

**यथा सरजस इति ॥३८॥**

इति। वाजपेये यूपारोहणं विधाय ब्राह्मणम् **सरजसे रोहति मनुष्यलोका-देवैनमन्तर्दधाती** (तां. ब्रा. १८.७.११) ति। तस्यार्थः। आ (?वा) जिधावनेनोत्ता-पितरजः सहिते सत्याकाशे तेन रजसाच्छन्नो यूपमारोहेत्। तथा सति मनुष्य-लोकादन्तर्हितो भवति। तद्वदेतत्तिरोभवतीति वाक्यम् ॥३८॥

**इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले तृतीयः खण्डः ॥३॥**

---

3. My[2] आधन्वन्तो for वाजिधावनेनो[0]

4. My[2] आकाशात् for आकाशे

5. My[1]My[4] C. इदं for एतत् My[1] वक्ष्यामि for वाक्यम्

## चतुर्थः खण्डः

**संवत्सरमहरहस्तौरेण यजेत ॥१॥**

तुरस्य देवमुनेरयनं तौरम् ॥१॥

तस्यारम्भकालमाह—

**षष्ठ्यां चैत्री पक्षस्येत्याचार्याः ॥२॥**

**पञ्चम्यामिति शाण्डिल्यायनः ॥३॥**

इति । स्पष्टे ॥२-३॥

अथ तस्यारम्भदिवसे कर्तव्यमाह—

**प्रातराहुतिं हुत्वा व्रतोपायनीयमोदनमशित्वा केशश्मश्रूणि वापयित्वाहतं वसनं परिधाय परिसमूह्याग्नीन् परिस्तीर्य प्रणीताः प्रणीय दण्डं पाणौ कृत्वा मेखलामाबध्य नवनीतेनाङ्गान्यभ्यञ्ज्य पश्चात् गार्हपत्यस्योपविश्य स्वयं कृष्णाजिनं प्रतिषज्येत तूष्णीम् ॥४॥**

अत्र प्रातराहुतिभोजनयोः शाखान्तरसिद्धयोरनुवादः । क्रमार्थः । इष्ट्यङ्गभोजनं व्रतोपानीयमोदनमशित्वेत्युच्यते । इतरेषां वपनादीनां प्राप्तानामेव विधिः । केचित्तु अहरहरेतत् सर्वं कर्तव्यमित्याहुः ॥४॥

**पश्चिमेनाहवनीयं दक्षिणातिक्रम्यैतत् कुर्यात् ॥५॥**

स्पष्टम् ॥५॥

**तत्र तिस्र इष्टयः । पूर्वाह्ण एका । पृथक्त्वं मध्यंदिनापराह्णयोः ॥६॥**

स्पष्टम् ॥६॥

**तासु पृथगनुपूर्वं हवींषि यान्युक्तानि ब्राह्मणेन ॥७॥**

**आग्नेयोऽष्टाकालः** (तां. ब्रा. २५.१४.१) इत्यादि ब्राह्मणेन त्रीणि हवींष्युक्तानि । तानि पूर्वाह्णादिकालत्रये क्रमेण स्युः ॥७॥

---

3. My[2] after मुनेर् ing. ब्राह्मणोक्तस्य

12. My[1-2] अभ्यज्य for अभ्यञ्ज्य

16. My[2] om. सर्वं

**एका वैव स्यात्तस्यां तानि सर्वाणि स्युः ॥८॥**

अथवा येष्टिस्तस्यामेव तानि त्रीण्यपि हवींषि स्युः । त्रिहविष्केत्यर्थः ॥८॥

**तत्र सामगानं यथा पूर्वस्मिन् ॥९॥**

तत्रापि सत्रसमाप्तौ पूर्ववदवभृथसामगानम् ॥९॥

**उभयोस्त्ववभृथादुदेत्य यत् पुरस्तादिष्टचयनं तेनेष्ट्वा सोमेन यजेत ॥१०॥**

**उभयो**रपि दार्षद्वततुरायणयोरवभृथान्ते पूर्वंकृतमेवेष्टिं सकृत् कृत्वा सोमेन **यष्टव्यम्** ॥१०॥

पक्षान्तरमाह—

**यावन्ति वा हवींषि पुरस्तात् तावद्भिर्वा पशुभिस्तद्दैवत्यैः ॥११॥**

इति । **तद्दैवत्यैस्तावद्भिः पशुभि**रवभृथान्ते यजेत । यत्र एवाग्नेयःपशुः । दार्षद्वततुरायणे त्वाग्नेयैन्द्रवैश्वदेवास्त्रयः पशवः ॥११॥

अथ सर्पसत्रस्य ब्राह्मणम्—**अतिरात्रावभितोऽग्निष्टोमा मध्ये सर्वो दशदशी-संवत्सरः** (तां. ब्रा. २५.१५.१) इति ।

मतान्तरेण व्याचष्टे—

**सर्पसत्रं गवामयनं स्तोमसंस्थाविकृतमित्येके ॥१२॥**

गवामयनमेवाग्निष्टोमसंस्थामात्रविकृतं च तत् सर्पवत् सत्रम् । न पुनरन्यत् इति । ब्राह्मणस्य चायमर्थः । योऽयं संवत्सरो गवामयनरूपः स सर्वो दशदशस्तोमः स्यात् अहानि च सर्वाण्यतिरात्रवर्जमग्निष्टोमः स्युः ॥१२॥

---

2. My[1] एकैवेष्टिः for येष्टिः · · ·स्युः

7. My[1] तौरा° for तुरा° My[2] om. सकृत्

12. My[4] C M देवत्यैः for दैवत्यैः

14. My[4] सवा for सर्वो

17. M. सोम° for स्तोम°

18. My[1] My[4] C. after विकृतं Add:—दशिस्तोममत्रविकृतं तत्

कुत इत्याह—

**षण्डकुषण्डावभिगरापगराविति ह्याह ॥१३॥**

इति । **षण्डकुषण्डौ** नाम ऋषी गीतौ पुराकल्पे सर्पसत्रेऽभिगरापगराविति कीर्तयति । अभिगरापगरौ च गवामयने महाव्रत एव । नान्यत्र । तथा चात्र ब्राह्मणम्—**अभिगरापगरौ भवतो निन्दत्येनानन्यः प्रान्यः शंसती** (तां. ब्रा. ५.५.१३) ति अभिगरो नाम प्रशंसिता । अपगरो निन्दिता । एवं तयोरिह दर्शनात् गवामयनमेव सत्रमित्यनुमीयते ॥१३॥

तदेतद्दूषयति—

**प्रत्यक्षविहितं त्वार्षेयकल्पेन तत्रानुमानं न विद्यते ॥१४॥**

इति । कल्पकारो हि ऐकाहिकेन राड् विराड्द्वन्द्वेन पुनः पुनरभ्यस्तेन सर्पसत्रं कल्पयति । एवं सत्यभिगरापगराभ्यामनुमानं न युक्तम् ॥१४॥

क्व तर्हि तयोर्दर्शनम् । अत आह—

**अभिगरापगरावेवोपोत्तमेऽहनि स्याताम् ॥१५॥**

इति । उपोत्तमस्याह्नो महाव्रतत्वाभावेऽपि अभिगरापगरमात्रं वाचनिकमिति अनुवाददर्शनात् कल्प्यमिति मन्तव्यम् ॥१५॥

**पौर्णमासीप्रसवं त्रिसंवत्सरम् ॥१६॥**

त्रिसंवत्सरसत्रस्य पौर्णमास्यां प्रथमसुत्या ॥१६॥

**तस्य याथाकामी दीक्षाणाम् ॥१७॥**

दीक्षाणां तु द्वादशदिवसेभ्य ऊर्ध्वं याथाकाम्यम् ॥१७॥

**षष्टिरिति शाण्डिल्यः ॥१८॥**

षष्टिरेव दीक्षा न याथाकाम्यम् ॥१८॥

---

3. My[1-2] नाम. . .र्षि गीतौ for नाम ऋषी गीतौ

10. My[2] एतेनैव for ऐकाहिकेन राड्⁰

My[1] My[4] C. om. अभ्यस्तेन

12. My[2] कथं for क्व; My[1] C देशनम् for दर्शनम्

14. My[2] om. ⁰अपगर⁰

15. My[1] मातपव [. . .] My[4]. मातपवमिति, for अनुवाद· · ·मन्तव्यम्; C. om. अनु. . .त्रिसंवत्सरम् (L. 16)

18. My[1] याथाकाम्यं for याथाकामी; M दक्षिणां for दीक्षाणा

19. My[2] दीक्षायां for दीक्षाणां; My[1] यथा⁰ for याथा⁰

**प्रथमोत्तमौ संवत्सरौ व्यतिहरेदिति धानंजय्यः ॥१९॥**

त्रिसंवत्सरसत्रे प्रथमोत्तमावन्योन्यस्थानं व्यतिहरेत्। अङ्गिरसामयनमादितः कुर्याद्गवामयनमन्ततः इति व्यतिहारः ॥१९॥

अथ किमर्थो व्यतिहारः। अत आह—

**अभिप्लवस्तोमपृष्ठ्यदेशरोहार्थः ॥२०॥**

इति। अभिप्लवस्य स्तोमोऽभिप्लवस्तोमः। पृष्ठ्यस्य स्थानं पृष्ठ्यदेशः। तयोरुभयोरपि रोहार्थो व्यतिहारः। रोहो नाम कनीयसः स्तोमस्य प्रथमकरणं ज्यायसश्च पश्चात्करणम्। तद्विपरीतः प्रत्यवरोहः। स च निन्दितः। यथोक्तं तैत्तिरीयब्राह्मणे—जामि वा एतत् कुर्वन्ति यज्ज्यायांसं स्तोममुपेत्य

---

1. M. संवत्सरं My[2] संवत्सरेण for संवत्सरौ

3. My[1-2] C. om. गवामयनमन्ततः;

6. My[2] स्थाने for स्थानं;
   My[2] ॰पृष्ठ्या for पृष्ठ्यस्य

7. My' रोहसिद्ध्यर्थो for रोहार्थो

9. C. om. जामि वा...स्तोममुपेत्य and adds instead:- जामि प्रयतेति कृताः। सर्वस्वारस्य ब्राह्मणम्—त्रिवृदग्निष्टोमः स सर्वस्वारः यः कामयेत। नामयतामुं लोकमियामीति स एतेन यजेतेति। तस्य सर्वस्वारस्य कृतिरुच्यते। सर्वाण्यस्मिन स्वराणीति सर्वस्वारः। तेन सर्वस्वारे तत् प्रयत्नं कुर्यात्। यथा सौत्येऽहनि प्रेत्याम्। प्रेत्यामिति कथम्। तत्र दीक्षास्तावदपरिमिताः कुर्यात्। प्राणभक्षं सर्वत्र भक्षयेत्। दीक्षाभ्य आरभ्य यावन्तो भक्षमिक्षाः तान् सर्वान् प्राणभक्षं भक्षयेन्न प्रत्यक्षभक्षम्। सर्वग्रहणात्तत्रापि प्रास्येत् (?) कर्तेवानुपेचयेत्। तान् भक्षान् अपः अभ्यवहारयेत्। अस्थ् (!) प्रक्षेपयेत्। कर्तेव प्रक्षित (!)। सोममद्भिः संसृज्य मार्जालीयसदेशे निनयेयुः। सोमं प्राणमद्भिः संसृज्य मार्जालीयसंनिकृष्टेक्षणम्। आर्भवे पवमाने स्तूयमान ओं हुं वर्याः दक्षिणाप्रवृतो निपतेत कृष्णाजिनमुपस्तीर्य दक्षिणाशिरास्तदेव संगच्छते। तदेव म्रियते इति। इह ब्राह्मणम्—आर्भवे पवमाने स्तूयमानवयोदक्षिणां प्राकृते (।) पवमाने स्तूयमाने अं हुं, वर्याः दक्षिणे प्रदेशे कृष्णाजिनमुपस्तीर्य दक्षिणाशिराः निपद्येत संविशेत्। तदेव संगच्छते। म्रियत इति। संगमनं मरणम्। एतं मृतं यजमानं हविर्भिः सह गिपपधि (!)—

**कनीयांसमुपयन्ति** (तै. ब्रा.          ) इति । अत्र च व्यतिहारे सति प्रथमेऽङ्गिरसामयने त्रिवृतोऽभिप्लवाः । मध्यमे आदित्यानामयने त्रिवृत्पञ्चदशाः । उत्तमे गवामयने सप्तदशादयोऽपि । [अत्रा-]भिप्लवेषु कियन्त इत्येवं [प्रश्ने] स्तोमरोहसिद्धिः । तथा प्रथमेऽङ्गिरसामयने पुरस्तात् पृष्ठ्या मासा भवन्ति । आदित्यानामयने मध्ये पृष्ठ्याः । गवामयने उपरिष्टात् पृष्ठ्या इति पृष्ठ्यदेशरोहसिद्धिरिति ॥२०॥

**अमावास्याप्रसवे सहस्रसंवत्सरे सहस्रसंवत्सरे ॥२१॥**

इति । प्रजापतेः सहस्रसंवत्सरं विश्वसृजामयनं सहस्रसंवत्सरं च द्वे अपि सत्रे **अमावास्याप्रसवे** भवतः । अमावास्यायां प्रथमसुत्या यस्य तदमावास्याप्रसवम् । तथा सति पूर्वपक्षे उत्थानसिद्धिरिति ॥२१॥

**इति द्राह्यायणश्रौतसूत्रे एकत्रिंशे पटले चतुर्थः खण्डः ॥४॥**

---

2. C. om. उत्तमे गवामयने; My[2] मध्ये for मध्यमे;
   My[1] °पञ्चदशौ for पञ्चदशाः

5. My[2] om. पृष्ठ्याः

7. My[1] अमावास्यायां M अमावास्यायाः for अमावास्या°

   My[2] om. सहस्रसंवत्सरे प्रजापतेः सहस्रसंवत्सरं (L. 8)

8. My[1] after सृजां ins. अयनं
   My[2] om. अयनम्

9. My[4] om. सत्रे

10. My[1] °पक्षोत्थान° for °पक्ष उत्थान°

11. My[1] concludes —"एकत्रिंशे ॥४॥ क्षन्तुमर्हन्ति सन्तः । हरिःओम् । शुभमस्तु । श्रीरामाय नमः । धर्मसंवर्द्धनीव [        ] शुभपञ्चनदीश्वराय नमः । ग [...] सुदर्शनदीक्षितस्य लिपिः । अस्मद्गुरुभ्यो नमः । शुभमस्तु॥; My[4] एकत्रिंशोऽन्त्यः पटलः समाप्तः ॥ द्राह्यायणकृते सूत्रे दीपे धन्विविनिर्मिते । प्रथमः पटलो वृत्तः त्रिंशास्त्र पटलादधि ॥ प्रीतये तद्धरेरस्तु भाष्यं धन्विविनिर्मितम्। इति श्री द्राह्यायणकृत सूत्र दीपिकायां धन्विविनिर्मितायामेकत्रिंशः पटलः समाप्तः ॥ प्रधानसूत्रभाष्यं समाप्तम् ॥ करकृतमपराधं क्षन्तुमर्हन्ति

द्राह्यायणकृते सूत्रे तृतीये दशकेऽधुना ।
एकादशस्तु पट[लो व्याख्यातोऽयं] धनुष्मता ॥१॥

निदानकल्पोपग्रन्थब्राह्मणानि पुनः पुनः ।
समीक्ष्य धन्वी मेधावी दीपमारोपयत् स्फुटम् ॥२॥

इति छन्दोगसूत्रस्य सुतसोमेन धन्विना ।
आरोपितः प्रदीपोऽयं प्रीयतां पुरुषोत्तमः ॥३॥

छन्दोगसूत्रहृदयं यथातत्त्वं दिदृक्षुभिः ।
धन्विनारोपितो दीपो हस्ते यत्नेन धार्यताम् ॥४॥

**इति श्री धन्विविरचिते द्राह्यायणश्रौतसूत्रदीपे एकत्रिंशः पटलः समाप्तः ॥३१॥**

॥ समाप्तोऽयं ग्रन्थः ॥

---

सन्तः । धर्मवर्धनीवल्लभपञ्चनदीश्वराय नमः । शंकरनारायणश्रौतिनो लिपिः ॥ अस्मद्गुरुभ्यो मधुरापुरवासिभ्यो मीनाक्षिसुन्दरेश भक्तेभ्यो सुब्रह्मण्य श्रौतिभ्यो नमस्करोमि ॥; C. काश्यपगोत्रेण सुतसोमेन सुधिया सूत्रस्यारोपिते पुरुषोत्तमः । निदानकल्पोपग्रन्थतस्य दीपमारोपयत्स्फुटम् । छन्दोग्रन्थहृदये याथातथ्यं . . . ’पितो दीपो हस्तेन धार्यताम् ॥ इति उत्तरार्ध त्रीभाष्यं समाप्तम् ॥; My[2] ॥३१॥४॥ द्राह्यायणकृते सूत्रे तृतीये दशकेऽधुना । एकादशस्य पट . . . धनुष्मता । निदानकल्पोपग्रन्थब्राह्मणानि पुनः पुनः । समीक्ष्य धन्वी मेधावी दीपमारोपयत् स्फुटम् ॥ इति छन्दोगसूत्रस्य सुतसोमेन धन्विना । आरोपितः प्रदीपोऽयं प्रीयतां पुरुषोत्तमः ।[छन्दोग] सूत्रहृदयं यथातत्त्वं दिदृक्षुभिः । धन्विनारोपितो दीपो हस्ते यत्नेन धारयेत् ॥ नमो द्राह्यायणाय ॥

# INDEX

Technical terms, names of Samans and the words having some connection with Shrauta Mituals are separated from Compounds and listed in their alphabetioal sequence. The hyphen at the end, begining or both the [points of a word indicates the position of that word in the compound. References are to sutras in the text.

अ

## आ

## इ

ऊ

## ऋ

## ऐ

क

## ज

## द

## ध

प

म

य

व

## श

## स

F. 18

### ह

# INDEX OF NAMES AND WORKS

(Alphabetical Index of names of ritual authorities and of works cited by name or quoted (A) in the D. S. Sūtras and (B) in the Commentary.)

A—(1)



A—(2)



B—(1)



B—(2)

# GLOSSARY

Explanation of technical terms and words having special significance found in the text or Commentary, is given below in commentator's own words. If, however, no explanation is found in the commentary, the same is given in English or Sanskrit by the editor, the names of Sāma-gānas are not included,

| Word | Explanation | Page |
|---|---|---|
| अक्रान्तैः | असंक्रान्तैः अविलम्बितैरित्यर्थः | 136 |
| अक्षरसधातुसाम | यावत्संभवं योन्यक्षरसंपादनेन गीतेर्विधानम् । तदक्षरसधातुसाम । | 429 |
| अक्षाभिहोमः | N. of an offering made at the end of अग्न्याधेयेष्टि | 272 |
| अग्निचित्या | Arranging the Sacrificial fire-place | 296 |
| अग्निपदः | अग्नेराहवनीयस्य आधाने यदपेक्षितमश्वादिपदं तत्सिद्ध्यर्थो योऽश्वादिरानीयते सोऽग्निपदोऽश्वादिः | 271 |
| अग्निप्रणयनम् | The act of bringing out the sacrificial fire | 275 |
| अग्निष्टुत् | N. of a Ekāha sacrifice in which Agni is invoked to be present and accept the Soma oblation | 26 |
| अग्निहोत्रहवनी | A spoon used at the Agnihotra | 504 |
| अग्नीषोमप्रणयनम् | अग्निश्च सोमश्च अग्नीषोमौ । तयोः प्रणयनम् (Bringing out the Agni and Soma, a ceremony in Soma Sacrifice) | 299 |

| Word | Explanation | Page |
| --- | --- | --- |
| अग्नीषोमीय— | a ceremony in अहीन sacrifices in which libation of पुरोडाश is offered;=Connected with अग्निषोम (पशु), an animal victimised in this ceremony. | 29 |
| अग्नियवती | The Sāman hymn that begins with verse having the word अग्निय- (पवस्वं वाचो अग्निय सा. 775-7) | 178 |
| अच्छावाकः | One of the three Assistants of होतृ the chief officiating priest who is to recite the Ṛgvedic hymns. | 100 |
| अतिदेशः (e) | extended application of a rule previously stated | 2 |
| अतिरात्रः | A scarificial session Commences with अतिरात्र ceremony and also concludes with अतिरात्र, lasting one day each. The क्लृप्ति[2] of these अतिरात्र[3] are the same and the procedures are almost identical in all respects; in sacrifices of Ahīna category there are a number of sacrifices called Atirātras beginning with jyotiṣṭoma-atirātra to एकादशातिरात्र; the अतिरात्र of the jyotiṣṭoma Sacrifices is an independent Sacrifice like Agniṣṭoma | 29 |

# GLOSSARY

| Word | Explanation | Page |
|---|---|---|
| अत्सरुकाश्चमसा: | त्सरुरहिताश्चमसा: । कुण्डसदृशा इत्यर्थ: । Large wooden cups without handles for drinking Soma juice. | 681 |
| अधिमेथनम् | मिथुनप्रोत्साहनम् | 572 |
| अधिषवणे | येन शकटेन मृतं निर्हरेयुस्तस्य शकटस्य च कत्योर्ये मध्यमे फलके ते द्वे अधिषवणफलके ॥ | 479 |
| अध्यास: See अनध्यासा | | |
| अध्वर्यु: | The chief officiating priest of अध्वर्युगण and the principal ऋत्विक् of a sacrifice has to recite. | |
| अध्वर्युपथम् | The steps built with bricks for Adhvaryu | 41 |
| अध्वर्युसंप्रैष: | कर्मणामुपक्रमेषु अध्वर्युणा प्रार्थनं कारयेत् । अत्रभवता ब्रह्मत्वं कार्यमिति अध्वर्युप्रार्थित एव ब्रह्मत्वं कुर्यात् | 255 |
| अनध्यासा | साध्यासा अनध्यासा चेति द्विविधा बृहती । परीतो षिञ्चता सुतम् । (सा. १३१३) इति अभिसोमास आयवः (सा. ८५३ ) इति द्वे बृहत्यौ साध्यासे । अन्या: सर्वा अनध्यासा: । | 338 |
| अनारम्योत्पत्तीनि | स्तोत्रविशेषमनारम्योत्पत्तिर्येषां तानि | 450 |
| अनिरुक्त | not directely expressed, silently recited | 27 |
| अनुक्लृप् | to include within the frame work of | 183 |
| अनुक्री: | द्राहीनोऽनुक्री: ॥ अपरेद्यु: क्रयणाच्चानुक्रीरित्याख्या ॥ यत्र दीक्षादिवसादुत्तरेद्यु: सोम: क्रीयते न सद्य: सोऽनुक्रीरिति समाख्यायते ॥ | 477 |

| Word | Explanation | Page |
| --- | --- | --- |
| शनुप्रेक्षणम् | मनसानुद्रवणम् | 266 |
| अनुरूपः | The second तृच of बहिष्पवमान | 337 |
| अनुव्याहारः | उद्गातुर्न्यूनातिरिक्तकरणदोषोद्भाव-नेनाक्षेपोक्तिरनुव्याहारः | 92 |
| | Blaming or reviling the udgātṛ priest for his lapses | |
| अनुष्टुप् | पञ्चमी धूरनुष्टुप् । यस्या जगत्या उत्तरा स्तोत्रीया तस्या अनुष्टुविति संज्ञा (अ. स्वा ) | 454 |
| अनूस्तरणी | The cow sacrificed at the funeral ceremony of a sacrificeer | 504 |
| अनुचानः | well-versed in Vedic rites कल्पसूत्राध्यायीति बौधायनः | 4 |
| अन्तरयः | mistake; negligence | 10 |
| अन्तर्निधनम् | The nidhanas such as इह इड C that are inserted at the end if each pada or bhakti of | 423 |
| अन्तर्यामः | a sāma-gāna. (अन्तः सामिकानि निधनानि) | |
| अन्तर्यामः | N. of a particular oblation | 304 |
| अन्वारम्भणीया | दर्शपूर्णमासयोरारम्भेष्टिः | 272 |
| अन्वाहारः | पुनः प्रयोगः | 10 |
| अन्वाहार्यपचनः | The southern sacrificial fire, used in the अन्वाहार्य sacrifice | 503 |
| अपगरः | अपरस्यां द्वारि वृषलोऽपगरः प्राङ्मुखः उपविशेत् निन्दार्थम् । यो निन्दति सोऽपगर इत्युच्यते । | 244 |

# GLOSSARY

| Word | Explanation | Page |
|---|---|---|
| अपघाटिला | पत्नीभिर्वाद्यमाना वीणा अपघाटिला इत्याचक्षते | 242 |
| अपराधः | प्रच्युतिः | 220 |
| अपिकक्षः | The region west of the wings of an alter | 37 |
| अभिप्लयः | The region last of the wing of an alter | 37 |
| अप्रतिमा | कर्तव्यस्य विस्मृतिः न प्रतिमा । अनवस्थानमित्यर्थः । | 215 |
| अप्रतिरथम् | आशुः शिशान (सा. 1849) इति सूक्तमप्रतिरथसंज्ञकमध्वर्युप्रसिद्धम् ॥ | 298 |
| अप्सुषोमाः | चात्वालदेशे एकधनावशिष्टाभिरद्भिः पूर्णाः अध्वर्युणा स्थापिताश्चमसाः | 149 |
| अभिक्रान्ती | अभिक्रान्तमभियोगस्तद्वान् | 485 |
| अभिगरः | यः (ब्राह्मणः) सत्रिणो यजमानान् प्रशंसति सोऽभिगर इत्युच्यते स ब्राह्मणः सदसः पूर्वस्यां दिशि प्रत्यङ्मुख उपविशेत् सत्रिणः प्रशंसितुम् । | 244 |
| अभिजित् | N. of a soma sacrifice of one day duration performed as part of गवामयन | 175 |
| अभिध्याततमानि | अतीव श्रद्धेयानि; काङ्क्षिततमानि | 475 |
| अभिप्लवः | N. of a soma sacrifice lasting six days performed as part of गवामयन | 170 |
| अभिवाताः | मृतवत्सा धेनवः | 479 |
| अभिषेचनीयः | N. of one of the seven sutya ceremonies performed as part of Rajasuya | 519 |



F. 21

| Word | Explanation | Page |
|---|---|---|
| अभ्यारोहणीयम् | राजसूये यदभ्यारोहणीयं प्रथममहः | 519 |
| अभ्याश्रवणम् | calling out with the word वौषट् स्वधा etc. in a sacrifice in answer to the summons of अध्वर्यु or any other officiating priest. | 167 |
| अभ्यासङ्ग्यः | to be closely linked together as days by beginning a day with the same ceremony which has been performed at the end of the preceding day. | 591 |
| अयज्ञम् | श्रौताग्निसंबन्धं यत् कर्म स यज्ञः तस्मादन्यत्र स्मार्तादिषु | 131 |
| अयज्ञियम् | अयज्ञियं द्विविधम् । दैवकृतमात्मकृतं चेति । विहारदेशे कृष्णशकुनिस्वापदादि संचारो दैवम् । अमेध्यादिदर्शनं पतितादि संभाषणादिकं चात्मकृतम् । | 266 |
| अयनमासः | अयनमासो नाम पृष्ठ्यपञ्चमैश्चतुर्भिरभिप्लवैर्निर्मितः । पृष्ठ्यं चत्वारश्चाभिप्लवाः षडहाः । एष अयनमासः (अ. स्वा) | 193 |
| अरात्सुः | संसिद्धाः | 244 |
| अर्माः | चिरन्तनग्रामनिवासाः | 709 |
| अलाबुवीणा | प्रसिद्धा वीणा | 241 |
| अवभृथन्यङ्गम् | मुख्योऽवभृथः सौमिकः । तस्य क्रियास्पर्शो न्यङ्गः । स यत्रास्ति तदवभृथन्यङ्गम् । तुषानिष्कासप्रतिपादनं न्यङ्गः अवभृथैकदेशः । अवभृथ एव अवभृथन्यङ्गः । अथवा अवभृथैकदेशः । अकृत्स्नोऽवभृथः (अ. स्वा) । | 275 |

# GLOSSARY

| Word | Explanation | Page |
| --- | --- | --- |
| अवभृथसाम | a sama hymn sung to dispel the evil spirits in while going for अवभृथ ceremony. | 149 |
| अवभृथेष्टिः | A supplementary sacrifice performed on conclusion of a principal sacrifice near a lake before the ceremonial bath. | 151 |
| अवराध्यंः | The minimum. | 246 |
| अविकारः | without exception, without any change. | 558 |
| अविवाक्यम् | व्यूढद्वादशस्य दशममहः | 554 |
| अव्रत्यम् | दीक्षाङ्गभूतसत्यवदनब्रह्मचर्यादिनियमो व्रतम् । तद्विरुद्धमव्रत्यम् । Anything out of harmony with, or violating a religions observation. | 165 |
| अश्वत्रिरात्रः | The Ashva medha sacrifice. | 150 |
| अष्टी<br>अष्टी | N. of a स्तोम consisting of light partites | 366 |
| अष्ठीवत् | कटिप्रदेशः । जानुभ्यामुपरि reaching upto the knee | 206 |
| अहरावृत्तिकारिणः | केवलमहोभिरावृत्तमुत्तरं पक्षं ये कुर्वन्ति ते अहरावृत्तिकारिणः ।···यथा पूर्वपक्षश्चि कृतं एवमुत्तरस्मिन्नपि प्रथमाभिप्लवान् कृत्वा पश्चात् पृष्ठ्यं कुर्युः । केवल महान्येव तेषां प्रतिलोमानि स्युः । | 192 |
| अहीन | A sacrifice lasting more than a day but less than 12, There are a number of sacrifices coming under this catagory beginning | |

| Word | Explanation | Page |
|---|---|---|
| | form ज्योतिष्टोमातिरात्र to एकादशरात्र. These sacrifices are generally named as अतिरात्र | |
| | अह्नां समूहोऽहीनः । सर्वेऽतिरात्रा अहीनाः द्विरात्रप्रभृतयश्चाहर्गणः अन्यत्र राजसूयचातुर्मास्याभ्याम् | 93 |
| आखूत्करः | आखुर्मूषिकः । उत्कीर्ष्यंत इत्युत्करः । उद्वापः । मूषिकोद्वापः | 279 |
| आग्निध्रीयः | The fire lighted in आग्नीध्र place. | 92 |
| आग्नीध्रीयम् | The place where आग्नीध्रीय fire is lighted and maintained. This is lccated in the northern region of the Vedi | 50 |
| आग्रयणः | N. of a wooden vessel for libation. | 76 |
| आज्यम् | N. of the a chant (shastra) recited in the morning after बहिष्पवमान | 178 |
| आतमितः | यावत्प्राणस्य क्लमो भवति तावन्तं कालम् अनुच्छ्वसन्तः आवर्तयन्नित्यर्थः । आतमनात् प्राणवायोः यावत्तमनं ग्लानं श्रमो भवति तावत्पर्यन्तम् । | 282 |
| आतिथ्या | N. of a इष्टि performed when the Soma is brought to the place of worship यज्ञशाला. | 17 |
| आदित्यग्रहः | N. of a particular Soma oblation offered in the evening (आदित्यग्रहहोम) | 121 |

| Word | Explanation | Page |
|---|---|---|
| आदित्य: संवत्सर: (तैर्यगयनिक:) | षष्ठमासादौ त्रिकद्रुकानभिप्लवं च नवाहाधिकमावपेत्तथैव सप्तमेऽपि मासे तृतीयाभिप्लवादूर्ध्वं नवाहमुपदध्यात्। सोऽयमष्टादश दिवसाधिक : a variety of गवामयन। | 198 |
| आदेश: | प्रत्यक्षविधानम् exceptional rule | 559 |
| आप्नानं तीर्थम् | चात्वालोत्करयो: यन्मध्यं तदाप्नानम् तीर्थम्। संचारमार्ग: (ऋत्विजां कृते) The space between उत्कर and चात्वाल through which priests go to the Vedi; the path between उत्कर चात्वाल to the alter. | 37 |
| आमावास्यम् | सांनाय्यम् The new-moon oblation | 693 |
| आर्भव: (पवमान:) | The evening stotra | 121 |
| आर्षेय: | ऋषे: बहुश्रुतस्यापत्यम् | 4 |
| आर्षेयप्रवादा: | आर्षेय इति प्रवादो येषां त आर्षेयप्रवादा: ये ब्राह्मणेनोक्ता: | 548 |
| आवर्ग: | गीतिखण्ड: | 440 |
| आवसथ: | यत्रातिथीन् वासयति स आवसथ: | 6 |
| आवापस्थानम् | verse 2 of the 1st, verse 3 of the second and verse 1 of the third पर्याय of a तृच | 346 |
| आवृत् | गीतिखण्ड: | 440 |
| आवृत्ति: | प्रतिलोमकरणम् | 641 |
| आवृत्तिस्तोत्राणि | येषु स्तोत्रीया: पुन: पुनरावर्तन्ते तानि... पवमानव्यतिरिक्तानि स्तोत्राणि | 112 |
| आशिरम् | सोममिश्रणार्थं दध्यादिकमाशिर: | 517 |
| आशीस्तन्त्रम् | कल्प: ऋतु: तत्फलाभिरूपाणि ऋक्सामानि प्रायेण यत्र भवन्ति तदाशीस्तन्त्रम्। यथा वज्रादिष्वेकाहेषु अपघ्नन् पवसे मृध: (सा. 510) इत्यादि। | 376 |

| Word | Explanation | Page |
|---|---|---|
| आश्विन: | आश्विनो नाम सौत्रामण्यां कश्चिद् ग्रह: | 272 |
| आसन्दी | A stool made of basket work with legs of about six inches hieght made of उदुम्बर, अश्वत्थ खदिर, or पलाश wood | 234 |
| आस्कन्द: | चतुर्विंशेन स्तोमेनाविकृतेनैव तृचं समाप्य पुनर्मध्यमामृचं हिंकाररहितां प्रस्तुयात् । प्रस्तुत्य सकृत् गायेत । तस्य वहि: पर्यायगानस्य आस्कन्द इति संज्ञा | 250 |
| आस्ताव: | The place north of the Uttara Vedi where formula : स्तुथो नभो —संमृष्ट is recited | 96 |
| आहवनीयायतनम् | The Northern altar where the आहवनीय fire is kindled—उत्तरवेदि | 43 |
| आहिताग्नि: | One who maintains a perpitual sacred fire in a family; one who has placed the sacred fire upon the altar | 161 |
| इडा | a particular kind of libation | 108 |
| इडापात्रम् | a vessel for the इडा libation | 108 |
| इन्द्रकुक्षी | गोआयुर्षोविश्वजिदभिजितोश्च नामधेयम् | 706 |
| इन्द्रणता | या मूलप्रदेशे स्वयमेव वक्रा सेन्द्रणता । इन्द्रेण नता इन्द्रणता । दैवान्नतेत्यर्थ: । | 240 |
| | इन्द्र: काल: । स्वभावनता (अ. स्वा.) a reed bent at the bottom used for beating a drum | |
| इषु: | N. of a विष्टुति | 330 |
| इष्ट्ययनम् | a Sacrifice performed at the end of अवमृथ of both दार्षद्वत and तुरायण | 714 |

## GLOSSARY

| Word | Explanation | Page |
|---|---|---|
| ईध्रात् | सोमातिरेकात् । ईध्रादित्ययं निपातः (अ. स्वा.) | 308 |
| उक्थ्य | a libation accompanied by ukthas offered in the morning and mid-day | 30 |
| उखः | a boiler, a vesual | 505 |
| उच्चारः | मूत्रपुरीषोत्सर्गः | 166 |
| उत्करः | a place outside the Vedi between शामित्र and आग्नीध्र for throwing rubbish | 21 |
| उत्थानम् | समाप्तिः | 604 |
| उत्सर्जनम् | कर्मलोपः | 199 |
| उदयनीया | a ceremony performed on the last day, of a sacrifice | 46 |
| उदवसानीयाः | the concluding इष्टि[5] performed after उदयनिय | 252 |
| उदयनीयातिरात्रः | the encluding day ceremony of a sacrifice | 157 |
| उद्गाता | The chief officiating priest of Samaveda | 62 |
| उद्धारः | removal, deletion | 188 |
| उद्भिद् | N. of a एकाह sacrifice | 336 |
| उद्यती | N. of a विष्टुति | 324 |
| उन्नेता | a priest who pours the Soma juice into the receptecles | 252 |
| उपक्षुद्राः | The महानाम्नी hymns. यासां समीपे क्षुद्राणि पञ्च छन्दांसि व्यतिषक्तानि द्विपदा धातुर्वत्सः पुरीषोऽध्यास्यति ताः उपक्षुद्राः (शक्वर्यः) | 431 |

| Word | Explanation | Page |
|---|---|---|
| उपगाः | One who accompanies the song of the udgatr; उपगायन्तीत्युपगाः। सर्वेषु स्तोत्रेषु चत्वारोऽवरार्ध्या उपगातारः स्यु | 81 |
| उपग्रहः | उपग्रहशब्देन निधनात् पूर्वपठित एकारः उच्यते। उपसमीपे गृह्यते पठ्यते इत्युपग्रह इति | 43 |
| उपजनः | addition of a letter, letter or syllable added | 44 |
| उपभृत् | Sacrificial vessel or ladle made of wood | 505 |
| उपरवाः | holes | 697 |
| उपरिष्टाज्जपः | muttering a prayer behind. See also पुरस्ताज्जपः | 128 |
| उपवती | The Saman hymn beginning with a verse having the word उप (उपास्मै गायता नरः—सा.651-653) | 178 |
| उपसद् | N. of a इष्टि preceding the Sutya and following the प्रवर्ग्य ceremony in a Sacrifice | 296 |
| उपसर्गिणः | ये त्यक्तमहः पुनरुत्सृजन्ति सवनविधेन पशुना स्वीकुर्वन्ति ते उपसर्गिण इत्युच्यन्ते। | 202 |
| उपह्वः | permission, consent | 168 |
| उपहव्यः | N. of a एकाह; in the Nigada formula of this Sacrifice gods are invoked by common expression such as विश्वे ब्रह्माणः in place of देवा ब्रह्माणः and शक्र in place of इन्द्र etc; — and not by direct names; | 27 |

# GLOSSARY

| Word | Explanation | Page |
|---|---|---|
| उपह्वानम् | permission, | 108 |
| उपांशु: | N. of a particular libation, a wooden ladle for filling Soma | 304 |
| उपांशुसवन | उपांशुग्रहाभिषवार्थो ग्रावोपांशुसवन: पञ्चम: A stone for pressing the Soma plant for the उपांशुग्रह | 70 |
| उपाय: | Th syllable वा, also called वाक्, used as a stobha in Samagāna | 47 |
| उभयफलकं तन्त्रम् | ज्योतिष्टोमाग्निष्टोमयो: समास उभय-फलकं नाम तन्त्रम् | 376 |
| उलपराजि: | a bandle of grass | 505 |
| ऊध: | शक्वर्याश्चतुर्थ: पाद: | 617 |
| ऊर्णास्तुका | The wollen tuft fixed in the middle of दशापवित्र, (The Soma sieve) for the free flow of the Soma juice. | 72 |
| ऊवध्यगोहः | a hole in the ground for concealing the undigested grass in the stomach and bowels of an animal victimised in a Sacrifice. | 100 |
| ऊवध्यम् | undigested grass are in the stomach or bowels of an animal killed for a Sacrifice. | 100 |
| ऋगूढम् | ऋचं पर्यालोच्य तद्गतोदात्तादिस्वराविरोधेन यदुत्तरायामूह्यते तदृगूढं साम । | 428 |
| ऋतसदनम् | ऋतस्य सदनमपि इतिमन्त्रेण यत्रोपविश्यते तदृतसदनम् दक्षिणहविर्धानस्य पश्चाद्देश: | 68 |
| ऋतपेय: | N. of a Sacrifice belonging एकाह | 313 |
| ऋत्विक्पथ: | सदस उत्तरतो यो मार्ग: स ऋत्विक्पथ: | 104 |
| एककपाला। | एकस्मिन् कपाले संस्कृता: (अपूपा:) | 279 |

